# श्रीविद्यारण्यकृत

# वेदान्तपंचदशी

कल्याणपीयूषव्याख्यासमेता

व्याख्याता

रायप्रोलु लिङ्गनसोमयाजी, बि. ए., बि. एल्.,

न्यायवादी – गुण्टूरु

श्रीचित्रभानु

आश्वयुज सित ९ भानुवासरे

शालि १८६४ — क्रिस्त १९४२

## उपोद्घातः ।

★

विदितचरमेवैतत्सर्वेषामिह खलु भारते वर्षे सर्वे जना धर्मार्थकाममोक्षाख्याश्चत्वारः पुरुषार्थाः; तेषु चार्थकामयोरैहिकसुखसाधनत्वम् धर्मस्यामुष्मिकसुखसाधनत्वम्, मोक्षस्य निरतिशयनिरवधिकसुखसाधनत्वम् तद्रूपत्वं चेति व्यवस्थाप्य ऐहिकसुखस्य "यस्तु चिरं जीवति स वर्षशतं जीवती"ति पतंजल्युक्तदिशा वर्षशतकालमात्रानुभूयमानत्वेन वर्षशतात्मककालस्य पुनर्जन्मपरंपराम्भ्युपगच्छतां नयेऽत्यल्पतया तत्कालानुभवयोग्यस्य बहुतरदुःखसंभिन्नस्य तस्य साधनभूतयोरर्थकामयोरधमकक्ष्यायां, आमुष्मिकस्य सुखस्य बहुजन्मपरंपरास्वनुभूयमानस्य दीर्घकालव्यापितयैहिकसुखादधिकतया, दुःखसंभिन्नतया क्षयिष्णुतया च नित्यनिरवधिकाखंडानंदरूपान्मोक्षसुखादत्यल्पतया च तत्साधनभूतस्य धर्मस्य मध्यमकक्ष्यायाम्, नित्यनिरवधिकाखंडानंदरूपस्य लेशतोऽपि दुःखस्पर्शशून्यस्य सुखस्य साधनतया मोक्षस्योत्तमकक्ष्यायाम् च निवेशमभ्युपयन्तो मोक्षः प्रधानपुरुषार्थ इति प्रायो मन्यन्त इति ।

एवं विधस्य प्रधानभूतस्य मोक्षस्य प्राप्तये विप्रतिपन्नाः पूर्वे आचार्यास्तत्त्वनिर्णयविषये विवदमानास्तत्तत्त्वनिर्णयानुसारेण विभिन्नान्मार्गान्प्रादर्शयन् ।

तेषु च चार्वाकाः । प्रत्यक्षातिरिक्तं नास्ति प्रमाणम् । प्रत्यक्षगोचराणि पृथिव्यप्तेजोवायुरूपाणि चत्वार्येव भूतानि । तानि तत्त्वानि । नान्यत्किंचिदस्ति । तेषां भूतानां स्वभाववलेन संयोगविशेषात् स्थूलदेहो जायते । तत्र च किण्वादिभ्यो मदशक्तिवच्चैतन्यमुपजायते । चैतन्यविशिष्टदेह एवात्मा, तद्देहविलय एव मोक्षः । नास्ति पुनर्जन्म । नापि परलोकः । तदभावादेव पारलौकिककर्मफलदानानुरोधेनेश्वरोऽपि नांगीकरणीयः । पारलौकिककर्मप्रणाली च बुद्धिपौरुषहीनैर्दाभिकैस्स्वजीविकायै परिकल्पिता । ऐहिककर्मानुसारिफलदाता लोकसिद्धो राजैव परमेश्वर इति वदन्ति ।

अन्ये च तदनुयायिन इंद्रियविनिर्मुक्ते मृतदेहे चैतन्यादर्शनादिंद्रियेष्वेव सर्वज्ञानानामुदयदर्शनादिंद्रियाण्येव चैतन्यवन्त्यात्मभूतानि । सर्वमन्यत्पूर्ववदित्याहुः ।

बौद्धास्तु । "इंद्रियाणां चैतन्ये इंद्रियैरनुभूयमानस्येंद्रियोपघाते स्मरणा-

संभवाचानि नात्मीभवितुमर्हन्ति । चार्वाकानामप्यनुमानप्रमाणानुरोधिव्यवहारदर्शने-नानुप्रामाण्यापलपनं परिहासास्पदमित्यभिप्रेत्यानुमानप्रामाण्यमभ्युपगच्छन्ति ।

तेषु माध्यमिकाः । "शून्यमेव तत्त्वम् । सर्वोऽपि लोकव्यवहार आरोपमूलक एव । नेदं रजतमिति बाधानुरोधेन रजतांशस्यारोपितत्वेनासत्यत्ववदिदमंशस्या-प्यारोपितत्वेनासत्यत्वमेवास्तु । विशिष्टनिषेधेन तत्रापि बाधसंभवात् । लोकव्यव-हारस्यारोपमूलकत्वमभ्युपगच्छन्ति वेदान्तिनोऽपि । परं तु निरधिष्ठानारोपस्या-संभवादधिष्ठानस्य सत्यत्वमभ्युपगच्छन्ति ते । तत्तु न युज्यते । "न मया दृष्टमिदं रजतमि"ति स्वप्ने जागरणे च विशिष्टनिषेधस्यानुभूयमानत्वात् । यदि दृष्टं सद्रूपं तदा तद्विशिष्टस्य दर्शनस्येदंताया अधिष्ठानस्य तस्मिन्नध्यस्तस्य रजतादेस्तत्संबद्धस्य समवायादेश्च सत्त्वं प्रसज्येत । अध्यस्तरजतादेस्सत्त्वं न तैरप्यभ्युपेयते । तस्यास-त्त्वांगीकारेऽर्धजरतीयस्यानौचित्येन शून्यवाद एव पर्यवसानं स्यात् । ततश्च सदस-दुभयानुभयात्मककोटिचतुष्टयविनिर्मुक्तं शून्यमेव तत्त्वम् । यदि घटादेस्सत्त्वमसत्त्वं वा स्वभावस्तदा कारकव्यापारवैयर्थ्यम् । लोकव्यवहारस्तु स्वप्नव्यवहारवदविद्ययोप-पादनीयः । अत एव शून्यं शून्यमित्युपदिष्टमाचार्येण बुद्धेन । एवं तत्त्वे विविक्ते न किंचिदवशिष्यत इति स एव मोक्ष इति वर्णयन्ति ।

योगाचारास्तु । बुद्धोपदिष्टं शून्यत्वं बाह्यार्थस्यैव न तु विज्ञानस्य । लोकेऽपि निरधिष्ठानारोपस्यादृष्टचरत्वात् । अतो विज्ञानमेवात्मा । तच्चालयविज्ञानम् प्रवृत्तिविज्ञानं चेति द्विविधम् । तत्रालयविज्ञानम् अहमित्याकारकम् । तच्चानादि-वासनावशादनेकाकारमवभासते । तत्तदाकारेणावभासमानं विज्ञानमेव प्रवृत्तिविज्ञान-मित्युच्यते । लोकानां तत एव प्रवृत्तेः । तच्च विज्ञानं क्षणिकम् । सर्वं सत् क्षणिकम् । जलधरपटलवत् । इत्यनुमानात् । तस्य चार्थक्रियाकारित्वात्सत्त्वं । अत एवोपदिष्टम् । "क्षणिकं क्षणिक"मिति । सर्वं क्षणिकमित्यादिभावनोत्कर्षेण निखिलवासनाविलये सति विगलितविषयाकारं क्षणिकं शुद्धविज्ञानम् धारारूपे-णावतिष्ठते । स एव मोक्ष इत्युच्यते । एवं च क्षणिकविज्ञानमेवात्मा । मृगमद-वासनाया वसन इव पूर्वपूर्वविज्ञानगतवासनाया उत्तरोत्तरविज्ञाने संक्रमणेन न स्मरणानुपपत्तिरित्यादि वदन्ति ।

सौत्रान्तिकास्तु । विज्ञानातिरिक्तबाह्यशून्यत्ववादो न युक्तः । प्रमाणाभावात् । ग्राह्यग्राहकयोर्भेदस्य लोके प्रसिद्धत्वात् । ज्ञानस्यांतर्मुखतया ज्ञेयस्य बहिर्मुखतया च भेदेन प्रतिभासमानत्वात् । नीलाद्यर्थस्य ज्ञानरूपत्वे तु तस्यापि ज्ञानवदहमिति प्रतिभासस्स्यात् । अतो बाह्यार्थस्य क्षणिकत्वेनाप्रत्यक्षत्वेऽपि तदाकारसमर्पकत्वेनानुमेयत्वं सिद्धम् । एवं बाह्यघटादिवदान्तरसुखादयोऽपि ज्ञानाद्भिन्नतया विषया भवन्ति । एवं चैषां मते रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञिकं स्कंधपंचकं तत्त्वम् । तत्र रूप्यन्ते एभिरिति व्युत्पत्त्या रूप्यन्ते एते इति व्युत्पत्त्या च सविषयाणींद्रियाणि रूपस्कंधः । आलयविज्ञानप्रवृत्तिविज्ञानधारा विज्ञानस्कंधः । उक्तविज्ञानद्वयजन्यसुखदुःखादिप्रत्ययप्रवाहो वेदनास्कंधः । तत्तच्छब्दोल्लेखिप्रत्ययप्रवाहस्संज्ञास्कंधः । वेदनास्कंधनिमित्तका रागद्वेषादयो मदमानादयः धर्माधर्मौ च संस्कारस्कंधः । एतत्स्कंधपंचकातिरिक्तं नान्यदात्मवस्त्वस्ति । तदिदं सर्वं दुःखायतनं दुःखसाधनं चेति भावयेत् । तदेतदाह बुद्धः दुःखं दुःखमिति । तन्निरोधनाय तत्त्वज्ञानं संपादयेत् । तत्त्वानि च दुःखसमुदायनिरोधमार्गाश्चत्वारः । दुःखं प्रसिद्धम् । समुदायो दुःखकारणम् । स च प्रत्ययोपनिबंधनो हेतूपनिबंधनश्चेति द्विविधः । तन्निरोधस्तदनंतरं विमलज्ञानोदयेन मुक्तिः । तन्निरोधोपायो मार्गः । स च तत्त्वज्ञानम् । तच्च पूर्वोक्तभावनाबलाद्भवतीति वदन्ति ।

वैभाषिकाः पुनः । ग्राह्यानुमेयत्ववादे प्रत्यक्षसिद्धस्य कस्याप्यभावे व्याप्तिग्रहे दृष्टान्तासंभवेन तदसंभवादनुमानमेव न प्रसरेत् । अनुभवविरोधश्च । ततश्चार्थो द्विविधः । ग्राह्योऽध्यवसेयश्चेति । तत्र ग्रहणं निर्विकल्पकरूपम् प्रमाणम् । कल्पनारहितत्वात् । अध्यवसायस्सविकल्पकरूपोऽप्रमाणम् । कल्पनारूपत्वात् । निर्विकल्पकज्ञानविषयं वस्तु सत्यम् । सविकल्पकज्ञानविषये धर्मांशः कल्पितः । कल्पितत्वादेव स धर्मो जातिरिति केचन । अन्यापोहरूप इति केचन विवदमाना दृश्यन्ते । सविकल्पस्य भ्रमत्वेऽपि मणिप्रभाविषयमणिविकल्पन्यायेन अर्थप्राप्तिसंवादावुपपद्येते । सर्वमन्यत् सौत्रान्तिकवदित्याहुः ।

आर्हताः पुनः । क्षणिकविज्ञानवादे लौकिकफलसाधनसंपादनमैहिकं विफलमेव स्यात् एककृतमन्येनानुभूयत इति न कश्चन सचेता अनुमन्यते । पूर्वकृतमनु-

भवामीति सर्वानुभवविरोधश्च प्रसज्येतेत्यादिदूषणमुत्पश्यंतः कंचन स्थायिनमात्मान मभ्युपगच्छंतः स्वसिद्धान्तमेवं वर्णयन्ति । "सर्वज्ञो जितरागादिदोषस्त्रैलोक्यपूजितः । यथा स्थितार्थवादी च देवोऽर्हन् परमेश्वर" इति हेमचंद्रोपविष्टः अर्हन्नेव परमेश्वरः। तदुपदिष्टमार्गो निश्श्रेयससाधनम् । स च मार्गः सम्यग्दर्शनं, सम्यक् ज्ञानं, सम्यक् चारित्रं चेति त्रिप्रकारः । अर्हदुक्ते तत्त्वार्थे विपरीताभिनिवेशराहित्यरूपं श्रद्धानं सम्यग्दर्शनम् । येन स्वभावेन जीवादयो व्यवस्थितास्तेन स्वभावेन मोहसंशय राहित्येनावगमः सम्यक् ज्ञानम् । संसरणकर्मनाशाय प्रयतमानस्य श्रद्धधानस्य ज्ञानवतः पापगमनकारणक्रियानिर्वृत्तिः सम्यक् चारित्रम् । तच्चाहिंसासूनृतास्तेय ब्रह्मचर्यापरिग्रहरूपेण पंचविधम् । एतानि भावितानि पंचमहाव्रतानि भवन्ति । तैर्मोक्षं साधयेत् । एतन्मते बोधात्मको जीवः । अबोधात्मकश्चाजीवः । तावेव चिदचिदित्युच्येते । तयोर्विवेकं कृत्वा अचिद्रूपं परित्यज्य चिद्रूपमुपादेयम् । अस्य जीवस्यौपशमिकः क्षयिक इति द्वौ भावौ । कर्मणोऽनुदयप्राप्तिरूपे उपशमे सति उत्पद्यमानो भावः औपशमिकः । यथा कालुष्यसंपादके पंके कतकादिसंबंधादधः कृते जलस्य स्वच्छता । आर्हततत्त्वानुसंधानेन रागादिपंकक्षालनेन कर्मनाशे सति जायमानो नैर्मल्यापादको भावः क्षयिकः । यथा पंकात् पृथक्कृतस्य निर्मलस्य स्फटिकादिभाजनगतस्य जलस्य स्वच्छता । उभयात्माभावो मिश्रः । यथा जलस्य अर्धस्वच्छता । तस्य जीवस्य चैतन्यादिः पारिणामिकस्सहजो भावः । तदेव चैतन्यं ज्ञानमित्युच्यते । ज्ञानादात्मा नात्यंतं भिन्नः । ज्ञानस्य जीवावस्थारूपत्वात् । नात्यंतमभिन्नः । अवस्थावस्थावतोः अस्येयमवस्थेति भेदेन लोके व्यवहारात् । अतो भिन्नाभिन्नात्मको जीवः । स एवात्मेत्युच्यते। स च जीवः सर्वशरीरावच्छेदेन सुखदुःखभोगदर्शनात् शरीरसमपरिमाणत्वेन मध्यमपरिमाणः । तच्च परिमाणं गजादिदेहसंबंधे किंचिन्महद्भवति । मशकादिदेहसंबंधे सत्यल्पी भवति च जीवस्य सावयवत्वेनावयवानां मृदुकनिबिडसंयोगविशेषेण तूलराशेरिव परिमाणाल्पत्वाधिक्ये न विरुध्येते । एवंविधस्य चिद्रूपस्य जीवस्य स्वरूपे अचितो विविच्य ज्ञाते स्वरूपेणावस्थितिरूपो मोक्षः संपद्यत इति ।

रामानुजीयाः पुनः। आर्हतमते जीवस्य देहसमपरिमाणत्वांगीकारे योगबला-दनेकदेहपरिग्राहकयोगिशरीरेषु प्रतिशरीरं जीवविच्छेदः प्रसज्येत । मनुष्यशरीर-

परिमाणो जीवो मतं गजदेहं कृत्स्नं प्रवेष्टुं न प्रभवेत्। पिपीलिकादिदेहं प्रविशतः प्राचीनशरीरसमानप्रमाणतासंकोचोऽपि प्रसज्येत। न च यथा प्रदीपप्रभाविशेषः प्रपाप्रासादाद्युदरवर्तिसंकोचविकासवान् तथा जीवोऽपि तत्तच्छरीरेषु संकोचविकासवान् भवतीति शंकनीयम्। तथा सति प्रदीपवद्विकारित्वेनानित्यत्वप्राप्त्या कृतहानाकृताभ्यागमप्रसंगात्। इत्यादिदूषणं प्रदर्श्य स्वसिद्धान्तमेवं वर्णयन्ति। एतन्मते चिदचिदीश्वरभेदेन भोक्तृभोग्यनियामकभेदेन च त्रयः पदार्थाः। तत्र चिद्रूपो जीवो भोक्ता। अचिद्रूपं सर्वं विषयजातं भोग्यम्। व्यवस्थया तत्तत्कर्मानुसारेण भोगनियामक ईश्वरः। तत्र चिदीश्वरौ ज्ञानस्वरूपौ। ज्ञानगुणकौ च द्युमणिप्रभृतितेजोद्रव्यं प्रभारूपेणावतिष्ठमानं प्रभारूपगुणाश्रयीभूतमित्यनुभवात् ज्ञानरूपस्य ज्ञानाश्रयत्वमविरुद्धम्। ज्ञानस्य प्रभावत्स्वतो द्रव्यत्वेऽपि तच्छेषत्वनिबंधनो गुणत्वव्यवहारः। ज्ञानरूपस्येश्वरस्य ज्ञानगुणकत्वं श्रुतिषु प्रदर्शितम्। ईश्वरस्य चिदचिदात्मकस्सर्वोऽपि तच्छेषत्वेन तच्छरीरभूतः। शरीरशरीरिणोस्तादात्म्यस्य लोकेऽनुभूयमानत्वाच्छरीरभूतजीवादिविशिष्टं ब्रह्म तत्त्वमेकमेवेत्यभेदबोधकश्रुतीनां तात्पर्यम्। शरीरशरीरिणोर्ममेदं शरीरमिति व्यवहाराद्भेदोऽपि। ईश्वरो जगतः कर्ता, उपादानं च स च परमेश्वरो भक्तवत्सलस्तत्तदुपासकानुगुणफलदानाय स्वलीलावशादर्चाविभवव्यूहसूक्ष्मांतर्यामिभेदेन पंचधाऽवतिष्ठते। उपासनाकर्मसमुच्चितेन विज्ञानेन परमकारुणिकः परमेश्वरो निजयाथात्म्यानुभवानुगुणनिरवधिकानंदरूपं पुनरावृत्तिरहितं स्वपदं प्रयच्छति। एतदेव सर्ववेदसारभूतमिति एतन्मते जीवोऽणुः। भगवद्दासश्च। वेदोऽपौरुषेयः सिद्धार्थबोधकः स्वतः प्रमाणभूतः शब्दोऽपि प्रमाणम्। पांचरात्रस्यापि प्रामाण्यम्। प्रपंचभेदस्सत्य इति।

माध्वाः पुनः। रामानुजाभ्युपगतं प्रायशोऽङ्गीकृत्य तदभ्युपगतं भेदाभेदपक्षं परस्परविरुद्धं प्रतिक्षिपन्ति। स्वसिद्धान्तमप्येवं वर्णयन्ति। तत्त्वं द्विविधम्। स्वतंत्रं परतंत्रं चेति। तत्र स्वतंत्रो भगवान् विष्णुः सर्वज्ञः अचिंत्यशक्तिः अनन्तकल्याणगुणपूर्णः। सर्ववेदान्तानां तदुत्कर्ष एव तात्पर्यम्। अस्वतन्त्रं महालक्ष्म्यादिसर्वमपि प्रपंचजातम्। तदपि भावाभावरूपेण द्विविधम्। भावरूपमपि चेतनाचेतनरूपेण द्विविधम्। चेतनमपि नित्यमुक्तं संसारयोगी चेति द्विविधम्। तत्र नित्य मुक्ता महालक्ष्मीः संसारयोगि च मुक्तामुक्तभेदेन द्विविधम्। तत्र ब्रह्मादयो मुक्ताः

अमुक्ताश्चोत्तममध्यमाधमभेदेन त्रिविधाः। तत्रोत्तमा मुक्तियोग्याः। देवर्षिभगवद्भक्तादयः। मध्यमाः केवलकर्मठाः नित्यसंसारिणः। अधमा भगवद्द्वेषिणो दैत्यरक्षःप्रभृतयो नित्यनारकाः। अचेतनोऽपि नित्यानित्यभेदेन द्विविधः। देशकालादयो नित्याः। कार्यजातं सर्वमनित्यम्। ते च मुक्तियोग्या जीवा अंकननामकरणभजनरूपत्रिविधभगवच्छेवया पुनरावृत्तिरहितं विष्णुलोकं प्राप्नुवन्ति। सैव मुक्तिरिति।

वैशेषिकास्तु द्रव्यगुणकर्मसामान्यविशेषसमवायाभावभेदेन सप्तपदार्थानंगीकुर्वन्ति। आत्मानो ज्ञानेच्छादिगुणकाः। नानाच ते च प्रवृत्तिरूपाद्धर्मादभ्युदयं लभन्ते। निवृत्तिरूपान्निश्श्रेयसम्। दुःखध्वंस एव मोक्षः। तदानीं ज्ञानेच्छादीनामभावान्मोक्षे जडीभूतास्तिष्ठन्ति। धर्मेणैव सर्वनिर्वाहेणालमीश्वरेणेति वदन्ति।

गौतमीयास्तु वैशेषिकाभ्युपगतं सर्वमप्यंगीकृत्य नित्यज्ञानाद्याश्रितमीश्वरमप्यंगीकुर्वन्ति।

सांख्यास्तु। जीवा निर्लिप्तास्शुद्धज्ञानस्वरूपा बंधमोक्षव्यवस्थानुरोधेन नाना सत्वरजस्तमोगुणात्मिका प्रकृतिर्जगतः कर्त्री, तद्विकारभूता महदादयः, तत्र महत्तत्त्वं बुद्धिः, तदेव च भोक्तृत्वादिधर्मविशिष्टम्, प्रकृतिपुरुषयोर्भेदाग्रहेण चेतने बुद्धिनिष्ठभोक्तृत्वरूपेण बद्धत्वव्यवहारः, तद्विवेके सत्यारोपनिमित्ताभावादात्मनः स्वस्वरूपेण स्थितिस्संपद्यते, सैव मुक्तिरिति। एतन्मते ईश्वरो नास्त्येव। जगत्स्रष्टृत्वेन हि तत्सिद्धिः। परमकारुणिकस्यावाप्तसकलकामस्य कामनाभावात्परमकारुणिकत्वेन दुःखहेतुभूतजगत्सर्जनासंभवात् कारुणिको हि परकीयदुःखहेतुभूतं न किंचिदपि कल्पयते। तथा सति कारुणिकत्वस्य भंगापत्तेरिति।

जैमिनीया वैशेषिकवद्धर्मेणैव सर्वनिर्वाहं अभ्युपगच्छन्त ईश्वरं प्रतिक्षिपन्ति। एतन्मते जीवात्मनो बोधाबोधस्वरूपाः। ते च धर्माधर्मवशाद्बद्धा भवन्ति। क्रमेणाधर्मे विनष्टे दुःखासंभिन्नसुखरूपं अनंतं स्वर्गं लभन्ते। स एव मोक्ष इति।

योगिनस्तु जडस्य धर्मस्य फलदानाक्षमत्वादीश्वरमप्यभ्युपगच्छन्ति। अन्यत्सर्वं सांख्योक्तमेवाभ्युपगच्छन्ति।

एवं बहुधा विप्रतिपन्नेषु तत्तद्दर्शनकारेषु तत्तदभ्युपगतमात्मानं यथा योगमन्नमयादिपंचकोशेष्वंतर्भावयन्तो वेदान्तिनो नित्यबुद्धमुक्तस्वभावं सत्यज्ञानानन्द-

लक्षणं निर्गुणं निष्क्रियं ब्रह्म एकमेव तत्त्वम् । अन्यत्सर्वं शुक्तौ रजतमिवाधिष्ठाने ब्रह्मण्यविद्यापरिकल्पितम् । तच्च न सत् । भाधदर्शनात् । नाप्यसत् । प्रतीयमान-त्वात् । अतस्सदसद्विलक्षणमनिर्वचनीयम् तत् । ज्ञातायां शुक्तिकायां तत्र कल्पितरजतस्येव ब्रह्मणि ज्ञाते तत्र कल्पितप्रपंचस्यापि निवृत्तिर्भविष्यति । निवृत्तिश्चात्र मिथ्यात्वनिश्चय एव । तत्र मिथ्यात्वे निश्चिते ऐंद्रजालिककल्पित-मायापदार्थस्येव सुखदुःखादिरूपबंधहेतुत्वाभावान्मोक्ष एव भविष्यति । जीवस्य स्वरूपे उपाधिविनिर्मोकेण विविच्यमाने सत्यज्ञानानन्दरूपमेवावशिष्यत इति तस्य सत्यज्ञानानन्दरूपत्वेन ब्रह्मलक्षणाक्रांततया ब्रह्मभाव एव भवति ।

एवं शोधितं जीवतत्त्वं ब्रह्मणो नातिरिच्यत इति विवेकेन जीवब्रह्मैक्य-ज्ञानादेव मोक्षः । इति सर्वश्रुतिसिद्धम् सिद्धान्तं प्रदर्शयन्तः पंचदशप्रकरणात्मकं वेदान्तपंचदशीनामकं ग्रंथं व्यरचयन् श्रीविद्यारण्यस्वामिनः ।

यद्यपि वेदस्य बहुशाखाविप्रकीर्णतया तत्तात्पर्यविषयीभूतसिद्धान्तपरिज्ञानं सर्वेषामसुलभं मत्वा भगवान् व्यासापरनामधेयो बादरायणो ब्रह्मसूत्राणि प्रणिनाय । मुमुक्षुजनानुजिघृक्षया तत्सूत्रार्थनिर्णये च प्रयतमानेषु श्रीमच्छंकरभगवत्पूज्यपादा अद्वैतसिद्धान्तस्यैवोपनिषत्सूत्रतात्पर्यविषयत्वमिति प्रकटयन्तश्शारीरकमीमांसाभाष्यं विरचयांचक्रुः । तदनुसारेण च बहवो ग्रंथा विरचिताः पंडितप्रकांडैः । तत एव जीवब्रह्मैक्यज्ञानं सुसंपादम् । तथापि तेषां ग्रंथानामतिप्रौढतया शास्त्रनिष्णातमा-त्रोपकारकत्वेऽपि साधारणजनोपकारकत्वं नैव घटत इत्यभिप्रेत्य मुमुक्षूणां सुखेन सिद्धान्तबोधायायं प्रयास आहृतः श्रीस्वामिचरणैः । अयं च ग्रंथो भागत्रयात्मकतया संलक्ष्यते । तत्र विवेकपंचकमित्येको भागः । दीपपंचकमित्यपरः । आनंदपंचकमि-त्यन्यः । विचार्यमाणे आनंदपंचकस्य पृथग्ग्रंथत्वमेव ब्रह्मानंदाभिख्यया प्रतिभाति । तदुपक्रमे "ब्रह्मानंदं प्रवक्ष्यामी"ति प्रतिज्ञादर्शनात् तत्रत्यतत्तत्प्रकरणावसाने "ब्रह्मा-नंदे योगानंदः आत्मानंदः इत्याद्युपसंहारदर्शनाच्च । न चैवं प्रतिज्ञाप्रकरणान्तरेषु क्वापि दृश्यते । यद्यपि ग्रंथारंभे तत्त्वविवेकस्यैव प्रतिज्ञातत्वेन दीपपंचकस्य पार्थक्यं शंकितुं शक्यम् । तथापि तत्रोपक्रान्तप्रत्यक्तत्त्वनिरूपणस्य पंचभूतविवेकादिनिरू-पणमन्तरा दुश्शकतया प्रत्यक्तत्त्वविवेकनिरूपणे प्रतिज्ञाते पंचभूतविवेकादिनिरूपण-

स्यैव तद्विवेकस्य च शास्त्रयुक्तिभ्यां निरूपणे सिद्धेऽप्यनुभवेनापि निरूपणार्थं दीपपंचकस्यावश्यकतया पृथक् तत्प्रतिज्ञाया अनपेक्षणात् । न चैवमानन्दपंचकम् । तद्विनाऽपि शास्त्रत्वसंपत्तेस्संभवे नैतच्छास्त्रान्तर्भावस्य सर्वात्मनाऽसंभवात् । पृथग्भूतोऽप्ययं ग्रन्थः ब्रह्मज्ञानफलप्रदर्शनपरतया मन्दमध्यमाधिकारिणामप्येतद्ग्रन्थपरिशीलने प्रवृत्तिसंपादनाय तत्त्वविवेके संयोजत इपि प्रतिभाति । एवं च ब्रह्मानन्दस्य पृथग्ग्रन्थत्वमस्तु । एतद्ग्रन्थघटकत्वं वाऽस्तु । सर्वद्वैतग्रन्थजन्यज्ञानफलप्रदर्शकतयाऽत्र योजनं युज्यत एव । केचित्तु ब्रह्मानन्दग्रन्थस्यान्यकर्तृकत्वमभिप्रयन्ति । तन्न सम्यक् । ब्रह्मानन्दांतर्गतविद्यानन्दशेषे "उभयं तृप्तिदीपे हि सम्यग साभिरीरितभि"ति वचनेन तृप्तिदीपकर्तृकत्वस्य स्फुटं प्रतीतेः । न च दीपपंचकमानन्दपंचकं चैककर्तृकमस्तु । विवेकपंचकं तु भिन्नकर्तृकमिति शंक्यम् । तथा सति दीपपंचकप्रारंभे प्रतिज्ञाया अवश्यकर्तव्यत्वप्रसंगात् । यद्यपि प्रत्यक्तत्त्वविवेकेनैव सर्वोऽपि शास्त्रार्थः प्रतिपादितः । तथाप्यवशिष्टस्य तद्विवरणरूपतया तद्ग्रंथघटकत्वमुपपद्यत एव । यथा ब्रह्मसूत्रसारस्य चतुस्सूत्र्या प्रतिपादनेऽपि तद्विवरण तयाऽवशिष्टभागस्य तच्छास्त्रघटकत्वम् । यथा वा भगवद्गीतायां द्वितीयाध्याये "अशोचानन्वशोचस्त्व"मित्यारभ्य "एषा तेऽभिहिता सांख्ये बुद्धि"रित्येतत्पर्यन्तेन ग्रन्थेन गीताशास्त्रार्थस्य सर्वस्य संक्षेपेणाभिहितत्वेऽप्यवशिष्टस्य सर्वस्य तद्विवरणरूपतया गीताशास्त्रघटकत्वम् । इति ध्येयम् ।

एतच्छास्त्रस्य ब्रह्मात्मैक्यं विषयः । तत् ज्ञानान्मूलाविद्यानिवृत्तौ ब्रह्मरूपेणावस्थानं प्रयोजनम् । साधनचतुष्टयसंपन्नोऽधिकारी संबंधश्च यथायथमूहनीयः । अत्रात्मनो ब्रह्मरूपत्वसंपत्तये सत्यज्ञानानन्दरूपस्य ब्रह्मलक्षणस्य प्रत्यगात्मनि सत्त्वं प्रथमतः प्रतिपाद्य तदैक्यं तत्त्वमस्यादिमहावाक्यैर्बोधितमित्युपसंहृतं प्रकरणान्ते प्रत्यगात्मनस्सत्यज्ञानानन्दरूपत्वमसद्भूतेभ्यो भूतभौतिकपदार्थेभ्यो विविच्य प्रत्यगात्मप्रदर्शनमन्तरा दुर्ज्ञेयमित्याशयेन भूतभौतिकसृष्टिं तन्निदानभूतजीवेश्वरसृष्टिं च प्रादर्शयत् । तादृशसृष्टेर्निदानतया सत्त्वरजस्तमोगुणमयी सदसद्विलक्षणतयाऽनिर्वचनीया प्रकृतिरित्यभिधाना काचन शक्तिरभ्युपेयते । सा च सत्त्वप्रधाना चेतनसृष्टिं तमःप्रधाना भूतभौतिकसृष्टिं चाकरोत् । सा च शुद्धसत्त्वप्रधाना मायाभिधाना ईशोपाधितया चेतनस्येशत्वमकल्पयत् । सति मालिन्येऽविद्याभिधाना

जीवोपाधिभूता चेतनस्य जीवत्वमकल्पयत् । मायोपाधिक ईश्वरस्तमःप्रधानां प्रकृति-मुपादानीकृत्य स्वयं निमित्तीभूय भूतसृष्टिं जीवस्य भोग्यभोगायतनसिद्धये भूतपंची-करणपूर्वकं भौतिकसृष्टिं च व्यतनोत् । सर्वस्यापि सृष्टस्य प्रपंचस्य मायिकत्वैंद्रजा-लिकमायाकल्पितपदार्थजातस्येव सति मिथ्यात्वनिश्चये तद्विविक्ततयानुभवगोचरः प्रत्यगात्मा सत्यज्ञानानन्दरूप इत्यवगन्तुं शक्यते । एवमवगतः कूटस्थः ब्रह्मलक्षण-लक्षिततया ब्रह्मैव भवितुमर्हतीति ब्रह्मात्मैक्यं सिद्ध्यतीति सिद्धान्तं बोधयितुं प्रत्यक्तत्त्वविवेकाख्यप्रकरणमारब्धम् । एतादृशस्य विवेकस्य भूतस्वरूपनिर्णयपूर्वकं तद्वैलक्षण्यप्रदर्शनमन्तरा दुर्लभमिति तत्प्रदर्शनाय भूतानां तदुपादानभूतमायायाश्च गुणवैषम्येण परस्परविवेकं तेषु सर्वेषु सत्तानुवृत्त्या सद्रूपस्य ब्रह्मणोऽवश्याभ्युपेयत्वं तस्य च सर्ववस्तुवैलक्षण्यं च मायाभूतभौतिकप्रपंचाद्विविक्तं ब्रह्म बोधयन् ब्रह्मलक्ष-णाक्रान्ततया प्रत्यगात्मनस्तदैक्यमबोधयन्महाभूतविवेकाख्येन प्रकरणेन । यथा च पंचभूतविवेकेन मायिकादीश्वरान्निष्कृष्टं ब्रह्मतत्त्वं विज्ञातुं शक्यते तथैव पंचकोश-विवेकेन तत्तादात्म्याध्यासापन्नजीवान्निष्कृष्टं प्रत्यक्तत्वं विज्ञातुं शक्यत इत्याशयेन पंचकोशविवेकाख्यं प्रकरणं व्यरचयत् । एवं सत्यपि विवेके मिथ्याभूतस्य प्रपंचस्य शरीरसद्भावपर्यन्तं तत्तद्भासकेंद्रियाणां मिथ्याभूतानामपि सद्भावात्तत्तत्पदार्थभानं दुर्वारमिति जीवन्मुक्तव्यवहारो निरालंबन एव स्यादित्याशङ्क्य तद्भानं न मुक्ति-प्रतिबंधकम् । तद्भानेऽपि तस्य मिथ्यात्वनिश्चयेन बंधकत्वं नास्ति । वस्तुत ईश-सृष्टस्य प्रपंचस्य साक्षाद्बंधहेतुत्वमेव नास्ति। परं त्वीशसृष्टप्रपंचं भोग्याकारतां मनसा प्रापयञ्जीवः । तथा च जीवसृष्टस्य मनोमयप्रपंचस्यैव स्वप्नप्रपंचवद्बंधहेतुत्वम् । अतो मनोमयप्रपंचस्यैव सर्वथा निवृत्तिरपेक्ष्यते मुक्तिसिद्धये । प्रत्यग्ब्रह्मात्मज्ञाने जीवोपाधिभूताज्ञाननिवृत्तौ तद्धेतुकमनसो निवृत्त्या सर्वथा मनोमयप्रपंचो निवर्तते । तन्निवृत्तिरेवापेक्ष्यते मुक्तिसिद्धये ईशसृष्टस्य न निवृत्तिरपेक्ष्यते । किं तु मिथ्या-त्वबुद्धिमात्रमिति बोधयितुमीशसृष्टं जीवसृष्टं च द्वैतं द्वेधा विभज्य प्रदर्शितम् । ईशसृष्टप्रपंचमन्तरा तदाकाराकारितमनोमयसृष्टेरसंभवेन बंधस्यैव दुरुपपादतया तदाकारसमर्पकतया ईशसृष्टं बाह्यं द्वैतमभ्युपेयमेव । प्रमाणबलात्प्रतीयमानस्य तस्य दुर्निवारत्वाच्च । एतेन बंधे बाह्यद्वैतस्यानुपयोगे बाह्यशून्यतावादप्रसंग इति परास्तम् । एतदंशबोधनायैव द्वैतविवेकाख्यप्रकरणमारब्धम् ।

एवं प्रकरणचतुष्टयेन साधितं युक्तिसिद्धमर्थं श्रुतिप्रमाणसिद्धमिति निरूपयितुं महावाक्यविवेकनामकं पंचमं प्रकरणं व्यरचयन् ।

अनेन प्रकरणपंचकेन सर्वोऽपि वेदान्तसिद्धान्तः स्पष्टं निरूपित इत्यवधेयम् । एवं श्रुतियुक्तिभ्यां सिद्धमर्थमनुभवेनाप्युत्तमाद्यधिकारिणां क्रमेण बोधयितुं दीपपंचकं प्रारब्धम् । तत्र मंदमध्यमाधिकारिणां तत्त्वस्य परोक्षतया ज्ञानेऽपि मोक्षोपयोग्यपरोक्षसाक्षात्कारो नैव घटत इति पर्यालोच्य तदनुजिघृक्षया ध्यानेन स संपादनीय इत्युपदेष्टुं ध्यानदीपप्रकरणं च तत्र निवेशितम् । सुकुमारबुद्धीनां कान्तासम्मिततयोपदेशस्य देशिकाभिमततया तादृशानामुपदेशाय नाटकदीपाख्यमपि प्रकरणं विनिवेशितम् । "प्रयोजनमनुद्दिश्य न मंदोऽपि प्रवर्तते" इति न्यायमनुसृत्य परमानंदावाप्तिलक्षणं प्रयोजनं दर्शयितुमानंदपंचकमिति ध्येयम्

एवं मोक्षप्राप्त्युपायप्रदर्शकस्य सकलवेदान्तसारभूतस्य वेदान्तपंचदशीनामकस्यास्य ग्रंथस्य स्वभावतस्सुबोधत्वेऽपि कालक्रमेण संस्कृतभाषापरिज्ञाने संकोचमापन्ने सामान्याकारेण संस्कृतभाषापरिज्ञानवतां प्रकारांतरेण तत्त्वविमर्शनचतुराणामनायासेन बोधं संपादयितुकामः आंग्लभाषापरिज्ञानेन न्यायवादिपदमलंकुर्वाणः स्वनाम्नैव स्वस्य श्रोत्रियाभिजनत्वमावेदयिता आंग्लभाषापठनावसरे स्वाभिजनानुरोधेन संस्कृतभाषां तदपेक्षिताधिकमभ्यस्य तत्पाटववशात्प्रस्थानत्रयं समुचिताचार्यमुखादधीत्य अद्वैतसिद्धान्ते बद्धादरः आत्रेयगोत्रोद्भवो रायप्रोलूप्नामक लिङ्गन सोमयाजी अस्य ग्रन्थस्य सरलामतिसुलभां कांचन व्याख्यां समरचयत् । यद्यप्यस्य ग्रन्थस्य बहुभिः पंडितप्रकांडैर्विरचिताः प्राचीनव्याख्याः संत्येव । तथापि तासामतिप्रौढतया अयत्ने अनायासेन मूलग्रन्थतात्पर्यबोधनक्षमास्सामान्यज्ञानवतां न भवंतीत्यालोच्य तादृशानामप्यनायासेन बोधो भवत्विति‍च्छया एतद्व्याख्यानरचने प्रवृत्त इति ज्ञायते तत्तद्व्याख्यानदर्शनसमकालमेतद्व्याख्यानदर्शने । तथा हि । अस्यां च व्याख्यायां यथा साकल्येन पदव्युत्पत्तिः पदार्थयोजना च दृश्येते तथा न पूर्वासु व्याख्यासु । अन्यच्च तासु व्याख्यासु मूलप्रतिपादितार्थोपपादकतया श्रुतयो वैरल्येन प्रदर्शिताः । तासामप्यर्थविशेषो न प्रदर्शितः । अत्र तु तादृशश्रुतयः प्राचुर्येण प्रदर्शिताः तत्तच्छ्रुतिसंदर्भविशेषपुरस्सरं तत्तदर्थप्रदर्शनं च सम्यक्कृतम् । एतद्ग्रन्थ-

परिज्ञाने उपनिषद्ग्रन्थपठनमन्तराप्येतत्ग्रन्थापेक्षितसकलश्रुत्यर्थपरिज्ञानमनायासेन संजायत इति ज्ञायते एतद्ग्रन्थपाठकानामिति प्राचीनव्याख्यापेक्षयेयं महते उपकाराय कल्पते, सामान्यतोऽधिकारिणां मुमुक्षूणाम्। एतद्ग्रन्थदर्शनावसरे "पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यं"मित्यादिमहाकविसूक्तिः स्मृतिपथमधिरोहति। एतादृगुपकारकं विधाय महदुपकृतमास्तिकलोकस्यानेन विद्वन्मणिनेति तद्विषये सर्वेऽप्यास्तिकजनाः कृतज्ञा भवंतीत्याशासे।

**विजयनगरम्,**
१६–१०–४२.

महामहोपाध्याय,
**ताता सुब्बरायशास्त्री।**

# प्ररोचना।

*

"आ परितोषाद्विदुषां।
न साधु मन्ये प्रयोगविज्ञानं ॥"

विदितचरमेवाखिलविद्वज्जनलोकस्य विविधौषधीनामाकरभूतं सान्द्रारण्यमिव ज्योतिर्वैद्यधर्मशास्त्रव्याकरणमीमांसावेदान्ताद्यशेषविद्यानामावासभूता ये त्रयी-मातुर्निजपरिचर्यया नूतनशोभां संपादितवन्तो विजयनगरसाम्राज्यस्थापमाचार्याः श्रीविद्यारण्यमुनिवरेण्या शालिवाहनशकीयत्रयोदशशताब्द्यां प्रादुर्बभूवुरिति। तैर्व्यरच्यल्पधियामपरिज्ञातत्रयीशिरस्साराणां मुमुक्षूणामुपकारकतयाऽद्वैतसिद्धान्तपीयूषसारः करतलामलकीकृतनिखिलनिगमान्तार्थगंभीरभावो ललितपदविलसितः पञ्चदशीति नाम्ना विख्यातो ग्रन्थराजः। ग्रन्थस्यास्य च प्राचीनपंडितविरचितं व्याख्यानद्वयं प्रथितमेव।

तच्चानधिगतशास्त्रार्थानां यथार्थतत्त्वग्राहकं न भवतीति मम प्रस्थानत्रयस्य शान्तिपाठानन्तरमसद्गुरुकुलावतंसाः प्रातस्मरणीयनामधेयाः श्रीमत्परमहंसपरिव्राजकाचार्यशृंगेरीश्रीविरूपाक्षश्रीविद्याशंकरपदमावेशप्रकाशितजगद्गुरु श्रीकल्याणानन्दभारतीमान्ताचार्यचरणाः सामान्याकारेण संस्कृतभाषापरिचयवतामप्यनुग्रहाय वेदान्तपञ्चदश्याः निर्दुष्टार्थप्रकटनपरां कांचिद्व्याख्यां विरचितुं मामादिशन्। नियुक्तकार्येऽपर्याप्तेनाप्यधमर्णेन आचार्याणामादेशममोघा आशिषश्च शिरस्यवधार्य प्रमाधिवत्सरे श्रीशंकरजयन्त्युत्सवावसरे मयोपक्रान्तोऽयमखिलशास्त्रनिष्णातसाध्यः श्रीविद्यारण्यचरणानां गंभीरवागर्थाविष्करणैकपरोऽयं महान् प्रयत्नः। तद्वत्सरीयशिवरात्रिप्रयुक्तगौरीरमणचरणार्चनावसानसमये समापितश्च। अशेषनागरकतोन्मूलनपर्यवसानकेऽस्मिन् कराले युद्धसंरंभेऽलब्धपत्रकं मुद्रणे विलंबनमनिवार्यमासीत्।

"पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना आक्षेपस्य समाधानमि"ति पञ्चलक्षणलक्षितां व्याख्यानसरणिमनुसृत्य यथामति मया व्याख्यातोऽयं ग्रन्थः। तत्र बहूनामपूर्वपदानां व्युत्पत्तिरभिहिता। अध्येतृजनसौकर्याय बह्व्यः शंकाः सोप-

पाठकं विशदीकृताः । भावश्चोचितस्थलेषु क्रोडीकृतः । मूलग्रन्थे उदाहृतानां श्रुतिस्मृतिसूत्राणां प्रकरणपुरस्सरं तात्पर्यप्रकटनं च विपुलतया कृतम् । अन्यानि चाद्वैतसिद्धान्तप्रतिपादकान्यौपनिषदानि प्रमाणान्युपशतत्रयसंख्याकान्युदाहृतानि येन ग्रन्थान्तरमन्तरा सर्वमद्वैतमतप्रदीपकं प्रमाणजातमत्रैव करतलगतं भवेत् । अस्मिन् व्याख्यानरचनाविधौ श्रीभगवत्पादादीनां भाष्यादिभ्यः पूर्वव्याख्यानेभ्यश्च विशेषविषयान् यथेच्छमाहरतोऽल्पमतेर्न मे कापि क्षतिर्न्यूनता वा संभाव्यते । वरीवर्तते महान् पंडितवर्गो यो विग्रहवानखिलविद्यावबोधः । तं प्रत्यनिशं नमोवाकमाशास्महे ।

सामान्याकारेण संस्कृतभाषापरिचयवतामप्यनायासेन विषयग्राहकपटीयसीं शैलीमाश्रित्य व्याख्यातोऽयं ग्रन्थः । तथा हि । सर्वो हि वेदवेदान्तराशिर्वैदिकवाङ्मयो विराजते । अविदितनिगमार्थानामनुग्रहाय विपुलस्यापि विषयजातस्य संग्रहेण प्रतिपादनाय तत्तच्छास्त्रकारा विविधानि सूत्राणि वार्तिकादीनि प्रसन्नगंभीराणि भाष्याणि च व्यरीरचन् । यत्र विषयविशयपूर्वपक्षसिद्धान्तादीनां साकल्यं विमर्शनेन प्रतिपाद्यार्थो सुविशदं विज्ञायते । तत्र परिदृश्यमाना शैली च प्रसन्नगंभीरा विविक्षितार्थस्य सुविशदीकरणपटीयसी निरुपमा च शोभते । तत्रत्या भाषा शास्त्रभाषेति व्यवह्रियते । भाष्याद्युपवर्णितविविधविषयनिर्णये पाटवाभावेन प्रमेयनिर्णयासमर्थानामानुकूल्याय परिकल्पिता नव्यतर्ककर्कशा प्रमेयनिर्णयपटीयसी प्रतिवादिजनविमोहिनी काचित् परिष्कारात्मिका भाषा । एवंविधापि शास्त्रभाषात्वेन व्यवह्रियमाणा तत्तच्छास्त्रज्ञैकसमधिगम्या दृश्यते । यया परिष्कारात्मिकया अशेषमिदं शास्त्रजातं समन्ततो व्याप्तम् । अध्येतृलोकस्य या नितरां क्लेशमापादयति च । अन्येषामपि विषयविशेषपरिशीलनपराणां वैरस्यमादधती प्राचीनैरादृतां प्रसादविमलां शैलीं समूलमुन्मूलयति । वाल्मीकिकालिदासादिभिरालंबिता दृश्यश्रव्यात्मिका सहजपेशला सकलांगसौष्ठवोपेता नवरसरुचिरा कोमलपदविन्यासा काचिदव्यक्तसुकुमारमूर्तिर्लौकिकभाषा सहृदयानानन्दयति । यत्र निगूढार्थपरिज्ञानमनायासेन जायते । काले गच्छति संस्कृतभाषायां राजपोषणात् प्रच्युतिमापन्नायां सर्वतोमुखवैदुष्यं च क्रमशः कार्श्यमाप्नोति । शास्त्राणां पठनपाठनवैरल्येन भारतधर्मस्य विज्ञानस्य च ग्लानिरनुदिनमभिवर्धते । तस्याचिरादेव विप्लवश्च जायेतेति

भीतिरुदेति भारतवैज्ञानिकाभिमानिनां हृदयसीमसु । तस्योद्धरणे नान्यमुपायमुपलभामहे ऋते गीर्वाणवाणीमुखेनार्याणां विज्ञानपरिज्ञानात् । शास्त्रजातस्य क्लिष्टतया तद्बोधितविषयाणामौपनिषदस्य तत्त्वस्य च सुगमतया बोधकः संस्कृतभाषात्मको ग्रन्थराशिः तादृशं व्याख्यानजातं चाद्य भृशमपेक्ष्यते । प्राप्तोऽयं समयः संस्कृतभाषाभिज्ञानां लौकिकभाषात्मकग्रन्थरचनायै यावदध्येतृजनोऽचिरेणैव लोकयात्राया-मुत्तमं स्थानमाक्रामेत् । यथार्हमभ्युदयनिःश्रेयसे प्राप्नुयाच्च ।

पञ्चपञ्चप्रकरणपरिमितभागत्रयविशिष्टानि पञ्चदशप्रकरणान्यस्मिन् ग्रन्थे संलक्ष्यन्ते । तत्र प्रथमो भागो विवेकपञ्चकमिति, द्वितीयो दीपपञ्चकमिति तृतीय आनन्दपञ्चकमिति च ज्ञायते । ब्रह्मशब्देन सच्चिदानन्दात्मकमेकमेवाद्वितीयं परं ब्रह्माभिधीयते । तच्च साक्षात्कार्यं वस्तु । तद्भिन्नतया भासमानस्य भूतभौतिकसृष्टेस्तन्निदानभूतजीवेश्वरसृष्टेश्च विवेचनेन तत्साक्षात्कारसिद्धिः । एवमसतो विवेचितस्य परमात्मनः प्रत्यगभिन्नता च तत्त्वमस्यादिमहावाक्यार्थविचारणेन बोध्यते । इयं विवेचनारीतिर्विवेकपञ्चकाख्ये प्रथमपञ्चके विनिर्णीयते । एतादृशविवेचनाफलं च तत्त्वमसीतिमहावाक्यघटकतच्छब्दबोधितस्य प्रत्यगभिन्नपरब्रह्मणोऽवगतिः । अद्वितीये परे ब्रह्मणि मायया जगज्जीवेश्वराः प्रकल्पिताः । कूटस्थब्रह्मजीवेश्वरा इति चितेश्चातुर्विध्यं त्रिविधायाः प्रकृतेरन्यतमया अविद्यया परिकल्पितस्य जगज्जीवेशब्रह्मभेदभावस्य मिथ्यात्वं अविद्यानाशकमार्गश्च द्वितीये पञ्चके विज्ञाप्यते । जीवेशगताविद्यातमोनाशने दीपायत इति दीपपञ्चकमित्यन्वर्थनाम्ना तदुच्यते । तत्फलं चोक्तमहावाक्यगत "त्वं" पदार्थस्य स्पष्टतः प्रतीतिः । जीवब्रह्मणोरसिशब्देन बोधितमैक्यं ब्रह्मणः परमानन्दस्वरूपत्वम् । अन्ये विद्यानन्दादयस्तस्य परमानन्दस्य मात्राभूताः । एते विविधानन्दा आनन्दाभिधे तृतीयपञ्चके वर्ण्यन्ते । एवं सर्वोपनिषदां मकुटालंकारभूतस्य "तत्त्वमसी"ति महावाक्यस्य व्याख्यानस्थानमलंकुर्वत् विवेकदीपानन्दाभिधेयं प्रकरणपञ्चकत्रयमन्वर्थनाम भवति ।

आसृष्टेरपि यन्मूलकारणान्वेषणे महतामपि बुद्धिः कुंठीभवत्यचिन्त्यरचनावैभवस्यास्य जगतोऽसत्यत्वं तमोरूपया मायया नित्ये निर्विकारे परे ब्रह्मणि तस्यारोपितत्वं जीवब्रह्मणोरैक्यज्ञानमन्तरा निःश्रेयसाख्यस्य मोक्षस्य दुःसाधत्वं नांवेशयो-

रपि चिदाभासस्वरूपेण तथैव मायया निर्मितत्वं चेति सर्वसिद्धान्तानामलंकारभूतमिदं परमरहस्यमसम्प्राचीनैरन्तर्मुखैर्महर्षिभिस्तत्त्वनिश्चयकामैः श्रुत्यर्थमननेन साक्षात्कारेण च प्रतिपाद्यते। आधुनिकैर्वस्तुशास्त्ररसवादशास्त्रकुशलिभिः पंडितैरप्ययमेवार्थो दृढीक्रियते। परमाणुसंघातात्मकं द्व्यणुकादिपरिकल्पितं सर्वं वस्तुजातं तच्चालनात्मिका तदतीता तदाश्रया काचिच्छक्तिरिति (matter and energy) च सर्वं जगत् द्विधा विभिक्तमिति प्राचीनानां वस्तुशास्त्रवादिनां मतम्। आधुनिकास्तु सर्वं परमाणुस्वरूपं "अयान्" "प्रोटान्" नामकशक्तिघनानां परमाणोरपि सूक्ष्मतमानां संघात एवेति सनिदर्शनं निरूपयन्ति। चेतनात्मिका च शक्तिः। एवं सर्वं वस्तुजातं चेतनात्मकमित्यद्वैतवादः संपद्यते। शक्तिवद्विशिष्टपदार्थनिमित्तको विभागोऽपास्तो भवति। न च प्राचीनशास्त्रज्ञैः प्रतिपादितश्चैतन्यसाहित्यराहित्यनिमित्तश्चेतनाचेतनविभाग आधुनिकैरंगीक्रियते। वृक्षादिषु चैतन्यप्रतीतिर्बोसमहाशयेन विस्पष्टं सिद्धान्तिता। बुद्धिप्रतिबिंबितचिदाभाससत्वासत्त्वाभ्यां चेतनाचेतनविवेक इत्यद्वैतिनां मतम्। रसवादशास्त्रज्ञाः पूर्वेतनास्सर्वे पदार्थाः षण्णवतिसंख्याकानां पदार्थानामन्यतमानां सम्मिश्रणेन संजाता इत्यमंसत। आधुनिकास्तु सर्वपदार्थानां एकस्यैव पदार्थस्य मूलकारणत्वं तस्य प्रस्थानभेदतस्तेषामसंख्याकत्वं चोपपादयन्ति। एवमेव तेषां चिज्जडात्मकविभागः पूर्वपक्षतामाधुनिकैर्गमितः। सर्वं वस्तुजातं मनः कल्पितमित्यधुनातना अभिप्रयन्ति। अयं सिद्धान्तोऽद्वैतिनां मायावादस्योपोद्बलकं भवति। विपुलोऽयं विषयो नात्र प्रपञ्चनमर्हति। आस्माकैर्महर्षिभिः प्रज्वलितोऽद्वैतज्ञानदीपः पाश्चात्यविज्ञानेन संचालितः प्रकाशतेतमामिति च संतुष्यामः। सर्वे हि द्वैतवादा परस्परं विरुद्धार्थप्रतिपादकतया सुन्दोपसुन्दन्यायेन मिथो व्याहन्यन्त इति न तेषां खण्डनापेक्षा। अथापि कचिदभ्युपगमवादेन निराकृतास्ते। अद्वैतवादस्तु सर्वेषामनभिमतोऽपि प्रमाणशतैरेकरूपतया भगवत्पादादिभिरैककण्ठ्येन प्रतिपादितोऽमृतह्रद इव रसघनो नितरामात्मानमात्मनैव मण्डयति।

येषां निरुपमकृपाविशेषेणामेयशिष्यवत्सलतया चांगीरससंवत्सराषाढासितद्वितीयामारभ्य हायनषट्कपर्यन्तं प्रस्थानत्रयश्रवणानन्तरमिमं ग्रन्थं विरच्य पाठकमहाशयानां पुरत उपस्थापनयोग्यता मे प्रसादिता तेषामस्मद्गुरुकुलावतंसानामानृण्यं

जन्मान्तरेऽपि दुस्साधमिति नातिशयोक्तिः। तेष नित्यकल्याणमूर्तिर्विहरत्वनिशं मे हृदयसीम्नीति परमेश्वरीमभ्यर्थये ।

स्वकं श्रमातिशयमनाकलय्य व्याख्यानस्यास्य संशोधनं गंभीरमुपोद्धातं च सोत्साहं विरच्य मामतीव बहूकृतवतामसद्गोत्रालंकारायमाणानां पितृकल्पानां श्रीमहामहोपाध्याय कलाप्रपूर्ण वैयाकरणसार्वभौमादि बिरुदांचितानां श्रीताता सुब्ब-रायशास्त्रिपादमहोदयानां मामकीनामपारां कृतज्ञतामत्र सप्रणामं विज्ञापयामि ।

मय्यतीव सुदृढबद्धादरा सिंहपुरी (नेल्लूरु) संस्कृतकलाशालाध्यक्षाः विद्याभूषण श्रीगाजुलपल्लि हनुमच्छास्त्रिवर्याः तेनालि संस्कृतकलाशाला-ध्यक्षाः श्रीजम्मुलमडक माधवरामशर्माणः गुंटूरु हिंदूहैस्कूल् संस्कृतोपाध्याया व्याकरणविद्याप्रवीण श्रीओरुगंटि नीलकंठशास्त्रिणः अस्मद्दीक्षागुरुपुत्राः साहित्य-विद्याप्रवीण श्रीभारतुल नरसिंहशर्माणः अन्ये माननीयाः सुहृद्वरा येऽस्य ग्रन्थस्य मातृकाया आयत्तीकरणे मुद्रणविधौ परिशोधने च महान्तमपि श्रममपरिगणय्य साह्यमरीरचंस्ते सर्वेऽपि मत्समर्पिता नुतिततीः स्वीकुर्वन्त्वनुगृह्णन्त्विमं जनमिति मुहुर्मुहुरभ्यर्थये ।

तेनालिपुरी विराजमान लक्ष्मीपवर् मुद्रणालयाधिकारिणां श्री पिल्लरुमर्रि लक्ष्मीनारायणार्याणां संस्कृतभाषासेवैकसमर्पितचित्तानां निनरामात्मीयां कृतज्ञतां निवेदयामि ।

मुद्रणस्यास्येदं प्रथमतया भ्रमप्रमादजनितानि स्खलितानि ग्रन्थान्तेऽनुबद्ध-शुद्धिपत्रमुखेन परिहरणीयानीत्यध्येतृमहाशयेभ्यो विज्ञापयामि ।

ललितारामं (बृंदावनं)

गुंटूरु

श्रीचित्रभानु आश्वयुज शु ९

१८–१०–४२

रायप्रोलु लिंगन सोमयाजी

# विषयसूचिका ।

## १. तत्त्वविवेकप्रकरणम् ॥ १–३४ ॥



## २. महाभूतविवेकप्रकरणम् ॥ ३५–७५ ॥



## ३. पञ्चकोशविवेकप्रकरणम् ॥ ७६–९४ ॥

## ४. द्वैतविवेकप्रकरणम् ॥ ९५-१२६ ॥



## ५. महावाक्यप्रकरणम् ॥ १२७-१३६ ॥



## ६. चित्रदीपप्रकरणम् ॥ १३७-२४१ ॥

## ७. तृप्तिदीपप्रकरणम् ॥ २४२–३४३ ॥

## ८. कूटस्थदीपप्रकरणम् ॥ ३४४–३७० ॥



## ९. ध्यानदीपप्रकरणम् ॥ ३७१–४३० ॥

## १०. नाटकदीपप्रकरणम् ॥ ४३१–४४० ॥



## ११. योगानन्दप्रकरणम् ॥ ४४१–४८६ ॥



## १२. आत्मानन्दप्रकरणम् ॥ ४९०–५१६ ॥



## १३. अद्वैतानन्दप्रकरणम् ॥ ५१७–५५३ ॥

## १४. विद्यानन्दप्रकरणम् ॥५५४-५६७॥



## १५. विषयानन्दप्रकरणम् ॥ ५६८-५७८ ॥

अथ

# कल्याणपीयूषव्याख्यासमेता पंचदशी

श्रीगणेशायनमः

## तत्त्वविवेकप्रकरणम् ।

### कल्याणपीयूषव्याख्यारम्भः ।

---

श्रीकल्याणगुणाकरानसदृशानन्दानुसन्धायिनः
कृत्वाऽस्मान् सकलान् महाश्रुतिशिरःश्रीभारतीभारतीन् ।
दत्वाऽत्यैक्यमतिं च नः स्वसहजां वेदान्तपारीणता
भिख्यां ख्यापयतोऽन्वहं हृदि भजे श्रीभारतीस्वामिनः ॥ १ ॥

श्रीतातान्वयभूषणं फणिपवागम्भोधिकुम्भोद्भवम्
सुब्बारायबुधं महान्वितमहोपाध्यायमीडे ततः ।
काशीकृष्णबुधं कणादवचसामध्यापकं मे मुदा ।
विद्यावाध्यैवधानिपण्डितशिरोरत्नं नमाम्यन्वहम् ॥ २ ॥

यो वेदीत्रयवेदनादमुदितो यश्चान्ध्रभूविश्रुतः
मत्तातावधि यत्र मूलपुरुषादारभ्य यज्ञेश्वरम् ।
सन्तर्प्योत्तमदक्षिणैर्बहुमखैः सर्वेऽभवन्याजिनः
सोऽयं राजति रायप्रोल्वभिधया वंशोऽधुनाप्युच्चकैः ॥ ३ ॥

तदन्वयेऽभूद्बहुशास्त्रवेत्ता वाग्मी बुधः श्रीरमणाभिधानः ।
यो राज्यलक्ष्मीं परिणीय सोमं पीत्वा लसत्कण्डलितामवाप्तः ॥ ४ ॥

तद्भजो लिङ्गनसोमयाजी कल्याणपीयूषपदाभिधेयाम् ।
व्याख्यां तनोत्यर्पयितुं स्वपित्रोः पदाम्बुजे पञ्चदशीविपञ्चीम् ॥ ५॥

यैरिमे गुरुभिः पूर्वं पदवाक्यप्रमाणतः ।
व्याख्याताः सर्ववेदान्तास्तान्नित्यं प्रणतोऽस्म्यहम् ॥ ६ ॥

इह खलु मुमुक्षुजनानुजिघृक्षया वेदान्ततत्त्वव्युत्पित्सूनां सुखबोधाय परम कारुणिकस्तत्रभवानपरशङ्करावतारः श्रीविद्यारण्यगुरुः पञ्चदशीनाम्ना विख्याते ग्रन्थराजे तत्वविवेकाख्यमादिमं प्रकरणमारभमाणः प्रारीप्सितग्रन्थस्य निरन्तराय परिसमाप्तेस्साधनीभूतं शिष्टसम्प्रदायानुमितश्रुतिबोधितेतिकर्तव्यताकमिष्टदेवता गुरुनमस्काररूपं प्रेक्षावत्प्रवृत्तिप्रयोजकं शिष्यपरम्परानुकरणकारणीभूतं विषय प्रयोजनाधिकार्यनुबंधित्रयसूचकं मङ्गलमादावुपनिबध्नात्यनुष्टुब्रूपेण, नम इति ।

## पञ्चदशीप्रारम्भः ।

### मङ्गलाचरणम्

**नमः श्रीशङ्करानन्दगुरुपादाम्बुजन्मने ।**
**सविलासमहामोहग्राहग्रासैककर्मणे ॥ १ ॥**

पञ्चदशप्रकरणान्यस्मिन् ग्रन्थे सन्तीति स्त्रीलिङ्गप्रत्ययेन वेदान्तपञ्चदशीत्या ख्यया विख्यातोऽयं ग्रन्थः । ननु न केनापि प्रत्ययेन स्त्रीप्रत्ययसम्पादकेन मतुबर्थे केन व्युत्पादयितुं शक्यत इति चेन्न; "अर्श आदिभ्योऽच्" इति सूत्रेण अच्प्रत्यये 'नस्तद्धित' इति टिलोपे पञ्चदशेति रूपनिष्पत्तौ तस्य गौरादिपाठात् 'षिद्गौरादि भ्यश्चे' ति ङीष्प्रत्ययस्य सुसाधत्वात्; किञ्च पूर्वपदस्य तदधिकलक्षणया पञ्चाधिका नां दशानां प्रकरणानां समाहार इत्यर्थे तद्धितार्थेत्यादिना समाहारसमासे पञ्चतक्षे त्यादाविव 'अनो नलोपश्च वा द्विगुस्त्रियाम्' मिति वार्तिकेन नलोपे 'द्विगो' रिति ङीपा वा समाधेयम्; यद्वा पञ्चदशानां पूरणीत्यर्थे डिटि टित्वप्रयुक्तेन ङीपा पञ्च दशीति प्रत्येतव्यः । 'पक्षान्तौ पञ्चदश्या' वित्यमरकोशबलेन पञ्चदशीशब्देन पूर्णिमार्थे गृहीते 'मञ्चाः क्रोशन्ती' तिवत् तात्स्थ्यलक्षणया ज्योत्स्नेत्यर्थस्सम्पद्यते। एवं च प्रकृतीनां सुधाकरदीधितिरिव जिज्ञासूनामतिदुरूहाऽद्वैतसिद्धान्तरहस्यपरि

शोधनश्रमापनोदकाह्लादनपूर्वकमर्थप्रकाशनक्षमो भवत्ययं ग्रन्थ इति कौमुदीसादृश्य मूलकज्योत्स्नात्वारोपोऽत्रेति नार्थाऽसङ्गतिः ।

नमः नमस्कारोऽस्तु; कस्मै ? श्रीशङ्करानन्दगुरुपादाम्बुजन्मने, श्रिया अणिमाद्यष्टैश्वर्यैर्युक्तः स चासौ शङ्करश्च श्रीशङ्करः । शं निरतिशयानन्दं करोत्यशेषदुःखोन्मूलकज्ञानोपदेशेन प्रापयतीति शङ्करः । शङ्करश्चासावानन्दश्च शङ्करानन्दः; आनन्दः परं ब्रह्म, ब्रह्मभावमापन्न इत्यर्थः; यद्वा शङ्करः निरतिशय सुखकारी ज्ञानिलोकस्य परमात्मा, 'एष ह्येवानन्दयाती'ति श्रुतेः' (तै. २ . ७) आनन्दः शोधितजीवः प्रत्यगात्मा, तदभिन्नं परं ब्रह्मेत्यर्थः, 'आनन्दो ब्रह्मेति व्यजाना'दिति श्रुतेः, (तै. ३ . ६)। शङ्करानन्दशब्दयोस्सामानाधिकरण्येन परमात्म प्रत्यगात्मनोरभेदस्सूचितः । स एव गुरुः देशिकः, तस्य पाद एव अम्बुजन्म नीरजं तस्मै; पाद इति जातावेकवचनम्; अम्बुजन्मने कथं भूताय ? स विलास महामोहग्राहग्रासैककर्मणे विलासः सृष्टिरूपः कार्यवर्गः, तेन सहितो यो महामोहः मूलाज्ञानं स एव ग्राहः मकरः, तस्य ग्रासः निर्मूलनं, स एव एकं मुख्यं, कर्म चेष्टा यस्य तस्मै । नन्वचेतनस्य अम्बुजन्मनश्चेतनसाध्यस्य ग्राह ग्रासैकरूपस्य कर्मणोऽसम्भव इति चेन्न; अचेतनस्याप्यम्बुजन्मनो गुरुपादत्वेन परिणामेन ग्रासैककर्मणि क्षमत्वात्; परिणामोऽयनलङ्कारः, 'परिणामः क्रियार्थश्चे द्विषयी विषयात्मना,' यथा 'प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा' । अशेषसंसार कारणीभूताज्ञानोच्छेदनक्षमगुरुचरणसरोजाभ्यां नमोवाकमाशास्महे इति भावः। अत्र शङ्करानन्दशब्दयोस्सामानाधिकरण्येन जीवब्रह्मणोरैक्यं विषयस्सूचितः, महा मोहग्राहग्रासैकेत्यादिनाशेषावरणोन्मूलकब्रह्मसाक्षात्कारः प्रयोजनं सूचितम् ॥ १ ॥

पूर्वत्र व्यङ्ग्यमर्यादया सूचिते विषयप्रयोजनेऽधिकारिणं च स्पष्टमुपपादयति, तदिति,

तत्पदाम्बुरुहद्वन्द्वसेवानिर्मलचेतसाम् ।
सुखबोधाय तत्त्वस्य विवेकोऽयं विधीयते ॥ २ ॥

तत्पदाम्बुरुहद्वन्द्वसेवानिर्मलचेतसां तस्य पादावेव अम्बुरुहे तयोर्द्वन्द्वं युग्मं तस्य सेवया अर्चनेन पूर्वोत्थानजघन्यशायित्वाद्युपलक्षितपरिचर्यया

निर्मलचेतसां अपेताशेषकलुषान्तःकरणानाम् "तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया" (गी. ४ . ३४) इति स्मृतेर्गुरुचरणसेवाया एव विशिष्टज्ञानसाधकत्वेनाभ्युपगमात्; निर्मलचेतसामित्यनेन रागादिदोषादूषितस्साधनचतुष्टयसम्पन्नोऽत्राधिकारीति सूच्यतेः एवङ्गुणविशिष्टो जिज्ञासुरुपदेशार्हो भवति गुरुसत्तमानामिति भावः। तेषां सुखबोधाय अनायासेन बोधाऽवाप्तये अयं वक्ष्यमाणः तत्वस्य विवेकः पञ्चकोशेभ्यो विवेचना विधीयते क्रियते। तत्त्वम्पदाभ्यां बोधितयोः परमात्मप्रत्यगात्मनोरसिशब्देन बोधितमैक्यं, तेन लब्धो योऽखण्डार्थस्स तत्त्वशब्देन विवक्षितः; यद्वा तदिति परंब्रह्म तस्य भावः तत्त्वम्। ब्रह्मणो याथार्थ्यमनारोपितस्वरूपं ज्ञेयं वस्तु, तस्य पञ्चकोशेभ्यो विवेको विषयः, ज्ञेयं वस्तु, तत्सुखबोधैव प्रयोजनम्। रागरहितानामधिकारिणां जिज्ञासूनां सुखेन तत्त्वज्ञानावाप्तिसिद्धये परब्रह्मणः पञ्चकोशविवेचनामधिकृत्य तत्त्वविवेकनामकमिदं प्रकरणं विरच्यत इति भावः ॥ २ ॥

ननु ब्रह्मणो नित्यैकज्ञानरूपतया तद्भिन्नस्यानृततया च श्रुतिसिद्धत्वेनानुभूयमानो घटज्ञानं पटज्ञानमिति ज्ञानभेदः, घटज्ञानं नष्टमित्यादिनाशव्यवहारश्च कथमुपपद्यत इत्याशङ्कां निराकरोति शब्देत्यादिभिः पञ्चभिः।

ज्ञानस्यानित्यत्वानिरूपणम्।

'शब्दस्पर्शादयो वेद्या वैचित्र्याज्जागरे पृथक्'
ततो विभक्ता तत्संविदैकरूप्यान्न भिद्यते ॥ ३ ॥

तत्र तावदादौ जागरे ज्ञानस्यैकत्वं प्रतिपादयति, शब्देति। शब्दस्पर्शादयः श्रोत्रत्वगादीन्द्रियाणां विषयाः, आदिशब्देन श्रोत्रत्वगादीनि शब्दस्पर्शादीनां ग्राहकेन्द्रियाणि तदभिव्यक्तिस्थानान्याकाशादीनि च गृह्यन्ते, ते वेद्याः विदिक्रियायाः कर्मभूताः ज्ञानविषया इत्यर्थः, ते जागरे सर्वेन्द्रियाणां व्यापारदशायां, वैचित्र्यात् विलक्षणस्वभावोपेतत्वात् पृथक् परस्परं भिन्नाः, ततो वैलक्षण्येन प्रतीयमानेभ्यो विषयेभ्यो, विभक्ताः पृथक्कृताः विषयविनिर्मुक्ताः। तत्संवित् तेषां वेद्यानां संवित् ज्ञानं, न भिद्यते। तत्र कारणमाह, ऐकरूप्यादिति, ऐकरूप्यात् एकं रूपं यस्यास्सा एकरूपा। तस्याः भावात्, संवित्संविदित्येकाकारेण

भासमानत्वात् । एकरूपा संवित् घटपटाद्युपाधिभेदेन भिन्नेव भासमानाप्युपाधि परामर्शविरहिता सती एकैव भातीति भावः ।

अत्र शब्दस्पर्शादयो वेद्यास्तद्ग्राहिका संविदिति चोक्तम् । संविन्नाम विषयोपलब्धिप्रयोजकं चेतनात्मकं वस्तु । तच्छान्तःकरणे प्रतिबिम्बतचिदभासद्वारा विषयान् प्रकाशयति, प्रदीपः प्रभाद्वारा छायापटमिव । चिदाभासेन प्रकाशितमंतःकरणं ज्ञानेंद्रियैर्विविधविषयान् संगृह्य केदारप्रविष्टतटाकोदकमिव तदाकाराकारितं भवति । तदा तत्तद्विषयोपलब्धिर्भवति । प्रकाशे सति दर्पणस्य विविधविषयप्रतिबिम्बग्राहकत्वसिद्धिः । प्रतिबिम्ब्यवस्त्वभावेऽपि दर्पणं प्रकाशत एव । दर्पणाभावेऽपि तत्प्रकाशिका सूर्यकांतिः स्वयमेव प्रकाशते । इदं स्वयंप्रकाशं चिदात्मकं वस्तु संविदित्युच्यते । तस्य भासा विविधविषया अवभास्यन्त इति भावः ॥३॥

जागरे संविदः एकरूपतां निरूप्य स्वप्नेप्यतिदिशति । तथेपि ।

**तथा स्वप्नेऽत्र वेद्यं तु न स्थिरं जागरे स्थिरम् ।**
**तद्भेदोऽतस्तयोस्संविदेकरूपा न भिद्यते ॥ ४ ॥**

जागरे यथा ज्ञेयानामनेकत्वेऽपि संविदः एकरूपता तथा स्वप्ने उपसंहृतबाह्यकरणावस्थायामपि विषया एव भिन्नाः, संविच्चैका । जाग्रत्स्वप्नयोर्विषयाणामनेकत्वमेकत्वं च संविदस्समानमेव । तर्हि तयोः किमन्तरमित्यत आह, अत्रेति । अत्र स्वप्ने, वेद्यं तु ज्ञेयजातं न स्थिरं स्वप्नापगमे तस्याऽप्रतीतेः; "माया मात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादिति (ब्र. सू. ३. १. ३०) सूत्रात् जागरे यद्वेद्यं तत् स्थिरम् कालान्तरेऽप्युपलभ्यमानत्वात्; अतो वेद्ययोः स्थिराऽस्थिरत्वमात्रकृत एव तद्भेदः जाग्रत्स्वप्नयोर्भेदः, तयोर्जागत्स्वप्नयोः संविन्न भिद्यते, किन्तु एकरूपा, जाग्रत्स्वप्नयोर्विषयाणामनेकत्वं संविद एकत्वं च समानमेव । किन्तु वेद्यस्य स्थिरास्थिरत्वमात्रेणैव तद्भेद इति भावः ॥४॥

अनन्तरं सौषुप्तिकसंविदोऽप्येकत्वविवक्षया आदौ तदस्तित्वं साधयति, सुप्तेति ।

**सुप्तोत्थितस्य सौषुप्ततमो बोधो भवेत् स्मृतिः ।**
**सा चाऽवबुद्धाविषयाऽवबुद्धं तत्तदा तमः ॥ ५ ॥**

सुप्तोत्थितस्य, पूर्वं सुप्तः पश्चादुत्थितः यद्वा सुप्तं सुषुप्तिः तस्मादुत्थितः तस्य, सौषुप्ततमोबोधः, सुषुप्तिर्गाढनिद्रावस्था यत्रोपसंहृतानि मनसा सह सर्वेन्द्रियाणि, तत्रानुभूयमानं तमः यदज्ञानं तस्य बोधः न किञ्चिदवेदिषमित्याकारकं ज्ञानं स्मृतिर्भवेत्; सा च नाऽनुभवः, तदा विषयेन्द्रियसन्निकर्षाऽभावात्; नानुमितिः, लिङ्गादेरभावात्; अतः सा स्मृतिः अवबुद्धविषया अवबुद्धोऽवगतो विषयो यस्यास्सा स्मृतिरनुभूतपूर्वविषयजन्यं ज्ञानमेव भवति। तया च नियमेनानुभवपूर्वकतया भवितव्यं, कारणस्य कार्यनियतपूर्ववृत्तित्वात्। स चानुभवोऽवश्यं सुषुप्तिकालिक एव स्यात्, अवस्थान्तरे तदनुभवाऽभावात्। सर्वोऽप्यनुभवो ज्ञानात्मकः। तर्हि सौषुप्तिकानुभवरूपं ज्ञानं किं विषयमित्याशंक्याह, अवबुद्धमिति। तदा सुषुप्तौ तत् न किंचिदवेदिषमिति सर्वजनानुभवसिद्धं तमः अज्ञानं अवबुद्धमनुभूतम्। न किंचिदवेदिषमितिज्ञाने ज्ञानाभावो विषयइति वक्तुं न शक्यते, तस्य दुरुपपादत्वात्। ज्ञानाभावो हि ज्ञानसत्वे दुर्निरूपः। अत्र नित्यस्य अहमिति प्रतीयमानस्य ज्ञानरूपस्य सत्त्वात्तदभावो दुर्निरूपः। प्रतिबंधकवशात् ज्ञानाभाव इतिचेत् किं तत्प्रतिबन्धकम्? स्वरूपावरकं तम इति चेत् तदेव तमः न किञ्चिद्वेदिषमित्यनुभवे विषय इति ब्रूमः। किं पृथग्ज्ञानाभावकल्पनया? तथा च सिद्धं ज्ञानाभवविलक्षणं भावरूपं तमः अज्ञानावरणाभिधेयमिति विवेकः॥५॥

सौषुप्तिकसंविदोऽस्तित्वं प्रदर्श्य तस्य विषयाद्भेदं जाग्रदादिसंविदोऽभेदम् च प्रदर्शयन्नित्यत्वमुपपादयति स इति॥

स बोधो विषयाद्भिन्नो न बोधात्स्वप्नबोधवत्।
एवं स्थानत्रयेऽप्येका संवित्तद्वद्दिनान्तरे॥ ६॥

मासाब्दयुगकल्पेषु गतागतेष्वनेकधा।
नोदेति नाऽस्तमेत्येका संविदेषा स्वयम्प्रभा॥ ७॥

सः 'न किञ्चिदवेदिष' मित्याकारकस्मृत्यनुभवरूपो बोधः विषयात् स्वज्ञेयविषयात्तमसो भिन्नः, विषयविषयिणोर्भेदात्, स्वप्नबोधवत् यथा स्वाप्निकज्ञानं स्वविषयात्स्वाप्निकशिरश्छेदादेर्भिन्नं, तथा सौषुप्तिकबोधो बोधात् स्वाप्निकात् न भिन्नः; स्वप्नबोधात्सौषुप्तिकबोधो न भिद्यते, यथा जाग्रद्बोधात्स्वप्नबोधो न

भिद्यते: तद्वत् एवं स्थानत्रये ऽप्येकस्मिन्दिने जाग्रदादिषु संविदेकेति निरूपिता। एवं निरूप्य तस्याः कालिकाभेदमपि प्रतिपादयति, तद्वदिति। दिनान्तरेऽपि तद्वत् तथैव अभिन्ना। अनेकधा सृष्ट्यादि बहुधा गतागतेषु अतीताऽगामिषु मासाब्दयुगकल्पेषु सर्वकालेषु संविदेका सा संविन्नोदेति न जायते नाऽस्तमेति न नश्यति, कालत्रयाबाध्यत्वात् सत्या नित्या चेति भावः। एषैका संवित् स्वयम्प्रभा स्वयम्प्रकाशा नान्यैः प्रकाश्यते, अन्यस्य प्रकाशकस्य विद्यमानत्वेऽनवस्थादोषापत्तेः; 'विज्ञातारमरे केन विजानीयात्' (बृ. ४.५.१५) 'अमृतोऽदृष्टो द्रष्टाऽश्रुतश्श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता' (बृ. ३.७.२३) 'तस्य भासा सर्वमिदं विभाति" (कठ. २.५.१५) "न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित्," (कठ. १.२.१८) इत्यादिश्रुतिशतं चात्र प्रमाणम्। ननु यदि स्वयम्प्रकाशा संवित्तदा घटवत्तस्या अपि वेद्यता स्यादिति चेन्न; वेद्यत्वे सति केन वेद्या भवेत्? स्वेनाऽन्येन वा? आद्ये स्वेनैव स्वयं ज्ञायत इति विरुद्धम्, एकस्यैव कर्तृकर्मव्यपदेशाऽनर्हत्वात्; द्वितीयेऽनवस्थादोषप्रसङ्गः; अतः संवित् स्वयम्प्रभा अपरोक्षाऽप्यवेद्या चेति भावः। ११६. ७. ११.

ननु सुखबोधाय तत्त्वविवेकः क्रियत इति प्रतिज्ञा कथमुपपद्यते? बोधरूपायास्संविदो नित्यत्वप्रसाधनेन सिद्धरूपतया बोधायेति फलत्वोक्तेरसङ्गतेरित्याशङ्क्य आह, इयमिति।

ज्ञानस्य आत्मत्वपरमानन्दत्वनिरूपणम्।

**इयमात्मा परानन्दः परप्रेमास्पदं यतः।**
**मा न भूवं हि भूयासमिति प्रेमात्मनीक्ष्यते ॥ ८ ॥**

इयं संविदेव आत्मा भवितुमर्हति, नित्यत्वे सति सत्यत्वसिद्धेः। जायतेऽस्ति वर्धते परिणमत्यपक्षीयते नश्यतीति षड्विकारराहित्यं नित्यत्वम्; तदेव सत्यत्वमपि। "यद्रूपेण यन्निश्चितं वस्तु तद्रूपं न व्यभिचरति तत्सत्यम्; यद्रूपेण यन्निश्चितं वस्तु तद्रूपं व्यभिचरति तदनृतमित्युच्यते"। एवं सति नित्यसत्यस्वप्रकाशस्वरूपसंविदभिन्नः आत्मेति सम्पन्नम्। स आत्मा परानन्दः निरतिशयसुखस्वरूपः। कुतः? यतः परप्रेमास्पदम् निरतिशयप्रेम्णस्स्थानमात्मा भवति। आत्मनः

परप्रेमास्पदत्वं साधयति, मेति । हि यस्मात् कारणात् मा न भूवं न कदापि नाभूवं ममासत्वं माभूत्, किञ्च भूयासमेव सदा मम सत्त्वमेव भूयादिति कामयमानस्य आत्मनि प्रेम ईक्ष्यते दृश्यते ॥ ८ ॥

एवमात्मनि प्रेमास्पदत्वं प्रदर्श्य तस्य प्रेम्णः परत्वं साधयति, तदिति ।

**तत्प्रेमार्थमन्यत्र नैवमन्यार्थमात्मनः ।**
**अतस्तत्परमं तेन परमानन्दताऽऽत्मनः ॥ ९ ॥**

अन्यत्र जायापतिवित्तपश्वादिषु यत् प्रेम प्रदर्श्यते तत्प्रेम आत्मार्थ मात्मनः प्रयोजनायैव । एवम्प्रकारेण आत्मनि दृश्यते यत्प्रेम तदन्यार्थमन्यप्रयोजनाय न । 'आत्मनस्तु कामाय सर्वं प्रियं भवती' ति श्रुतेः (बृ. ४. ५. ६) । अतः आत्मनि दृश्यमानं यत्प्रेम तत्परमं निरतिशयं भवति । निरतिशयत्वं च प्रेमान्तरा प्रयोज्यत्वम् । आत्मनि प्रेम प्रेमाऽन्तराप्रयोज्यम् । दारादिषु प्रेम तु आत्मप्रेम प्रयोज्यम् । तेनाऽऽत्मनः परमानन्दता । आत्मन्यनुभूयमानं प्रेम प्रयोजनान्त रानपेक्षि, अन्यत्र तु आत्मनेमापेक्षि; इति परमप्रेमास्पदत्वेन आत्मन एव निरति शयसुखानन्दत्वमिति भावः ॥

विषयोऽयं द्वादशाध्याये षष्ठश्लोकादारभ्य पंचाशतमश्लोकपर्यन्तं विपुलतरं व्याख्यातः ॥ ९ ॥

एवंतावन्नित्यसत्यस्वप्रकाशस्वरूपा संविन्, सैव परमानन्दस्वरूपा आत्मा ऽभिन्नेति च प्रदर्शिता । तस्याः परब्रह्माऽभिन्नत्वं दर्शयति, इत्थमिति ।

ज्ञानस्य परब्रह्माभिन्नत्वनिरूपणम् ।

**इत्थं सच्चित्परानन्द आत्मा युक्त्या तथाविधम् ।**
**परं ब्रह्म तयोश्चैक्यं श्रुत्यन्तेषूपदिश्यते ॥ १० ॥**

इत्थं तृतीये श्लोके ज्ञानस्य नित्यत्वमुक्त्वा तस्यैवाष्टमे आत्मत्वं प्रतिपाद्य आत्मनो नवमे परानन्दरूपत्वं च प्रदर्शितम् । एवं युक्त्या लोकानुभवहेतुपरामर्शेन आत्मा सच्चित्परानन्दः सच्चिदानंदरूप इति सिद्धः । आत्मनि परानन्दत्वं

प्रतिपाद्य ब्रह्माभेदं प्रतिपिपादयिषुर्ब्रह्मणः श्रौतं लक्षणमाह, तथाविधमिति । परं ब्रह्म च तथाविधं सच्चिदानन्दरूपमेवेति "सत्यं ज्ञानमनन्तं ब्रह्म (तै. २-१)' 'विज्ञानमानन्दं ब्रह्म' (बृ. ३-९-२८) । "अत्रायं पुरुषः स्वयंज्योतिर्भवति।' (बृ. ४-३-९) "ज्ञोऽत एव" (ब्र. सू. २-३-१८) वेत्यादिभिः श्रूयते ॥ एवं लक्षणैक्यात्तयोरात्मब्रह्मणोस्सिद्धमैक्यं प्रमाणेन भूषयति, तयोरिति । तयोरात्मब्रह्मणोरैक्यमखण्डैकरसत्वं श्रुत्यन्तेषु श्रुतीनामन्तेषु निश्चितार्थासूपनिषत्सु "अयमात्मा ब्रह्मे"त्यादिषु (बृ. ४. ४. ५.) उपदिश्यते आप्तीभूय प्रतिपाद्यते ॥१०॥

आत्मनः परमानन्दरूपत्वे विप्रतिपत्तिमाशङ्क्य परिहरति, अभान इति,

**अभाने न परं प्रेम, भाने न विषये स्पृहा ।**
**अतो भानेऽप्यभाताऽसौ परमानन्दताऽत्मनः ॥ ११ ॥**

आत्मनः परमानन्दता भासते न वा ? अन्त्ये आह, अभान इति । अभाने सत्यननुभूते सति तस्मिन् परं प्रेम न स्यात्; लोके तावत् ज्ञातपूर्वरामणीयकविषयस्यैव प्रेमजनकत्वात्; एवं च तस्य परप्रेमास्पदत्वमसिद्धमिति भावः । आद्ये आह, तस्य भाने सति, विषये सुखकारणे स्रगादौ स्पृहा अनुभूयमाना विषयेच्छा न स्यात् । निरतिशयसुखानन्दानुभवे सति तत्साधनीभूतविषयेच्छा न स्यात्, उपायेच्छाया उपेयेच्छाधीनत्वात्, उपेयस्य आनन्दस्य सिद्धत्वेन तदिच्छाया अनुत्पत्तेः । तथा च वैषयिकसुखेच्छा ह्यनिशं जायमाना अनुपपन्ना स्यात्; अतोऽभानमेवाऽङ्गीकार्यमिति परप्रेमास्पदत्वरूपहेतुरसिद्ध इति प्राप्ते आह, अत इतिः अतः उभयथाऽप्यनुपपत्तिरिति हेतोरात्मनोऽसौ परमानन्दता भानेऽप्यभाता भवति । अभानप्राया भवतीति भावः ॥ ११ ॥

आत्मानन्दस्याप्यनुभूयमानत्वेऽपि विषयानन्दसम्मिश्रणेन पृथग्भानाऽभावं दृष्टान्तयति अध्येत्विति,

आत्मभाने प्रतिबन्धविचारः ।

**अध्येतृवर्गमध्यस्थपुत्राध्ययनशब्दवत् ।**
**भानेऽप्यभानं भानस्य प्रतिबन्धेन युज्यते ॥ १२ ॥**

अध्येतृवर्गमध्यस्थपुत्राध्ययनशब्दवत्, वेदाध्ययनपराणां समूहे विद्यमानः कुमारः, तत्कर्तृकं यदध्ययनं वेदपठनं तस्य शब्दवत्, यथा तत्ध्वनिः पार्थक्येन न श्रूयते किन्तु सामान्यतः, तथा परमानन्दस्य भानेऽपि स्वप्रकाशरूपतया भानेऽपि प्रतिबन्धेन विषयानन्दात् पार्थक्येन अभानं युज्यते। रागादिप्रतिबन्धेन निरतिशयानन्दस्वरूपं परं ब्रह्म भासमानमपि न विशेषतस्साक्षात्क्रियत इति भावः॥१२॥

प्रतिबन्धस्वरूपमाह, प्रतिबन्ध इति।

**प्रतिबन्धोऽस्ति भातीति व्यवहारार्हवस्तुनि,**
**तन्निरस्य विरुद्धस्य तस्योत्पादनमुच्यते ॥ १३ ॥**

अस्ति भातीत्येवंरूपेण व्यवहारार्हवस्तुनि यद्वस्तु तादृग्व्यवहारमर्हति तस्मिन्वस्तुनि अस्तित्वप्रकाशत्वाभ्यां व्यवहार्ये वस्तुनि तत् व्यवहारं निरस्य, विरुद्धस्य नास्ति न भातीत्येवंरूपस्य विरुद्धस्य तस्य व्यवहारस्योत्पादनं जननं प्रतिबन्ध इत्युच्यते ॥१३॥

प्रतिबन्धस्वरूपमुक्त्वा दृष्टान्तदार्ष्टान्तिकयोस्तस्यहेतुं प्रदर्शयति, तस्येति।

**तस्य हेतुस्समानाभिहारः पुत्रध्वनिश्रुतौ ।**
**इहाऽनादिरविद्यैव व्यामोहैकनिबन्धनम् ॥ १४ ॥**

पुत्रध्वनिश्रुतौ दृष्टान्ते तस्य पार्थक्येन श्रवणप्रतिबन्धस्य हेतुः कारणं समानाभिहारः अन्यैस्सह पठनम्। इह दार्ष्टान्तिके व्यामोहैकनिबन्धनं व्यामोहानां मिथ्याभूतवस्तुज्ञानानां एकनिबन्धनं मुख्यं कारणं। अनादिरविद्या अज्ञानं प्रतिबन्धस्य हेतुरित्यर्थः। भासमानमप्यानन्दस्वरूपमनाद्यविद्यावशान्न विशेषतः परिज्ञायत इति भावः ॥ १४ ॥

स्वस्वरूपाऽभिव्यक्तिप्रतिबन्धहेतुभूताया अनाद्यविद्याया व्युत्पिपादयिषया तन्मूलभूतां प्रकृतिं लक्षयन् तद्विभागमाह चिदानन्देति।

प्रकृतिस्वरूपनिरूपणम् ।

चिदानन्दमयब्रह्मप्रतिबिम्बसमन्विता ।
तमोरजस्सत्वगुणा प्रकृतिर्द्विविधा च सा ॥ १५॥

चिदानन्दमयब्रह्मप्रतिबिम्बसमन्विता, यच्चिदानन्दरूपं ब्रह्म तस्य प्रतिबिम्बेन प्रतिच्छायया समन्विता युक्ता, तमोरजस्सत्वगुणा तद्गुणत्रयात्मिका या मूलाविद्या सा प्रकृतिरित्युच्यते । चिदानन्दमयप्रतिबिम्बसमन्वितत्वे सति सत्व रजस्तमोगुणात्मकत्वं प्रकृतेर्लक्षणम् । न तु सत्वरजस्तमसां साम्यावस्थारूपत्वं साङ्ख्यतन्त्रोक्तम् । "अध्यारोपाऽपवादाभ्यां निष्प्रपञ्चम्प्रपञ्च्यते" इति न्यायमनुसृत्य तत्त्वं कथयन् लोकव्यवहारसिद्धो जगज्जीवेश्वरभेद औपाधिको, न तु स्वाभाविक इति गूढाऽभिसन्धिपुरस्सरं प्रकृतिर्द्वैविध्यं निरूपयति, द्विविधेति, सा प्रकृतिर्द्विविधा भवति । अनुक्तसमुच्चायकेन चशब्देन "तमःप्रधानप्रकृते"रित्यादिप्रकारान्तरं संगृहीतं भवतीत्याशयेन त्रैविध्योक्तिः । तस्मात्त्रिविधा प्रकृतिरित्यभिप्रायः । उक्तत्रैविध्यमेव षट्चत्वारिंशत्तमे श्लोके स्पष्टमुदाहृतम् । अत्र त्रिविधेति कथनीये द्विविधा च सेति द्वैविध्यबोधनात् जीवेश्वरोपाधिभेदेन प्रकृतेर्द्वैविध्यं, षट्चत्वारिंशत्तमे त्रितयीति व्यवहारोऽवयवावयविन्यायेन समाधातुं शक्यमिति सुधीभिराकलनीयम् । पक्षेऽस्मिन् द्वैविध्यसमर्थनं त्वित्थं बोध्यम्, जीवेश्वरोपाधिभेदेन द्विविधैव प्रकृतिः । तत्रेश्वरोपाधिभूताया मायाया जगदुपादानत्वनिमित्तत्वसंपादकत्वरूपधर्मवैलक्षण्येन भेदं परिकल्प्य मायावान्तरभेदस्याप्यवयवावयवस्समुदायावयव इति न्यायेन प्रकृत्येकदेशत्वमभ्युपेत्य ऽव्यवयवत्वं प्रकृतेरित्याशयेनात्रैवमुक्तिस्संगच्छते । अन्यथा सृष्टिस्थितिलयकारणत्वेन सत्त्वरजस्तमसामुद्रेकस्य तदा तदावश्यमभ्युपेयत्वेन प्रकारान्तरस्यापि सम्भवेन त्रितयीत्युक्तेर्न्यूनता दुष्परिहारा । पूर्वत्र तु जीवेश्वरोपाधिप्रदर्शनतात्पर्येण तदवान्तरभेदानपरिगणय्य द्वैविध्यमुक्तमिति ॥ १५॥

उक्तविभागं विवृणोति, सत्त्वेति,

कारणशरीरनिरूपणम् ।

सत्त्वशुद्ध्यविशुद्धिभ्यां मायाऽविद्ये च ते मते ।
मायाबिम्बो वशीकृत्य तां स्यात्सर्वज्ञ ईश्वरः ॥ १६ ॥

सत्वशुद्ध्यविशुद्धिभ्यां, सत्त्वस्य प्रकाशकस्वभावस्य शुद्धिः गुणान्तरेणानभिभवः, अविशुद्धिः न विशेषेण शुद्धिः रजस्तमोभ्यां न्यूनाधिकतया मिश्रणं; ताभ्यां मायाविद्येति ते मते, एवं निरूपणप्रयोजनमाह, मायेति। मायाबिम्बः मायायां प्रतिफलितो यश्चिदाभासः तां मायां वशीकृत्य विद्यमानस्सर्वज्ञ ईश्वरस्स्यात्; चिदानन्दप्रतिबिम्बयुक्ता शुद्धसत्त्वप्रधाना प्रकृतिर्मायेत्युच्यते। तस्यां प्रतिबिम्बितो वशीकृतमायस्सर्वज्ञ ईश्वर इत्युच्यते; चिदाभासप्रतिबिम्बयुक्ता मलिनसत्त्वप्रधाना रजस्तमोमिश्रिता प्रकृतिरविद्येत्युच्यत इत्यर्थः ॥ १६॥

अविद्यां निरूपयति, अविद्येति।

**अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधा।**
**सा कारणशरीरं स्यात्प्राज्ञस्तत्राऽभिमानवान् ॥ १७॥**

अविद्यावशगो मलिनसत्त्वप्रधानायां प्रकृतौ प्रतिबिम्बितस्तत्परतन्त्रश्चिदाभासस्त्वन्यो जीवो भवेत्। स जीवो वैचित्र्यात् रजस्तमोरूपमालिन्यांशस्य न्यूनाऽधिकताभेदेन कल्पितानां विकाराणामनेकत्वादनेकधा देवमनुष्यतिर्यगादिभेदेन भवति। सा अविद्या कारणशरीरं स्यात्; स्थूलसूक्ष्मादिशरीरपरम्परावृतस्य जगत उत्पत्तेः कारणभूतत्वात् कारणत्वं, विद्यया नष्टत्वात् शरीरत्वं चोक्तम्। तत्र कारणशरीरेऽभिमानवानहं ममेत्यभिमानाविष्टो जीवः प्राज्ञ इत्युच्यते; प्रज्ञा अविनाशिस्वरूपा अनुभवरूपा अस्य अस्तीति प्रज्ञः। स एव प्राज्ञः मलिनसत्त्वप्रधानायामविद्यायां प्रतिबिम्बितश्चिदाभासः कारणाभिमानी प्राज्ञाभिधेयो भवति। अनेनाविद्याया जीवस्य कारणशरीरत्वप्रतिपादनेनार्थान्मायाया ईश्वरस्य कारणशरीरत्वं सूच्यते ॥ १७॥

एवं कारणदेहं प्रतिपाद्य सूक्ष्मदेहं तदुपाधिकं जीवं च निरूपयितुं सूक्ष्मदेहकारणीभूताकाशादिसृष्टिमाह तम इति।

लिंगशरीरनिरूपणम्।

**तमःप्रधानप्रकृतेस्तद्भोगायेश्वराज्ञया।**
**वियत्पवनतेजोऽम्बुभुवो भूतानि जज्ञिरे ॥ १८॥**

तद्भोगाय तेषां प्राज्ञानां भोगाय सुखदुःखानुभवाय तमःप्रधानप्रकृतेः तमोगुणाधिकायाः प्रकृतेरीश्वराज्ञया "स ईक्षत लोकान्नुसृजा इती" (ऐत १-१) त्याकारिकया सिसृक्षया वियत्पवनतेजोऽम्बुभुवः पञ्चभूतानि जज्ञिरे जातानि ॥

अत्रेदं बोध्यं । सत्त्वरजस्तमोगुणात्मिका प्रकृतिः । तत्र रजस्तमोऽमिश्रिता शुद्धसत्वा माया । सा चेश्वरोपाधिः । ताभ्यां मिश्रिता अविशुद्धा मलिनसत्वा अविद्या । सा च जीवोपाधिः । त्रिगुणानां मिश्रणे न्यूनाधिकभेदेनाविद्याया बहूनि विकाराणि । यदा तमोगुणस्याधिक्यं तदा तमःप्रधाना ततो भूतभौतिकसृष्टिरिति।।१८।।

भौतिकसृष्टावादौ ज्ञानेन्द्रियसृष्टिमाह सत्त्वेति ।

**सत्त्वांशैः पञ्चभिस्तेषां क्रमाद्धीन्द्रियपञ्चकम् ।**
**श्रोत्रत्वगक्षिरसनघ्राणाख्यमुपजायते ॥ १९ ॥**

तेषां वियदादीनां पञ्चभिस्सत्त्वांशैः श्रोत्रत्वगक्षिरसनघ्राणाख्यं शब्द-स्पर्शरूपरसगन्धग्राहकं धीन्द्रियपञ्चकं ज्ञानजनकेन्द्रियपञ्चकं क्रमादुपजायते । वियदादीनां सत्त्वांशानां प्रत्येकमसाधारणकार्याणि ज्ञानेन्द्रियाणीति भावः ॥१९॥

भूतपञ्चकसत्त्वांशसमष्टिकार्यभूतमन्तःकरणं विवृणोति, तैरिति ।

**तैरन्तःकरणं सर्वैर्वृत्तिभेदेन तद्द्विधा ।**
**मनो विमर्शरूपं स्याद्बुद्धिस्स्यान्निश्चयात्मिका ॥ २० ॥**

तैस्सर्वैर्वियदादिपञ्चकस्य समष्टिभूतैस्सत्त्वांशैर्मिलितैरन्तःकरणमुपजायते । अन्तः भवं करणं ज्ञानसाधनमित्यन्तःकरणम् । तत् वृत्तिभेदेन द्विधा भवति मनोबुद्धीति । तत्र मनो विवृणोति, मन इति। विमर्शरूपं परीक्षा विमर्शः स्थाणुरयं पुरुषो वेत्याकारिका संशयात्मिका वृत्तिः ; सैव स्वरूपं यस्य तत् विमर्शरूपं मन-स्स्यात् । बुद्धिस्वरूपं विवृणोति, बुद्धिरिति । निश्चयात्मिका विमर्शानन्तरं नाऽयं पुरुषः स्थाणुरेवेत्याकारकविषयाध्यवसायो निश्चयः ; स एव आत्मा स्वरूपं यस्यास्सा निश्चयात्मिका बुद्धिस्स्यात् ॥ २० ॥

वियदादीनां रजोऽम्शानां प्रत्येकमसाधारणकार्याणि कर्मेन्द्रियाण्याह, रजोऽम्शैरिति ।

**रजोऽम्शैः पञ्चभिस्तेषां क्रमात्कर्मेन्द्रियाणि तु ।**
**वाक्पाणिपादपायूपस्थाभिधानानि जज्ञिरे ॥ २१ ॥**

तेषां वियदादीनां क्रमाद्रजोऽम्शैः प्रत्येकं प्रत्येकं वाक्पाणिपादपायूपस्था. ऽभिधानानि कर्मेन्द्रियाणि क्रियाचरणयोग्यानीन्द्रियाणि जज्ञिरे अजायन्त ॥२१॥

तेषां समष्टिकार्यभूतं प्राणपञ्चकमाह तैरिति ।

**तैस्सर्वैस्सहितैः प्राणो वृत्तिभेदात्स पञ्चधा ।**
**प्राणोपानस्समानश्चोदानव्यानौ च ते पुनः ॥ २२ ॥**

तैस्सर्वैस्सहितैः वियदादीनां रजोऽम्शानां सम्मिश्रितैः प्राणोऽजायत । स प्राणो वृत्तिभेदात् प्राणनादिव्यापारभेदात् पुनः पञ्चधा भवति । एवं ते पञ्च-विधाः प्राणाः प्राणोऽपानस्समानः उदानव्यानौ चेति व्यवह्रियन्ते । तत्तद्वृत्ति-व्यञ्जकपदेनैव तत्तन्नामापि गृह्यते । प्राणनात्प्राणो भवति । अपनयनान्मूत्रपुरीषा-देरपानोऽधोवृत्तिर्वायुः; समानो नाम भुक्ताऽन्नादेस्समीकरणे नाभिदेशस्थो वायुविशेषः । उद्वेजयति मर्माणि उदानो नाम मारुतः । व्यानो व्यानयत्यङ्गं सर्वव्याधिप्रकोपनः ॥२२॥

एवमाकाशादीनां सत्वरजोऽम्शानां समष्टिव्यष्टिभूतानां बुद्ध्यादीनां समाहारस्सूक्ष्मशरीरमित्यभिधीयत इत्याह, बुद्धीति,

**बुद्धिकर्मेन्द्रियप्राणपञ्चकैर्मनसा धिया ।**
**शरीरं सप्तदशभिस्सूक्ष्मं तल्लिङ्गमुच्यते ॥ २३ ॥**

बुद्धिकर्मेन्द्रियप्राणपञ्चकैः बुद्धीन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं प्राणपञ्चकं तैः मनसा विमर्शात्मकेन, धिया निश्चयरूपया सह सप्तदशभिस्सूक्ष्मं शरीरं भवति । तदेव लिङ्गमिति लिङ्गशरीरमिति संज्ञान्तरेणोच्यते ॥२३॥

सूक्ष्मशरीराभिमानप्रयुक्तं प्राज्ञेश्वरयोरवस्थान्तरमाह प्राज्ञेति ।

**प्राज्ञस्तत्राऽभिमानेन तैजसत्वं प्रपद्यते ।**
**हिरण्यगर्भतामीशस्तयोर्व्यष्टिसमष्टिता ॥ २४ ॥**

तत्र लिङ्गशरीरे अभिमानेन तादात्म्यसम्भवेन प्राज्ञो मलिनसत्त्वप्रधानाविद्योपाधिको जीवः तैजसत्वं तैजस इति शास्त्रप्रसिद्धिं प्रपद्यते प्राप्नोति । ईशः विशुद्धसत्त्वप्रधानमायोपाधिकः परमेश्वरस्तत्र शरीरेऽहमित्यभिमानेन हिरण्यगर्भतां हिरण्यगर्भ इति प्रसिद्धिं प्रपद्यते । प्राज्ञेश्वरयोस्सूक्ष्मशरीराभिमाने समाने किंरूपस्तयोर्भेद इत्यत आह, तयोरिति । व्यष्टिसमष्टिता एव तयोर्भेदः ; तैजसो व्यष्टिरूपः ; हिरण्यगर्भस्समष्टिरूपः । राजेव हिरण्यगर्भस्सर्वप्राणिष्वभिमानवान् भवतिः, प्रजा इव जीवाः स्वस्वोपाध्यभिमानवन्तो भवन्तीति भावः ॥ २४ ॥

तैजसहिरण्यगर्भयोर्व्यष्टिसमष्टिरूपत्वे कारणमाह, समष्टिरिति ।

**समष्टिरीशस्सर्वेषां स्वात्मतादात्म्यवेदनात् ।**
**तदभावात्ततोऽन्ये तु कथ्यन्ते व्यष्टिसंज्ञया ॥ २५ ॥**

ईशः हिरण्यगर्भस्सर्वेषां सूक्ष्मशरीरोपाधिकानां तैजसानां स्वात्मतादात्म्यवेदनात् स्वात्मना तादात्म्यस्यैकत्वस्य वेदनात् परिज्ञानात् समष्टिर्भवति । ततो हिरण्यगर्भाद्भिन्ना अन्ये जीवास्तु तदभावात् तस्य सर्वेषां स्वात्मतादात्म्यवेदनस्य अभावात् व्यष्टिसंज्ञया कथ्यन्ते । जीवानां तु प्रत्येकं तत्तत्तादात्म्यवेदनमेव, न सर्वतादात्म्यवेदनमिति भावः ॥ २५ ॥

पञ्चीकरणविवरणम् ।

अथ स्थूलसृष्टिविवक्षया पञ्चीकरणं विवृणोति, तदिति ।

**तद्भोगाय पुनर्भोग्यभोगायतनजन्मने ।**
**पञ्चीकरोति भगवान् प्रत्येकं वियदादिकम् ॥ २६ ॥**

भगवानणिमाद्यष्टैश्वर्यसम्पन्नः प्रथमतः प्राज्ञादीन् सृष्ट्वा पुनस्तद्भोगाय तैजसानां भोगाय कर्मफलानुभवाय भोग्यभोगायतनजन्मने भोग्यमनुभवार्हमन्नपानादि

तस्य यो भोगोऽनुभवः, तस्य यदायतनं स्थानं शरीरजातं च, तयोर्जन्मने संजननार्थं वियदादिकं आकाशादिभूतपञ्चकं प्रत्येकमेकैकं पञ्चीकरोति वक्ष्यमाणरीत्या पञ्चात्मकं करोति ॥ २६ ॥

पञ्चीकरणरीतिं विवृणोति द्विधेति ।

द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः
स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते ॥ २७ ॥

वियदादिपञ्चभूतानि द्विधा विधायैकैकं द्विधा द्विधा विभज्य, पुनः भागद्वयमध्ये प्रथमं भागं चतुर्धा चतुर्धा चतुर्धा विभज्य स्वस्वेतरद्वितीयांशैः स्वस्मात् स्वस्मादितरेषां चतुर्णां भूतानां "यो यो द्वितीय स्थूलो भागस्तेन तेन सह प्रथमं प्रथमांशानां चतुर्णां चतुर्णां मध्ये एकैकस्य योजनात् ते वियदादयः प्रत्येकं पञ्च पञ्च पञ्चपञ्चात्मका" भवन्ति । अतः पञ्चीकरणानन्तरमेकैकस्मिन् भूते स्वस्वांशस्य अर्धभागतया, इतरेषां चतुर्णां भूतानां प्रत्येकमष्टमांशानां चतुर्णां संकरणेनाऽर्धभागतया भावस्थितिर्बोध्यते ॥ २७ ॥

पञ्चीकरणानन्तरं स्थूलशरीरोत्पत्तिं हिरण्यगर्भस्य तत्समष्ट्यभिमानत्वे वैश्वानरसंज्ञां च वक्ति, तैरिति ।

तैरण्डस्तत्र भुवनं भोग्यभोगाश्रयोद्भवः ।
हिरण्यगर्भस्स्थूलेऽस्मिन् देहे वैश्वानरो भवेत् ॥ २८ ॥

तैः पञ्चीकृतभूतैरण्डः ब्रह्माण्ड उत्पद्यते । तत्र ब्रह्माण्डे भुवनं चतुर्दशलोकाश्च समभवन् । तत्र भोग्यभोगाश्रयोद्भवो भोग्यान्यन्नादीनि भोगस्य आश्रयास्तत्तल्लोकोचितानि शरीराणि तेषामुद्भवः उत्पत्तिरभवत् । अस्मिन् स्थूले देहे हिरण्यगर्भः समष्ट्यभिमानी वैश्वानरस्तत्संज्ञको भवेत् ॥ २८ ॥

व्यष्ट्यभिमानिनां संज्ञां तद्विभागादिकं च दर्शयति तैजसा इति ।

तैजसा विश्वतां याता देवतिर्यङ्नरादयः ।
ते पराग्दर्शिनः प्रत्यक्तत्त्वबोधविवर्जिताः ॥ २९ ॥

व्यष्टिलिङ्गशरीराभिमानिनस्तैजसाः व्यष्टिस्थूलशरीराभिमानेन विश्वतां विश्व इति संज्ञां याताः । तथा विश्वतां यातास्तैजसा एव देवतिर्यङ्नरादय इति जातिभेदेन भिद्यन्ते । ते विश्वसंज्ञिका जीवाः पराग्दर्शिनः पराञ्चि बाह्यानि शब्दादीनि पश्यन्तीति तथोक्ताः । "पराञ्चि खानि व्यतृणत् स्वयम्भूः" इति (कठ. २. ४. १) श्रुतेः । तत्र कारणमाह, प्रत्यगिति । प्रत्यक्तत्वबोधविवर्जिताः यथार्थात्मज्ञानविकला इति हेतुगर्भविशेषणम् । श्रौततत्त्वज्ञानशून्यत्वमेव तेषां बाह्यदृष्टेः कारणमिति भावः ॥ २९ ॥

जीवस्य संसारप्राप्तितन्निवृत्तिविवरणम् ।

तेषां बाह्यदृष्टेः फलमाह, कुर्वत इति ।

**कुर्वते कर्म भोगाय कर्म कर्तुं च भुञ्जते ।**
**नद्यां कीटा इवावर्तादावर्तान्तरमाशु ते ॥**
**व्रजन्तो जन्मनो जन्म लभन्ते नैव निर्वृतिम् ॥ ३० ॥**

भोगाय भोगापेक्षया कर्म पुनर्जन्मनिमित्तं शुभाऽशुभं कुर्वते; कर्म कर्तुं भुञ्जते; व्यवहरन्तः तदनुकूलफलं च भुञ्जन्ति तत्फलोचितं जन्म प्राप्नुवन्ति "रमणीयचरणाः रमणीयां योनिमापद्यन्ते" (छां. ५. १०. ७) इत्यादि श्रुतेः । फलोपभोगानन्तरं शेषकर्मांशफलानुभवाय जन्मान्तरमाप्नुवन्ति । "तस्मिन्यावत्सम्पातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते" (छां. ५. १०. ५) इति श्रुतेः । तत्र दृष्टान्तमाह, नद्यामिति । यथा नद्यां नदीवेगे कीटाः प्रवाहनिरोधनासमर्थाः क्षुद्रप्राणिन आशु शीघ्रं आयासोपशमनात्प्रागेव आवर्तादावर्तान्तरमावर्तपरम्परां व्रजन्ति । तद्वत्ते पराग्दर्शिनो देवादयो जन्मनो जन्म अन्यज्जन्म व्रजन्तो निर्वृतिं निरतिशयसुखं नैष्कर्म्यं नैव लभन्ते "मृत्योः स मृत्युं गच्छति य इह नानेव पश्यती"तिश्रुतेः । (कठ. २. ४. ११.)

तर्हि तेषां निर्वृतिप्राप्त्याशैव नास्तीत्याशङ्क्य आह, सत्कर्मेति ।

**सत्कर्मपरिपाकात्ते करुणानिधिनोद्धृताः ।**
**प्राप्य तीरतरुच्छायां विश्राम्यन्ति यथासुखम् ॥ ३१ ॥**

उपदेशमवाप्यैवमाचार्यात्तत्त्वदर्शिनः ।
पञ्चकोशविवेकेन लभन्ते निर्वृतिं पराम् ॥ ३२ ॥

सत्कर्मपरिपाकात् पूर्वोपार्जितसुकृतविशेषस्य परिपाकात्सम्यक् फलोद्गमात् करुणानिधिना करुणा स्वयंसहायासमर्थेषु कृपणेषु दया, तस्या निधिराकरः तेनात्यन्तकृपालुना पुरुषेणोद्धृताः प्रवाहाद्बहिरुन्नीताः कीटाः तीरतरुच्छायां प्राप्य यथासुखं विश्राम्यन्ति ॥ ३१ ॥

एवं पराग्दर्शिनो देवादयः पूर्वसुकृतफलोद्गमे आचार्यादुपदेशं श्रवणरूपमवाप्य मननादिना तत्त्वदर्शिनस्संतोऽन्नमयादिपञ्चकोशविवेकेन प्रत्यगात्मानं तेभ्यो विविच्य परां निर्वृतिं नैष्कर्म्यं निरतिशयसुखं लभन्ते । जगत्सृष्टिस्थितिलयानां यत्कारणं तद्ब्रह्मेत्याचार्येणोपदिष्टो भृगुस्स्वयं पुनःपुनस्तपस्तप्त्वान्नमयादिपञ्चकोशविवेचनेनान्ते "आनन्दो ब्रह्मेति" यथा व्यजानात्तथेति भावः ॥ ३२ ॥

पञ्चकोशविवरणम् ।

विवेच्यान् पञ्चकोशान् विवृणोति, अन्नमिति ।

अन्नं प्राणो मनो बुद्धिरानन्दश्चेति पञ्च ते ।
कोशास्तैरावृतस्स्वात्मा विस्मृत्या संसृतिं व्रजेत् ॥३३॥

अन्नं प्राणो मनो बुद्धिरानन्दश्चेति ते कोशाः पञ्च । 'नामैकदेशे नामग्रहण'मिति न्यायेन अन्नादिशब्दैरन्नमयादिकोशाः प्रकीर्तिताः । बुद्धिर्नाम विज्ञानं । तैः पञ्चकोशैरावृतः स्वात्मा निजहृत्पुण्डरीक एव स्वस्वरूपेण साक्षात्कारयोग्य आत्मा । विस्मृत्या स्वस्वरूपविस्मरणेन, संसृतिं संसारं व्रजेत् गच्छेत् ॥३३॥

पञ्चकोशानां स्वरूपविवरणे आदावन्नमयप्राणमयकोशावाह, स्यादिति ।

स्यात्पञ्चीकृतभूतोत्थो देहस्स्थूलोऽन्नसंज्ञिकः ।
लिङ्गे तु राजसैः प्राणैः प्राणः कर्मेन्द्रियैस्सह ॥ ३४ ॥

पञ्चीकृतभूतोत्थः पञ्चीकृतभूतेभ्य उत्पन्नः स्थूलो देहोऽन्नसंज्ञिकः अन्नमयकोश इत्युच्यते । प्राणस्तु प्राणमयकोशस्तु लिङ्गे लिङ्गशरीरे विद्यमानैः राजसैः

पञ्चभूतानां समष्टिकृतैः पञ्चभी रजोंशैरुत्पन्नैः प्राणैः प्राणादिवायुपञ्चकेन कर्मेन्द्रियैस्सह तेषां प्रत्येकं प्रत्येकं रजोंशैरुत्पादितैर्वागादिकर्मेन्द्रियैस्सह दशभिः प्राणः प्राणमयकोशस्स्यात् ॥ ३४ ॥

अथ मनोमयविज्ञानमयावाह, सात्त्विकैरिति ।

**सात्त्विकैर्धीन्द्रियैस्साकं विमर्शात्मा मनोमयः ।**
**तैरेव साकं विज्ञानमयो धीर्निश्चयात्मिका ॥ ३५ ॥**

सात्त्विकैर्धीन्द्रियैस्साकं पञ्चभूतानां प्रत्येकशस्सत्वांशैरुत्पादितानि यानि श्रोत्रादिज्ञानेन्द्रियाणि तैस्सहितं विमर्शात्मा । तेषां समष्टिभूतसत्वांशैरुत्पादितं संकल्पविकल्पात्मकवृत्तिरूपं मनोमयः कोशस्स्यात् । तैरेव ज्ञानेन्द्रियैस्सहिता निश्चयात्मिका धीः निश्चयवृत्तिस्वरूपा बुद्धिर्विज्ञानमयकोशस्स्यात् ॥ ३५ ॥

अयमत्र संग्रहः । अन्नमय प्राणमय, मनोमय, विज्ञानमयानन्दमया इति पञ्चकोशाः । तमःप्रधानायाः प्रकृतेः कार्यमधिकृतमोंशकं सत्त्वरजस्सम्मिश्रितमाकाशादिभूतपञ्चकम् । तेषां प्रत्येकं सत्वरजोंशसमारब्धे ज्ञानेन्द्रियकर्मेन्द्रियपञ्चके । तेषामेव समष्टिसत्त्वांशोद्भूतं ज्ञानशक्त्यात्मकमंतःकरणम् । तच्च विमर्शनिश्चयरूपवृत्तिभेदान्मनो बुद्धिरिति द्विविधम् । तेषां समुदायरजोंशसमुद्भूतः प्राणः । स च प्राणनादिहेतुः क्रियाशक्त्यात्मकः प्राणापानादिवृत्तिभेदेन पञ्चधा भवति । एतत्पञ्चकत्रयमंतःकरणं च गुणत्रयस्य तरतमभेदेन सम्मिश्रणाद्भवति । स्थूलशरीरोऽन्नमयकोशः । ततस्सूक्ष्मतरः प्राणमयकोशः । अन्तःकरणोपादानभूतसत्त्वगुणस्य सुखप्रकाशनगुणप्रकटनसामर्थ्यं तत्कार्येऽन्तःकरणेऽप्यभिव्यज्यते । सत्वगुणस्वरूपप्रकाशनात्मिका वृत्तिः संकल्पविकल्पस्वरूपा मन इत्यभिधीयते । तत्स्वरूपसुखाभिव्यञ्जिका निश्चयात्मिका बुद्धिरितीरिता । वृत्तिद्वयस्यापि चक्षुरादीन्द्रियाणि तत्तद्ज्ञानसाधनत्वेनोपकुर्वन्ति । अतो विमर्शसाधनज्ञानेन्द्रियपञ्चकसचिवमन्तःकरणवृत्तिविशेषात्मकं मनो मनोमयकोशः ; निश्चयज्ञानसाधनज्ञानेन्द्रियपञ्चकसचिवान्तःकरणवृत्तिविशेषात्मिका बुद्धिर्विज्ञानमयकोशो भवति । सर्वत्रेदमित्थमिति निश्चयकरणात् प्राग्गुणदोषविषयपरिच्छेदरूपस्यासाधारणकारणस्यावश्यकत्वान्मनोमयकोशस्य कर-

णत्वमिदमित्थमितिनिश्चायकस्य विज्ञानमयस्य कर्तृत्वं चावश्यमुपपद्येते। एवं चाहंकर्तेति वृत्तिज्ञानवेद्यं यद्वस्तु तद्विज्ञानमिति प्रतिपन्नम्। निश्चायकवस्तुज्ञानं निश्चेयवस्तुज्ञानमिति च अन्तःकरणस्य वृत्तिद्वयं समुपपद्यते। निश्चायकवस्तुज्ञानमहंकर्तेति ज्ञातारमेव विषयीकरोति। स च विज्ञानमयः। निश्चेयवस्तुज्ञानं तु ज्ञातुरन्यमिदंपदार्थं विषयीकरोति। पार्श्वतो निहितं कोष्ठमनुसन्धेयमस्मिन्नर्थे।

नायमात्मा विज्ञानमयः आत्मैव सर्वव्यवहारप्रमाता कर्तेति न वक्तव्यम्, तस्य कर्तृत्वस्योपाधिधर्माध्यासेन प्राप्तत्वात्। तत्त्वतः शुद्धबुद्धमुक्तस्वभावो निष्क्रियो निष्कलश्चात्मा। अविद्योपार्जितोपाधिधर्मारोपेण कर्तृत्वभोक्तृत्वे तस्मिन्नवकल्प्येते। "कर्ता शास्त्रार्थवत्त्वात्" (ब्र. सू. २. ३. ३३.) "यथा च तक्षोभयथा" (ब्र. सू. २. ३. ४०) इत्यादि सूत्रबलात्। "तक्षेवायमात्मा सर्वव्यापारेष्वपेक्ष्यैव मनआदीनि करणानि कर्ता भवति"। न च कर्तृत्वमापादयति शास्त्रमात्मनः। किन्तु "यजेत, जुहुया" दित्यादिविशेषविधिशास्त्रमादाय कर्तव्यविशेषमेवोपपादयतीति ॥ ३५ ॥

अनन्तरमानन्दमयकोशस्वरूपमुच्यते, कारण इति।

**कारणे सत्त्वमानन्दमयो मोदादिवृत्तिभिः।**
**तत्तत्कोशैस्तु तादात्म्यादात्मा तत्तन्मयो भवेत् ॥ ३६ ॥**

कारणे कारणशरीरभूतायामविशुद्धसत्त्वस्वरूपाविद्यायां यत्सत्त्वमविशुद्धसत्त्वमस्ति तन्मोदादिवृत्तिभिस्सहितं आनन्दमयस्तत्संज्ञिको जीवो भवेत्। ननु "अन्योऽन्तर आत्मा प्राणमयः" (तै. २. २.) इत्यादिभिरन्नमयादिशब्दानां कोशपरत्वेन विवक्षितत्वात्कथं तेषां जीवबोधकत्वमित्यत आह तत्तदिति। तत्तत्कोशैस्त्वन्नमयप्राणमयादिकोशैस्तु तादात्म्यात्तत्तत्कोशस्वरूपाभिमानादात्मा तत्तन्मयस्तत्कोशस्वरूप इव भवेत्। तत्तत्स्वरूपेण व्यवह्रियत इति भावः ॥ ३६ ॥

परब्रह्मप्रतिबिम्बिता प्रकृतिः

शुद्धसत्वा माया
ईश्वरोपाधिः

अविशुद्धसत्वा अविद्या
कारणशरीरः — जीवोपाधिः (आनन्दमयकोशः)

तमःप्रधाना




सूक्ष्मशरीर

समष्टिरूपो
हिरण्यगर्भः

व्यष्टिरूपाः तैजसाः

विश्वाः

देवनरतिर्यगादयः अन्नमयकोशः

पञ्चकोशविवेकेन ब्रह्मावाप्तिविवरणम्

तत्तत्कोशतादात्म्यमापन्नस्य जीवस्य कथं ब्रह्मत्वमित्यत आह, अन्वयेति।

**अन्वयव्यतिरेकाभ्यां पञ्चकोशविवेकतः।**
**स्वात्मानं तत उद्धृत्य परं ब्रह्म प्रपद्यते ॥ ३७॥**

अन्वयव्यतिरेकाभ्यां, अस्मिन्प्रकरणेऽन्वयशब्देनानुवृत्तिर्व्यतिरेकशब्देन व्यावृत्तिश्चाभिधीयते। न तु यत्सत्वे यत्सत्वं यद्सत्वे यद्सत्वमिति लक्षणलक्षिता। अनुवृत्तिर्नाम प्रतीतिः। व्यावृत्तिर्नामाप्रतीतिः। निजमण्डलं प्रविष्टं सम्राजमनुसृत्य निजमण्डलान्तमनुवर्तते सामन्तराजः। तस्मिन्मण्डलान्तरं प्रविशति स निवर्तते। समस्तमण्डलानि पर्यटति राजा तत्तत्सामन्तराजैरनुवृतः। ते च स्वस्वमण्डलसीमान्तमनुवर्त्य ततो निवर्तन्ते। मण्डलान्तरे तु नाऽनुवर्तन्ते। एवं सामन्तराजास्सम्राजो भिन्नाः। तथैव ताभ्यां पञ्चकोशविवेकतोऽन्नमयादीनां प्रत्यगात्मनो विभजनेन स्वात्मानं ततः पञ्चकोशेभ्यः सम्राजं सामन्तराजेभ्य इव उद्धृत्य विवेचितमात्मानं बुद्ध्या निश्चित्य परं ब्रह्म प्रपद्यते आप्नोति। तद्भावमाप्नोतीति भावः ॥ ३७ ॥

अन्नरसमयस्स्थूलदेहात्मकोऽयं पुरुषः; अन्नकार्यत्वात्, अन्नेनैवोपचीयमानत्वात्, तस्मिन्नेव विलीयमानत्वाच्च। तत्र स्थूलदेहस्य व्यावृत्तिं पुरुषस्यानुवृत्तिं च दर्शयति, अभान इति।

**अभाने स्थूलदेहस्य स्वप्ने यद्भानमात्मनः।**
**सोऽन्वयो व्यतिरेकस्तद्भानेऽन्यानवभासनम् ॥ ३८ ॥**

स्थूलदेहस्यान्नमयकोशस्य स्वप्ने अभाने सति आत्मनो यद्भानं स्फुरणमस्ति सोऽन्वयः। तद्भाने तदात्मनो भानेऽपि स्वप्नेऽन्यानवभासनमन्यस्य स्थूलदेहस्याप्रतीतिर्व्यतिरेकः। अन्नमयकोशो नात्मा, स्वप्ने ह्यात्मनि भासमानेऽपि तदभावादिति भावः ॥ ३८ ॥

स्थूलशरीरमात्मा माऽस्तु । सूक्ष्मशरीरं किं न स्यात् ? तत्रैव प्राणनादि-क्रियाशक्तेस्संकल्पविकल्पनिश्चयात्मकसर्वव्यवहारस्य दृश्यमानत्वादित्याशङ्क्य तस्य सुषुप्तौ व्यावृत्तिं आत्मनोऽनुवृत्तिं च दर्शयति, लिङ्गेति ।

**लिङ्गाभाने सुषुप्तौ स्यादात्मनो भानमन्वयः ।**
**व्यतिरेकस्तु तद्भाने लिङ्गस्याभानमुच्यते ॥ ३९ ॥**

लिङ्गस्य सूक्ष्मशरीरस्याभाने सर्वेन्द्रियाणां तत्र विलीनत्वादात्मनो भानमन्वयः । सुषुप्तौ तद्भाने तस्य आत्मनो भाने लिङ्गस्य लिङ्ग रीरस्याभानं व्यतिरेकः उच्यते । लिङ्गशरीरादात्मा भिन्नः, सुषुप्तौ लिङ्गशरीरस्योपरमेऽप्यात्मनस्साक्षि-रूपेण भासमानत्वात् । नाऽऽत्मा सूक्ष्मशरीरं, सुषुप्तावात्मनि भासमानेऽपि तद-भानात् ॥ ३९ ॥

काशाववचनप्रकरण ।ल‍ङ्गदहविवेचनमसम्बद्धम्, तस्य कोशत्वनानुक्त-रित्याशङ्क्य प्राणमयादिकोशत्रयस्य तत्रान्तर्भावात् तद्विवेचने त्रितयस्यापि विवेचनं कृतं स्यादिति तद्विवेचनस्य नाप्रकृतत्वमित्याशयं विवृणोति, तदिति ।

**तद्विवेकाद्विविक्तास्स्युः कोशाः प्राणमनोधियः ।**
**ते हि तत्र गुणावस्थाभेदमात्रात्पृथक्कृताः ॥ ४० ॥**

तद्विवेकात् तस्य सूक्ष्मशरीरस्य विवेकात्, प्राणमनोधियः कोशाः विविक्तास्स्युः । कुतः ? हि यस्मात्कारणात् ते प्राणमयादयस्तत्र तस्मिन्सूक्ष्म-शरीरे गुणावस्थाभेदमात्रात् गुणौ च तदवस्थे च गुणावस्थाः, तेषां भेदः, "द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकं सम्बध्यते" इति न्यायाद्गुणभेदमात्रात्तदवस्थाभेद-मात्रादित्यर्थः तद्भेदमात्रत्वात्, समुदायादिसम्मिश्रणकृतावस्थाविशेषादेव पृथक्कृताः विभक्ताः । सूक्ष्मशरीरस्यात्मनो विभक्तत्वे सति तद्घटकीभूतसत्वरजोगुणसम्मिश्रण-भेदेन कृतं प्राणमयादिकोशत्रितयमपि विभक्तमेव भवतीत्यर्थः ॥ ४० ॥

आनन्दमयस्याप्यनात्मत्वमुपदिशति, सुषुप्तीति ।

**सुषुप्त्यभाने भानन्तु समाधावात्मनोऽन्वयः ।**
**व्यतिरेकस्त्वात्मभाने सुषुप्त्यनवभासनम् ॥ ४१ ॥**

समाधौ सुषुप्त्यभाने सुषुप्तेस्तदुपलक्षितकारणदेहात्मिकाविद्याया अभानेऽपि आत्मनो भानं अशेषावरणोच्छेदनानन्तरं प्रकाशनं तिरस्करण्यपनयनानन्तरं दीपस्येव यदस्ति सोऽन्वयः। आत्मभाने प्रत्यगात्मप्रकाशने सुषुप्त्यनवभासनं सुषुप्त्युपलक्षिताज्ञानानवभासनं व्यतिरेकः।

अयं भावः। अन्नमयादिपञ्चकोशाः परस्परं व्यावर्तन्ते। एकतरस्य भानेऽप्यन्यतरस्याभानात्। आत्मापि तेभ्यो व्यावर्त्यते, तेषामभानेऽपि तद्भानात्। यदितरेषामभानेऽपि स्वयं भासते तदितरेभ्यो भिद्यते। एवं पञ्चकोशेभ्यः प्रत्यगात्मा विवेचनीय इति ॥ ४१ ॥

एवं पञ्चकोशविवेकफलबोधिकां "तां स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण। तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृत"मिति। (कठ. २. ३. १७.) श्रुतिमर्थतः पठति यथेति।

**यथा मुञ्जादिषीकैवमात्मा युक्त्या समुद्धृतः।**
**शरीरत्रितयाद्धीरैः परं ब्रह्मैव जायते ॥ ४२ ॥**

यथा मुञ्जान्नामकतृणविशेषादिषेकान्तर्गर्भस्थः कोमलकाण्डस्समुद्धृतः तथा धीरैः धियं रातीति धीरः यद्वा धियमीरयतीति धीरः। शरीरत्रितयात् स्थूलसूक्ष्मकारणशरीरत्रयाद्युक्त्या अन्वयव्यतिरेकरूपया आत्मा समुद्धृतः पृथक्कृतश्चेत्परं ब्रह्मैव चिदानन्दरूपं जायते ॥ ४२ ॥

"तत्त्वमसीति" वाक्यस्यार्थनिर्णयः

एवं युक्त्या सम्पादितं जीवब्रह्मणोरैक्यं तत्त्वमसीत्यादिमहावाक्यैरुपदिष्टमित्याह, परेति

**परापरात्मनोरेवं युक्त्या संभावितैकता।**
**तत्त्वमस्यादिवाक्यैस्सा भागत्यागेन लक्ष्यते ॥ ४३ ॥**

एवं पूर्वोक्तरूपया युक्त्या अन्वयव्यतिरेकरूपया परापरात्मनोर्जीवब्रह्मणो-रेकता सम्भाविता ज्ञापिता। सा ह्येकता तत्त्वमस्यादिवाक्यैः भागत्यागेन परस्परविरुद्धतया प्रतीयमानानां भागानां त्यागेन वक्ष्यमाणरीत्या संत्यजनेन लक्ष्यते लक्षणया बोध्यते ॥ ४३ ॥

भागत्यागविवरणस्य पूर्वाङ्गत्वेन "तत्त्वमसी"तिमहावाक्यगततच्छब्दार्थ-माह, जगत इति ।

जगतो यदुपादानं मायामादाय तामसीम् ।
निमित्तं शुद्धसत्त्वां तामुच्यते ब्रह्म तद्गिरा ॥ ४४ ॥

तामसीं तमःप्रधानां मायामादाय उपाधित्वेन स्वीकृत्य जगत उपादान-मुपादानकारणं शुद्धसत्त्वां तां मायाप्रकृतिमादाय निमित्तं निमित्तकारणञ्च यद्ब्रह्म भवति तद्गिरा तत्त्वमसीतिमहावाक्ये तच्छब्देनोच्यते बोध्यते। तमःप्रधानीभूत-मायामादाय सृष्टेरुपादानकारणीभूतां, शुद्धसत्त्वप्रधानां तामादाय निमित्तभूतं च ब्रह्म श्रुतिघटकतच्छब्दाभिधेयं भवतीत्यर्थः ॥ ४४ ॥

अनन्तरं त्वंशब्दार्थमाह, यदेति ।

यदा मलिनसत्त्वां तां कामकर्मादिदूषिताम् ।
आदत्ते तत्परं ब्रह्म त्वंपदेन तदोच्यते ॥ ४५ ॥

तत्परं ब्रह्म तदेव परं ब्रह्म यदा मलिनसत्त्वामविशुद्धामत एव कामकर्मादि-दूषितां यत्र "कुर्वते कर्म भोगाय कर्म कर्तुं च भुञ्जते" इति लक्षितामविद्यास्वरूपां तां प्रकृतिमादत्ते अधितिष्ठति तदा त्वंपदेनोच्यते। परं ब्रह्म अविद्यामास्थाय जीवस्वरूपेण यदा भोगायतनपरम्परामभिमन्यते तदा त्वंपदवाच्यं भवतीति भावः ॥ ४५ ॥

तत्त्वंपदार्थमभिधाय वाक्यार्थमभिदधाति, त्रितयीति ।

त्रितयीमपि तां मुक्त्वा परस्परविरोधिनीम् ।
अखण्डं सच्चिदानन्दं महावाक्येन लक्ष्यते ॥ ४६ ॥

परस्परविरोधिनीं शुद्धसत्त्वप्रधाना मलिनसत्त्वप्रधाना तमःप्रधानेति भिन्नतया भासमानां त्रितयीमपि त्रिप्रकारिकां तां प्रकृतिं मुक्त्वा महावाक्येन तत्त्वमसीति वाक्येनाखण्डं सच्चिदानन्दं भेदत्रयविरहितं शुद्धबुद्धमुक्तस्वभावं ब्रह्म लक्ष्यते वाक्यस्य लक्ष्यं भवति। अधिष्ठानपरित्यागे तत्कृतभेदनाशः; तन्नाशेऽधिष्ठातुरैक्यमेव शिष्यत इति भावः ॥ ४६ ॥

एवं भागपरित्यागेन वाक्यार्थकल्पने दृष्टान्तमाह, स इति।

**सोऽयमित्यादिवाक्येषु विरोधात्तदिदन्तयोः।**
**त्यागेन भागयोरेक आश्रयो लक्ष्यते यथा ॥ ४७ ॥**

यथा सोऽयमित्यादिवाक्येषु सोऽयं देवदत्त इत्यादिषु स देवदत्तो ह्ययमेवेत्यन्वये कर्तव्ये तच्छब्देन यः पूर्वस्मिन्काले कस्मिंश्चित्स्थले तावद्वयस्को देवदत्ताख्यः परोक्षः पुरुष उच्यते, इदंशब्देन अस्मिन्समये अत्रैतावद्वयस्कः प्रत्यक्षेण ग्राह्य इत्यादिवाक्येषु तदिदन्तयोः तत्पदार्थ विशेषणतया भासमानस्य तद्देशवृत्तित्वादेरिदंपदार्थविशेषणतया भासमानस्यैतत्तद्देशवृत्तित्वादेश्च विरोधात् परस्परभेदादसीति पदबोधितमैक्यमनुपपन्नमित्यनुपपत्तिमूलकलक्षणामहिम्ना भागयोर्विरुद्धविशेषणांशयोस्त्यागेनैक आश्रयोऽवशिष्टा एका देवदत्तरूपा व्यक्तिर्यथा लक्ष्यते जहदजहल्लक्षणया बुध्यते ॥ ४७ ॥

तथैव तत्त्वमसीति महावाक्ये परित्याज्यपरिग्राह्यांशौ विशदयति, मायेति।

**मायाऽविद्ये विहायैवमुपाधी परजीवयोः।**
**अखण्डं सच्चिदानन्दं परब्रह्मैव लक्ष्यते ॥ ४८ ॥**

एवं परजीवयोः परः शुद्धसत्त्वप्रधानमायाप्रतिबिम्बितत्वेन निमित्तभूता, तमःप्रधानमायाप्रतिबिम्बितत्वेनोपादानभूता च या चित्, तद्रूप ईश्वरः, जीवः कामकर्मदूषितमलिनसत्त्वप्रधानामविद्यामाश्रित्य जीवस्वरूपेण प्रतीयमानः तयोरुपाधी विशेषणीभूते मायाऽविद्ये विहाय अखण्डं भेदत्रयशून्यमवशिष्टं सच्चिदानन्दं परं ब्रह्मैव लक्ष्यते ॥ ४८ ॥

अभिधा लक्षणा व्यञ्जनेति च त्रिप्रकारिका अर्थबोधिका वृत्तिः । तत्र पुनर्लक्षणावृत्तिस्त्रिविधा १. जहत्स्वार्था । २. अजहत्स्वार्था. ३. जहदजहत्स्वार्था-चेति । यत्र मुख्यार्थस्य बाधे सति बोधिते अर्थान्तरे मुख्यार्थस्य सर्वथा त्यागस्तत्र जहत्स्वार्था, यथा गङ्गायां घोष इत्यत्र प्रवाहे ग्रामस्य स्थितेरसम्भवाद्गङ्गाशब्दस्य तीरे लक्षणा आश्रीयते । मुख्यार्थमपरिहाय यत्रान्यार्थोपि गृह्यते तत्राऽजहत्स्वर्था। यथा काकेभ्यो दधि रक्ष्यतामित्यत्र काकशब्देन काकमपरिहाय दध्युपघातुकमार्जारादयोऽपि गृह्यन्ते । पदार्थैकदेशमपहायांशांतरं यत्र गृह्यते तत्र जहदजहत्स्वार्था यथा सोऽयं देवदत्त इत्यत्र मुख्यार्थैकदेशविशेषणांशपरित्यागेन भागान्तरस्य परिग्रह इतिदिक् ॥ ४८ ॥

अत्रपूर्वपक्षनिरासः ।

ननु लक्ष्यार्थस्सर्वोऽपि लक्ष्यतावच्छेदकधर्मवैशिष्ट्येनैव बुध्यत इत्यनुभवः । धर्मविशिष्टमवस्त्वित्यौपनिषदानां सिद्धान्तः । एवं स्थिते ब्रह्म लक्ष्यत इति कथमुच्यत इति शङ्कते, सविकल्पस्येति ।

**सविकल्पस्य लक्ष्यत्वे लक्ष्यस्य स्यादवस्तुता ।**
**निर्विकल्पस्य लक्ष्यत्वं न दृष्टं न च सम्भवि ॥ ४९ ॥**

सविकल्पस्य विकल्पेन विपरीतत्वेन कल्पितेन नामरूपादिधर्मेण सह वर्तत इति सविकल्पो धर्मविशिष्टः; तादृशस्य लक्ष्यत्वे वाक्यलक्ष्यत्वाङ्गीकारे लक्ष्यस्य परब्रह्मणोऽवस्तुता स्यात् । सधर्मकत्वप्रसङ्गेन मिथ्या स्यात्, सधर्मकस्य वस्तुनस्सिद्धान्तरीत्या मिथ्यात्वाभ्युपगमादिति भाव । परं ब्रह्मैव लक्ष्यत इत्युक्तिस्तु सर्वथा असङ्गतेत्याह, निर्विकल्पेति । निर्विकल्पस्य नामरूपादिधर्मशून्यस्य लक्ष्यत्वं लक्षणावृत्या बोध्यत्वं न च दृष्टं न हि लोके कुत्रापि व्यवहारसिद्धम् । व्यवहारे अदर्शनमात्रमेव न, युक्त्यापि साधयितुं न शक्यमित्याह, न सम्भवीति । निर्विकल्पस्य लक्ष्यत्वं युक्त्या न सिद्ध्यति ॥ ४९ ॥

सिद्धान्तापरिज्ञानेनोद्भावितां शङ्कामग्रे तत्प्रख्यापनेनैव परिजिहीर्षुः प्रथमं वैतण्डिकतामवलम्ब्य तदुक्तशङ्काया एव नावकाश इति प्रतिपक्षिणमाक्षिप्ति, विकल्पेति ।

विकल्पो निर्विकल्पस्य सविकल्पस्य वा भवेत्।
आद्ये व्याहतिरन्यत्रानवस्थाऽत्माश्रयादयः ॥ ५० ॥

विकल्पो महावाक्यार्थस्य लक्ष्यत्वं वा भवेदिति पूर्वपक्षिणा कृतो यो विकल्पस्स निर्विकल्पस्य सविकल्पस्य वा भवेत्? आद्ये तावद्व्याहतिः स्ववचनव्याघातः; विकल्परहितस्य विकल्पासम्भवात्। अन्यत्र सविकल्पस्य विकल्प इति पक्षे अनवस्थात्माश्रयादयः। तत्र विशेषणीभूतविकल्पात् विधेयभूतो विकल्पो भिन्नोऽभिन्नो वा? अभिन्नत्वे विधेयस्य अज्ञातत्वनियमेन तस्यैव विशेणत्वे विशेषणस्याज्ञानाद्विशेषणविशिष्टस्य उद्देश्यस्य ज्ञानं न सम्भवति; विशिष्टज्ञानस्य विशेषणज्ञानपूर्वकत्वनियमात्। एवं च आत्माश्रयाद्विकल्पविशिष्टस्य विकल्प इति वाक्यस्य अबोधकत्वप्रसङ्गः। यदि विशेषणीभूतविकल्पात् विधेयभूतो विकल्पो भिन्न इत्युच्यते तदा विशेषणीभूतविकल्पस्सविकल्पकस्य निर्विकल्पकस्य वेति विकल्पे, तत्र विकल्पस्य प्रथमविकल्पात्मकत्वेऽन्योन्याश्रयः द्वितीयविकल्पात्मकत्वे आत्माश्रयः। तस्यापि विकल्पान्तरापेक्षत्वे तस्यापि विकल्पस्य विकल्पान्तरापेक्षत्वमित्यादिक्रमेणानवस्था। अतस्त्वदुक्तो विकल्प अयुक्त एवेति भावः ॥ ५० ॥

न केवलमत्रैवेयमनुपपत्तिः किन्तु नैय्यायिकानां पदार्थविभागेऽपि दृश्यत इत्याह, इदमिति।

इदं गुणक्रियाजातिद्रव्यसम्बन्धवस्तुषु।
समं तेन स्वरूपस्य सर्वमेतदितीष्यताम् ॥ ५१ ॥

इदं विकल्पनिराकरणं गुणक्रियाजातिद्रव्यसंबंधवस्तुषु तद्रूपेषु वस्तुषु सममेव। तथाहि गुणः किं गुणवति निर्गुणे वा? क्रिया तद्वति तद्रहिते वा? द्वितीये स्ववचनव्याघातः। प्रथमे पूर्ववत्स्वाश्रयादिदोषापत्तिरित्यर्थः। एवं वितण्डया पूर्वपक्षस्यानुपपत्तिं प्रदर्श्य स्वमतानुसारेणोत्तरमाह, तेनेति। तेन विकल्पस्यासङ्गतत्वेनैतत्सर्वं गुणक्रियादयो धर्मास्सर्वेऽपि स्वरूपस्य वस्तुनो नामरूपात्मकस्य न तु परमार्थवस्तुन इतीष्यताम्। परमार्थवस्तुनो गुणक्रियारूपादिरहितत्वात्तस्य भेदकल्पनाया असङ्गतिः। नामरूपविशिष्टस्यानेकतया प्रतीयमानस्यास्य जगत

एवैष विभागो न तु परमार्थवस्तुनः । "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य" मिति श्रुतेः (छां. ६. १. ४) ॥ ५१ ॥

नायं पदार्थत्वविचारः परमार्थवस्तुनीत्येवमर्थमेव प्रपञ्चयति, विकल्पेति ।

**विकल्पतदभावाभ्यामसंस्पृष्टात्मवस्तुनि ।**
**विकल्पितत्वलक्ष्यत्वसम्बन्धाद्यास्तु कल्पिताः ॥ ५२ ॥**

विकल्पतदभावाभ्यां महावाक्यलक्षितं परमार्थं वस्तु सविकल्पं वा निर्विकल्पं वेत्याकारकविचारणया असंस्पृष्टात्मवस्तुनि असङ्गात्मपदार्थे विकल्पितत्वलक्ष्यत्वसंबंधाद्यास्तु विकल्पितत्वं सविकल्पत्वमुत निर्विकल्पत्वमिति विचारणाविषयत्वं लक्ष्यत्वं सम्बन्धस्समवायादिः आदिर्येषां ते तथाभूताः ; आदिशब्देन द्रव्यादिसप्तपदार्था गृह्यन्ते ; ते कल्पिताः आरोपिताः । तार्किकाभिमतद्रव्यत्वादिपदार्थविभाजकधर्माः नामरूपात्मकस्य जगतो न तु परमार्थवस्तुनः । तच्च "अशब्दमस्पर्शमरूपमव्यय" मित्यादिना (का. १. १५.) ज्ञेयम् । ननु सिद्धान्तिभिरपि लक्षणावृत्तिस्स्वीक्रियत इति चेन्न; महावाक्यार्थरूपव्यवहारदशायामेव तस्याङ्गीकृतत्वात् ॥ ५२ ॥

श्रवणादित्रयविवरणम् ।

एवं तत्त्वमस्यादिमहावाक्यार्थं विचारणाफलानुवादपूर्वकं निरूप्य "आत्मा वा अरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्य" (बृ. ४. ५. ६.) इत्युपनिषद्वाक्योपात्तश्रवणमनननिदिध्यासनेष्वाद्यावाद्यद्वयस्य स्वरूपं निरूपयति, इत्थमिति ।

**इत्थं वाक्यैस्तदर्थानुसन्धानं श्रवणं भवेत् ।**
**युक्त्या सम्भावितत्वानुसन्धानं मननन्तु तत् ॥ ५३ ॥**

वाक्यैस्तत्त्वमस्यादिभिरित्थमन्वयव्यतिरेकादियुक्त्या पञ्चकोशविवेकेन भागत्यागलक्षणया चोकरीत्यार्थकल्पनेन तदर्थानुसन्धानं तेषां महावाक्यानामर्थस्य जीवब्रह्मणोरैक्यरूपस्यानुसन्धानमवबोधनं श्रवणं भवेत् । एवं श्रवणानन्तरं श्रुतस्यार्थस्य युक्त्या सम्भावितत्वानुसन्धानमिति यत्तत्तु मननमित्यभिधीयते ॥५३॥

अनन्तरं निदिध्यासस्वरूपमाह, ताभ्यामिति ।

**ताभ्यां निर्विचिकित्सेऽर्थे चेतसःस्थापितस्य यत् ।**
**एकतानत्वमेतद्धि निदिध्यासनमुच्यते ॥ ५४ ॥**

ताभ्यां श्रवणमननाभ्यां निर्विचिकित्सेऽर्थे निर्गता विचिकित्सा शङ्का यस्मात्स असन्दिग्धो योऽर्थस्तस्मिन् स्थापितस्य स्थिरीकृतस्य चेतसः । एकतानत्वमेकाकारवृत्तिप्रवाहवत्त्वमेतन्निदिध्यासनमुच्यते । हेति प्रसिद्धार्थे । प्रसिद्धिश्च; 'प्रत्ययैकतानता ध्यान'मिति योगशास्त्रे द्रष्टव्या ॥ ५४ ॥

समाधितत्फलनिरूपणम् ।

अत्र ध्यातृध्यानध्येयश्चेति त्रितयं प्रतीयते । 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यती'ति श्रुतेः (बृ. ४. ५. १५.) तत्सर्वं द्वैतमेव । नैतच्च तत्त्वमस्यादिमहावाक्योपदिष्टमात्मैक्यानुसन्धानमिति मनसि कृत्वा इदानीं तत्साधनीभूतस्समाधिरुच्यत इत्याह, ध्यात्रिति ॥

**ध्यातृध्याने परित्यज्य क्रमाद् ध्येयैकगोचरम् ।**
**निवातदीपवच्चित्तं समाधिरभिधीयते ॥ ५५ ॥**

ध्यातृधाने अहं ध्याता इदं ध्यानमित्याकारकं ज्ञानद्वयं क्रमादभ्यासवशात् क्रमशः परित्यज्य चित्तं निवातदीपवत् यथा वायुरहिते प्रदेशे दीपो निश्चलस्तथा ध्येयैकगोचरं ध्येयमेकमेव गोचरो विषयो यस्य तत्तथाविधं यदा भवति तदा समाधिरित्यभिधीयते । यदा अभ्यासवशाद्ध्यातृध्याने अनवगाह्य ध्येयत्रमैकगोचरं चित्तं निवातदीपवन्निश्चलं भवति तदा समाधिरित्युच्यते ॥ ५५ ॥

समाधावप्यन्तःकरणसद्भावं दर्शयति, वृत्तय इति ॥

**वृत्तयस्तु तदानीमज्ञाता अप्यात्मगोचराः ।**
**स्मरणादनुमीयन्ते व्युत्थितस्य समुत्थितात् ॥ ५६ ॥**

आत्मगोचराः आत्मविषयका अन्तःकरणस्य वृत्तयस्तदानीं समाधिसमये अज्ञाताः । तथापि व्युत्थितस्य समाधेरुत्थितस्य समुत्थितादुत्पन्नात्स्मरणादेताकन्तं

कालं समाहितोऽभूवमिति संस्मरणादनुमीयन्ते । यत्स्मर्यते तदनुभूतपूर्वमिति व्याप्तेः समाधौ ध्यातृध्यानध्येयानां मध्ये आद्यद्वयस्य हाने सति ध्येयं परं ब्रह्मैव शिष्यते ; वशीकृतान्तःकरणस्य निरस्ताहंकर्तृताभिमानत्वात् , न, तथा सुषुप्तौ ॥५६॥

ननु समाधौ निरस्ताहंकर्तृत्वाभिमानत्वे सति वृत्तिपरम्परायां द्वितीयादिवृत्त्युत्पादकप्रयत्नासम्भवात्परम्परासिद्धिः कथमित्याशङ्क्याह वृत्तीनामिति ॥

**वृत्तीनामनुवृत्तिस्तु प्रयत्नात्प्रथमादपि ।**
**अदृष्टासकृदभ्याससंस्कारसचिवाद्भवेत् ॥ ५७ ॥**

वृत्तीनां परिशिष्टात्मध्येयैकगोचराणामनुवृत्तिस्तु तस्याः परम्परा प्रथमादपि प्रयत्नात्समाधेः प्राक्कालिकादप्यदृष्टासकृदभ्याससंस्कारसचिवात् अदृष्टं अधर्मासंस्पृष्टः पुण्यविशेषः ; असकृदभ्याससंस्कारः पुनःपुनस्समाध्यभ्यासेन जनितो यस्संस्कारो भावनाख्य ; तौ सचिवौ सहकारिकारणौ यस्य तादृशात्प्रथमात्प्रयत्नादपि भवेत् । समाधौ वृत्तिपरम्पराघटकद्वितीयादिवृत्तयो न प्रयत्नान्तरमपेक्षन्ते किन्त्वदृष्टादिसहकृतप्रथमवृत्त्युत्पादकप्रयत्नादेव जायन्त इति भावः ॥ ५७ ॥

अमुमेवार्थमर्जुनाय श्रीकृष्णभगवानुपदिदेशेति गीतावाक्य मव स्मारयति यथेति ॥

**यथा दीपो निवातस्थ इत्यादिभिरनेकधा ।**
**भगवानिममेवार्थमर्जुनाय न्यरूपयत् ॥ ५८ ॥**

स्पष्टोऽयमर्थ अनेकधा गीतायां ६–११ श्लोकमारभ्य ६–२९ श्लोक पर्यन्तं योगलक्षणविवरणप्रकरणे ॥ ५८ ॥

नन्वनादौ संसारे वर्तमानस्य धर्माधर्मजनकोभयविधकर्मणां सञ्चितानामनुस्यूतत्वेन वृत्तिपरम्परासाधनभूतस्यैकस्य प्रयत्नस्य अधर्मासंस्पृष्टधर्मसचिवत्वं कथं घटते ? धर्मेण सह सञ्चितकर्मजनिताधर्मस्याप्यनुवर्तमानत्वादित्याशङ्कायामाह, अनादाविति ॥

**अनादाविह संसारे सञ्चिताः कर्मकोटयः ।**
**अनेन विलयं यान्ति शुद्धो धर्मो विवर्धते ॥ ५९ ॥**

अनादावादिविधुरे इह संसारे सञ्चिताः कर्मकोटयः असंख्येयाः पूर्वजन्मार्जिताः भाविफलदाः कर्मणां कोटयः अनेन समाधिना विलयं यान्ति निर्मूला भवन्ति । "क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" (मुं. २. २. ८.) इति श्रुतेः । ननु कर्मणः फलदानं विना क्षयस्यासम्भवः । "नाभुक्तं कर्म क्षीयते; इत्यादिवचनादिति चेन्न । कर्मक्षयनिषेधस्य प्रारब्धकर्ममात्रविषयत्वात् । अन्यथा प्रायश्चित्तविधीनां वैयर्थ्यमेव प्रसज्येत । तत आगामिसञ्चितानां क्षयस्तु प्रायश्चित्तादिना कर्तृत्वाभिमानपरित्यागेन वा सुसम्पाद एव । अतएव 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" इति सङ्गच्छते । एवं सति किमायातमित्यत आह, शुद्ध इति । शुद्धो धर्मः अविद्यानाशकमोक्षसाधनभूतो विवर्धते ॥ ५९ ॥

समाधिं प्रस्तौति, धर्मेति ॥

धर्ममेघमिमं प्राहुस्समाधिं योगवित्तमाः ।
वर्षत्येष यतो धर्मामृतधारास्सहस्रशः ॥ ६० ॥

योगवित्तमाः योगः परं ब्रह्म तत्सम्यक् विदन्तीति तथोक्ताः ब्रह्मविद्वरिष्ठा इमं समाधिं धर्ममेघं धर्मान् मेहति वर्षति धर्मविवर्धको भवतीति प्राहुः । यत एष समाधिस्सहस्रशोऽनेकधा धर्मामृतधाराः धर्म एवामृतं तस्य धाराः वर्षति ॥ ६० ॥

समाधेः परमं प्रयोजनं द्वाभ्यामाह, अमुनेति ॥

अमुना वासनाजाले निश्शेषं प्रविलापिते ।
समूलोन्मूलिते पुण्यपापाख्ये कर्मसञ्चये ॥ ६१ ॥

वाक्यमप्रतिबुद्धं सत् प्राक्परोक्षाऽवभासिते ।
करामलकवद्बोधमपरोक्षं प्रसूयते ।

अमुना समाधिना पुण्यपापाख्ये सुकृतदुष्कृतात्मके कर्मसञ्चये पूर्वजन्मोपार्जिते समूलोन्मूलितो मूलेन सहोन्मूलिते निश्शेषं वासनाजाले दीर्घकालाभ्यस्तकर्मणां संस्कारसमूहे प्रविलापिते समग्रं क्षीणे सति प्रागितः पूर्वं परोक्षाव-

भासिते परोक्षतया समाध्यवगते तत्त्वे तत्त्वमसीति वाक्यमप्रतिबद्धं सत् पूर्वकर्म-वासनाद्यवरोधकरहितं करामलकवत् करगतमामलकमिवापरोक्षं साक्षात्काररूपं बोधं प्रसूयते जनयति ॥ ६१, ६२ ॥

परोक्षापरोक्षज्ञानफलम् ।

आद्य परोक्षज्ञानफलमाह, परोक्षमिति ।

परोक्षं ब्रह्मविज्ञानं शाब्दं देशिकपूर्वकम् ।
बुद्धिपूर्वकृतं पापं कृत्स्नं दहति वह्निवत् ॥ ६३ ॥

देशिकपूर्वकं देशिकः पूर्वो यस्य तत् गुरूपदिष्टमित्यर्थः । यत् शाब्दं तत्त्वमस्याद्युपनिषद्वाक्यैर्बोधितं अत एव परोक्षं ब्रह्मविज्ञानं बुद्धिपूर्वकृतं पापं पुण्यपापाख्यं कृत्स्नमशेषं कर्मसञ्चयं वह्निवद्दहति, यथा वह्नौ रमणीयमरमणीयं वा वस्तु दहति तद्वदिति भावः ॥ ६३ ॥

अथापरोक्षज्ञानफलमाह, अपरोक्षेति ।

अपरोक्षात्मविज्ञानं शाब्दं देशिकपूर्वकम् ।
संसारकारणाज्ञानतमसश्चण्डभास्करः ॥ ६४ ॥

देशिकपूर्वकमाचार्योपदिष्टं शाब्दं तथाप्यपरोक्षं दशमस्त्वमसीत्यादिवाक्य-जन्यबोधे तत्त्वानुभवादपरोक्षात्म विज्ञानं आत्मनस्स्वरूपस्य विज्ञानं निष्कृष्टज्ञानं संसारकारणाज्ञानतमसः संसारस्य मिथ्याभूतस्य जगतः कारणं यदज्ञानमविद्या-रूपं तदेव तमस्तस्मिन् तस्य चण्डभास्करः तीक्ष्णकिरणस्सूर्य इव ध्वंसको भवति ॥ ६४ ॥

ग्रंथादौ प्रतिज्ञातं तत्वविवेचनं फलानुवादपूर्वकमुपसंहरति, इत्थमिति ।

इत्थं तत्त्वविवेकं विधाय विधिवन्मनस्समाधाय ।
विगळितसंसृतिबन्धं प्राप्नोति परं पदं नरो न चिरात् ॥ ६५ ॥

जिज्ञासुर्नरः इत्थमुक्तरीत्या तत्त्वविवेकं विधाय अन्वयव्यतिरेकाभ्यामात्मानं पञ्चकोशेभ्यो विभज्य श्रवणमनननिदिध्यासनैस्तत्त्वमस्यादिवाक्यार्थं समाधौ साक्षात्कृत्य विधिवत् ध्यातृध्यानपरित्यागेन ध्येयैकगोचरे समाधौ मनस्समाधाय निवातदीपवच्चित्तं संस्थाप्य विगळितसंसृतिबन्धोऽपाकृतसंसारपाशः परं निरतिशयानन्दरूपमुत्कृष्टं पदं ब्रह्म न चिरादनुक्षणमेव प्राप्नोति । 'ब्रह्मविदाप्नोति पर'मिति श्रुतेः । (तै. २. १.) ॥ ६५ ॥

इति
श्रीमत्परमहंसपरिव्राजकाचार्यशृंगेरीश्रीविरूपाक्षश्रीविद्याशङ्करपद्मादेशप्रकाशित
जगद्गुरु श्रीकल्याणानन्दभारतीमान्ताचार्यात्यन्तप्रियान्तेवासिनाऽत्रि
गोत्रसमुद्भूतेन **लिङ्गन सोमयाजिना** विरचितेयं तत्त्वविवेकस्य कल्याणपीयूषव्याख्या समाप्ता ॥
इति तत्त्वविवेकप्रकरणम् ।

*

अथ

# कल्याणपीयूषव्याख्यासमेता पंचदशी

## महाभूतविवेकप्रकरणम् ।

प्रतिपादितं प्रथमे प्रकरणे तावदुत्तमबोधनसरण्या साधकस्यानुभवपूर्वकं सत्यज्ञानानन्दात्मकस्य साक्षिणोऽनाद्यविद्याप्रतिबन्धवशादभानम् पंचतन्मात्रगतव्यष्टिसमष्ट्यात्मकसात्त्विकराजसांशसमुद्भूतस्य सप्तदशावयवोपेतस्य लिङ्गशरीरस्य सृष्टिमारभ्य पञ्चीकृततामसपंचतन्मात्रसम्भूतस्थूलभूतकार्यात्मकस्थूलशरीरसृष्टिपर्यन्तं मायागतचित्प्रतिबिम्बस्वरूपस्येश्वरस्याज्ञया कल्पितं कोशचतुष्टयमभिधेयं चाभिहितम् । अनुवृत्तिव्यावृत्तिभ्यां पञ्चकोशविवेचनेन गुहानिहितस्य साक्षिणस्समाधावात्मसाक्षात्कारमार्गश्च दिङ्मात्रेण प्रदर्शितः । कोशविवेकस्तु कोशस्वरूपपरिज्ञानमन्तरा दुर्घट इत्याशयेन पञ्चकोशेषु चतुर्णां भूतमूलकत्वेन मूलभूतभूतविवेकज्ञानमन्तरा भौतिकानां कोशानां विवेकस्य दुर्घटतया मूलभूतभूतविवेकं द्वितीये प्रपञ्चयति सदिति ।

**सदद्वैतं श्रुतं यत्तत्पञ्चभूतविवेकतः ।**
**बोद्धुं शक्यं ततो भूतपञ्चकं प्रविविच्यते ॥ १ ॥**

सत् "सदित्यस्तितामात्रं वस्त्विन्द्रियागोचरं क्रियागुणरहितं सर्वगतमेकं निरंजनं निरवयवं विज्ञानम् ।" अद्वैतं द्वितीयं वस्त्वन्तरं यस्य न विद्यते यथा मृद्व्यतिरेकेण मृदोऽन्यद्घटाकारेण परिणमयितृकुलालादिनिमित्तकारणं दृष्टं तथा सद्व्यतिरेकेण सतस्सहकारिकारणं द्वितीयं वस्त्वन्तरं प्राप्तमनेन प्रतिषिध्यते । तदद्वितीयं यत् परं ब्रह्म श्रुतं "सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्"

(छां. २. १.) इत्यादिश्रुतिप्रसिद्धं सृष्टेः प्राग्विद्यमानं तत् परं ब्रह्म पञ्चभूतविवेकतो बोद्धुं विशेषेणावगन्तुं शक्यं सुगमं भवति ततो भूतपञ्चकं प्रविविच्यते पृथक्क्रियते ॥ १ ॥

भूतगुणस्वरूपविवरणम् ।

भूतपञ्चकस्यावान्तरभेदज्ञानद्वारा तस्य सतो भेदप्रदर्शनार्थमादौ तस्यावान्तरभेदं दर्शयति, शब्देति ।

**शब्दस्पर्शौ रूपरसौ गन्धो भूतगुणा इमे ।**
**एकद्वित्रिचतुःपञ्चगुणा व्योमादिषु क्रमात् ॥ २ ॥**

शब्दस्पर्शौ रूपरसौ गन्ध इतीमे पञ्च भूतगुणाः तत्र तत्र प्रत्येकं प्रत्येकं भूतानां गुणसंख्यामाचष्टे एकेति । व्योमादिषु क्रमात् एकद्वित्रिचतुःपञ्चगुणा विद्यन्ते ॥ २ ॥

तानेव प्रपञ्चयति प्रतिध्वनिरिति ॥

**प्रतिध्वनिर्वियच्छब्दो वायौ बीसीति शब्दनम् ।**
**अनुष्णाशीतसंस्पर्शः .... .... ॥ २॥ ॥**

प्रतिध्वनिरूपो यश्शब्दो लोके श्रूयते स च वियच्छब्दः वियद्गुणश्शब्दः आकाशगुणोऽपि शब्दस्साक्षात् श्रोत्रगोचरतां न लभते किन्तु वायुनानीतश्श्रोत्रसविधं प्राप्त एव श्रुतिगोचरो भवति । स च प्रतिध्वनिरूप इति मनसि कृत्वाह प्रतिध्वनिरिति । ततो वायुगुणावाह, वायाविति, वायौ बीसीति कीचकाद्युद्भूतश्शब्दश्शब्दनम् अनुष्णाशीतसंस्पर्शः न उष्णः न शीतो यस्संस्पर्शस्स्वीयोगुणः, स्वकारणीभूताकाशगुणः कार्ये संक्रान्ततया शब्दश्चेति तत्र गुणद्वयमिति भावः ॥२॥॥

तेजसो जलस्य च गुणानाह वह्नाविति ।

**.... ....वह्नौ भुगुभुगुध्वनिः ॥ ३ ॥**

उष्णस्पर्शः प्रभारूपं जले बुलुबुलुध्वनिः ।
शीतस्पर्शश्शुक्लरूपं रसो माधुर्यमीरितः ॥ ४ ॥

वह्नौ भुगुभुगिति ज्वलने श्रूयमाणो ध्वनिः उष्णस्पर्शः, प्रभारूपं । एवं शब्दस्पर्शरूपगुणात्मकं तेजः । तत्र स्वीयो गुणः प्रभारूपं कारणभूतवायुगुणसंक्रमात् शब्दस्पर्शाविति गुणत्रयं वर्तते । एतेनाकाशस्य यस्स्वीयो गुणश्शब्दस्स कार्यभूतवायुद्वारा तत्कार्ये तेजस्यपि संक्रामतीत्यूह्यम् । एवमुत्तरत्रापि पूर्वपूर्वगुणसंक्रमो बोध्यः । जले बुलुबुलुध्वनिः शिलाशर्करसंकीर्णस्थले जलप्रवाहे श्रूयमाणो ध्वनिः शीतस्पर्शः शुक्लरूपं माधुर्यं रसः मधुरभावो माधुर्यमिति चत्वारो गुणाः । तत्र माधुर्यं स्वीयो गुणः । इतरे पूर्वोक्तदिशा संक्रान्ता इति बोध्यम् ॥ ४ ॥

भूमौ कडकडाशब्दः काठिन्यं स्पर्श इष्यते ।
नीलादिकं चित्ररूपं मधुराम्लादिको रसः ॥ ५ ॥

सुरभीतरगंधौ द्वौ गुणास्सम्यग्विवेचिताः ॥

भूमौ पृथिव्यां कडकडेति शब्दः काठिन्यं कठिनस्य भावः स्पर्श इष्यते नीलादिकं आदिशब्देन पीतरक्तहरितकपिशादीनि गृह्यन्ते । चित्ररूपं, मधुराम्लादिकः, आदिशब्देन लवणकटुकषायतिक्ताः एवं षड्विधो रसः सुरभिश्च तदितर असुरभिश्चेति गन्धौ द्वौ । एवं शब्दस्पर्शरूपरसगन्धा इति पञ्चगुणास्तिष्ठन्ति, तत्र गन्धस्स्वीयः इतरे संक्रान्ताः । एवं पञ्चगुणास्स्वीयत्वेन संक्रान्तत्वेन च यत्र यत्र ये ये सन्ति तद्विभागः प्रदर्शित इति सम्यग्विवेचिता इत्यनेन स्फुटीकृतम् ॥ ५ ॥

ज्ञानेन्द्रियतत्स्थाननिरूपणम् ।

शब्दादिपञ्चकग्राहकेन्द्रियाणि तत्स्थानानि तद्व्यापारांश्चाह, श्रोत्रमिति

श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणं चेन्द्रियपञ्चकम् ॥ ६ ॥

कर्णादिगोळकस्थं तच्छब्दादिग्राहकं क्रमात् ।
सौक्ष्म्यात्कार्यानुमेयं तत्प्रायो धावेद्बहिर्मुखम् ॥ ७ ॥

श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणमितीन्द्रियपञ्चकं कर्णादिगोळकस्थं श्रोत्रादिसूक्ष्मेंद्रियाणि कर्णादिगोळकेषु निक्षिप्तानि, एतत्पञ्चकं क्रमात् शब्दादिग्राहकं शब्दादिज्ञानजनकम्। इन्द्रियसद्भावे मानं कार्यलिङ्गकानुमानमित्याह सौक्ष्म्यादिति, सौक्ष्म्यात् सूक्ष्मस्वभावत इन्द्रियावेद्यत्वात्कार्यानुमेयं तत्तदिन्द्रियजन्यश्रावणप्रत्यक्षादिकार्येणानुमेयम् कर्णादिगोळकेषु विद्यमानेष्वपीन्द्रियेषु तद्गतसामर्थ्यप्रतिबन्धेन बधिरादयश्श्रवणादिषु न प्रभवन्ति तेषां। व्यापारे स्वभावमाह प्राय इति। प्रायस्तदिन्द्रियपञ्चकं बहिर्मुखं तद्विषयीभूतेषु बाह्यवस्तुषु धावेद्गच्छेत्। "पराञ्चि खानि व्यतृणत्स्वयम्भूः" (कठ. २.४.१.) रितिश्रुतेरित्यर्थः। कादाचित्कत्वेनेन्द्रियाणामन्तर्मुखताऽपि प्रायश्शब्देन सूच्यते ॥ ६, ७ ॥

एवं सूचितं प्रायश्शब्दार्थं प्रपञ्चयति।

कदाचित्पिहिते कर्णे श्रूयते शब्द आन्तरः।
प्राणवायौ जाठराग्नौ... ...

कदाचिदङ्गुल्यादिना कर्णे कर्णगोळके पिहिते सति आन्तरश्शब्दः प्राणवायौ जाठराग्नौ वर्तमानश्श्रूयते। तयोरान्तरत्वेन श्रोत्रस्यान्तर्मुखत्वमन्तरा न घटत इति तात्पर्यम्।

... ...जलपानेऽन्नभक्षणे ॥ ८ ॥

व्यज्यन्तेह्यान्तरास्पर्शा मीलने चान्तरं तमः।
उद्गारे रसगन्धौ चेत्यक्षाणामान्तरग्रहः ॥ ९ ॥

जलपानेऽन्नभक्षणे आन्तरास्पर्शास्त्वगिन्द्रियविषया व्यज्यन्ते अनुभूयन्ते। तथैव चक्षुर्मीलने चान्तरं तमो व्यज्यते। उद्गारे भुक्तस्यापक्वस्योर्ध्वप्रसरणे रसगन्धौ जिह्वाघ्राणविषयौ व्यज्येते। इत्येवमक्षाणामिन्द्रियाणामान्तरग्रह आन्तरस्य विषयस्य ग्रहणम् अक्षाणामिति कर्तरि षष्ठी ॥ ९. ॥

ज्ञानेन्द्रियपञ्चकस्य व्यापारविवरणानन्तरं कर्मेन्द्रिकपञ्चकव्यापारं विवृणोति पञ्चेति।

**पञ्चोक्त्यादानगमनविसर्गानन्दकाः क्रियाः ।**
**कृषिवाणिज्यसेवाद्याः पञ्चस्वन्तर्भवन्ति हि ॥ १० ॥**

उक्त्यादानगमनविसर्गानन्दकाः उक्तिर्वचनं आदानं ग्रहणं विसर्गो मूत्रपुरीषविसर्जनं आनन्दकः विषयानन्दश्चेति पञ्च वाक्पाणिपादपायूपस्थानां क्रिया भवन्ति क्रियान्तराणामपि सत्वात्पञ्चत्वोक्तिरसङ्गतेत्यत आह । कृषीति । कृषि-वाणिज्यसेवाद्या इतराः क्रियाः पञ्चसूक्त्यादिष्वन्तर्भवन्ति हीति निश्चयार्थे ॥१०॥

कर्मेन्द्रियतत्स्थाननिरूपणम् ।

अनन्तरं कर्मेन्द्रियाणि तत्स्थानानि चोच्यन्ते वागिति ।

**वाक्पाणिपादपायूपस्थैरक्षैस्तत्क्रियाजनिः ।**
**मुखादिगोळकेष्वास्तेतत्कर्मेन्द्रियपञ्चकम् ॥ ११ ॥**

स्पष्टोऽर्थः अक्षैरिन्द्रियैः तत्क्रियाजनिः। उक्त्यादिक्रियाणामुत्पत्तिः ॥ ११ ॥

मनसःसर्वेन्द्रियाध्यक्षत्वकथनम् ।

मनसस्स्थानमाह, मन इति ।

**मनो दशेन्द्रियाध्यक्षं हृत्पद्मे गोळके स्थितम् ।**
**तच्चान्तःकरणं बाह्येष्वस्वातन्त्र्याद्विनेन्द्रियैः ॥ १२ ॥**

दशाध्यक्षं कर्मज्ञानेन्द्रियाणामध्यक्षं मनः एतेन मनस इन्द्रियप्रेरणं व्यापार इत्युक्तं भवति । हृत्पद्मे गोळके स्थितं एतेन हृत्पद्मगोळकं तस्य स्थान-मित्युक्तं भवति । मनसोऽन्तरिन्द्रियत्वं सनिमित्तकमाह तच्चेति । इन्द्रियैर्विना तेषां सहकारमन्तरा बाह्येषु विषयेष्वस्वातन्त्र्यम् तस्मान्मनः अन्तःकरणमन्तरिन्द्रिय-मित्युच्यते। विषयग्रहणेऽस्य असाधारणकारणत्वात्करणत्वं चेति भावः ॥ १२ ॥

ननु रूपादिज्ञानजनने चक्षुरादीनां पर्याप्तत्वेन तदतिरिक्तं मनः किमित्य-भ्युपेयमित्याशंक्याह, अक्ष इति ।

**अक्षेष्वर्थार्पितेष्वेतद्गुणदोषविचारकम् ।**
**सत्त्व रजस्तमश्चास्य गुणा विक्रियत हि तैः ॥ १३ ॥**

अक्षेष्विन्द्रियेष्वर्थार्पितेषु तत्तद्विषयैस्सह संयोजितेषु सत्स्वेतन्मनो गुणदोषविचारकं ये गुणदोषा विद्यन्ते तेषां विचारकं विचारणकर्तृ भवति । नेयं विचारणाशक्तिरात्मनः तस्य निर्विकारत्वात्, नाऽपीन्द्रियाणां तेषां केवलविषयग्रहणमात्रचरितार्थत्वात् । तथापीदं ग्राह्यमिदमग्राह्यमिति विचारणा सार्वजनीना दृश्यते अतस्तदन्यथाऽनुपपत्त्या मन इत्यन्यदन्तरिन्द्रियमवश्यमभ्युपगन्तव्यमिति भावः । मनसो विकारवत्वे हेतुमाह । सत्त्वमिति अस्य मनसः सत्त्वं रजस्तम इति गुणाः तै गुणैर्विक्रियते विकारमाप्नोति यतोऽस्य त्रिगुणत्वं ततोऽस्य विकारित्वमिति भावः ॥ १३ ॥

गुणत्रयजन्यविकारजातमाह वैराग्यमित्यादिना तमसोत्थिता इत्यन्तेन ।

**वैराग्यं क्षान्तिरौदार्यमित्याद्यास्सत्त्वसम्भवाः ।**
**कामक्रोधौ लोभयत्नावित्याद्या रजसोत्थिताः ॥ १४ ॥**

**आलस्यं भ्रान्तितन्द्राद्या विकारास्तमसोत्थिताः ।**

स्पष्टोऽर्थः । औदार्यं वितरणा आलस्यं विहितकर्माचरणेऽनुत्साहः तन्द्रा ईषन्निद्रा तमोवातकफोद्भवा ॥ १४॥ ॥

पुण्यपापोत्पत्तिक्रमः ।

विकाराणां फलमाह सात्त्विकैरिति ।

**सात्त्विकैः पुण्यनिष्पत्तिः पापोत्पत्तिश्च राजसैः ॥ १५ ॥**

**तामसैर्नोभयं किन्तु वृथायुःक्षपणं भवेत् ।**

सात्त्विकैः वैराग्यादिविकारैः पुण्यनिष्पत्तिः राजसैः कामादिविकारैः पापोत्पत्तिश्च भवति तामसैरालस्यादिविकारैरुभयं पुण्यपापे नोत्पद्येते। किन्तु वृथा आयुःक्षपणं आयुर्विनाशो भवेत् ॥ १५॥ ॥

अनन्तरमन्तःकरणादीनां स्वामिनमाह, अत्रेति ।

**अत्राहंप्रत्ययी कर्तेत्येवं लोके व्यवस्थितिः ॥ १६ ॥**

अत्र अन्तःकरणादिविषये अहंप्रत्ययी अहमिति यो ज्ञानवान् स एव कर्ता भवतीति लोके व्यवस्थितिः व्यवस्था अहंवृत्तिविशिष्टो ह्यात्मा कर्ता भवतीत्यर्थः । एतेन प्रकृत्यादीनां कर्तृत्वं वदन्तस्सांख्यादयः परास्ताः ॥ १६ ॥

इन्द्रियाणांभौतिकत्वनिरूपणम् ।

जगतो भौतिकत्वज्ञानोपायमाह, स्पष्टेति ।

**स्पष्टशब्दादियुक्तेषु भौतिकत्वमतिस्फुटम् ।**
**अक्षादावपि तच्छास्त्रयुक्तिभ्यामवधार्यताम् ॥ १७ ॥**

स्पष्टशब्दादियुक्तेषु स्पष्टैश्शब्दादिगुणैर्युक्तेषु पृथिव्यादिषु भौतिकत्वं भूतकार्यत्वमतिस्फुटं विस्पष्टमेव । तथैवाक्षादावपीन्द्रियादिषु आदिशब्देन मनस्तद्विकाराश्चोक्ताः तेषु तद्भौतिकत्वं शास्त्रयुक्तिभ्यामवधार्यतां निश्चीयताम् । "अन्नमयं हि सोम्य मनः, आपोमयः प्राणस्तेजोमयी वागित्यादि (छां. ६. ५. ४.) शास्त्रम् । युक्तिश्च तत्तदिन्द्रियं तत्तद्भूतजन्यं तत्तद्भूतगुणग्राहकत्वात् येनेन्द्रियेण यो भूतगुणो गृह्यते तत्तद्भूतजन्यमिति व्याप्तेः ॥ १७ ॥

"सदेवसोम्येति" श्रुत्यर्थविचारः ।

एवं भूतानि भौतिकानि च प्रदर्श्य "सदेव सोम्येदमिति" (छां. ६. २. १.) सर्वस्यापि जगतस्तद्घटकेदंशब्दार्थत्वमाह, एकादशेति ।

**एकादशेन्द्रियैर्युक्त्या शास्त्रेणाप्यवगम्यते ।**
**यावत्किंचिद्भवेदेतदिदंशब्दोदितं जगत् ॥ १८ ॥**

एकादशेन्द्रियैर्ज्ञानकर्मेन्द्रियपञ्चके मनश्च तैः प्रत्यक्षेण युक्त्या अनुमानेन शास्त्रेण श्रुत्या च यावत्किंचिदवगम्यते एतत्सर्वमिदंशब्दोदितं "सदेव सोम्येदमग्र आसी" दित्यत्रेदंशब्देन अभिहितं भवेत् ॥ १८ ॥

निरुक्तां श्रुतिमर्थतः पठति, इदमिति ।

इदं सर्वं पुरा सृष्टेरेकमेवाद्वितीयकम् ।
सदेवासीन्नामरूपे नास्तामित्यारुणेर्वचः ॥ १९ ॥

सृष्टेः पुरा इदं सर्वं नामरूपक्रियात्मकतया परिदृश्यमानं सर्वं जगत् एकं स्वोत्पादकावयवविधुरसन्मात्रात्मकम् ।" एव सजातीयभेदरहितं आद्वितीयकं सद्व्यतिरेकेण सहकारिकारणं वस्त्वन्तरं यस्य न विद्यते तत् सदस्तितामात्रं सूक्ष्मवस्त्वासीत् । ननु तदानीन्तनस्य वस्तुरूपस्य तद्वाचकस्य सदितिशब्दस्य च सत्त्वप्रसंग इत्याशंकां निराकरोति नामेति सृष्टेः प्राक् सदेवासीत् नामरूपे न आस्तां न विद्येते "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति (छां. ६. ३. २.) श्रुतेः । इत्यारुणेररुणस्यापत्यं पुमानारुणिरुद्दालकः तस्य वचः अनूचानमानिनं पुत्रं प्रत्युपदेशः ॥ १९ ॥

अन्यत्र दृष्टस्य भेदत्रयस्य सद्वस्तुनोऽपि दृष्टान्तवशात्प्रसक्तस्य निवृत्तिरेकमेवाद्वितीयमिति पदत्रयेण क्रियत इति श्रुत्याशयं विवृणोति वृक्षेत्यादिद्वाभ्याम् ।

वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः ।
वृक्षान्तरात्सजातीयो विजातीयश्शिलादितः ॥ २० ॥

तथा सद्वस्तुनो भेदत्रयं प्राप्तं निवार्यते ।
ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमात् ॥ २१ ॥

वृक्षस्य पत्रपुष्पफलादिभिः स्वावयवैः स्वगतो भेदो भवति वृक्षान्तरात्तज्जातिगतवृक्षान्तराद्भेदस्सजातीयः शिलादितः शिलादिजात्यन्तरवस्त्वादेर्विजातीयो भेदः । यथा वृक्षादिषु भेदत्रयमुपलभ्यते तथा सद्वस्तुनः प्राप्तं नामरूपासंख्येयाकारापादितं भेदत्रयं सजातीयविजातीयस्वगतरूपमैक्यावधारणद्वैतप्रतिषेधैः ऐक्यमेकत्वम् अवधारणमेवार्थः द्वैतस्य अन्यवस्तुनः प्रतिषेधः । निषेधः तैस्त्रिभिरेकमेवाद्वितीयमिति शब्दत्रयेण क्रमात् स्वगतसजातीयविजातीयभेदराहित्यबोधकेन निवार्यते ॥ २१ ॥

श्रुतिसिद्धं स्वगतभेदाभावं युक्त्या प्रतिपादयितुं भेदस्य प्रतियोगिप्रसिद्ध्यधीनत्वात्प्रतियोगिनस्स्वगतस्याप्रसिद्धौ तद्भेदोऽप्यप्रसिद्ध एवेत्याशयेन प्रतियोग्यप्रसिद्धिं दर्शयति सत इति ।

**सतो नावयवाश्शंक्यास्तदंशस्यानिरूपणात् ।**
**नामरूपे न तस्यांशौ तयोरद्याप्यनुद्भवात् ॥ २२ ॥**

तदंशस्यब्रह्मणोऽवयवस्यानिरूपणात् केनापि प्रमाणेनाप्रतीतेः सतोऽवयवा न शंक्याः । नामरूपे तदंशौ स्यातामित्यत आह नामेति नामरूपे तस्यांशौ न भवतः कुतः? तयोरद्यापि वर्तमानकालेऽपि अनुद्भवात् मिथ्यात्वात् । अत्र श्रुतावग्रे इत्यनेन विवक्षितस्सृष्टेः प्राक्काल एव वर्तमानत्वेन विवक्षित इति बोध्यम् ॥ २२ ॥

नामरूपयोस्सृष्टेः प्रागभावमेव विशदयति नामेति ।

**नामरूपोद्भवस्यैव सृष्टित्वात्सृष्टितः पुरा ।**
**न तयोरुद्भवस्तस्मान्निरंशं सद्यथा वियत् ॥ २३ ॥**

नामरूपोद्भवस्यैव नामरूपयोरुद्भवस्य विवर्तस्यैव सृष्टित्वात्सतो नामरूपादिकल्पनैव सृष्टिरित्यभिधीयत इति भावः । सृष्टितः पुरा तयोर्नामरूपयोरुद्भवो न तस्माद्यथा वियत् निरंशं अवयवशून्यं तथा सदप्यवयवविरहितमित्यर्थः । यतस्सतो नामरूपकल्पनैव सृष्टिरित्युच्यतेऽतस्स्वगतभेदराहित्यबोधकैकशब्दोऽर्थवान् ॥ २३ ॥

स्वगतभेदाभावेऽपि सतस्सजातीयभेदोऽस्त्वित्याह सदिति ।

**सदन्तरं सजातीयं न वैलक्षण्यवर्जनात् ।**
**नामरूपोपाधिभेदं विना नैव सतो भिदा ॥ २४ ॥**

ननु सदन्तरमन्यत्सजातीयं वृक्षान्तरमिव स्यादितिचेन्न वैलक्षण्यवर्जनात् सतो विलक्षणभावस्याभावात । एवं च सजातीयभेदराहित्यबोधकं एकपदमर्थवदिति भावः । ननु घटसत्ता पटसत्तेत्यादिविभिन्नप्रतीतिबलात् तत्सत्तयोर्भेदे सिद्धे सजातीयं

सदन्तरं नास्तीति कथमुच्यत इत्याशंक्याह नामेति। नामरूपोपाधिभेदं विना नाम रूपमित्युपाधी तयोर्भेदं विना सतो भिदा भेदो नैव विद्यते। घटाकाशात्पटाकाशो भिन्न इति प्रतीतिविषयस्य भेदस्य विशेष्यभूते आकाशे भेदसाधकवैलक्षण्याभावादनुपपन्नस्य शिखी ध्वस्त इत्यादिप्रतीतिविषयीभूतस्य विशेष्यांशेऽनुपपन्नस्य ध्वंसस्य विशेषणीभूतशिखायां पर्यवसानवत् विलक्षणयोर्घटपटयोः पर्यवसानं बोध्यम् ॥ २४ ॥

सतो विजातीयभेदमपि पूर्वोक्तदिशैव निरस्यति विजातीयेति।

**विजातीयमसत्तत्तु न खल्वस्तीति गम्यते।**
**नास्यातः प्रतियोगित्वं विजातीयाद्भिदा कुतः ॥ २५ ॥**

सतो विजातीयमसदेव भवति तत्तु "नास्तीत्यसदि"ति व्युत्पत्त्या नासदिति अविद्यमानमेवेति गम्यते खलु। अतो विजातीयादसद्रूपात् प्रतियोगित्व मस्य सतो न सम्भवति प्रतियोग्यभावे विजातीयाद्वस्तुनो भिदा भेदः कुतस्सम्पद्यते? न सम्भवतीत्यर्थः ॥ २५ ॥

उक्तार्थमेव दृढीकुर्वन् प्रसंगसंगत्या वैनाशिकमतनिरसनपूर्वकमाह, एकमिति।

**एकमेवाद्वितीयं सत्सिद्धमत्र तु केचन।**
**विह्वला असदेवेदं पुरासीदित्यवर्णयन् ॥ २६ ॥**

एवं सद्वस्तु एकमेवाद्वितीयं स्वगतसजातीयविजातीयभेदरहितमिति सिद्धम्। तथाप्यत्रास्मिन् स्थले तु केचन वैनाशिकाः विह्वलाः सद्युक्तिपरिज्ञानशून्याः इदं जगन्नामरूपात्मकं पुरा सृष्टेः प्रागसदेवासीदित्यवर्णयन् ॥ २६ ॥

तेषां विह्वलतायाः कारणं सदृष्टान्तमाह, मग्नस्येति।

**मग्नस्याब्धौ यथाक्षाणि विह्वलानि तथास्य धीः।**
**अखंडैकरसं श्रुत्वा निष्प्रचारा बिभेत्यतः ॥ २७ ॥**

यथा अखंडजलेऽब्धौ मग्नस्याक्षाणि इन्द्रियाणि विह्वलानि भयाविष्टान्यतोऽतीव चञ्चलानि भवन्ति, तथास्य वैनाशिकस्य धीर्बुद्धिरखंडैकरसं श्रुत्वा नेति नेतीतिश्रुत्या सर्वबुद्धिगोचरव्यावर्तकत्वेन सन्मात्रतया बोध्यमानं सच्चिदानन्दस्वरूपं परं ब्रह्म श्रुत्वा निष्प्रचारा प्रचाररहिताऽनवगाहमाना सती अखंडैकरसाद्वस्तुनो बिभेति भयमाप्नोति । अज्ञानमुषितोपनिषदर्थज्योत्स्नानां निजशेमुषी भयकारणमेवेति भावः ॥ २७ ॥

उक्तविह्वलतायां कैमुतिकन्यायेनाचार्यसम्मतिमाह, गौडाचार्येति ।

**गौडाचार्या निर्विकल्पे समाधावन्ययोगिनाम् ।**
**साकारब्रह्मनिष्ठानामत्यन्तं भयमूचिरे ॥ २८ ॥**

निर्विकल्पे ज्ञातृज्ञेयादिविभागशून्ये समाधौ यत्र ध्येयैकगोचरं निवातदीपवच्चित्तं भवति तत्र साकारब्रह्मनिष्ठानां सगुणब्रह्मोपासकानां ध्यातृध्यानध्येयभेदे सत्यत्वधियामन्ययोगिनामत्यन्तं भयं गौडाचार्या ऊचिरे साकारनिष्ठानामुपासकानां निर्गुणब्रह्मविषये भयकारणं चेत् किमंग पुनश्चञ्चलचित्तानां स्वाभीष्टाभिनिविष्टानां सौगतानामिति भावः ॥ २८ ॥

आचार्यवाक्यं पठति, अस्पर्शेति ।

**अस्पर्शयोगो नामैष दुर्दर्शस्सर्वयोगिभिः ।**
**योगिनो बिभ्यति ह्यस्मादभये भयदर्शिनः ॥ २९ ॥**

अस्पर्शयोगो निर्विकल्पस्समाधिः नामेति प्रसिद्धौ एष स्वानुभवगोचरः । सर्वयोगिभिस्सगुणोपासकैर्दुर्दर्शो दुःखेन द्रष्टुं शक्यो दुष्प्रापः । तत्र कारणमाह । हि यस्मात्कारणादेतेऽन्ययोगिनः अभये भयं न विद्यते यस्मिन् तस्मिन् निर्विकल्पसमाधौ भयदर्शिनः भयं पश्यन्तीति तथाभूता भवन्ति। तस्मात् योगिनो बिभ्यति ॥ २९ ॥

श्रीशङ्करभगवत्पादसम्मतिमप्याह, भगवदिति ।

भगवत्पूज्यपादाश्च शुष्कतर्कपटूनमून् ।
आहुर्माध्यमिकान्भ्रान्तानचिन्त्येऽस्मिन् सदात्मनि ॥ ३० ॥

भगवत्पूज्यपादाश्च शुष्कतर्कपटून् शुष्कः प्रमाणविधुरश्चासौ तर्को युक्तिवादः तस्मिन् पटून् दक्षानमून् माध्यमिकान् बौद्धनामवान्तरशाखीयान् अचिन्त्ये मनसोऽगोचरे सदात्मनि सत्स्वरूपे ह्यात्मनि भ्रान्तान् विप्रतिपन्ना-नाहुः । शिष्यैरवश्यं कर्तव्ययोर्योगाचारयोः प्रथमस्याकरणाद्द्वितीयस्याङ्गीकरणान्मा-ध्यमिका इति प्रसिद्धिः ॥ ३० ॥

पूज्यपादवाक्यं पठति अनादृत्येति ।

अनादृत्य श्रुतिं मौर्ख्यादिमे बौद्धास्तमस्विनः ।
आपेदिरे निरात्मत्वमनुमानैकचक्षुषः ॥ ३१ ॥

तमस्विनः तमः अयथार्थज्ञानमेषामस्तीति तमस्विन इमे बौद्धाः मौर्ख्यात् श्रुतिं "सदेव सोम्येदमग्र आसी"दित्यादि (छां. ६. २. १.) श्रुतिमनादृत्य अप्रमाणी-कृत्य अनुमानैकचक्षुषोऽनुमानमेव मुख्यप्रमाणत्वेनांगीकुर्वन्त इति हेतुगर्भविशेषणम् । असच्छब्दस्य शून्यार्थतां प्रकल्प्य निरात्मत्वमात्माभावमेव आपेदिरे अवाप्नुवन् ॥३१॥

शून्यवादनिरासः ।

श्लोकद्वयेन तावदिदानीमसद्वादं विकल्प्य सोदाहरणं निराकरोति, शून्यमिति ।

शून्यमासीदितिब्रूषे सद्योगं वा सदात्मताम् ।
शून्यस्य न तु तद्युक्तमुभयं व्याहतत्वतः ॥ ३२ ॥

न युक्तस्तमसा सूर्यो नापि चासौ तमोमयः ।
सच्छून्ययोर्विरोधित्वाच्छून्यमासीत्कथं वद ॥ ३३ ॥

शून्यमासीदिति वाक्येन शून्यस्य सद्योगं सत्तायोगं संबंधं आहोस्वि-त्सदात्मतां सत आत्मतां तादात्म्यं ब्रूषे ब्रवीषीति शून्यवादिनं प्रति प्रश्नः ।

तदुभयं सत्तासम्बन्धस्तादात्म्यं वा शून्यस्य तु न युक्तं न युज्यते। कुतः? व्याहतत्वतः माता मे वन्ध्येतिवत् प्राधान्येन वक्तव्यांशविघटकपदार्थघटितार्थबोधकत्वात्। शून्यमासीदित्यत्र सन् घटः सन् पटः इतिवत् सच्छून्यमिति वक्तव्ये केन सम्बन्धेन सता शून्यं सम्बद्ध्यते। घटपटयोरिव संयोगसम्बन्धेन गुणगुणिनोरिव तादात्म्यसम्बन्धेन वा? शून्यस्य रूपाभावात्संयोगसम्बन्धाभावः। भावाभावयोस्संयोगस्य दुर्घटत्वात्। अतएव तादात्म्यसम्बन्धोऽपि नो घटते। एवं शून्यमासीदिति वाक्याभास एव। अत एतेषामेष घोषो विषमघोष एवेति भावः। तत्र दृष्टान्तमाह नेति। सूर्यस्तमसा न युक्तो न युज्यते तमःप्रकाशयोरत्यन्तविरुद्धस्वभावात् असौ सूर्यस्तमोमयस्तमस्स्वरूपोऽपि न तथैव सच्छून्ययोर्भावाभावरूपयोर्विरोधित्वात्कथं शून्यमासीदिति वक्तुं शक्यते वद ब्रूहीति प्रश्नः न हि शक्यते वक्तुमिति भावः॥ ३२, ३३॥

ननु युष्मन्मते सद्वस्तुनि वियदादेर्नामरूपेऽविरोधितया कल्पेते। तथैव शून्यस्यापि स्यादिति शून्यवादी प्रतिवदतीति गृहीत्वा समाधत्ते वियदिति।

> वियदादेर्नामरूपे मायया सुविकल्पिते।
> शून्यस्य नामरूपे च तथा चेज्जीव्यतां चिरम्॥ ३४॥

यथाऽस्मन्मते वियदादेः प्रथमजत्वाद्वियतो ग्रहणं, नाम इति आकाश इति शब्दः रूपं च नामरूपे मायया सुविकल्पिते सम्यगारोपिते शून्यस्यापि नामरूपे तथा मायया कल्पिते स्यातामिति वदसि चेच्चिरं जीव्यतां दीर्घायुष्मान् भव। बालस्त्वां मन्दमतिरित्युपालम्भकं वचः। अस्मन्मते वियदादिनामरूपे मायया सति परिकल्पिते तत्त्वतो न विद्येते वाचारम्भणमात्रत्वात्। तथा शून्यस्यापि नामरूपे कल्पित इति वदसि चेत् स्वाभ्युपगमविरोधो वेदान्तमतप्रवेशापत्तिश्च स्यातामित्युपालम्भः॥ ३४॥

यद्येवं सर्वत्र नामरूपे सामान्यतः कल्पिते तर्हि सतोऽपि नामरूपे कल्पिते स्यातामित्यत आह सत इति।

सतोऽपि नामरूपे द्वे कल्पिते चेत्तदा वद ।
कुत्रेति निरधिष्ठानो न भ्रमः क्वचिदीक्ष्यते ॥ ३५ ॥

नामरूपे द्वे सतोऽपि कल्पिते स्यातामिति चेत्तदा सतो नामरूपे कुत्र कस्मिन्नधिष्ठाने कल्प्येते तद्वद । कुतोऽयं प्रश्नः ? निरधिष्ठानः आधारविरहितो भ्रमः क्वचिदपि नेक्ष्यते । अत्रायमभिसन्धिः । सृष्टेः प्रागत्यन्ताभावरूपं शून्यमेवासीत् । तस्मिन् सतो नामरूपयोः कल्पितत्वाद्भ्रममात्रमेवेति वैनाशिकानामाशयः । एवमत्यन्ताभावे निरधिष्ठाने सतो नामरूपयोः कल्पनाया असम्भव इति सिद्धान्ती प्रतिवदति । सतोः रज्जुशुक्त्योस्सर्परजतभ्रान्तिरुदेति अन्यस्मिन्विद्यमानेऽन्यस्य नामरूपे तस्मिन्नारोप्येते सतो नामरूपे कस्मिन् कल्प्येते ? सति असति आहोस्विज्जगति वा ? नाद्यः । स्वस्मिन् स्वनामरूपकल्पनाया असम्भवात् । न हि सर्पे सर्पस्य नामरूपे आरोप्येते । न द्वितीयः । असतो निरात्मकत्वान्न तस्याधिष्ठानत्वयोग्यता । न तृतीयः । सदेवेत्यादिना कारणस्य कार्यनियतपूर्ववृत्तित्वाद्युपपत्तिभिश्च सतो नामरूपकल्पनाधिष्ठानात्मकत्वेनाभिमतस्य जगतस्स्वपूर्वासिद्धत्वात् ॥ ३५ ॥

ननु सिद्धान्तिमताभ्युपगमेऽपि सदासीदित्येकार्थबोधकस्य शब्दद्वयस्य पुनरुक्तिदोषापत्तिस्स्यादिति पूर्वपक्षमनूद्य समाधत्ते, सदिति ।

सदासीदिति शब्दार्थभेदे वैगुण्यमापतेत् ।
अभेदे पुनरुक्तिस्स्यान्मैवं लोके तथेक्षणात् ॥ ३६ ॥

सदासीदिति भिन्नशब्दयोर्भिन्नार्थकत्वमाहोस्विदेकार्थकत्वं वा स्यात् । आद्ये शब्दार्थभेदे सदासीदिति शब्दयोरर्थे विलक्षणे सति वैगुण्यं अद्वैतसिद्धान्तविरोध आपतेत् । तन्मते सत्पदार्थद्वयानंगीकारात् । द्वितीयेऽभेदे पुनरुक्तिस्स्यात् पर्यायाणां सह प्रयोगाभावात् इति चेदेवं मा ब्रूहि । लोके तथा प्रयोगानामीक्षणाद्दर्शनात् ॥ ३६ ॥

तादृक्प्रयोगमुदाहरति कर्तव्यमिति ।

**कर्तव्यं कुरुते वाक्यं ब्रूते धार्यस्य धारणम् ।**
**इत्यादिवासनाविष्टं प्रत्यासीत्सदितीरणम् ॥ ३७ ॥**

कर्तव्यं कुरुते वाक्यं ब्रूते धार्यस्य धारणमित्यादीनि वाक्यानि लोके प्रसिद्धानि । तेषां वासनाविष्टं संस्कारपूरितं पुरुषं प्रति सदासीदितीरणं श्रुत्या वदनं लोके प्रसिद्धप्रयोगप्रविष्टचेतसां सुखबोधायैवं श्रुतिर्ब्रवीतीति भावः ॥ ३७ ॥

सदेवेति वाक्यगतपुराशब्दार्थं ब्रूते, कालेति ।

**कालाभावे पुरेत्युक्तिः कालवासनया युतम् ।**
**शिष्यं प्रत्येव तेनात्र द्वितीयं न हि शंक्यते ॥ ३८ ॥**

ननु कालत्रयानवच्छिन्ने परे वस्तुनि "पुरासीदिति" कथं भूतकालाव-च्छेदेनोच्यत इत्यत आह । कालाभावे कालात्मकस्य प्रपंचस्योत्पत्तेः प्राक्काल-स्याभावे निश्चिते सति पुरेत्युक्तिः कालवासनया युतं भूतभविष्यदादिपरिच्छिन्न-कालस्य वासनया युतं तद्वासनावासितं शिष्यं प्रत्येव तथोक्तम् । तेन तन्मात्रेणात्र द्वितीयं कालरूपं वस्तु न हि शंक्यते ॥ ३८ ॥

शिष्यानुकूलभाषाप्रयोगे कारणमाह चोद्यमिति ।

**चोद्यं वा परिहारो वा क्रियतां द्वैतभाषया ।**
**अद्वैतभाषया चोद्यं नास्ति नापि तदुत्तरम् ॥ ३९ ॥**

चोद्यं पूर्वपक्षः, तस्य परिहारो वा द्वैतभाषया द्वैतविषयिकवाग्व्ययेनैव क्रियताम् । अद्वैतभाषया चोद्यं नास्ति तदुत्तरमपि नास्ति । "यत्र वाचो निवर्तन्ते अप्राप्य मनसा सह ।" (तै. २.४.) यत्र मौनव्याख्याप्रकटितं परब्रह्मतत्वं तत्र भाषाप्रसक्तेरत्यन्तमभावः । किन्तु जिज्ञासुप्ररोचनार्थं व्यावहारिक-भाषयैव व्यवहरणम् । ज्ञातवस्तुमुखेनाज्ञातवस्तु बोधयत्यन्तेवासिनं सद्गुरुरिति भावः ॥ ३९ ॥

वासिष्ठवाक्यपठनपूर्वकमद्वैतलक्षणं वर्णयति, तदेति ।

**तदा स्तिमितगम्भीरं न तेजो न तमस्ततम् ।**
**अनाख्यमनभिव्यक्तं सत्किञ्चिदवशिष्यते ॥ ४० ॥**

तदाऽद्वैते वस्तुनि सति स्तिमितगम्भीरं स्तिमितं निश्चलं च गम्भीरं मनसापि विषयीकर्तुमशक्यं । न तेजो न तमः तेजस्तमोभ्यां भिन्नं ततं सर्वव्यापि अनाख्यमाख्यातुमशक्यं वर्णनातीतं । अनभिव्यक्तमिन्द्रियागोचरं सच्चोयेतरत् किंचिदनिर्वचनीयं वस्त्ववशिष्यते ॥ ४० ॥

नैय्यायिकमतनिरासः ।

एवं वैनाशिकपूर्वपक्षमपसार्य नैयायिकपूर्वपक्षमुत्थापयति, नन्विति ।

**ननु भूम्यादिकं माभूत्परमाण्वन्तनाशतः ।**
**कथं ते वियतोऽसत्त्वं बुद्धिमारोहतीति चेत् ॥ ४१ ॥**

नन्विति प्रश्ने । भूम्यादिकमादिशब्देनापस्तेजोवायवो गृह्यन्ते । परमाण्वन्त-नाशतः परमाणव एवान्तश्चरमावयवः नित्यत्वेन कारणत्वेन च येषां भूम्यादिचतु-ष्टयकार्याणां ते परमाण्वन्ताः । तेषां द्व्यणुकादिमहापृथिव्याद्यन्तानां चतुर्विध-भूतानामनित्यत्वान्नाशः तस्मात् मा भूत्, सत्यं न स्यात् । किन्तु वियतो नित्यस्याकाशस्यासत्त्वं अभावस्ते बुद्धिं कथमारोहतीति चेत् । आकाशस्य नित्यत्वमितरभूतानामनित्यत्वं च न्यायनयेऽङ्गीक्रियत इति बोध्यम् ॥ ४१ ॥

सिद्धान्ती प्रतिबंद्या प्रतिवदति, अत्यन्तमिति ।

**अत्यन्तं निर्जगद्व्योम यथा ते बुद्धिमाश्रितम् ।**
**तथैव सन्निराकाशं कुतो नाश्रयते मतिम् ॥ ४२ ॥**

यथा अत्यन्तं निर्जगद्व्योम अपास्तभूम्यादिचतुष्टयात्मकं व्योम ते बुद्धि-माश्रितं, यथा भूम्यादिचतुष्टयमपास्य केवलाकाशमात्रमनुमानप्रमाणैकवलाच्चिन्तयसि तथैव निराकाशमाकाशविरहितं केवलसन्मात्रमेव कुतस्तत्र मतिं नाश्रयते? यथा नैय्यायिकोऽनुमानमात्रावष्टम्भाद्भूम्यादिकं निराकरोति न तावन्मात्रावष्टम्भादेवा-

स्माभिराकाशनिरासः क्रियते । किन्तु "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः" (तै. २.१.) इत्यादिश्रुत्याद्यवष्टम्भोऽपि प्रबलोऽस्तीति सिद्धान्तस्य गूढाशयः ॥४२॥

प्रतिबंदिविमोचनं करोति, निर्जगदिति ।

**निर्जगद्व्योम दृष्टं चेत्प्रकाशतमसी विना ।**
**क्व दृष्टं किञ्च ते पक्षे न प्रत्यक्षं वियत्खलु ॥ ४३ ॥**

प्रकाशतमसी विना निर्जगद्व्योम जगद्विरहिताकाशः दृष्टं चेत् प्रतिबंदिनिराकरणमपि स्वमतव्याघातकमेवेत्याक्षिपति । क्वेति । क्व कुत्र दृष्टं वदेत्यध्याहारः । न दृष्टं । किञ्चान्यद्वक्तव्यमस्ति । ते पक्षे त्वन्मते, वियन्न प्रत्यक्षमिन्द्रियागोचरमित्यभ्युपगम्यते त्वयापि । यद्याकाशः प्रत्यक्षस्तव मतहानिस्स्यात् । यथा तव मते इन्द्रियागोचरं वियदभ्युपगम्यते तथैवास्माकं सद्वस्त्वपीति भावः ॥ ४३ ॥

वियत्सतोरिन्द्रियागोचरत्वे समानेपि सति विशेषमाह, सदिति ।

**सद्वस्तु शुद्धन्त्वस्माभिर्निश्चित्तैरनुभूयते ।**
**तूष्णीं स्थितौ न शून्यत्वं शून्यबुद्धेश्च वर्जनात् ॥४४॥**

शुद्धं रागादिदोषादूषितं सच्चिदानन्दात्मकं सद्वस्तु निश्चित्तैर्निर्गतं ध्यातृध्यानाभ्यां विगळितं चित्तं येषां तैरस्माभिर्निर्विकल्पकसमाधिनिष्ठैरपरोक्षतयाऽनुभूयते । कदानुभूयत इत्यत आह तूष्णीमिति । तूष्णीं स्थितौ मनसस्सर्ववृत्तिनिरोधे । ननु सर्ववृत्तिनिरोधे शून्यत्वमेव स्यादित्याकांक्षायामाह नेति । शून्यत्वं न तत्र कारणमाह । शून्येति । शून्यबुद्धेर्वर्जनात् शून्यमिति प्रतितेरभावात् समाधिगतस्य निवातदीपवन्निश्चलैकाग्रबुद्धेः करतलामलकवदपरोक्षसाक्षात्कारोऽनुभूयते । तत्र शून्यत्वमपि नास्ति । शून्यमितिप्रतीतेरभावात् । यदि तदानीं प्रतीतस्य शून्यत्वं स्याच्छून्यमिति प्रतीयेत । तादृशप्रतीत्यभावात्तद्वस्तु न शून्यं, किन्तु सदिति भावः ॥ ४४ ॥

नन् तदानीं बुद्धेरभावे शून्यबुद्धिवत् सद्विषयकबुद्धिरपि न स्यात् । तर्हि सद्वस्त्वपि न सिद्ध्येदित्याशंक्य समाधत्ते, सद्बुद्धिरिति ।

सद्बुद्धिरपि चेन्नास्ति मास्त्वस्य स्वप्रभत्वतः ।
निर्मनस्कत्वसाक्षित्वात्सन्मात्रं सुगमं नृणाम् ॥ ४५ ॥

सद्बुद्धिरपि नास्तीतिचेन्माऽस्तु । इष्टमेवैतदस्माकमिति भावः । कुतः ? सद्वस्तुनो बुद्ध्यगोचरत्वात् । तथा सति तस्य भानं कथमित्यत आह, अस्येति । अस्य सद्वस्तुनः स्वप्रभत्वतस्स्वयंप्रकाशत्वात् प्रकाशान्तरानपेक्षत्वात् निर्मनस्कत्व साक्षित्वात् सर्वसंकल्पशून्यमेतावत्कालं निर्विकल्प एवासमिति परामर्शानुमित-सर्वसंकल्पाभावविषयकसद्रूपभानान्नृणां निश्चितानां नामरूपरहितं सन्मात्रं वस्तु सुगमं सुखेन ज्ञेयं भवति ॥ ४५ ॥

एवं समाधावनुभवपूर्वकं सद्वस्तुसत्तां संस्थाप्य सृष्टेः प्रागपि तां साधयति । मन इति ।

मनोजृम्भणराहित्ये यथा साक्षी निराकुलः ।
मायाजृम्भणतः पूर्वं सत्तथैव निराकुलम् ॥ ४६ ॥

मनोजृम्भणराहित्ये मनसो जृम्भणं प्रमातृत्वादिवृत्त्युन्मुखता तस्या राहित्यमभावः तस्मिन्निष्प्रपंचे मनसि यथा साक्षी प्रत्यगात्मा निराकुलः निर्गत सर्वचित्तविक्षेपनिमित्तः स्फुरति । तथैव मायाजृम्भणतो मायायाः सृष्ट्यात्मक-व्यापारात्पूर्वं सत् परं ब्रह्म निराकुलं निश्चलं भाति ॥ ४६ ॥

मायास्वरूपनिरूपणम् ।

किं लक्षणेयं माया ? यया सर्वमिदं जगत्कल्पितमित्यत आह, निस्तत्त्वेति ।

निस्तत्त्वा कार्यगम्यास्य शक्तिर्मायाऽग्निशक्तिवत् ।
न हि शक्तिः क्वचित्कैश्चिद्बुध्यते कार्यतः पुरा ॥ ४७ ॥

अस्य सतश्शक्तिर्मायेत्युच्यते, सा निस्तत्त्वा यथार्थस्वरूपविधुरा । ननु यथार्थस्वरूपाभावे तस्या अभाव एव स्यादित्यत आह । सा विद्यत एव । तर्हि कथमवगम्यते ? अग्निशक्तिवत् स्फोटादिकार्यलिंगेन यथाऽग्निशक्तिरनुमीयते तथैव

सा कार्यगम्या वियदादिकार्येण गम्याऽनुमेया । सद्वस्तु मायाशक्तिमत् वियदादि-कार्यजनकत्वात् अग्निवदित्यर्थः । यदि विद्यते प्रत्यक्षेण किं न दृश्यते? इत्यत आह । शक्तिः कचिद्यदा कदापि कैश्चिदपि कार्यतः पुरा प्राक्कार्योत्पत्तेः न बुद्ध्यते न ज्ञायते । स्वतः सद्वस्तु न वियदादेः कारणम् । तस्य निष्क्रियत्वात् । "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" इत्यादिश्रुतेः । (श्वेत. ६. १९.) अतो मायेति काचिच्छक्तिरवश्यमभ्युपगन्तव्या । सा च यथार्थस्वरूपविरहितेति भावः ॥ ४७ ॥

मायाया निस्तत्त्वस्वरूपविवक्षया तत्र पक्षद्वयमुत्थापयति, सार्धश्लोकेन, नेति ।

**न सद्वस्तु सतः शक्तिर्नहि वह्नेः स्वशक्तिता ।**
**सद्विलक्षणतायां तु शक्तेः किं तत्त्वमुच्यताम् ॥**

**शून्यत्वमिति चेच्छून्यं मायाकार्यमितीरितम् ॥ ४८ ॥**

सतः शक्तिर्मायेति प्रतिज्ञातम् । तस्या मायात्वं विकल्प्य स्थापयति । तत्रायं विकल्पः । शक्तिः सतो भिन्ना अभिन्ना वा? न द्वितीय इत्याह । नेति । सतः शक्तिः सद्वस्तु न । तत्रोपपत्तिमाह । न हीति । वह्नेः स्वशक्तिता स्वस्यैव शक्तेराकारादेःस्वरूपता वह्निर्न भवति । तथाहि; मण्यादिसमवधाने वह्नेर्दाहानुदयात् । दाहानुकूला शक्तिः मण्यादिना नश्यतीति मीमांसका मन्यन्ते । यदि सा शक्ति-र्वह्निरूपा शक्तिनाशो वह्निनाश इत्यायाति । न चेष्टापत्तिः । मणिसमवधानेपि रूपादिना वह्नेः प्रत्यक्षसिद्धत्वात् । अतो वह्निनिष्ठा दाहानुकूला शक्तिर्न वह्नि रूपेत्यवश्यमभ्युपगन्तव्यम् । एवं सन्निष्ठा शक्तिरपि न सद्रूपेत्यभ्युपेया । एवं मायाशक्तिर्न सद्रूपा । ननु सदभिन्नत्वनिराकरणे मायाया अभ्युपगमेन तदतिरिक्तायाः शक्तेरङ्गीकर्तव्यतया सद्वितीयत्वप्रसक्त्याऽद्वितीयत्वभंगः प्रसज्येतेत्यत आद्यं पक्षं निराकरोति, सदिति । सद्विलक्षणतायां सतो विभिन्नतायां तु शब्दः पक्षान्तरद्यो-तनार्थः शक्तेः किं तत्त्वं किं तस्याः स्वरूपं, सद्भिन्नं शून्यात्मकमुतान्यद्वस्तु उच्यताम् । सद्भिन्नं शून्यात्मकमिति कल्पेऽनुपपत्तिं दर्शयति । शून्यत्वमिति ।

चेत् शून्यत्वं मायाशक्तेरयथार्थत्वादत्यन्तासत्त्वमित्युच्यते चेत् तस्मान्मायाकार्यं शून्यमितीरितम् भवति। न कस्यापि माध्यमिकातिरिक्तस्यास्य जगतः शून्यत्वमिष्टम् ॥ ४८ ॥

एवं स्थिते सिद्धान्ती स्वमतं व्युत्पादयति, नेति।

**न शून्यं नापि सद्यादृक्तादृक्तत्त्वमिहेष्यताम् ॥ ४९ ॥**

यादृक् न शून्यं नासत् नापि सत् तादृक् शक्तेस्तत्त्वमिष्यताम्। सत्त्वासत्त्वाभ्यामनिर्वचनीयमितिभावः। इंद्रजालिकसृष्टेर्मायाकार्यत्वेन व्यवहारदर्शनात् सतः शक्तेर्मायात्वमुक्तमिति तात्पर्यम् ॥ ४९ ॥

अस्मिन्नर्थे "तम आसीत्तमसा गूढमग्रे" (बृ. सं. ८. ७.) इति श्रुतिं प्रमाणयति, नेति।

**नासदासीन्नो सदासीत्तदानीं किं त्वभूत्तमः।**
**सद्योगात्तमसः सत्त्वं न स्वतस्तन्निषेधनात् ॥ ५० ॥**

सा माया असत् शून्या नासीत् सत् नो आसीत्। किं तु तदानीं सृष्टेः प्राक् तमोऽभूत्। न स्वभावरूपं वस्त्वासीदिति कथं तस्य सत्वोक्तिरित्यत आह। सदिति। तमसो मायायाः सद्योगात् सद्वस्तुसंबंधात् सत्वं सत्ताधर्म उच्यते। मायायाः स्वतः सत्ताभावे कारणमाह। नेति। तन्निषेधनात् तस्य सत्ताधर्मस्य निषेधनात् स्वतो न विद्यते ॥ ५० ॥

मायाया मिथ्यात्वविवक्षया सदभिन्नत्वमिव सद्भिन्नत्वमपि निराकरोति, अत इति।

**अत एव द्वितीयत्वं शून्यवन्न हि गण्यते।**
**न लोके चैत्रतच्छक्त्योर्जीवितं लिख्यते पृथक् ॥ ५१ ॥**

अत एव मायायाः मिथ्यास्वरूपत्वादेव शून्यवत् द्वितीयत्वं न हि गण्यते नाङ्गीक्रियते। तत्र दृष्टान्तमाह। नेति। लोके चैत्रतच्छक्त्योः चैत्रस्य तस्य शक्तेश्च जीवितं स्थितिः पृथक् न लिख्यते ॥ ५१ ॥

द्वितीयं विकल्पं शक्तेः पार्थक्यरूपं वारयति, शक्तेरिति ।

**शक्त्याधिक्ये जीवितं चेद्वर्धते तत्र वृद्धिकृत् ।**
**न शक्तिः किं तु तत्कार्यं युद्धकृष्यादिकं तथा ॥ ५२ ॥**

शक्त्याधिक्ये सति जीवितं जीवनं वर्धते। अतश्चैत्रात्तच्छक्तिरतिरिक्तेति वदसि चेन्न । तत्र वृद्धिकृत् शक्तिर्न । न शक्तिः कार्यं वृद्धिरित्यर्थः । तर्हि किं तत्कार्यमित्यत आह । किं त्विति । किं तु तत्कार्यं युद्धकृष्यादिकम् ॥ ५२ ॥

एवं सतः शक्त्या सद्वितीयत्वं निराकृत्य तत्कार्याभावेन तेनापि सद्वितीयत्वं कैमुतिकन्यायेन निराकरोति, सर्वथेति ।

**सर्वथा शक्तिमात्रस्य न पृथग्गणना क्वचित् ।**
**शक्तिकार्यं तु नैवास्ति द्वितीयं शंक्यते कथम् ॥ ५३ ॥**

सर्वथा शक्तिमात्रस्य क्वचिदपि पृथग्गणना प्रत्येकव्यवहारो न विद्यते । शक्तिसद्वितीयत्वाभावेऽपि शक्तिकार्यसद्वितीयत्वं स्यादित्यत आह । शक्तीति । शक्तिकार्यं तु मायायाः कार्यभूतं नामरूपादिकमैन्द्रजालिककार्यवन्नैवास्ति । एवेति निश्चयार्थे । एवं सति द्वितीयं वस्तु कथं शंक्यते अनुमीयते । वंध्यापुत्रायमाणेन शक्तिकार्येणापि सतः सद्वितीयत्वमनुमातुं न शक्यत इति भावः ॥ ५३ ॥

मायायाःब्रह्मण एकदेशवृत्तित्वकथनम् ।

ननु मायाशक्तिः सद्वस्त्वधिष्ठाना स्याद्यदि । तर्हि तस्याः कृत्स्नब्रह्मवृत्तित्वमाहोस्विदेकदेशभाक्त्वम् । आद्ये मुक्तप्राप्यं ब्रह्म न स्यात् । द्वितीये सांशत्वापत्तिः । इत्याकारिकां मंदधियां शंकां निराकर्तुं तद्बुद्ध्यनुरूपामेव भाषामाश्रित्यैकदेशभाक्त्वमङ्गीकरोति, नेति ।

**न कृत्स्नब्रह्मवृत्तिः सा शक्तिः किंत्वेकदेशभाक् ।**
**घटशक्तिर्यथा भूमौ स्निग्धमृद्येव वर्तते ॥ ५४ ॥**

सा मायाशक्तिः कृत्स्नब्रह्मवृत्तिः न कृत्स्ने अशेषे ब्रह्मणि न वर्तते । किं त्वेकदेशभाक् । किंचिद्देश एव वर्तते । तत्र दृष्टान्तमाह । घटेति । यथा घटशक्तिः घटोत्पादनशक्तिर्भूमौ सर्वत्र न विद्यते किं त्वेकदेशे स्निग्धमृद्येव वर्तते ॥ ५४ ॥

परमात्मनि मायाया एकदेशवृत्तित्वं श्रुतिस्मृतिप्रसिद्धमित्याचक्षाणस्तत्र प्रथमं "पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीति" (छां. ३. १२. ६.) श्रुतिमर्थतः पठति, पाद इति ।

पादोऽस्य सर्वा भूतानि त्रिपादस्ति स्वयंप्रभः ।
इत्येकदेशवृत्तित्वं मायाया वदति श्रुतिः ॥ ५५ ॥

सर्वा भूतान्याकाशादीनि स्थावरजंगमादीनि कार्याणि सर्वा इति छांदसम् । अस्य परब्रह्मणः पादः चतुर्थांशः । शिष्टः त्रिपात् पादत्रयात्मकः स्वयंप्रभः स्वयंप्रकाशः । इति मायाया एकदेशवृत्तित्वं मायाकार्यभूतभूतग्रामस्य चतुर्थांशत्वेन वर्णितत्वात्तत्कारणभूताया मायाया अप्येकदेशवृत्तित्वं निरुक्तश्रुत्युक्त-प्रायमेवेति भावः । अपरिच्छिन्नाद्ब्रह्मणः परिच्छिन्नस्य जगतोऽत्यल्पतां बोधयितुं मायायाश्चतुर्थांशवृत्तित्वमुपदिष्टम् । नास्ति वस्तुतश्चतुर्थांशः । तस्य निरंशत्वात् । द्वित्वादिसंख्यायामेकत्वद्वयाद्यभावेऽप्येकत्वद्वयादिरूपं द्वित्वादिष्वेकदेशिनो यथा मन्यन्ते तद्वत् ॥ ५५ ॥

अस्मिन्नर्थे स्मृतिं प्रमाणयति, (गी. १०. ४२.) विष्टभ्येति ।

विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ।
इति कृष्णोऽर्जुनायाह जगतस्त्वेकदेशताम् ॥ ५६ ॥

विष्टभ्य विशेषेण व्याप्य । स्पष्टमन्यत् ॥ ५६ ॥

परब्रह्मणो मायारहितस्वरूपे श्रुतिसूत्रे प्रमाणयति, स इति ।

स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशांगुलम् ।
विकारावर्ति चात्रास्ति श्रुतिसूत्रकृतोर्वचः ॥ ५७ ॥

स परमात्मा भूमिं जगद्विश्वतः समन्ततो वृत्वा दशाङ्गुलमत्यतिष्ठत् तदतिरिच्यातिष्ठत् । नात्र दशशब्दः केवलदशत्वसंख्यावाचकः । किं तु जगद्-पेक्षया तस्य भूयस्त्वबोधनपर एवेति श्वेताश्वतरश्रुतिः (३. १४.) न परब्रह्म विकारावर्ति च विकाराः सूर्यमंडलादयः । तेष्ववर्ति न तावन्मात्रपरिच्छिन्नः । अत्र अस्मिन् विषये श्रुतिसूत्रकृतोर्वच । श्रुतेर्वचः पूर्वार्धे उक्तम् । सूत्रकृतो वचस्तु "विकारावर्ति च तथा हि स्थितिमाहेति" (४. ४. १९.) सूत्रे इति ॥ ५७ ॥

मायायाः परब्रह्मैकदेशभाक्त्वकथनेन तस्य सावयवत्वप्राप्तिमाशंक्याह । निरंशइति ।

**निरंशेऽप्यंशमारोप्य कृत्स्नेंऽशे वेति पृच्छतः ।**
**तद्भाषयोत्तरं ब्रूते श्रुतिः श्रोतृहितैषिणी ॥ ५८ ॥**

सुलभा पदयोजना । द्वैतभाषामाश्रित्य पृच्छतो मंदधियो विषयस्य सुगमतायै तयैव भाषयोत्तरमपि समाधीयत इति भावः ॥ ५८ ॥

एवं समर्थिताया मायायाः प्रयोजनं सदृष्टान्तमाह, सदिति ।

**सत्तत्त्वमाश्रिता शक्तिः कल्पयेत्सति विक्रियाः ।**
**वर्णा भित्तिगता भित्तौ चित्रं नानाविधं तथा ॥ ५९ ॥**

भित्तिगताः कुड्ये लिप्ता रक्तपीतादयो नानाविधमाकृतिविशेषं । विक्रिया विविधतया क्रियन्त इति विक्रियाः । स्पष्टमन्यत् ॥ ५९ ॥

आद्यविकारस्याकाशस्य विचारः ।

मायाकल्पितेषु विकारेषु प्रथममाह, आद्य इति ।

**आद्यो विकार आकाशः सोऽवकाशस्वरूपवान् ।**
**आकाशोऽस्तीति सत्त्वमाकाशेऽप्यनुगच्छति ॥ ६० ॥**

मायया सद्वस्तुनि कल्पितानां विकाराणां मध्ये आद्यः प्रथमो विकार आकाशः । "आत्मन आकाशः संभूत" (तै. २. १.) इति श्रुतेः । नामरूपसहि-

तत्वमेव विकारत्वम् । सृष्टौ प्रथमकार्यस्याकाश इति नाम । सोऽवकाशस्वरूपवान् अवकाश एव तस्य स्वरूपम् । मूर्तद्रव्याणामवकाशदातृत्वात् । "द्रव्यान्तरस्थिति-प्रवेशयोग्यतासंपादको दैशिकः स चावकाशः" । आकाशस्य सत्कार्यत्वं सोपपत्ति-कमाह । आकाशोऽस्तीति सत्त्ववत्वं सत्तारूपो धर्म आकाशेऽप्यनुगच्छति । अध्यस्यत इति यावत् । सत आकाशेप्यनुस्यूतत्वात् ॥ ६० ॥

आकाशे कार्यकारणधर्मौ विशदयति, एकेति ।

**एकस्वभावं सत्तत्त्वमाकाशो द्विस्वभावकः ।**
**नावकाशः सति व्योम्नि स चैषोऽपि द्वयं स्थितम् ॥ ६१ ॥**

सत्तत्त्वं सद्भाव एकस्वभावं सत्तारूपैकधर्मकं । आकाशो द्विस्वभावकः । सति सद्वस्तुन्यवकाशो न विद्यते । व्योम्नि सन् सत्ता एषोऽप्यवकाशगुणश्च द्वय-मपि स्थितम् । सत्कार्यत्वधर्मविशिष्टावकाशदातृत्वमाकाशस्य स्वरूपमित्युक्तं भवति । एवमाकाशवायुतेजोंबुभुवां पूर्वपूर्वस्योत्तरोत्तरकारणभूतत्वादुत्तरोत्तरस्मिन् पूर्वपूर्वकारणस्य गुणसंक्रमणमुत्तरग्रन्थे प्रदर्शितम् । प्रत्येकं तेषां स्वधर्माश्चापिहिताः । एवमेते क्रमशो द्वित्रिचतुःपंचषट्स्वभावका भवन्ति ॥ ६१ ॥

आकाशनिष्ठशब्दगुणमादायापि सदाकाशयोरेकद्विस्वभावत्वमेवेत्याह, यद्वेति ।

**यद्वा प्रतिध्वनिर्व्योम्नो गुणो नासौ सतीक्ष्यते ।**
**व्योम्नि द्वौ सद्ध्वनी तेन सदेकं द्विगुणं वियत् ॥ ६२ ॥**

यद्वेति प्रकारान्तरेण वियतो द्वैगुण्यं दर्शयति । प्रतिध्वनिः शब्दो व्योम्नो गुणः । असौ प्रतिध्वनिः सति नेक्ष्यते व्योम्नि सद्ध्वनी सत्ता च ध्वनिश्च द्वौ गुणौ । तेन कारणेन सदेकमेकस्वभावकम् । वियद्द्विगुणं द्विस्वभाव कम् । सत्कार्यत्वे सत्यवकाशदातृत्वं यद्वा शब्दगुणकत्वमाकाशस्य स्वरूपमिति संपन्नम् । शब्दगुणकमाकाशमिति न्यायनयप्रसिद्धमाकाशलक्षणं तु तस्य द्रव्येतर-विभाजकधर्मप्रतिपादकमात्रं न तु तत्स्वरूपप्रदर्शकमित्यवधेयम् ॥ ६२ ॥

नन्वाकाश आसीदित्यत्र सत्ताधर्मविशिष्ट आकाश इत्यर्थे सदाकाशयोर्धर्मधर्मिभावापत्तेरसंगतिरेव स्यात्। आकाशस्य सत्कार्यत्वे सति कथं कारणस्य कार्यधर्मत्वमित्याशंक्याह, येति।

**या शक्तिः कल्पयेद्व्योम सा सद्व्योम्नोरभिन्नताम्।**
**आपाद्य धर्मधर्मित्वं व्युत्ययेनात्रकल्पयेत् ॥ ६३ ॥**

या मायाशक्तिर्व्योम कल्पयेत् सत्यारोपयति सैव शक्तिः सद्व्योम्नोरभिन्नतां तादात्म्यमापाद्य प्रथमं संपाद्य तयोरेवानन्तरं वैपरीत्येन धर्मधर्मित्वं धर्मस्याकाशस्य धर्मिभावं चावकल्पयेत्। अत आकाशस्य सद्धर्मित्वमवगम्यते ॥६३॥

निरुक्तव्यत्ययमेव प्रपञ्चयति, सत इति।

**सतो व्योमत्वमापन्नं व्योम्नः सत्तां तु लौकिकाः।**
**तार्किकाश्चावगच्छन्ति मायाया उचितं हि तत ॥६४॥**

मृदो घटरूपत्वमिव सतो व्योमत्वमापन्नम्। देशपरिच्छिन्नत्वशब्दगुणकत्वादिवियद्धर्मा विकाराः सद्वस्तुनि माययाऽरोप्यन्ते। तथापि लौकिकाः शास्त्रज्ञानशून्याः प्रतीतिमात्रशरणास्तार्किकाश्च व्योम्नः सत्तामवगच्छन्ति। तद्विपरीतकल्पना मायाया उचितैव हि। धर्मधर्मिणोर्व्यत्ययेन परिग्रहणं केवलमायाकृतव्यामोहफलमित्यलम् ॥ ६४ ॥

विपरीतप्रतीतेर्लौकिकोपपत्तिमाह, यदिति।

**यद्यथा वर्तते तस्य तथात्वं भाति मानतः।**
**अन्यथात्वं भ्रमेणेति न्यायोऽयं सार्वलौकिकः ॥ ६५ ॥**

यद्वस्तु यथा वर्तते तस्य तथात्वं तथाप्रतीयमानत्वं मानतः प्रत्यक्षादिप्रमाणतो भाति सिध्यति। तस्मिन् तद्बुद्धिः प्रमा। अन्यथात्वं अन्यधर्मवत्त्वं भ्रमेणेत्ययं न्यायः अतस्मिन् तद्बुद्धिर्भ्रम इति न्यायः सार्वलौकिकः- सार्वजनीनः सर्वसम्मत इत्यर्थः ॥ ६५ ॥

धर्मवतो वियतः सद्वस्तुनि विवेचनारीतिमाह, एवमिति ।

एवं श्रुतिविचारात् प्राग्यथा यद्वस्तु भासते ।
विचारेण विपर्येति ततस्तच्चिन्त्यतां वियत् ॥ ६६ ॥

एवमुक्तप्रकारेण यद्वस्तु श्रुतिविचारात् प्राक् श्रुत्यर्थविचारात्पूर्वं यथा भासते आकाश आसीदित्याकाशनिष्ठसत्ताधर्मिकतया ज्ञायते तद्वस्तु विचारेण श्रुतेरर्थविचारेण विपर्येति वैपरीत्येन भासते । न चाकाशधर्मः सत्ता किंतु सदेव मायाकल्पितभ्रमेण वियत्तया प्रतीयत इति ज्ञायते ततस्तद्वियच्चिन्त्यतां वियतः कार्यत्वं विचार्यताम् । अत्र वियच्छब्देन वियदादि सर्वं सृष्टिजातं गृह्यते ॥ ६६ ॥

निरुक्तां विवेचनारीतिं विवृणोति, भिन्न इति ।

भिन्ने वियत्सती शब्दभेदाद्बुद्धेश्च भेदतः ।
वाय्वादिष्वनुवृत्तं सन्नतु व्योमेति भेदधीः ॥ ६७ ॥

वियत्सती वियच्च सच्च आकाशसद्वस्तुनी भिन्ने । कुतः ? शब्दभेदात् । सत् वियतो भिन्नम् । वियद्वाचकशब्दप्रतिपाद्यत्वात् । एवं वियत्सतो भिन्नम् । सच्छब्दाप्रतिपाद्यत्वात् । इत्यनुमानद्वयमस्मिन् वाक्ये सूचितम् । भिन्ने वियत्सती बुद्धेश्च भेदतः । सत् वियद्भिन्नम् । वियद्विषयकबुद्धिविलक्षणबुद्धिविषयत्वात् । एवं वियत्सतो भिन्नम् । सद्विषयकबुद्धिविलक्षणबुद्धिविषयत्वात् । इत्यनुमानद्वयमनेन सूचितम् । बुद्धिभेदं विशदयति वाय्विति । सत् वाय्वादिषु सन् वायुः सत्तेज इत्यनुवृत्तम् । व्योम तु न तथाऽनुवृत्तम् । इति इत्याकारकं ज्ञानं भेदधीः ॥ ६७ ॥

आकाशसत्तेति प्रातीतिकं धर्मिधर्मभावं विहाय सतो धर्म आकाश इति पूर्वोक्तं सिद्धान्तं युक्त्या साधयति, सदिति ।

सद्वस्त्वधिकवृत्तित्वाद्धर्मि व्योम्नस्तु धर्मता ।
धिया सतः पृथक्कारे ब्रूहि व्योम किमात्मकं ॥ ६८ ॥

सद्वस्तु अधिकवृत्तित्वादधिकदेशवृत्तित्वात् धर्मि भवति। व्योमस्तु न्यूनदेशवृत्तित्वाद्धर्मता। धर्मस्य धर्मिवृत्तितया धर्मिणोऽधिकदेशवृत्तित्वं धर्मस्य। न्यूनदेशवृत्तित्वं च लोके सामान्यतो दृष्टम्। एवं प्रकृतेऽप्यधिकदेशवृत्तेस्सतो धर्मित्वं न्यूनदेशवृत्तेराकाशस्य धर्मत्वं च निश्चेयम्। न तु तद्वैपरीत्येण। लोके वैपरीत्येण व्यवहारस्तु वस्तुतत्त्वानवबोधमूलक इति च बोध्यम्। एवं धर्मधर्मिभावे स्थिते धिया सतः पृथक्कारे सतो धर्मिभूतस्य विवेचने धर्मस्य धर्मिव्यतिरेकेणावर्तनाद् व्योम किमात्मकं ब्रूहि किं स्वरूपमवतिष्ठेतेति वद ॥ ६८ ॥

नन्वाकाशात्सद्बुद्धेः पृथक्करणानन्तरमप्यवकाशात्मकस्वरूपेणाकाशो विद्यत एवेति प्रतिवादिवादोऽसंगत इत्याह, अवकाशेति।

**अवकाशात्मकं तच्चेदसत्तदिति चिन्त्यताम्।**
**भिन्नं सतोऽसच्च नेति वक्षि चेद् व्याहृतिस्तव ॥ ६९ ॥**

आकाशस्य सतः पृथक्करणानन्तरमवकाशात्मकं वियदस्तीति वदसि चेत्तदवकाशात्मकमसदिति सद्व्यतिरिक्तमिति चिन्त्यतां निश्चीयताम्। तर्हि किमापतेत्। सतो भिन्नमसत्तथाप्यसन्नेति वक्षि चेत् तव वचसो व्याहृतिः परस्परविरोधः। तव व्याहतिरित्युक्त्या सदसद्विलक्षणमिथ्याभूतवस्त्वङ्गीकर्तॄणां नायं व्याघात इति सूच्यते ॥ ६९ ॥

अवकाशात्मक आकाशोऽसन्नपि कथं भासत इत्याशंक्याह, भातीति।

**भातीति चेद्भातु नाम भूषणं मायिकस्य तत्।**
**यदसद्भासमानं तन्मिथ्या स्वप्नगजादिवत् ॥ ७० ॥**

अवकाशात्मक आकाशः सतः पृथक्करणानन्तरमपि भातीति वक्ष्यसि चेद्भातु नाम। किं तु तद्भानं मायिकस्य मायाकार्यस्य भूषणमलंकार एव। यदसद्वस्तु मरुमरीचिकेवाविद्यमानमपि विद्यमानमिव भासमानं तत् स्वप्नगजादिवत् मिथ्यामात्रमेव ॥ ७० ॥

नियमेन सहोपलभ्यमानयोः कथं भेदसिद्धिरिति चोद्यं परकीयानुभव-प्रदर्शनेन परिहरति, जातीति ।

जातिव्यक्ती देहिदेहौ गुणद्रव्ये यथा पृथक् ।
वियत्सतोस्तथैवास्तु पार्थक्यं कोऽत्र विस्मयः ॥ ७१ ॥

यथा जातिव्यक्ती जातिर्नित्यमेकमनेकानुगतं सामान्यमिति लक्षणलक्षिता । यथाऽनेकेषु गोषु विद्यमानो गोत्वधर्मः, व्यक्तिः धर्मी गौः, देहिदेहौ । देही जीवः, तस्याश्रयो देहः, गुणद्रव्ये गुणो नीलपीतादिः, द्रव्यं घटादिकं; यथा पृथक् भिन्नतया भासते । वियत्सतोराकाशस्य धर्मितया प्रतीयमानस्य सद्वस्तुनश्च तथैव पार्थक्यमस्तु । नित्यसंबद्धानामेवं पार्थक्ये को विस्मयः किमाश्चर्यम् ॥ ७१ ॥

यद्यपि भेदो बुध्यते । तथाऽपि सा बुद्धिर्निश्चयात्मिकेति कथं सिध्यति इति शंकते, बुद्धोपीति ।

बुद्धोऽपि भेदो नो चित्ते निरूढिं याति चेत्तदा ।
अनैकाग्र्यात्संशयाद्वा रूढ्यभावोऽस्य ते वद ॥ ७२ ॥

आकाशसतोर्भेद उक्तरीत्या बुद्धोऽपि सहेतुकमवगतोऽपि चित्ते निरूढिं दार्ढ्यं नो याति नाप्नोतीति चेत् तन्निश्चितत्वाभावे को हेतुरिति विकल्प्यते । अनैकाग्र्यादिति । अस्य रूढ्यभावः कथं भवेत् अनैकाग्र्यात् एकमग्रं विषय-प्रवणता यस्य तदेकाग्रं तस्य भाव ऐकाग्र्यम् तन्नभवतीत्यनैकाग्र्यम् । तस्माच्चित्त-विक्षेपादुत संशयाद्विश्वासाभावात् । वद ॥ ७२ ॥

द्वयोरपि प्रतीकारमाह, अप्रमत्त इति ।

अप्रमत्तो भव ध्यानादाद्येऽन्यस्मिन् विवेचनम् ।
कुरु प्रमाणयुक्तिभ्यां ततो रूढतमो भवेत् ॥ ७३ ॥

आद्ये अनैकाग्र्यपक्षे ध्यानादप्रमत्तो भव चित्तैकाग्र्यम् संपादय । अन्यस्मिन् पक्षे संशयग्रस्तत्वे प्रमाणयुक्तिभ्यां प्रमाणं "सदेव सोम्य इदमग्र

आसी" (छां. ६. २. १.) दित्यादिवाक्यजातम् । युक्तिरनुवृत्तिव्यावृत्तिस्वरूपा । ताभ्यां विवेचनं कोऽयमन्तरव्यावृत्तिं कुरु । ततो रूढ्यभावहेतुभूतयोरनैकाग्र्य-संशययोर्निवृत्त्यनन्तरं जातां बुद्धिं निश्चयात्मिकां निश्चित्य बुद्धेऽर्थे रूढतमोऽत्यन्तविश्वासयुक्तो भवेत् ॥ ७३ ॥

उक्तिध्यानविवेचनयोः साक्षात्परंपराफले आह, ध्यानेति ।

**ध्यानान्मानाद्युक्तितोऽपि रूढे भेदे वियत्सतोः ।**
**न कदाचिद्वियत्सत्यं सद्वस्तु च्छिद्रवन्न च ॥ ७४ ॥**

एवं ध्यानाच्चित्तैकाग्र्यान्मानात्प्रमाणाद्युक्तितोऽपि वियत्सतोर्भेदे रूढे दृढतमं निश्चिते सति । एतेन साक्षात्फलं भेदनिश्चय इति सूचितम् । वियत्कदाऽपि न सत्यं सर्वथा मिथ्यैवेति भासते । सद्वस्तु च छिद्रवत् अवकाशवन्न भासते । एतेनाकाशस्य सत्यत्वेन भानाभावः फलमिति तदेव ध्यानयुक्त्यो-र्मुख्यं फलमिति च सूचितम् ॥ ७४ ॥

तदर्थमेवान्वयव्यतिरेकाभ्यामाह, ज्ञेति ।

**ज्ञस्य सदा भाति व्योम निस्तत्त्वोल्लेखपूर्ववत् ।**
**सद्वस्त्वपि विभात्यस्य निश्छिद्रत्वपुरस्सरम् ॥ ७५ ॥**

ज्ञस्य ज्ञानिनस्सदा व्योम निस्तत्त्वोल्लेखपूर्वकं निर्गतं तत्त्वात् याथार्थ्यात् निस्तत्त्वं तस्योल्लेखः ज्ञानाभिलापकः शब्दः तत्पूर्वकं मिथ्यात्वेनैव भाति प्रतीयते । अस्य ज्ञानिनः सद्वस्त्वपि निश्छिद्रत्वपुरस्सरं छिद्राभाववत्त्वेन विभाति स्फुरति ॥ ७५ ॥

आकाशस्य मिथ्यात्वस्य सतः सत्यत्वस्य च चिन्तनाफलमाह, वासना-यामिति ।

**वासनायां प्रवृद्धायां वियत्सत्यत्ववादिनम् ।**
**सन्मात्राबोधयुक्तं च दृष्ट्वा विस्मयते बुधः ॥ ७६ ॥**

वियत्सतोः स्वरूपज्ञानवासनायां प्रवृद्धायां बुधो ज्ञानी वियत्सत्यत्ववादिनं वियत्सत्यमिति वदन्तं पण्डितंमानिनं सन्मात्रावबोधयुक्तं सत्यत्वेतरधर्मशून्यत्वे सति सत्यतया सद्वस्तुस्वरूपानभिज्ञं च दृष्ट्वा विस्मयते आश्चर्यमग्नो भवति॥७६॥

वायोर्मिथ्यात्वविचारः ।

एवं वियत्सतोर्विवेचनासरणिमनुसृत्यैव भूतान्तरविवेचनाऽपि कर्तव्ये-त्याह, एवमिति ।

**एवमाकाशमिथ्यात्वे सत्सत्यत्वे च वासिते ।**
**न्यायेनानेन वाय्वादेः सद्वस्तु प्रविविच्यताम् ॥७७॥**

सुगमा पदयोजना। कारणाकाशस्यासत्वे तत्कार्यभूतस्य वाय्वादेः सर्वस्या-सत्यत्वं सर्वत्रानुस्यूतत्वात्सतः सत्यत्वं च सुगमं भवतीति भावः ॥ ७७ ॥

यद्यपि वायुः सन् तेजः सदित्यादिप्रतीतिबलात् वाय्वादयो धर्मिणः सत्ता च तेषां धर्म इत्यायाति। तथा च धर्मिभूतानां वाय्वादीनां निराकरणे धर्मभूतस्य सतोऽपि निराकृतिः प्रसज्येत। किं च वाय्वादिषु सत्वमनुपपन्नम्। असद्भूताकाशकार्यत्वेनाकाश इव कारणवशात् सत्तासंक्रमस्य दुर्वचत्वात्। इत्याशंकां परिहर्तुमाह, सदिति ।

**सद्वस्तुन्येकदेशस्था माया तत्रैकदेशगम् ।**
**वियत्तत्राप्येकदेशगतो वायुः प्रकल्पितः ॥ ७८ ॥**

सद्वस्तुनि माया एकदेशस्था। तत्र वियत् मायायाएकदेशगम्। मायांशमात्र एवाकाशः। तस्य आद्यविकारस्वरूपत्वात्। तत्राकाशेऽप्येकदेशगत एकांशसंभूतो वायुः प्रकल्पितः। अत्र क्रमेण उत्तरोत्तरस्य पूर्वपूर्वैकदेशगतत्वोक्त्या यथा मायैकदेशगतं वियन्मायाद्वाराऽसत्कारणकं भवति तथा वियदेकदेशगतो वायुरपि तद्द्वारा तत्कारणको भवति। अत्र संबंधे साक्षात्वासाक्षात्वाभ्यां विवक्षिते। एवं च सत्कार्यत्वाविशेषात् वाय्वादीनामपि सत्त्वसंबंधो निर्भाव एव। किं च लोके धर्मधर्मिभावस्य वैपरीत्येनाविद्वद्गोचरत्वेऽप्यधिकदेशवृत्तिः धर्मी, तदेकदेश-

वृत्तिः धर्म इति पूर्वोपपादितनियमानुसारेण सतो धर्मित्वं, वाय्वादीनामाकाशवत् सद्धर्मत्वं च सिद्धम् । अत्र धर्मिणः पृथक्करणे धर्माणामविद्यमानत्वमित्यादिकमाकाशवदित्यादि सर्वं क्रमेणैकदेशगतत्वकथनेन संगृहीतमिति बोध्यम् ॥ ७८ ॥

तथैव सद्वायुविवेचनप्रयोजकीभूतां वायोस्त्रिस्वभावतामाह, शोष इति ।

**शोषस्पर्शौ गतिर्वेगः वायुधर्मा इमे मताः ।**
**त्रयः स्वभावाः सन्मायाव्योम्नां ये तेऽपि वायुगाः ॥ ७९ ॥**

शोषस्पर्शौ शोषो द्रवत्वहरणम्, शोषस्पर्शौ गतिर्वेगश्च, इमे गुणाः वायुधर्माः । वायोः स्वीया धर्मा इति मताः । तद्गतान् कारणधर्मानाह सदिति । सन्मायाव्योम्नां त्रयो ये विद्यन्ते स्वभावाः तेऽपि वायुगाः ॥ ७९ ॥

वायौ तद्धर्मसत्त्वं प्रतिपादयति, वायुरिति ।

**वायुरस्तीति सद्भावः सतो वायौ पृथक्कृते ।**
**निस्तत्वरूपता मायास्वभावो व्योमगो ध्वनिः ॥ ८० ॥**

वायुरस्तीति सद्भावः सत्तारूपः सद्धर्मः । धर्मिणस्सतो वायौ पृथक्कृते सति सिद्धा निस्तत्त्वरूपता मिथ्यास्वरूपत्वं मायास्वभावः, धर्मिणमन्तरा धर्मस्याविद्यमानत्वात् । अयं मायास्वभावः । तृतीयो व्योमगो धर्मः ध्वनिः ॥ ८० ॥

ननु वाय्वादिष्वनुवृत्तं सन्नतु व्योमेत्यादिना वाय्वादिषु व्योमानुवृत्तिः पुरा निराकृता । अधुना वायौ व्योमगुणानुवृत्तिकथनेन व्योम्नोऽनुवृत्तिरुक्तप्राया । कथं न विरोध इत्याशंकते, सत इति ।

**सतोऽनुवृत्तिः सर्वत्र व्योम्नो नेति पुरेरितम् ।**
**व्योमानुवृत्तिरधुना कथं न व्याहतं वचः ॥ ८१ ॥**

सर्वत्र सतोऽनुवृत्तिः "भिन्ने वियत्सती" त्यत्र पुरेरितमुक्तम् ; अधुना व्योमानुवृत्तिः व्योम्नो गुणानुवृत्तिकथनमुखेन वायावीरिता ईरितप्राया ; एवं च तव वचः कथं न व्याहतं परस्परविरुद्धं न भवति ॥ ८१ ॥

समाधत्ते, छिद्रेति

छिद्रानुवृत्तिर्नेतीति पूर्वोक्तिरधुना त्वियम् ।
शब्दानुवृत्तिरेवोक्ता वचसो व्याहतिः कुतः ॥ ८२॥

छिद्रानुवृत्तिरवकाशलक्षणस्वरूपस्यानुवृत्तिर्वायौ न विद्यत इति पूर्वोक्तिः । अधुनात्वियमुक्तिः । शब्दानुवृत्तिरेवाकाशगुणस्योक्ता । शब्दानुवृत्तिरेवोक्ता न तु स्वरूपानुवृत्तिः । तथा सति वचसो व्याहतिर्विरोधः कुतः ? पुराऽकाशस्य वस्तु-विभाजकधर्मोऽवकाशो वायौ न विद्यते । एवमाकाशाद्वायुर्व्यावर्त्यत इत्युक्तम् ; तथाऽपि शब्दात्मको वियद्गुणो वायावपि विद्यत इत्यधुनोक्तम् ; नातस्तयोर्विरोध इति भावः ॥ ८२ ॥

ननु वाय्वादेः सद्वस्तुनि प्रविविच्यमाने वायोरपि यथाऽसत्वमुक्तं एवं मायावैलक्षण्येन मायायां पृथक्कृतायां वायोरमायामयत्वं प्राप्तमिति शंकते नन्विति ।

ननु सद्वस्तुपार्थक्यादसत्त्वं चेत्तदा कथम् ।
अव्यक्तमायावैषम्यादमायामयताऽपि नो ॥ ८३ ॥

नन्विति प्रश्नार्थे । वायुः सद्वस्तुपार्थक्यात् सतो भिन्नत्वादसत्त्वं चेत्तद्वै-लक्षण्यान्मिथ्येत्युच्यते चेत् । तथाऽव्यक्तमायावैषम्यादव्यक्ता इन्द्रियागोचरा या माया मिथ्याभूता तद्वैषम्यात् इन्द्रियगोचरत्वेन विलक्षणत्वात् अमायामयता मायास्वरूपाद्भिन्ना सत्यात्मिकेति यावत् कथं नो न स्यात् । इन्द्रियागोचरा माया । तद्गोचरो वायुरिति विलक्षणस्वभावात्तयोर्भेदे मिथ्याभूतमायाभिन्नमिथ्यैव स्यादि-त्याक्षेपः ॥ ८३ ॥

परिहरति, निस्तत्त्वेति ।

निस्तत्त्वरूपतैवात्र मायात्वस्य प्रयोजिका ।
सा शक्तिकार्ययोस्तुल्या व्यक्ताव्यक्तत्वभेदिनोः ॥ ८४ ॥

अत्र वायोर्मिथ्यात्वनिरूपणे निस्तत्त्वरूपता तत्त्वेतरस्वरूपता मायात्वस्य मिथ्यात्वस्य प्रयोजिका। सा निस्तत्त्वरूपता व्यक्ताव्यक्तत्वभेदिनोः विभिन्नयोः शक्तिकार्ययोरिन्द्रियागोचरायाः शक्तेस्सङ्कोचस्य कार्यस्य च तुल्यैव समाना। मायाया इन्द्रियगोचरत्वे न तत्कार्यस्येन्द्रियगोचरत्वेन च भेदे विद्यमानेऽप्युभयो- र्निस्तत्त्वरूपता समानैव। मिथ्यात्वप्रयोजिकायाः निस्तत्वरूपताया उभयोः सत्वेनो- भयोरपि मिथ्यात्वमसत्यत्वमबाधितमेव ॥ ८४ ॥

मायाकार्ययोरवान्तरच्छेदप्रसंगोऽत्राप्रस्तुत इत्याह, सदिति।

**सदसत्वविवेकस्य प्रस्तुतत्वात्स चिन्त्यताम्।**
**असतोऽवान्तरभेद आस्तां तच्चिन्तयात्र किम् ॥ ८५ ॥**

सदसत्वविवेकस्य सतोऽसतश्च विवेचनस्य प्रस्तुतत्वात् संप्रति विचार- विषयत्वात् स चिन्त्यताम्। असतः सद्भिन्नस्य मायातत्कार्यरूपस्यावान्तरभेदो ऽन्तर्भेद आस्तां नाम। अत्र सदसद्विवेचनप्रकरणे भेदविवेचनस्याप्रस्तुततया तच्चिन्तया अवान्तरभेदस्य चिन्तया किं प्रजोजनं? न किमपीत्यर्थः ॥ ८५ ॥

एवं रूपविवेचनाफलमाह, सदिति।

**सद्वस्तु ब्रह्म शिष्टोंशो वायुर्मिथ्या यथा वियत्।**
**वासयित्वा चिरं वायोर्मिथ्यात्वं मरुतं त्यजेत् ॥ ८६ ॥**

सन् वायुरित्यत्र सद्वस्तु ब्रह्म शिष्टोंशो वायुः मिथ्या। स्पष्टमन्यत् ॥ ८६॥

अग्नेर्मिथ्यात्वविचारः।

वायुविवेचनानन्तरमग्निविवेचनाप्रकारमाह, चिन्तयेदिति।

**चिन्तयेद्वह्निमप्येवं मरुतो न्यूनवर्तिनम्।**
**ब्रह्माण्डावरणेष्वेषा न्यूनाधिकविचारणा ॥ ८७ ॥**

मरुतो न्यूनवर्तिनमेकदेशवर्तिनं वह्निमप्येवं धर्मरूपतया चिन्तयेत्। एषा न्यूनाधिकविचारणा ब्रह्माण्डावरणेषु ब्रह्मणोत्पादितस्याण्डाकारस्य भुवनकोष्ठस्य वा आवरणेषु भूम्यादिष्वेवं कर्तव्येति शेषः ॥ ८७ ॥

पञ्चभूतानां न्यूनाधिकांशनां विवृणोति, वायोरिति ।

वायोर्दशांशतो न्यूनो वह्निर्वायौ प्रकल्पितः ।
पुराणोक्तं तारतम्यं दशांशैर्भूतपञ्चके ॥ ८८ ॥

स्पष्टः पूर्वार्धः । एवं भूतपञ्चके वियत्पवनतेजोंबुभूषु पूर्वापेक्षया परस्य दशांशैः न्यूनत्वरूपं तारतम्यं पुराणोक्तम् । भूतोत्पत्तावाकाशादिभ्यो वाय्वादयो यथाक्रमं दशांशतो न्यूनपरिमाणाः । पञ्चीकरणे यथापरिमाणं सामि विभज्य एकैकं भूतं भूतान्तराणामष्टमांशसंयोजनमिति संगच्छते ॥ ८८ ॥

तेजोविवेचनार्थं तत्स्वरूपमाह, वह्निरिति ।

वह्निरुष्णः प्रकाशात्मा पूर्वानुगतिरत्र च ।
अस्ति वह्निः स निस्तत्वः शब्दवान् स्पर्शवानपि ॥८९॥

वह्निरुष्णः प्रकाशात्मा । अत्र च पूर्वानुगतिः पूर्वस्य कारणस्यानुगतिर्गुणानुसरणम् । यथा वायौ सन्मायाकाशधर्माः तथैवाग्नावपि । अस्ति वह्निरिति सद्धर्म स वह्निर्निस्तत्व इति मायाधर्मः । तथा शब्दवानित्याकाशधर्मः स्पर्शवानपि । स्वर्शो वायोर्धर्मः । एतेषां कारणगुणानां कार्ये वह्नावनुगतिरितिभावः॥८९॥

कारणगुणानग्नौ प्रदर्श्य तत्र स्वीयमपि दर्शयति, सदिति ।

सन्मायाव्योमवाय्वंशैर्युक्तस्याग्नेर्निजो गुणः ।
रूपं तत्र सतः सर्वमन्यद्बुद्ध्या विविच्यताम् ॥ ९० ॥

सन्मायाव्योमवाय्वंशैर्युक्तस्याग्नेर्निजः स्वीयो गुणो रूपम् । तत्र तेषु गुणेषु सतोऽन्यत्सर्वं सद्भिन्नं समस्तधर्मजातं मिथ्येति बुद्ध्या विविच्यतां पृथक्क्रियताम् । सतः पृथक्कृतावन्यस्य सर्वस्य निस्तत्वेन मिथ्यात्वं सम्यग्विचिन्तितं भवतीति भावः ॥ ९० ॥

अपां मिथ्यात्वविचारः ।

अथापां तत्त्वं दर्शयति, सत इति ।

सतो विवेचिते वह्नौ मिथ्यात्वे सति वासिते ।
आपो दशांशतो न्यूनाः कल्पिता इति चिन्तयेत् ॥ ९१ ॥

स्पष्टोऽर्थः ॥ ९१ ॥

अप्स्वपि कारणधर्मान्निजधर्ममपि दर्शयति, सन्तीति ।

सन्त्यापोऽमूः शून्यतत्त्वाः सशब्दस्पर्शसंयुताः ।
रूपवत्योऽन्यधर्मानुवृत्त्या स्वीयो रसो गुणः ॥ ९२ ॥

अन्यधर्मानुवृत्त्या सदाकाशादीनामन्येषां सत्ता निस्तत्वादिधर्माणामनुवृत्त्या अमूरापः सन्तीति सद्धर्मः। शून्यतत्वा निस्तत्वा इति मायाधर्मः । सशब्दस्पर्श-संयुताः शब्देनाकाशादनुवृत्तेन सह सामानाधिकरण्येन वर्तत इति सशब्दः । स चासौ स्पर्शश्च तथाभूतः वायोरनुगतेन संयुता युक्ताः। एतेनाकाशवायुधर्मा-वुक्तौ । रूपवत्यः रूपं तेजोगुण आसामस्तीति रूपवत्यः । स्वीयो गुणो रसो जिह्वाविषयो भवति ॥ ९२ ॥

पृथिवीविवेचनारीतिमाह, सत इति ।

सतो विवेचितास्वप्सु तन्मिथ्यात्वेन वासिते ।
भूमिर्दशांशतो न्यूना कल्पिताप्स्विति चिन्तयेत् ॥ ९३ ॥

स्पष्टोऽर्थः । कल्पिता अप्स्विति छेदः ॥ ९३ ॥

पृथिव्या मिथ्यात्वविचारः ।

भूमेः कारणधर्मान्निजधर्मं चाह, अस्तीति ।

अस्ति भूस्तत्त्वशून्याऽस्यां शब्दस्पर्शौ सरूपकौ
रसश्च परतो गन्धो नैजः सत्ता विविच्यताम् ॥ ९४ ॥

अस्ति भूरिति सद्धर्मः । तत्त्वशून्या असत्येति मायाधर्मः । सरूपकौ तेजोरूपसहितौ शब्दस्पर्शावाकाशवायुगुणौ रसो जलगुणश्च अस्यां पृथिव्यां सन्ति । एते गुणाः परतः कारणतो भवन्ति । नैजो गन्धो गुणः भूमेः । तेभ्यः सत्तामात्रं विविच्यताम् ॥ ९४ ॥

एवं विवेचने फलमाह, पृथगिति ।

पृथक्कृतायां सत्तायां भूमिर्मिथ्याऽवशिष्यते ।

स्पष्टोऽर्थः ॥

ब्रह्माण्डादिमिथ्यात्वविचारः ।

एवमन्यस्यापि जगतो मिथ्यात्वं दर्शयति सार्धद्वयेन भूमेरिति ।

भूमेर्दशांशतो न्यूनं ब्रह्माण्डं भूमिमध्यगम् ॥ ९५ ॥

ब्रह्माण्डमध्ये तिष्ठन्ति भुवनानि चतुर्दश ।
भुवनेषु वसन्त्येषु प्राणिदेहा यथायथम् ॥ ९६ ॥

ब्रह्माण्डलोकदेहेषु सद्वस्तुनि पृथक्कृते ।
असंतोऽण्डादयो भान्तु तद्भानेऽपीह का क्षतिः ॥ ९७ ॥

स्पष्टोऽर्थः । अत्र भूमिशब्देन पञ्चमहाभूतेष्वन्यतमा पृथिवी ग्राह्या । नत्विदं भूमण्डलं यस्मिन् वयं वसामः । इदं तु चतुर्दशभुवनान्तर्गतमिति विशेषः ॥ ९५ ॥

यथायथं अधममध्यमोत्तमभेदेन प्राणिदेहाः प्राणिनां शरीराणि ॥ ९६ ॥

ब्रह्माण्डलोकदेहेषु ब्रह्माण्डान्तर्गतचतुर्दशलोकेषु यथायथं वसत्सु प्राणिदेहेषु सर्वेषु सद्वस्तुनि पृथक्कृते सत्यण्डादयोऽसन्तो निस्तत्वा मरुमरीचिकेव भान्तु नाम । तद्भानेऽपि तेषामसत्यतया का क्षतिः न कापीति भावः ॥ ९७ ॥

क्षत्यभावं दर्शयति, भूतेति ।

**भूतभौतिकमायानामसत्त्वेऽत्यन्तवासिते ।**
**सद्वस्त्वद्वैतमित्येषा धीर्विपर्येति न क्वचित् ॥ ९८ ॥**

भूतभौतिकमायानां भूतानि वियदादीनि भौतिकानि भूतकार्याणि ब्रह्माण्डादीनि माया च । तासामसत्त्वे मिथ्यात्वेऽत्यन्तवासिते बुद्धौ निरूढे सति सद्वस्त्वद्वैतमद्वितीयमित्येषा धीः क्वचिदपि न विपर्येति विकारं नाप्नोति । स्थिरीभवतीति भावः ॥ ९८ ॥

ननु भौतिकानामसत्त्वे सर्वव्यवहारलोप इत्यत आह, सदिति ।

**सदद्वैतात् पृथग्भूते द्वैते भूम्यादिरूपिणि ।**
**तत्तदर्थक्रिया लोके यथा दृष्टा तथैव सा ॥ ९९ ॥**

भूम्यादिरूपिणि भूम्यादिचतुर्दशलोकप्राणिदेहादिरूपेण प्रतीयमाने द्वैते सदद्वैतात् निरस्तसमस्तद्वैतभावात् सतः पृथग्भूते विभक्ते सति मिथ्यात्वेन निश्चितेऽपि तत्तदर्थक्रिया ते च तेऽर्थाश्च तेषां क्रियाप्रयोजनं लोके यथा दृष्टा सा तथैव । व्यवहारिकप्रामाण्यस्याङ्गीकारात्सतः सकाशाद्द्वैतस्य पृथक्करणात्पूर्वं व्यवहारो लोके यथा दृष्टस्तथैव तदनन्तरमपि द्रष्टव्यः । व्यवहारलोपप्रसंगो नास्तीत्यर्थः ॥ ९९ ॥

बुद्धिवैषम्यकृतहेतुवादप्रधानैः साङ्ख्यादिभिर्व्यवहारसत्यत्वमभ्युपगच्छतां नास्माकं विवाद इत्याह साङ्ख्येति ।

**साङ्ख्यकाणादबौद्धाद्यैर्जगद्भेदो यथा यथा**
**उत्प्रेक्ष्यतेऽनेकयुक्त्या भवत्वेष तथा तथा ॥ १०० ॥**

साङ्ख्यकाणादबौद्धाद्यैर्विविधदर्शनकारिभिः । आदिशब्देन चार्वाकशैववैष्णवादयः सूचिताः । तैर्यथा यथा जगद्भेदो जगद्वैचित्र्यमनेकयुक्त्या उत्प्रेक्ष्यते

सहजबुद्धिवैषम्येन विभिन्नतया प्रतिपादितः। तथा तथैष जगद्बोधो व्यावहारिको भवतु नाम। नास्माकं तैस्सह विवाद इति भावः ॥ १०० ॥

साङ्ख्यादिभिरङ्गीकृतं द्वैतमपि प्रामाणिकमित्यभ्युपगम्यते त्वया। एवं परमतमप्रतिषिद्धमनुमतं भवतीति तत्कृताद्वैतावज्ञाया अपि प्रामाण्यापत्तिरित्याशंक्याह, अवज्ञातमिति।

**अवज्ञातं सदद्वैतं निश्शंकैरन्यवादिभिः।**
**एवं का क्षतिरस्माकं तद्द्वैतमवजानताम् ॥ १०१ ॥**

निश्शंकैरतिसाहसेन श्रुतिप्रामाण्यमवजानद्भिरन्यवादिभिरद्वैतं विगळिताशेषभेदं सदवज्ञातं तिरस्कृतमिति चेदुच्यते। तद्द्वैतं तैर्यत्प्रतिपादितं जगत्सत्यत्वं तदवजानतां मिथ्यात्वेनानादरणं कुर्वतामस्माकं का क्षतिः। विद्यन्तां बहवः श्रुत्यर्थविमुखाः परस्परविरुद्धार्थाभिनिविष्टा विविधदर्शनप्रवर्तकाः। तैर्नास्माकं विवाद इति भावः ॥ १०१ ॥

द्वैतावज्ञाफलमद्वैतम्।

द्वैतावज्ञाप्रयोजनमाह, द्वैतेति।

**द्वैतावज्ञा सुस्थिता चेदद्वैते धीः स्थिरा भवेत्।**
**स्थैर्ये तस्याः पुमानेष जीवन्मुक्त इतीर्यते ॥ १०२ ॥**

द्वैतावज्ञा द्वैतस्य जगज्जीवेश्वरादिवैचित्र्यविशिष्टस्य जगतो मिथ्यात्वेन तिरस्कारः सुस्थिता चेत् सुप्रतिष्ठिता चेदद्वैते ब्रह्मणि धीः बुद्धिः स्थिरा भवेत्। तस्याः बुद्धेः स्थैर्ये सत्येषोऽद्वैते, स्थिरीभूतधीः पुमान् जीवन्मुक्त इतीर्यते ॥१०२॥

जीवन्मुक्तेः फलं गीतावाक्येनोदाहरति, एषेति।

**एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति।**
**स्थित्वाऽस्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥ १०३ ॥**

एषा यस्यां सर्वान् कामान् विहाय निःस्पृहो निर्ममो निरहंकारः पुमांश्चरति सा स्थितिः ब्राह्मी स्थितिः ब्रह्मणि भवा ब्राह्मी। सा स्थितिः। सर्वकर्मसन्यासपूर्विका ब्रह्मभावप्राप्तिरित्यर्थः। हे पार्थ एनां स्थितिं प्राप्य न विमुह्यति। न पुनर्द्वैतकृतव्यामोहं गच्छति। स विद्वानन्तकालेऽपि शरीरपतनसमयेऽस्यां स्थित्वा ब्रह्मनिर्वाणं ब्रह्मनिर्वृतिं ऋच्छति गच्छति। किमुत ब्रह्मचर्यादेव संन्यस्य ब्रह्मण्यवस्थितस्येत्यपेः स्वारस्यम्॥ १०३॥

अन्तशब्दार्थं विकल्प्य विवृणोति, सदिति।

**सदद्वैतेऽनृते द्वैते यदन्योन्यैक्यवीक्षणम्।**
**तस्यान्तकालस्तद्भेदबुद्धिरेव न चेतरः॥ १०४॥**

सदद्वैते अनृते मिथ्यारूपे द्वैते चान्योन्यैक्यवीक्षणमन्योन्यस्यैकभावेन वीक्षणं सत्यानृतयोर्मिथुनीकरणमिति यत् तस्यान्तकालोऽवसानकालो नाम। तद्भेदबुद्धिरेव तयोरद्वैतद्वैतयोर्भेदबुद्धिर्विवेचनमेवान्तकाल इत्युच्यते। इतरः शरीरपतनकालो नान्तकालः। जीवन्मुक्तस्य प्राणानामनुत्क्रमणात्। "न तस्य प्राणा उत्क्रामन्ते। अत्रैव समविलीयन्ते" इति श्रुतेः (उ. ता. ५. ) ॥१०४॥

द्वितीयमर्थं विवृणोति, यद्वेति।

**यद्वाऽन्तकालः प्राणस्य वियोगोऽस्तु प्रसिद्धितः।**
**तस्मिन् कालेऽपि न भ्रान्तेर्गतायाः पुनरागमः॥ १०५॥**

यद्वेति पक्षान्तरे। लोके प्रसिद्धितः प्राणस्य वियोगः शरीरपतनसमयोऽन्तकालोऽस्तु। तस्मिन् कालेऽपि गतायाः भ्रान्तेः द्वैतबुद्धेः न पुनरागमः॥ १०५॥

ननु जीवन्मुक्तस्य व्यवहारादेरुपलभ्यमानत्वाच्चित्तवत्वनिश्चये "यान्तेमतिः सा गति"रित्युक्त्या प्राणवियोगकाले सति चित्तविकारे पुनर्भ्रान्तेरनुदयः कथं घटेत चित्तविकारावगमादित्यत आह, नीरोग इति।

नीरोग उपविष्टो वा रुग्णो वा विलुठन् भुवि ।
मूर्छितो वा त्यजत्वेष प्राणान् भ्रान्तिर्न सर्वथा ॥१०६॥

नीरोगो निर्गतो रोगात्सः उपविष्टो वा रुग्णो रुजाविष्टः । भुवि विलुठन् परिभ्रमन् वा मूर्छितो वा एष ज्ञानी प्राणान् त्यजतु । सर्वथा तस्य भ्रान्तिर्न द्वैतविषयकभ्रान्तिर्नोदेति । अयं भावः । अयं रुग्ण उपविष्ट इत्यादिकं सर्वमन्यदीय-भ्रान्तिगोचरम् । जीवन्मुक्तस्याद्वैतज्ञानविध्वस्ताज्ञानतया, द्वैतज्ञानप्रयोजकज्ञानि-कस्य मनसश्चित्तविकाराणां प्राणवियोगकालेऽसंभवात् । प्राणवियोगादिकं त्वविद्वद्-दृष्ट्यैव। विद्वद्दृष्ट्या न तस्य प्राणा उत्क्रामन्तीति श्रुत्युक्तं संगच्छत इति ॥१०६॥

मूर्छादिना प्राणवियोगेन वा जातायाः लौकिकज्ञानस्येवाद्वैतबुद्धेर्विस्मृतौ नाश एव स्यादिति लोकदृष्ट्या प्राप्तां शंकां "तुष्यतु दुर्जन" इति न्यायेन तद्रीतिमनुसृत्यैव समाधत्ते, दिन इति ।

दिने दिने स्वप्नसुप्त्योरधीते विस्मृतेऽप्ययम् ।
परेद्युर्नानधीतः स्यात्तद्वद्विद्या न नश्यति ॥ १०७ ॥

दिने दिने प्रतिदिनमधीते वेदे स्वप्नसुप्त्योर्विस्मृतेऽप्ययमध्येता परेद्युः परस्मिन् दिनेऽनधीतो न स्यात् । स्वप्नसुषुप्तिसमये यो विस्मृतो वेदः पुनरुत्थानानन्तरं पठ्यते । तद्वद् ध्यानान्मानाद्युक्तितोऽपि दृढीकृता विद्या न नश्यतीत्यर्थः।।१०७।।

सिद्धान्तमनुसृत्य समाधत्ते, प्रमाणेति ।

प्रमाणोत्पादिता विद्या प्रमाणं प्रबलं विना ।
न नश्यति न वेदान्तात्प्रबलं मानमीक्ष्यते ॥ १०८ ॥

प्रमाणोत्पादिता प्रमाकरणं प्रमाणम्; प्रत्यक्षानुमानशाब्दा इति प्रमाण-त्रयमभ्युपगम्यते साङ्ख्यादिभिः । न्यायनये तूपमानस्यापि प्रमाणत्वमङ्गीक्रियते । प्रत्यक्षानुमानशाब्दानां मध्ये प्रत्यक्षानुमानापेक्षया शब्दस्य प्राबल्यमङ्गीक्रियते, तस्य श्रुतिरूपस्य दोषासंस्पृष्टत्वात् । प्रत्यक्षप्रमाणस्यातीन्द्रियविषयाग्राहकत्वं प्रत्यक्षमेव ।

तस्य दुष्टत्वे विपरीतार्थग्राहकत्वमप्यनुभवसिद्धम् । अनुमानस्य प्रत्यक्षमुखप्रेक्षितया प्रत्यक्षाद्दौर्बल्यम् । अतः सर्वापेक्षया प्रबलं प्रमाणं निर्दिष्टः शब्द एव । तथाविधा श्रुतिः । तथा च श्रुतेः सर्वतः प्रबलतमं प्रामाण्यम् । वेदान्तशास्त्रतत्त्वस्य सद्द्वैतस्य "अहं ब्रह्मास्मि" (बृ. १. ४. १०.) "तत्त्वमसि" (छां. ६. ८. ८.) "प्रज्ञानं ब्रह्म" (ऐ. १. ५. ३.) "अयमात्मा ब्रह्म" (बृ. ४. ४. ५.) इत्यादिमहावाक्येनोत्पादिता संपादिता विद्या न नश्यति । नाशसामग्र्यभावात् । न हि तस्या नाशकं किंचिदस्ति प्रबलं प्रमाणम् । इत्यभिसंधायाह प्रमाणमित्यादि । सा विद्या प्रबलं प्रमाणं विना न नश्यति । तन्नाशबोधकं प्रबलं प्रमाणं नास्तीति भावः तदाह नेति । वेदान्तात् प्रबलं मानं नेक्ष्यते ॥ १०८ ॥

प्रक्रान्तं भूतविवेकं फलप्रदर्शनेनोपसंहरति, तस्मादिति ।

**तस्माद्वेदान्तसंसिद्धं सदद्वैतं न बाध्यते ।**
**अन्तकालेऽप्यतो भूतविवेकान्निर्वृतिः स्थिता ॥ १०९ ॥**

तस्मादनुमादीनां वेदान्ताद्दुर्बलप्रमाणत्वाद्वेदान्तसंसिद्धं वेदान्तैः प्रबलप्रमाणभूतैः सिद्धान्ततया सम्यक् प्राप्तं सदद्वैतं भेदत्रयरहितं न बाध्यते । अतो भूतविवेकात् सतो भूतानां विवेचनान्निर्वृतिः सर्वद्वैतोन्मूलननिमित्तो योऽखंडानन्दः सोऽन्तकालेऽपि स्थिता निरूढो भवति ॥ १०९ ॥

इति

श्रीमत्परमहंसपरिव्राजकाचार्यशृंगेरीश्रीविरूपाक्षश्रीविद्याशङ्करपदमावेशप्रकाशितं जगद्गुरु श्रीकल्याणानन्दभारतीमान्ताचार्यात्यन्तप्रियान्तेवासिनाऽत्रि गोत्रसमुद्भूतेन **लिङ्गन सोमयाजिना** विरचितेयं महाभूतविवेकस्य कल्याणपीयूषव्याख्या समाप्ता ॥

इति महाभूतविवेकप्रकरणम् ।

*

अथ

# कल्याणपीयूषव्याख्यासमेता पञ्चदशी

## पञ्चकोशविवेकप्रकरणम् ।

### पञ्चकोशस्वरूपनिरूपणम् ।

परब्रह्मावबोधनाय पञ्चकोशविवेकस्यावश्यकर्तव्यतयाऽर्थात्तेषामादिकारणभूतस्य वियदादिभूतपञ्चकस्य प्रसंगसंगत्या भौतिकदेहस्य च विवेचनाप्रकारो द्वितीये प्रकरणे विस्तृतः । तृतीये तु पञ्चकोशविवेचनाविचारमारभते गुहेति ।

**गुहाहितं ब्रह्म यत्तत्पञ्चकोशविवेकतः ।**
**बोद्धुं शक्यं ततः कोशपञ्चकं प्रविविच्यते ॥ १ ॥**

गुहाहितं गुहायामन्नमयाद्यानन्दमयान्तानां पञ्चकोशानां समुदाये आहितं निविष्टं यत् ब्रह्म प्रत्यगात्माभिन्नं परं ब्रह्म विद्यते तत् पञ्चकोशविवेकतोऽन्वयव्यतिरेकाभ्यां पञ्चकोशानां विवेचनेन बोद्धुं शक्यम् । ततः कोशपञ्चकं प्रविविच्यते ॥ १ ॥

स्वयमेव गुहाशब्दं विवृणोति, देहेति ।

**देहादभ्यन्तरः प्राणः प्राणादभ्यन्तरं मनः ।**
**ततः कर्ता ततो भोक्ता गुहा सेयं परम्परा ॥ २ ॥**

देहादन्नमयकोशादभ्यन्तरोऽन्तर्भवः प्राणः । स च प्राणमयकोशः क्रियाशक्तिकारणभूतः पञ्चवृत्त्यात्मकः । प्राणादभ्यन्तरं मनः । मनोमयकोशः । विमर्शात्मकः । ततो मनोमयकोशादभ्यन्तरः । कर्ता अहं करोमीति कर्तृत्वधर्मविशिष्टो विज्ञानमयकोशः । ततो विज्ञानमयादभ्यन्तरो भोक्ता प्रियमोदप्रमादादीनामनुभविताऽऽनन्दमयः । प्रियमोदादीनामानन्दच्छायात्वात् । आभ्यन्तरशब्दे-

नात्वान्तरत्वमभिधीयते । "अन्योऽन्तर आत्मा प्राणमयः" (तै. २.२.) इत्यादि श्रुतावप्यन्तरशब्द आन्तरपर इति भावः। एवमुक्ता सेयमन्नमयाद्यानान्दमयकोशान्ता कोशपरम्परा गुहेत्युच्यते। गुहाशब्दो निगूढबोधकः। गुहतेः संवरणार्थकत्वात्॥२॥

अन्नमयकोशस्य स्वरूपमनात्मत्वं चाह, पित्रिति।

**पितृभुक्तान्नजाद्वीर्याज्जातोऽन्नेनैव वर्धते ।**
**देहः सोऽन्नमयो नात्मा प्राक् चोर्ध्वं तदभावतः ॥ ३ ॥**

पितृभुक्तान्नजात् वीर्याज्जातो यो देहः सोऽन्नेनैव वर्धते उपचीयते। यथा श्रुतिः "अन्नात्पुरुष स वा एष पुरुषोऽन्नरसमयः" (तै. २.१.) "अभ्रं भूत्वा मेघो भवती"त्यारभ्य "यो रेतः सिञ्चति। तद्भूय एव भवती"त्यन्तं छांदोग्ये (५.१०.६.) सोऽन्नमयोऽन्नस्य विकारो देह आत्मा भवितुं नार्हतीति शेषः। कुतः? प्राग्देहोत्पत्तेः पूर्वमूर्ध्वं च तत्पतनानन्तरं च तदभावतः। देहो नात्मा तस्य प्रागुत्पत्तेः प्रध्वंसाभावानन्तरं चाविद्यमानत्वात्। "अन्नाद्वै प्रजाः प्रजायन्ते" (तै. २.२.) इति मन्त्रवर्णेन सृष्टिस्थितिलयकारणत्वमुक्तमन्नस्य। सर्वसम्मतमात्मनश्चेतनत्वं तु। सति देहे चैतन्यं नासति। अतो देह एवाऽऽत्मेति मन्यन्ते लोकायतिकाः। यद्यपि सत्येव देहे चैतन्योपलब्धिः; तथापि देहश्चैतन्यं चेति नैकं तत्त्वं मृतदेहे व्यभिचारात्। ततो न देहश्चेतनः। ततो नात्मा ॥ ३ ॥

एवं युक्त्या देहस्यानात्मत्वं प्रदर्श्य शास्त्रतोऽपि तत्साधयति, पूर्वेति।

**पूर्वजन्मन्यसन्नेतज्जन्म संपादयेत्कथम् ।**
**भाविजन्मन्यसन्कर्म न भुंजीतेह सञ्चितम् ॥ ४ ॥**

यदि देह एवात्मा भवितुमर्हति तर्हि पूर्वजन्मन्यसन्न विद्यमानस्सन्नेतज्जन्म देहं कथं संपादयेत्। अतो देहोत्पत्तेः पूर्वं केनचित्कारणेन भवितव्यम्। एवमेतज्जन्मनि सञ्चितेन कर्मणा संपादितस्य फलस्य भोक्ता कश्चन कर्ता भाविजन्मन्यसन् इह सञ्चितं कर्म न भुंजीत। अतः कश्चन कर्ता भाविजन्मन्यावश्यकः। यदि देह एवात्मा देहस्यैव कर्तृत्वात्तस्य भाविजन्मन्यभावात्को वा फलभोक्ता

स्यात्। तथा च देहातिरिक्तस्यात्मनोऽभावे कृतहानाकृताभ्यागमप्रसंग इति भावः ॥ ४ ॥

प्राणमयकोशस्य स्वरूपमनात्मत्वं चाह, पूर्ण इति।

**पूर्णो देहे बलं यच्छन्नक्षाणां यः प्रवर्तकः।**
**वायुः प्राणमयो नासावात्मा चैतन्यवर्जनात् ॥ ५ ॥**

यतो वायुर्बलं यच्छन् व्यानरूपेण पुष्टिं कल्पयन्नक्षाणामिन्द्रियाणां प्रवर्तकस्संचालको देहे पूर्ण आपादमस्तकं व्याप्तः स वायुः प्राणमयस्तन्नामकः कोशो भवति। ननु प्राणमय आत्मा। तस्यैव जन्मस्थितिलयहेतुत्वात्। प्राणवायुर्योषिद्गर्भे प्रविष्टं रेतो घनोभावमापाद्य पिण्डादि क्रमेण देहमुत्पादयति। श्वासकोशद्वारा प्राणवायुसंचलनमेवायुरित्युच्यते। "प्राणो हि भूतानामायुः" (तै. २.३.)। तदुत्क्रान्तिरेव मरणमिति च लोकप्रसिद्धिः। तथैव भृगुर्व्यजानात् "प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते। प्राणेन जातानि जीवन्ति; प्राणं प्रयन्त्यभिसंविशन्ती" (तै. ३.३.) ति (तै. ३.३.) चेन्नेत्याह, नेति। तथाप्यसौ प्राणो नात्मा भवति। कुतः? चैतन्यवर्जनात् अचेतनत्वात् ॥ ५ ॥

मनोमयस्वरूपं तस्यानात्मत्वं चाचष्टे, अहमिति।

**अहन्तां ममतां देहे गेहादौ च करोति यः।**
**कामाद्यवस्थया भ्रान्तो नासावात्मा मनोमयः ॥ ६ ॥**

आदौ तस्य स्वरूपं दर्शयति, अहमिति। यो देहे अहन्तां अहंभावं गेहादौ गृहकळत्रपुत्रादिषु ममतां ममेदमित्यभिमानं च करोति स मनोमयकोशः। अहमिदं ममेदमित्यभिमानाविष्टो मनोमयकोशः। अद्य तस्यानात्मत्वं दर्शयति; कामेति। माऽस्तु चैतन्याभावादात्मा प्राणमयः; मनोमयः किं न स्यात्? मनसः सात्त्विकांशभूतज्ञानशक्तिकत्वाच्चेतनत्वस्य तस्य विद्यमानत्वात्। "मनसो ह्येव खल्विमानि भूतानि जायन्ते" (तै. ३.४.) इत्यादिना तस्य जन्मादिकारणत्वमप्युक्तम्। मरणकाले तृणजलूकान्यायेन जीवात्मा मनसा देहान्तरं संभाव्य

स्वत्मानन्दे देहान्तरं नयति । स्थितिहेतुं सर्वव्यवहारं मनसैव विदांकरोति । सर्वसंगपरित्यागोऽपि मनसैव कर्तव्यः । अतो मन आत्मा भवितुमर्हति, इति शंकां निराकरोति । कामाद्यवस्थया कामक्रोधादिविकारावस्थया भ्रान्तोऽहमिदं ममेद-मित्ययथार्थवस्तुषु तादात्म्यभावमापन्नः । ततो नासावात्मा मनोमयकोशः । आत्मनो निर्विकारत्वस्य श्रुतिसिद्धतया तद्विरोधेन विकारवान् मनोमयकोशो नात्मेति भावः ॥ ६ ॥

अथ विज्ञानमयस्वरूपाख्यानपूर्वकं तस्याप्यनात्मत्वं प्रदर्शयति, लीनेति ।

**लीना सुप्तौ वपुर्बोधे व्याप्नुयादानखाग्रगा ।**
**चिच्छायोपेतधीर्नात्मा विज्ञानमयशब्दभाक् ॥ ७ ॥**

या चिच्छायापतधीः चितश्छाया प्रतिबिंबस्तेनोपेता धीर्बुद्धिर्निश्चया-त्मिका । सा बुद्धिः सुप्तौ लीना लयं गता । बोधे जाग्रदवस्थायामानखाग्रगा नखानामग्राणि चाभिव्याप्य गच्छतीति तथाभूता वपुः शरीरं व्याप्नुयात् । सा धीर्विज्ञानमयशब्दभाक् भवति । स आत्मा न भवति । "विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च" (तै. २. ५.) त्याद्युक्तरीत्या कर्तृत्वाभिमानी विज्ञानमयः कर्माण्याचरति । तत्फलानुभवार्थं देहान्तरमाप्नोति च । विज्ञानमयस्य जन्मकारणत्वं "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेने (बृ. ४. ४. ५.) ति श्रुत्याऽव-गम्यते । व्यापारादौ कृतनिश्चयता मनसः स्थितिहेतुत्वम् । युद्धादौ मरणकारणत्वं च दृष्टम् । अतो विज्ञानमयस्यात्मत्वं न युक्तम् । तथापि तस्य लयस्वभावान्ना-त्मत्वम् । तदेतत्सूचितं, लीना सुप्ताविति विशेषणेनेति बोध्यम् ॥ ७ ॥

मनोमयविज्ञानमयकोशयोस्स्वरूपभेदमाह, कर्त्रिति ।

**कर्तृत्वकरणत्वाभ्यां विक्रियेतान्तरिन्द्रियम् ।**
**विज्ञानमनसी अन्तर्बहिश्चैते परस्परम् ॥ ८ ॥**

अन्तरिन्द्रियमन्तःकरणं कर्तृत्वकरणत्वाभ्यां; असाधारणकारणं करणं, तस्य भावःकरणत्वम्; ताभ्यां विक्रियेत विपर्येति । किमिदं पथ्यमपथ्यं वेति प्रथमे

मनो विमृशति; गुणदोषविमर्शानन्तरं न ममेदं पथ्यमाचरणीयं । यज्ञमहं तनोमीत्यादि स्वकर्तव्याकर्तव्यतां निश्चित्याचरति कर्ता विज्ञानमयः । एवं विमर्शनिश्चयात्मकवृत्तिभ्यां कर्तृत्वं करणत्वं चान्नमन्तःकरणं विपर्येति । एवं कर्तुः कर्तव्यार्थनिश्चये गुणदोषविमर्शने साधनभूतस्य मनसः पूर्ववृत्तित्वात्तस्य करणत्वम् । एते कर्तृकरणे विज्ञानमनसी इत्युच्येते । एते परस्परमन्तर्बहिर्भावेन वर्तेते उभयोरतो भिन्नकोशत्वमिति भावः ॥ ८ ॥

संप्रत्यानन्दमयकोशस्यानात्मत्वविवक्षया तस्य स्वरूपमाह, काचिदिति ।

**काचिदन्तर्मुखा वृत्तिरानन्दप्रतिबिम्बभाक् ।**
**पुण्यभोगे भोगशान्तौ निद्रारूपेण लीयते ॥ ९ ॥**

अन्तर्मुखा बाह्यविषयविमुखा काचिद्वृत्तिः धियो वृत्तिः पुण्यभोगे पुण्यकर्मणः फलानुभवसमये आनन्दप्रतिबिम्बभाक् आनंदो निरतिशयानन्दस्वरूपं परं ब्रह्म तस्य प्रतिबिम्बं तस्यानुभविता भवति । बाह्यविषये संबन्धेऽन्तःकरणं तदाकारमेति । तद्बहिर्मुख्येऽन्तःकरणस्यान्तर्मुखत्वे प्रियमोदप्रमोदाकारा वृत्तिर्जायते । विषयदर्शनजं सुखं प्रियः; तल्लाभे मोदः; तदनुभवे प्रमोदः; एवं प्रियमोदादीनामनुभवित्री अन्तःकरणवृत्तिरानन्दमय इत्युच्यते । इयमानन्दाकारा वृत्तिर्विषयाकाराकारितवृत्तित्वानवच्छिन्ना । सुखादिवृत्तयस्तु विषयाकाराकारितवृत्तित्वावच्छिन्ना इति बाह्यसुखादितोऽस्यानन्दस्य भेदः । प्रियमोदादयो येऽन्ये विषयजानन्दास्ते निरतिशयानन्दस्य कलामात्रा एव । "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति"। (बृ॰ ४॰ ३॰ ३३॰)। तच्छायामात्रा एवेति प्रतिबिम्बशब्दस्वरसता । भोगशान्तौ विरामे उपभोगानन्तरं निद्रारूपेण लीयते । सैवान्तर्मुखवृत्तिर्विलयं याति । ननु सुखवद् दुःखमप्यनुभूयते भोक्त्रा । सत्यं; किन्तु दुःखानुभवो मनोधर्मः; सुखानुभवस्त्वानन्दमयधर्मः । कोऽसावानन्दः ? दुःखनिवृत्तिरूप आहोस्विदनुभवविशेषः ? दुःखाभाव एवानन्द इति मन्यन्ते नैय्यायिकाः । आनन्दमतिरिक्तं मन्यन्ते वेदान्तिनः । "आनन्दो दुःखाभावो न भवति, तदनिरूप्यत्वात् । यद्दुःखेन न निरूप्यते तद्दुःखाभावो न भवति, सातिशयत्वाच्चे"ति **विद्यारण्यचरणाः । स्वभावस्य प्रतियोगिनिरूप्यत्वनियमात् ॥ ९ ॥**

आनन्दमयस्याप्यनात्मतामाचष्टे, कादाचित्केति ।

**कादाचित्कत्वतोऽनात्मा स्यादानन्दमयोऽप्ययम् ।**
**बिम्बभूतो य आनन्द आत्माऽसौ सर्वदा स्थितेः ॥ १० ॥**

अयमानन्दमयो भोक्ताऽत्मा न स्यात् । कुतः? कादाचित्कत्वतः नैरन्तर्याभावात् । प्रियमोदादिविकाराश्रयत्वादित्यर्थः । अन्नमयादिकोशपञ्चकस्यानात्मत्वे आत्मविषयकनैराश्यमेव प्रतेदित्यत आह, बिम्बेति । बिम्बभूतो यस्यानन्दस्य प्रतिबिम्बभूतान् मनुष्यानन्दमारभ्य ब्रह्मानन्दपर्यन्तानन्यानानन्दानास्वाद्यन्नकामहतः श्रोत्रियग्रणो"हा वु हाव्वि"ति साम गायन्नास्ते असौ बिम्बभूतोऽधिष्ठानभूतोऽद्वितीयोऽसावानन्द आत्मा भवति । तत्र कारणमाह । सर्वदा स्थितेः । कालत्रयेऽपि विकारमनापद्य सत्त्वात् । सततं गच्छतीत्यात्मा यद्वा, आप्नोतीत्यात्मा । यद्वा अत्तीत्यात्मा । अद्यत इतिवाऽत्मा ॥ १० ॥

नन्वन्नमयादीनामात्मत्वं युक्त्या माभूत् । अन्यस्यात्मनोऽननुभूयमानत्वेनात्मविषयिकनैराश्यं पुनस्तदवस्थमेवेति पूर्वपक्षमवतारयति, नन्विति ।

**ननु देहमुपक्रम्य निद्रानन्दान्तवस्तुषु ।**
**मा भूदात्मत्वमन्यस्तु न कश्चिदनुभूयते ॥ ११ ॥**

ननु देहमुपक्रम्य निद्रानन्दान्तवस्तुषु निद्रायां य आनन्दः स एवान्तो येषां तेष्वन्नमयकोशमारभ्य सौषुप्तिकसुखान्तमनुभूयमानेषु वस्तुष्वात्मत्वं मा भूत् । तेषामनात्मत्वं युक्त्या सुसाधं भवतु नाम ; अन्यस्तु कश्चित्तेभ्यो भिन्न आत्मा नानुभूयते; अत आत्मवस्तु नास्त्येवेति पूर्वपक्षः ॥ ११ ॥

श्लोकदशकेन पूर्वपक्षं परिहरति । आदौ तत्र देहादिनिद्रान्तानामनुभवित्रा केनाचिदन्येन भवितव्यमित्याह, बाढमिति ।

**बाढं निद्रादयः सर्वेऽनुभूयन्ते न चेतरः ।**
**तथाप्येतेऽनुभूयन्ते येन तं को निवारयेत् ॥ १२ ॥**

निद्रादयोऽनुभूयन्ते इतर आत्मा नानुभूयत इति यत्ते मुग्धवचः तद्बाढं सत्यमित्यर्धाङ्गीकारे । तथाऽपि येनैते निद्रादयोऽनुभूयन्ते । तं ज्ञातारं को

निवारयेत्? आत्मन्यनुभूयमानेऽपि निद्रानन्दादिसर्वव्यवहाराणामनुभविता कश्चि-द्विद्यत इत्यवश्यमभ्युपगन्तव्य इत्यर्थः ॥ १२ ॥

स्वयंप्रकाशस्वरूपस्यात्मनो वेद्यत्वनिरासः ।

अनुपलब्धेरात्मनोऽसत्त्वमिति शंकामपनुदति, स्वयमिति ।

**स्वयमेवानुभूतित्वाद्विद्यते नानुभाव्यता ।**
**ज्ञातृज्ञानान्तराभावादज्ञेयो न त्वसत्तया ॥ १३ ॥**

आत्मनः स्वयमेवानुभूतित्वात् साक्षितयानुभवरूपत्वात्तस्मिन्ननुभाव्यता अन्यानुभवगोचरत्वं न विद्यते । अस्मिन्नेव सर्वे व्यवहारा विषयाः । विषयता च विषयिणमपेक्षते । स्वस्मिन् स्वं विषयो भवितुं नार्हति । अतस्तस्यानुभवरूपस्यानु-भवविषयत्वं नास्तीति भावः । अत्रोपपत्तिं दर्शयति, ज्ञात्रिति, ज्ञातृज्ञानान्तरा-भावात् तद्वस्त्वतिरिक्तयोर्ज्ञातृज्ञानयोरभावादज्ञेयः, न त्वसत्तया न तु तस्याभावात् । ज्ञेयातिरिक्तयोर्ज्ञातृज्ञानयोः सत्वे ज्ञेयत्वव्यवहारो दृष्टः । प्रकृते तदभावादज्ञेय इत्युच्यते ॥ १३ ॥

अनुभवस्यानुभवितृसापेक्षत्वनियमात्, ज्ञात्रभावादिति हेतुरसिद्ध इति शंकां दृष्टान्तपूर्वकं तन्नियमाभावप्रदर्शनेन परिहरति, माधुर्येति ।

**माधुर्यादिस्वभावानामन्यत्र स्वगुणार्पिणाम् ।**
**स्वस्मिन् तदर्पणापेक्षा नो न चास्त्यन्यदर्पकम् ॥ १४ ॥**

अन्यत्रापूपाद्यन्यवस्तुषु स्वगुणार्पिणां स्वस्यमाधुर्यादिगुणानामर्पणं कुर्वतां माधुर्यादिस्वभावानां माधुर्यादिधर्माणां स्वस्मिन्नेव तदर्पणापेक्षा माधुर्यादिसंपा-दनापेक्षा नो नैव विद्यते । अन्यदर्पकं वस्त्वपि नास्ति । अमधुराणां माधुर्यसंपादने मधुरवस्तुसंपर्कोऽभिलषितः । स्वतो मधुरे न तत्संपर्कापेक्षा, तत्र माधुर्यस्य स्वत एव सिद्धत्वात् ॥ १४ ॥

दृष्टान्तं दार्ष्टान्तिके योजयति, अर्पकेति ।

अर्पकान्तरराहित्येप्यस्त्येषां तत्स्वभावता ।
मा भूत्तदानुभाव्यत्वं बोधात्मा तु न हीयते ॥ १५ ॥

एषां माधुर्यादीनामर्पकान्तरराहित्येऽप्यर्पणं रसप्रधानं करोतीत्यर्पकः । तस्यान्यस्य राहित्येऽप्यभावेऽपि तस्मिन्नन्येन माधुर्यरससमर्पणाभावेऽपि तत्स्वभावता मधुरिमा अस्त्येव । तथैवमात्मनोऽनुभाव्यत्वं ज्ञानविषयत्वं मा भूत् माऽस्तु । तन्मात्रेण बोधात्मा तु ज्ञानस्वरूप आत्मा तु न हीयते न त्यज्यते । अन्यप्रकाश्यत्वाभावेऽपि प्रकाशस्योपलब्धेरित्यर्थः ॥ १५ ॥

आत्मनः स्वयंप्रकाशत्वं श्रौतयुक्त्या श्रुत्या च प्रमाणयन् युक्तिबोधिकां श्रुतिमर्थतः पठति ।

स्वयंज्योतिर्भवत्येष पुरोऽस्माद्भासतेऽखिलात् ।
तमेव भान्तमन्वेति तद्भासा भास्यते जगत् ॥ १६ ॥

एष ज्ञानस्वरूप आत्मा स्वयंज्योतिः प्रकाशकान्तरमनपेक्ष्य स्वप्रकाशको भवति । यतोऽयमस्माद्भासमानादखिलात्सर्वस्माज्जगतः पुरः सृष्टेः प्राक् भासते । अतः स्वयं प्रकाशः । एवं श्रुतिप्रतिपादितां युक्तिं प्रदर्श्य प्रमाणभूतां "तमेवभान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती" (मुं· २·२ १०·) ति श्रुतिमर्थतः पठति, तमिति । भान्तं प्रकाशमानं तमात्मानं सर्वं जगदन्वेति अनुसृत्य भासते । तद्भासा जगत् भासते । यदभावे जगदान्ध्यप्रसङ्ग इति भावः ॥ १६ ॥

उक्तार्थे "येनेदं सर्वं विजानाति तं केन विजानीयाद्विज्ञातारमरे ! केन विजानीयादि" (बृ. २. ४. १४.) ति श्रुत्यन्तरमर्थतः पठति, येनेति ।

येनेदं जानते सर्वं तत्केनान्येन जानताम् ।
विज्ञातारं केन विंद्याच्छक्तं वेद्ये तु साधनम् ॥ १७ ॥

येन साक्षिणेदं जगत्सर्वं प्राणिनो जानते तच्चैतन्यरूपमात्मवस्त्वन्येन केन साक्षिभूतेन जानताम् ? अन्यस्य विद्यमानेऽनवस्थादोषापत्तेः । विज्ञातारं साक्षिणमन्येन केन साधनेन विंद्याद्विजानीयात् । ननु मनसा ज्ञेय एवेत्यत आह ।

वेद्ये तु ज्ञेयवस्तुनि विषये साधनमन्तःकरणं शक्तं समर्थम्; न त्वविषये वेत्तरि। "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" (तै. २.४.) ति श्रुतेः। मनसो न साक्षी विषयः। यतस्तस्य भासा मनोऽपि स्वविषयं वेत्तीति भावः॥ १७॥

"स वेत्ति वेद्यं न तस्यास्ति वेत्ता" (श्वेत. ३. १९.) "अन्यदेव तद्विदितादथो अविदितादधी" (केन १. ३.) त्यादि श्रुत्युक्तमर्थं विशदयति, स इति।

स वेत्ति वेद्यं तत्सर्वं नान्यस्तस्यास्ति वेदिता।
विदिताविदिताभ्यां तत्पृथग्बोधस्वरूपकम्॥ १८॥

स साक्षी यद्यद्वेद्यं ज्ञेयमस्ति तत्सर्वं वेत्ति। तस्य साक्षिणोऽन्यो वेदिता। ज्ञाता नास्ति। बोधस्वरूपकं ज्ञानात्मकं परं ब्रह्म। विदिताविदिताभ्यां विदितं ज्ञानविषयं जगदादिकं। अविदितमज्ञानेन शबलितम्। ताभ्यां पृथक् विलक्षणम्। स बोधो विषयाद्भिन्नः॥ १८॥

उक्तरीत्या विविधेष्वपि व्यवहारेषु घटपटादयो येन व्यवहर्त्राऽनुभूयन्ते तद्व्यवहर्तुस्तद्बोधस्वरूपात्मत्वे सिद्धेऽपि स्वात्मानमपि बोधस्वरूपं यो न वेत्ति तमुपालभते श्लोकद्वयेन।

बोधेऽप्यनुभवो यस्य न कथंचन जायते।
तं कथं बोधयेच्छास्त्रं लोष्टं नरसमाकृतिम्॥ १९॥

बोधेऽपि साक्षित्वेन विषयिण्यात्मन्यपरोक्षेण विद्यमानेऽपि यस्यानुभवः साक्षात्कारः कथंचन कथमपि न जायते नोदेति तं नरसमाकृतिं नरेण समा बाह्याकृतिर्यस्य तं नरत्वेन व्यवह्रियमाणमपि लोष्टं तद्वज्जडं कुंठितबुद्धिं शास्त्रं कथं बोधयेत् न बोधयत्येव॥ १९॥

बोधो न बुध्यत इत्युक्तिरेव व्याहतेत्याह, जिह्वेति।

जिह्वा मेऽस्ति न वेत्युक्तिर्लज्जायै केवलं यथा।
न बुध्यते मया बोधः बोद्धव्य इति तादृशी॥ २०॥

यथा मे जिह्वाऽस्ति न वेति कंठत उक्तिम्संभाषणं वक्तुः केवलं लज्जायै कल्पते । जिह्वां विना तदुक्तेरसंभवात् । तथैव मया बोधो ज्ञानस्वरूप आत्मा न बुध्यते न ज्ञायते, किंत्वितः परं बोद्धव्य एवेति वचनं तादृशी तथा लज्जाकरी । "न मया बुध्यत" इत्यबोधानुभवस्यापलपितुमशक्यत्वात् ॥ २० ॥

एवंबोधनिरूपणस्य प्रकृतोपयोगमाह, यस्मिन्निति ।

**यस्मिन्यस्मिन्नस्ति लोके बोधस्तत्तदुपेक्षणे ।**
**यद्बोधमात्रं तद्ब्रह्मेत्येवं धीर्ब्रह्मनिश्चयः ॥ २१ ॥**

लोके यस्मिन्यस्मिन् घटपटादिज्ञेयवस्तुनि बोधः तद्विषयिकं ज्ञानमस्ति तत्तदुपेक्षणे तस्य तस्य घटपटादेर्ज्ञेयस्य सर्वस्य नेति नेतीति निरसने कृते अवशिष्टं यद्बोधमात्रं ज्ञानमात्रं विद्यते तदेव परं ब्रह्म इत्येवं धीः इत्याकारकं ज्ञानं ब्रह्मनिश्चयः ब्रह्मज्ञानम् । ज्ञानं तद्विषयश्चेति सर्वत्र व्यवहारः सुप्रसिद्धः । तत्र ज्ञानमात्रं परमार्थं वस्तु ; अस्मत्प्रत्ययगोचरम् । ज्ञानविषयं सर्वमिदं युष्मत्प्रत्ययगोचरम् । तस्माद्विषयिणो ज्ञानाद्भिन्नम् विषयभूतमिदं सर्वम् ॥ २१ ॥

आत्मनः सत्यत्वज्ञानत्वविचारः ।

एवं विषयविषयिविभागेनैव ब्रह्मस्वरूपनिश्चये पञ्चकोशविवेकस्य नैरर्थक्यमित्याशंक्य ब्रह्मणः प्रत्यग्रूपत्वज्ञानमन्तरा संसारानिवृत्तेस्तथात्वज्ञानोपयोग्ययं पञ्चकोशविवेक इत्याह, पञ्चेति ।

**पञ्चकोशपरित्यागे साक्षिबोधावशेषतः ।**
**स्वस्वरूपं स एव स्याच्छून्यत्वं तस्य दुर्घटम् ॥ २२ ॥**

पञ्चकोशपरित्यागे अनात्मत्वधिया तेषां निराकरणे सति साक्षिबोधावशेषतः साक्षिरूपस्य अवशेषतः स एव स्वस्वरूपं ब्रह्मणः स्वीयं रूपं स्यात् । पञ्चकोशादीनां परिशिष्टं शून्यमेवासीदिति बौद्धमतमाशंक्याह, शून्यत्वमिति । तस्य साक्षिबोधस्य शून्यत्वमत्यन्ताभावो दुर्घटम् । शून्यसत्ताया अपि ज्ञानसापेक्षत्वात्, सर्वत्र ज्ञानस्यैव साक्षिरूपत्वात् । कुत्राप्यसाक्षिकस्य ज्ञेयस्यानिरूप्यत्वादित्यभिप्रायः ॥ २२ ॥

शून्यत्वस्य दुर्घटत्वं विवृणोति, अस्तीति ।

**अस्ति तावत्स्वयं नाम विवादाविषयत्वतः ।**
**स्वस्मिन्नपि विवादश्चेत् प्रतिवाद्यत्र को भवेत् ॥ २३ ॥**

स्वयंशून्यवादी भवान् । अस्ति तावन्नाम । भवत्सत्ताविषये विवादाविषयत्वत: विवादाभावात् अस्तीति शून्यत्वनिरासेन सत्तायाः दृढत्वं प्रतीयते । तावत् नामेति पदद्वयेन तस्याः प्रसिद्धिश्च । एवं सति स्वस्मिन्नपि भवत्सत्ताविषयेऽपि विवादश्चेत् विप्रतिपत्तिश्चेत् नास्तीति कोटिर्यदि स्वीक्रियत इत्यर्थः, अत्र अस्मिन् विवादे प्रतिवादी नास्तीति कोट्याः स्वीकर्ता को भवेत् इति योजना । भवतोऽसत्त्वान्न कोऽपीत्यर्थः । यदि सत्त्वमंगीकरोषि तदाऽस्मत्पक्षसिद्धिः । यदि नांगीकरोषि तदाऽस्यां विप्रतिपत्तौ प्रतिवादिनोऽभावादस्मत्पक्षो निस्सपत्नस्सिद्ध इति भावः ॥ २३ ॥

अस्मिन्नर्थेऽनुभूतिमाह, स्वेति ।

**स्वासत्त्वं तु न कस्मैचिद्रोचते विभ्रमं विना ।**
**अत एव श्रुतिर्बाधं ब्रूते चासत्त्ववादिनः ॥ २४ ॥**

विभ्रमं विना भ्रांतिं विहायेतरावस्थायां यस्मै कस्मैचिन्मनुष्यमात्राय स्वासत्त्वं स्वस्याभावस्तु न रोचते । असत्त्वस्यानिष्टतां द्रढयति, अत एवेति । अत एव स्वासत्त्वस्यानिष्टत्वादेव असत्त्ववादिनो बाधं अनुपपत्तिं श्रुतिर्ब्रूते ॥२४॥

अनुपपत्तिबोधिकां "असन्नेव स भवति । असद्ब्रह्मेति वेद चेदि" (तै. २. ६.) ति श्रुतिमर्थतः पठति असदिति ।

**असद्ब्रह्मेति चेद्वेद स्वयमेव भवेदसत् ॥ २४॥ ॥**

यो ब्रह्म असदिति शून्यमिति वेद जानाति चेत् सः स्वयमेवासत् शून्यमेव भवेत् । इति शून्यवादिनोऽसत्त्वमेवापाद्यते । आपद्यमानं च प्रतिवादिनस्सर्वथानिष्टमेवेति प्रसिद्धम् । एवं च शून्यवादिनः स्वस्यासत्त्वमनिष्टमिति फलितम् । यदिस्वस्य सत्त्वमंगीकरोति स्वस्यैव ब्रह्मरूपत्वात् ब्रह्म अनिच्छयाप्यंगीकृतमेवेति बोध्यम् ॥ २४॥ ॥

फलितमाह, अत इति ।

**अतोऽस्य माभूद्वेद्यत्वं स्वसत्त्वं त्वभ्युपेयताम् ॥ २५ ॥**

अतोऽस्य असत्त्वस्य वेद्यतत्वं ज्ञानविषयत्वं मा भूत् । आत्मनोऽनिष्ट-शून्यत्वापत्तिवारणाय स्वसत्त्वं स्वस्य आत्मनः सत्त्वमभ्युपेयतामंगीक्रियताम् । यदि तव सत्त्वमभिलषसि ? तर्हि विविक्तं वस्तु सदित्यभ्युपगच्छेति सुहृद्भूत्वा श्रुतिरुपदिशति "अस्तीत्येवोपलब्धव्य" इतीति (काठ. २. ६. १३.) भावः ॥२५॥

आत्मनः सत्त्वे कीदृशं तस्य स्वरूपमित्याशंक्य परिहरति ।

**कीदृक्तर्हीति चेत्पृच्छेदीदृक्ता नास्ति तत्र हि ।**
**यदनीदृगताद्दृक् च तत्स्वरूपं विनिश्चिनु ॥ २६ ॥**

तर्ह्यात्मनस्सत्त्वमङ्गीक्रियते चेत्तदा तस्य स्वरूपं कीदृक् किंधर्मविशिष्टमिति पृच्छेचेत् तत्र हि तत्स्वरूपे ईदृक्ता एवंगुणविशिष्टता नास्ति । "अशब्दमस्पर्श-मरूपमव्ययं तथारसं नित्यमगन्धवच्च" (काठ. १. ३. १५.) "अस्थूलमनण्वह्रस्वम-दीर्घमि" (बृ. ३. ८. ८.) त्यादिश्रुतिभिर्यत्स्वरूपमनीदृक् अताद्दृक् ईदृक्ताद्दृगिति वर्णनातीतं भवति तत्स्वरूपं तदेवात्मनः स्वरूपमिति विनिश्चिनु ॥ २६ ॥

आत्मस्वरूपस्य वर्णनातीतत्वे उपपत्तिमाह, अक्षेति ।

**अक्षाणां विषयस्त्वीदृक् परोक्षस्ताद्दृगुच्यते ।**
**विषयी नाक्षविषयः स्वत्वान्नास्य परोक्षता ॥ २७ ॥**

अक्षाणामिन्द्रियाणां विषयो गोचर ईदृक् ईदृक्छब्दवाच्यः । परोक्षः इन्द्रियागोचरो मानान्तरमेयस्ताद्दृक्छब्देनोच्यते । विषयी सर्वव्यवहाराणां ज्ञाता साक्षी नाक्षविषयः । नेन्द्रियैर्मनसा वा ज्ञेयः । अत ईदृगिति वक्तुं न शक्यते । स्वत्वात् प्रकाशत्वेन मानान्तरानपेक्षणादस्य साक्षिणः परोक्षता मानान्तरमेयतापि नो तेन ताद्दृगिति वक्तुं न शक्यते ॥ २७ ॥

सर्वप्रमाणाविषयत्वे ब्रह्मणः साक्षात्कारः कथमित्याशंकापरिहारव्याजेन तस्य स्वरूपलक्षणमाह, अवेद्य इति ।

अवेद्योऽप्यपरोक्षोऽतः स्वप्रकाशो भवत्ययम् ।
सत्यं ज्ञानमनन्तं चेत्यस्तीह ब्रह्मलक्षणम् ॥ २८ ॥

अयमात्मा इन्द्रियाणामवेद्योऽपीन्द्रियजन्यज्ञानाविषयोऽप्यपरोक्षः साक्षात्कारविषयः । अत एव स्वप्रकाशः । आत्मा स्वप्रकाशः, इन्द्रियजन्यज्ञानाविषयत्वे सत्यपरोक्षत्वात् । यथा संवित् । स्वप्रकाशत्वं नाम स्वयमेव स्वं जानातीति वक्तव्यम् । एवं चेत स्वस्मिन्नेव कर्मकर्तृव्यपदेशबाधः । संविदोऽपि न ज्ञानविषयत्वम् । अन्यथाऽनवस्थाप्रसंगात् । ननु प्रत्यगात्मनः स्वप्रकाशत्वेऽपि न तस्य ब्रह्मत्वसिद्धिरित्याशंक्य ब्रह्मणः श्रौतं लक्षणं तत्र योजयति, सत्यमिति । इहात्मनि सत्यं ज्ञानमनन्तमिति तैत्तिरीयं ब्रह्मलक्षणमस्त्येव । सत्यं ब्रह्म ज्ञानं ब्रह्म अनन्तं ब्रह्मेत्यस्य मन्त्रस्य याजना । सत्यं बाधरहितं ज्ञानं ज्ञप्तिरवबोधः स्वप्रकाशस्वरूपः । अनन्तं देशकालवस्तुपरिच्छेदरहितम् । इमानि लक्षणानि स्वरूपस्फोरणमात्रफलकानि । न तु धर्मधर्मिभावद्योतकानि । ननु यदनीदृगताद्दृक् तद्ब्रह्मस्वरूपमिति पुरोक्तम् । सत्यं ज्ञानमनन्तमित्यनेनेदृक्त्वं तादृक्त्वं वोक्तप्रायमिति कथमेतल्लक्षणमुपपद्यत ? इति चेन्न । सत्यादिशब्दानां सत्यत्वादिधर्मबोधकत्वेऽपि निर्धर्मिके ब्रह्मणि धर्मान्तराभावात्तत्र भासमानानां धर्माणामवास्तवत्वेनाभ्युपेयतया तद्धर्मवैशिष्ट्येनाभानात् धर्मवैशिष्ट्यरूपेदृक्ताद्दृक्त्वयोर्ब्रह्मण्यभावेन तथोक्तिरित्यविरोधः ॥ २८ ॥

पूर्वाचार्यवाक्यमनुसृत्य सत्यत्वनिरूपणेन ब्रह्मणः सत्यत्वमुपपादयति, सत्यत्वमिति ।

सत्यत्वं बाधराहित्यं जगद्बाधैकसाक्षिणः ।
बाधः किंसाक्षिको ? ब्रूहि न त्वसाक्षिक इष्यते ॥ २९ ॥

सत्यत्वं नाम बाधराहित्यम् । त्रैकालिकप्रतिरोधविरहितत्वं बाधराहित्यम् । यस्य लक्षणं येन दूष्यते स तस्य बाधः । विकारराहित्यं सत्यत्वम् । "सत्यमबाध्यं बाध्यं मिथ्येति तद्विवेक" इति पूर्वाचार्याः । जगद्बाधैकसाक्षिणः जगतः स्थूलसूक्ष्मादिशरीरलक्षणस्य बाधोऽसत्यत्वं सुषुप्तिसमाध्योरविद्यमानत्वात् । तस्यैकोऽद्वितीयः साक्षी द्रष्टाऽऽत्मा तस्य बाधो नाशः किंसाक्षिकः ? ब्रूहि । न कोऽपि

साक्षी विद्यत इति भावः । साक्षिणोऽविद्यमानत्वेऽप्यात्मनो बाधः किं न स्यादित्याशंकायामाह । नेति । असांक्षिकः साक्षिरहितो बाधो नेष्यते नाङ्गीक्रियते । जगतो विकारात्मकत्वं साक्षिणाऽनुभूयते । न तथाऽऽत्मनो विकारस्य द्रष्टाऽन्योस्ति । आत्माऽतः सत्य इति भावः ॥ २९ ॥

बाधराहित्यमुदाहरति, अपनीतेष्वति ।

अपनीतेषु मूर्तेषु ह्यमूर्तं शिष्यते वियत् ।
शक्येषु बाधितेष्वन्ते शिष्यते यत्तदेव तत् ॥ ३० ॥

यथा गृहादिभ्यो मूर्तेषु मूर्तद्रव्याणि परिच्छिन्नपरिमाणवस्तूनि पृथिव्यप्तेजोवायवः । तेष्वपनीतेषु बुद्ध्या निस्सारितेषु सत्सु वियदेव शिष्यते । तथैव प्रतीयमानेषु शक्येष्वपसरणसाध्येषु वस्तुषु बाधितेषु नेति नेतोति श्रुतिपर्यालोचनेनापनीतेष्वन्ते यत्किञ्चित् सन्मात्रं शिष्यते तत्साक्षिरूपं वस्तु । तदात्मैव । "स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यते" (बृ. ३.९.२६; ४.२.४.) इति श्रुतेः ॥ ३० ॥

प्रतीयमानेषु सर्ववस्तुष्वपनीतेषु न किञ्चिदप्यवशिष्यत इत्यत आह, सर्वबाध इति ।

सर्वबाधे न किञ्चिच्चेद्यन्न किञ्चित्तदेव तत् ।
भाषा एवात्र भिद्यन्ते निर्बाधं तावदस्ति हि ॥ ३१ ॥

सर्वबाधे जगति प्रतोयमानानां सर्ववस्तूनामपसारणेन मिथ्यात्वे निश्चिते सति किञ्चिदपि नावशिष्यत इत्युच्यते चेत् किञ्चिदपि न विद्यत इति यत् सर्वाभावावभासकं तदेव ज्ञानात्मकं तत् ब्रह्म । अत्र आत्मविषये भाषा आत्मबोधकशब्दा एव भिद्यन्ते । तत् ज्ञानं तु निर्बाधं बाधाविधुरं तावदस्ति नित्यत्वेन प्रकाशते हि ॥ ३१ ॥

आत्मनो निर्बाधत्वं श्रुत्यारूढं करोति, अत इति ।

अत एव श्रुतिर्बाध्यं बाधित्वा शेषयत्यदः ।
स एष नेति नेत्यात्मेत्यतद्व्यावृत्तिरूपतः ॥ ३२ ॥

यतो निर्बाधस्तावदस्त्यात्माऽत एव स एष उक्तरीत्याऽबाध्यतया विद्यमानोऽयमात्मेत्येतद्व्यावृत्तिरूपतोऽनात्मवस्तुनो व्यावृत्तिर्निराकरणं तदेव रूपं द्वारं तस्माद्बाध्यं यद्यन्निराकरणयोग्यं परिदृश्यमानं वस्तुजातं तत्तत्समस्तं बाधित्वा आत्मनोऽपसार्य अदोऽनिवार्यमात्मवस्तु श्रुतिः "नेति नेतीति" शेषयत्यवशेषयति "स एष नेति नेती"ति (बृ. ३. ९. २६.) न ह्येतस्माद्ब्रह्मणो व्यतिरिक्तमस्ति न पुनः स्वयमेव नास्तीत्यनात्मतया सर्वप्रपञ्चे निवारिते सत्यनिवार्यत्वेनात्मैवावशिष्यत इति भावः ॥ ३२ ॥

बाध्याबाध्ये वस्तुनी प्रदर्शयति, इदमिति ।

इदं रूपन्तु यद्यावत्तत्त्यक्तुं शक्यतेऽखिलम् ।
अशक्योऽह्यनिदंरूपः स आत्मा बाधवर्जितः ॥ ३३ ॥

इदं रूपमिदमिति प्रत्यक्षेण सन्निहितं देहादि यद्यावद्द्रियते वस्तुजातं तत्तदखिलं नेति नेतीति हस्तविक्षेपेणेव बुद्ध्या त्यक्तुं शक्यते । योऽनिदंरूपः प्रत्यक्त्वेनेदन्तयाऽनवगम्यः प्रत्यक्स्वरूपः स अशक्योऽनिवार्यो बाधवर्जितः त्रैकालिकबाधविधुरः स साक्षी आत्मा भवति । इदन्तयाऽनिवार्यं सर्वं बाध्यन् । तद्भिन्नमबाध्यमनिवार्यतया परिशिष्टं यद्वस्तु विद्यते तदात्मा भवतीति भावः ॥३३॥

एवमात्मनो बाधराहित्यात्मकसत्यत्वं सुसंपादितम् । संप्रति तस्य ज्ञानत्वमुपपादितं स्मारयति, सिद्धमिति ।

सिद्धं ब्रह्मणि सत्यत्वं ज्ञानत्वं तु पुरेरितम् ।
स्वयमेवानुभूतित्वादित्यादिवचनैः स्फुटम् ॥ ३४ ॥

स्पष्टोऽर्थः । पुरा ३. १३. श्लोके स्फुटम् । आदिशब्देन "इयमात्मा परानन्द" (१. ८.) इत्यादीनि गृह्यन्ते ॥ ३४ ॥

आत्मनोऽनन्तत्वविचारः ।

अनन्तरमनन्तत्वं समर्थयति, नेति ।

**न व्यापित्वाद्देशतोऽन्तो नित्यत्वान्नापि कालतः ।**
**न वस्तुतोऽपि सार्वात्म्यादानन्त्यं ब्रह्मणि त्रिधा ॥३५॥**

ब्रह्मणि त्रिविधमानन्त्यं विद्यते । सहेतुकं तद्विवृणोति, नेति । देशतो ऽन्तो न; कुतः? व्यापित्वात् । सर्वदेशव्यापित्वात् । कालतोऽन्तो न; नित्यत्वात् । सत्यत्वेन त्रिकालाबाध्यत्वात् । वस्तुतोऽप्यन्तो न; सार्वात्म्यात् । सर्वमात्मा स्वरूपं यस्य तस्य भावात् । "इदं सर्वं पुरा सृष्टेरेकमेवाद्वितीय" (२.१९.) मित्यादिवचनैः स्पष्टमुक्तम् । बृहि धातोर्देशकालवस्त्वपरिच्छिन्नतया सर्वव्यापित्वार्थत्वादानन्त्यमवश्यं सिध्यति । "ब्रह्मैवेदं विश्वं" (मुंड- २.२.११.) "ब्रह्मेदं सर्वं" (बृ. २.५.६.) इत्यादिश्रुतिभिर्ब्रह्मणस्त्रिविधमानन्त्यं सुसंपन्नमिति भावः । अस्मिन् श्लोके परमतमनुसृत्य देशकालादीनां वस्तुत्वमभ्युपगम्य तत्तत्कृतपरिच्छेदभावोऽत्र निरस्यत इति ज्ञेयम् ॥ ३५ ॥

वस्तुतो देशकालादीनामवस्तुत्वात्तत्कृतपरिच्छेदोऽप्यविद्यमान एवेत्याह, देशेति ।

**देशकालान्यवस्तूनां कल्पितत्वाच्च मायया ।**
**न देशादिकृतोऽन्तोऽस्ति ब्रह्मानन्त्यं स्फुटं ततः ॥३६॥**

मायया "सत्तत्त्वमाश्रिता शक्तिः कल्पयेत्सति विक्रिया" (२.५९.) इत्युक्तरीत्या । स्पष्टमन्यत् ॥ ३६ ॥

ब्रह्मणो जीवेश्वरत्वमुपाधिकल्पितम् ।

ननु देशादिकृतपरिच्छेदो ब्रह्मणो माऽस्तु; जीवेश्वरकृतः किं न स्यादित्यत आह, सत्यमिति ।

**सत्यं ज्ञानमनन्तं यद्ब्रह्म तद्वस्तु तस्य तत् ।**
**ईश्वरत्वं च जीवत्वमुपाधिद्वयकल्पितम् ॥ ३७ ॥**

सत्यं ज्ञानमनन्तमिति लक्षणेन प्रतिपादितं यद्ब्रह्म तद्वस्तु तदेव परमार्थम्। तस्य तदीश्वरत्वं जीवत्वमिति पदयोजना। स्पष्टमन्यत्। जीवत्वेश्वरत्वयोरपि निस्तत्त्वोपाधिकल्पितत्वात्तदाश्रययोर्जीवेश्वरयोरपि निस्तत्त्वमेवेति न तत्कृतपरिच्छेद-संभव इति भावः ॥ ३७ ॥

तत्रेश्वरोपाधिभूतां शक्तिं प्रतिपादयति, शक्तिरिति ॥

**शक्तिरस्त्यैश्वरी काचित्सर्ववस्तुनियामिका ।**
**आनन्दमयमारभ्य गूढा सर्वेषु वस्तुषु ॥ ३८ ॥**

स्पष्टा पदयोजना। सर्ववस्तुनियमनेन साऽनुमेयेति भावः। शुद्धसत्त्वप्रधा-नाया मायाया ईश्वरोपाधित्वं १-१६ श्लोके, तस्याः स्वरूपं ४७-५९ श्लोकेषु च विवृतम् ॥ ३८ ॥

शक्त्यनुमापकसर्ववस्तुनियमनमसिद्धमित्याशंक्याह, वस्त्विति ॥

**वस्तुधर्मा नियम्येरन् शक्त्या नैव यदा तदा ।**
**अन्योन्यधर्मसांकर्याद्विप्लवेत जगत् खलु ॥ ३९ ॥**

यदा कयाचिच्छक्त्या वस्तुधर्मा पृथिव्यादीनां काठिन्यादिधर्मा न निय-म्येरन् न व्यवस्थाप्येरन् तदा अन्योन्यधर्मसांकर्यात् काठिन्याद्यन्योन्यधर्माणा-मन्यत्राप्यव्यवस्थया जगद्विप्लवेत अनियतत्वं प्राप्नुयात्। अमेयकल्पनाविचित्र-स्यास्य जगतो नियमाभावे जले गन्धः तेजसि रसो वायौ रूपमित्येवंरूपो विप्लवः प्रसज्येत। तदा घटादीनामन्यवस्तुप्रकाशकत्वं दीपस्य वस्त्वन्तराप्रकाशकत्वं च प्रसज्येत। अतस्तत्तत्पदार्थेषु तत्तद्धर्मनियामिका काचन शक्तिरभ्युपेया। एवं च धर्मनियमनरूपो हेतुर्नासिद्धः। सिद्धायां शक्तौ सर्वज्ञस्यैव सर्वनियमनशक्तिमत्व-संभवात्। सा सर्वज्ञस्यैव भवितुमर्हति नान्यस्य। तथा चाह श्रुतिः "एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय" (बृ. ४. ४.२२.) "अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय (छां. ३. ४. १.) ॥ ३९ ॥

जडत्वभावायाः शक्तेर्जगन्नियमने कारणमाह चिदिति ॥

**चिच्छायावेशतः शक्तिश्चेतनेव विभाति सा ।**
**तच्छक्त्युपाधिसंयोगाद्ब्रह्मैवेश्वरतां व्रजेत् ॥ ४० ॥**

सा शक्तिः चिच्छायावेशतः चित्प्रतिबिम्बप्रवेशतः "चिदानन्दमयब्रह्मप्रतिबिम्बसमन्वित"त्यादित्यर्थः । चेतनेव चेतनत्वमापन्नेव विभाति । तच्छक्त्युपाधिसंयोगात् चित्प्रतिबिम्बयुक्ता शक्तिरेवोपाधिः । तेन संयोगात् ब्रह्मैवेश्वरतां स्रष्टृत्वादिधर्मवत्तां व्रजेत् ॥ ४० ॥

जीवोपाधिं दर्शयति, कोशेति ॥

**कोशोपाधिविवक्षायां याति ब्रह्मैव जीवताम् ।**
**पिता पितामहश्चैकः पुत्रपौत्रौ यथा प्रति ॥ ४१ ॥**

कोशोपाधिविवक्षायां अन्नमयादिकोशानां विचारणावसरे ब्रह्मैव जीवतां याति। कथमेकस्य विरुद्धधर्माक्रान्तत्वमित्यत आह, पितेति। यथा पुत्रपौत्रौ प्रति तदपेक्षया एकः एका व्यक्तिः पिता पितामहश्च भवति। तथैव ब्रह्मैव शक्त्युपाधिनेश्वरो भवति। कोशोपाधिना जीवो भवति पुत्रपौत्राभावे न पिता न पितामहः। तथैव शक्त्युपाध्यभावे नेश्वरः कोशोपाध्यभावे न जीव इति भावः ॥४१॥

ब्रह्मणि जीवेश्वरत्वयोस्सापेक्षत्वं विशदयति, पुत्रेति ॥

**पुत्रादेरविवक्षायां न पिता न पितामहः ।**
**तद्वन्नेशो नापि जीवः शक्तिकोशाविवक्षणे ॥ ४२ ॥**

स्पष्टोऽर्थः । एवं जीवेश्वरव्यवहारभेदः । न वस्तुतो ब्रह्मणो जीवत्वमीश्वरत्वं वाऽस्तीति भावः ॥ ४२ ॥

एवं कोशपञ्चकविवेचनाफल प्रस्तौति य इति ॥

**य एवं ब्रह्म वेदैष ब्रह्मैव भवति स्वयम् ।**
**ब्रह्मणो नास्ति जन्मातः पुनरेष न जायते ॥ ४३ ॥**

यो ज्ञान्येवं पञ्चकोशविवेचनेन ब्रह्म वेद साक्षात्करोति एषः स्वयं ब्रह्मैव भवति "ब्रह्म भवति य एवं वेद" (बृ. ४.४.२५.) "ब्रह्म वेद ब्रह्मैव भवति" (मुं. ३. २. ९.) इत्यादिश्रुतिभ्यः। ब्रह्मणो जन्म नास्ति। अतो ब्रह्मभावं गत एष पुनर्न जायते। "न जायते म्रियते वा विपश्चिदि" (कठ. १, २. १८.) ति श्रुतेः॥ ४३॥

इति

श्रीमत्परमहंसपरिव्राजकाचार्यशृंगेरीश्रीविरूपाक्षश्रीविद्याशङ्करपदमावेशप्रकाशित जगद्गुरु श्रीकल्याणानन्दभारतीमान्ताचार्यात्यन्तप्रियान्तेवासिनाऽत्रि गोत्रसमुद्भूतेन **लिङ्गन सोमयाजिना** विरचितेयं पञ्चकोश-विवेकस्य कल्याणपीयूषव्याख्या समाप्ता॥

इति पञ्चकोशविवेकप्रकरणम्।

*

अथ

# कल्याणपीयूषव्याख्यासमेता पंचदशी

## द्वैतविवेकप्रकरणम् ।

प्रथमे प्रकरणे निरूपितं तत्त्वं यद्विवेकात् ज्ञायते तन्निरूपणं प्रकरणद्वयेन कृतम् । विषयस्यैक्यादेकेनैव प्रकरणेन निरूपणीये प्रकरणद्वयेन निरूपणं किंफलकमित्याशंक्य निरूप्यमाणाभ्यां द्वाभ्यां प्रत्येकं विवेकस्य भिन्नफलकत्वाद्भिन्नफलानुरोधेन प्रत्येकं निरूपणमावश्यकमिति पृथक् प्रकरणाभ्यां निरूपितम् । प्रत्येकनिरूपणस्य फलभेदनिरूपणाय प्रकरणद्वयनिरूपितयोर्द्वैदर्शनपूर्वकमेतत्प्रकरणप्रतिपाद्यं प्रतिजानीते, ईश्वरेणापीति ।

ईश्वरसृष्टद्वैतवर्णना ।

**ईश्वरेणापि जीवेन सृष्टं द्वैतं विविच्यते ।**

यो मायाबिम्बो वशीकृतमायस्तेनेश्वरेणाऽविद्यावशगेन जीवेन च यत् सृष्टमुत्पादितं द्वैतं जगत् तदस्मिन् प्रकरणे विविच्यते । अनेन द्वितीयप्रकरणोक्तमीक्षणादिप्रवेशान्तसृष्टिरूपं द्वैतमीश्वरसृष्टम्, तृतीयोक्तं जाग्रदादिविमोक्षान्तं जीवसृष्टमिति च विभागज्ञापनाय प्रकरणद्वयेन प्रतिपादनमिति सूचितम् । यद्यपि जीवेश्वरयोरुभयोरपि जगत्स्रष्टृत्वे प्रतिपिपादयिषितेऽपिशब्दो जीवेनेत्यनन्तरं पठितुं युक्तः । समुच्चयद्योतकस्य समुच्चेयार्थबोधकपदोत्तरं पाठनियमात् । तथाऽपि बहूनां जीवस्य जगत्स्रष्टृत्वे विप्रतिपत्त्यभावादीश्वरस्रष्टृत्वमात्रविप्रतिपत्तेः परिहारसूचनायेश्वरस्यापि स्रष्टृत्वं स्फोरयितुमीश्वरपदोत्तरमपिशब्दप्रयोग इति बोध्यम् ।

विवेचनप्रयोजनमाह, विवेकइति ।

**विवेके सति जीवेन हेयो बंधः स्फुटीभवेत् ॥ १ ॥**

विवेके कृते सति जीवेन हेयः परित्याज्यो बंधस्तत्कारणं द्वैतं स्फुटीभवेत् ॥ १ ॥

ननु जीव एव स्वादृष्टसहकारेण जगत्सृजति। न तत्रेश्वरापेक्षा। तथा सतीश्वरेणाऽपि सृष्टं जगदिति कथमुच्यत इत्याशंकां परिहर्तुमीश्वरस्य जगत्स्रष्टृत्वं प्रमितमित्याशयेन प्रमाणभूतां श्रुतिमुदाहरति, मायेति।

मायां तु प्रकृतिं विन्द्यान्मायिनं तु महेश्वरम्।
स मायी सृजतीत्याहुः श्वेताश्वतरशाखिनः ॥ २ ॥

मायां तु प्रकृतिं विन्द्यात् जानीयात्। महेश्वरं तदुपाधिकममेयजगद्रचनाकुशलं महान्तमीश्वरं मायिनं विन्द्यादित्यनुवर्तते। स मायी जगत्सृजतीति श्वेताश्वतरशाखिन आहुः। "मायां तु प्रकृतिं विन्द्यान्मायिनं तु महेश्वरं। तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्"। श्वेत॰ (४॰ १०॰) इति श्रुतिः ॥ २ ॥

एतदर्थिकामैतरेयश्रुतिमर्थतः पठति, आत्मेति।

आत्मा वा इदमग्रेऽभूत्स ईक्षत सृजा इति।
संकल्पेनासृजल्लोकान् स एतानिति बह्वृचाः ॥ ३ ॥

अग्रे प्राक् सृष्टेरिदं जगदात्माऽभूत्। स आत्मा सर्वज्ञो लोकान् सृजै उत्पादयानीतीक्षत संकल्पयामास। सर्वज्ञत्वादकरणोऽपीक्षत यथोपकरणमन्तरेण मायावी स्वमायया नगरादिकल्पनां विजृंभयति। "अपाणिपादो जवनो गृहीता" इति (श्वेत॰ ३. १९.)। एवं संकल्पेन स आत्मा एतान् लोकानसृजत् यथा गृहनिर्माणकर्ता सर्वं निर्माणविधानं मनस्यादौ निश्चित्य पश्चात् कार्योन्मुखो भवति तथेति बह्वृचाः ऋक्शाखिनः "आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किंचन मिषत्। स ईक्षत लोकान्नु सृजा इति स इमाँल्लोकानसृजत" (ऐत॰ १॰ १॰) इत्यूचुरितिशेषः ॥ ३ ॥

उक्तार्थे तैत्तिरीयश्रुतिं प्रमाणयति, खमिति।

खं वाय्वग्निजलोर्व्योषध्यन्नदेहाः क्रमादमी।
संभूता ब्रह्मणस्तस्मादेतस्मादात्मनोऽखिलाः ॥ ४ ॥

अमी समस्ताः खमाकाशं वाय्वग्निजलोर्व्योषध्यन्नदेहाः जलं उर्वी ओषधयश्चेति छेदः । क्रमात्तस्मात्तच्छब्देन परामृष्टात् सत्यं ज्ञानमनन्तमिति लक्षणलक्षितात् ब्रह्मणः संभूताः । उत्पन्नाः । ननु शुद्धस्य ब्रह्मणः कथं जगत्कारणत्वमुच्यत इत्याशंकापरिहारायैतस्मादात्मन इति समानाधिकरणं विशेषणमुक्तम् । एतस्मादितीश्वरतापन्नं ब्रह्म उच्यते । तत्सामानाधिकरण्येनाध्यासेन तत्तादात्म्यापन्नमिहकारणमिति विवक्षितोऽर्थः । आत्मन इत्युक्तिस्तु सर्वैरात्मत्वेनानुभूयमानो जीवोऽपि तदनतिरिक्त इति सूचितः ॥ ४ ॥

ननु बह्वृचाः संकल्पमात्रेण जगत्स्रष्टृत्वं प्रतिपादयन्ति । अत्र तु कार्यकारणक्रमेण सृष्टिरुक्ता । तेनेयं सृष्टिस्तद्विरुद्धेति भातीत्याशंकां तैत्तिरीयश्रुतावृत्तरवाक्यार्थविवरणेन परिहरति, बह्विति ।

**बहु स्यामेवातः प्रजायेयेति कामतः ।**
**तपस्तप्त्वाऽसृजत्सर्वं जगदित्याह तित्तिरिः ॥ ५ ॥**

अहमेवाद्वितीयः सहायान्तरमनपेक्ष्य बह्वनेकधा स्याम् अतो बहुभवनार्थं प्रजायेय प्रकर्षेण पूर्वस्थितेराधिक्येनोत्पद्येय इत्येवं रूपतः कामतः तपस्तप्त्वा सम्यगालोच्य "यस्य ज्ञानमयं तपः" इति (मुं. १. १. ९.) श्रुतेः प्राणिकर्मनिमित्तानुरूपमिदं सर्वं जगदसृजन्नामरूपाभ्यां व्याकरोत् । वस्त्वन्तरसहायमन्तरेणैव मायावीव स्वयमेव बहुधा भासत इति स्यामित्युत्तमपुरुषार्थः । अव्याकृततया स्थितस्य स्वस्य नामरूपाभ्यां व्याकरणमेव सृष्टिरित्यभिधीयते । "नामरूपे व्याकरवाणी"ति (छां. ६. ३. २.) श्रुतेः । इति तित्तिरिः तन्नामको मंत्रद्रष्टा ऋषिराह । अनेनास्यामपि श्रुतौ संकल्पपूर्विकैव सृष्टिरुक्तेति न पूर्वोक्तबह्वृचश्रुतिविरोधः। संकल्पानन्तरं जायमाना सृष्टिराकाशादिक्रमेणेति पूर्ववाक्यतात्पर्यमिति श्रुत्योर्विरोधो नाशंकनीय इति तात्पर्यम् ॥ ५ ॥

ननु श्वेताश्वतरे मायिनः स्रष्टृत्वमुपक्रान्तम्; बह्वृचे आत्मशब्दोपादानात्तत्प्रतिपाद्यस्य माय्यभिन्नतया तस्यैव स्रष्टृत्वं प्रतीयते; तैत्तिरीये एतस्मादात्मन इत्युक्त्या तस्यैव स्रष्टृत्वं स्फुटं प्रतीयते; तत्र तस्मादिति सामानाधिकरण्येन ब्रह्माध्यासस्यावश्यकत्वेऽपि शुद्धे तदध्यासो न प्रसज्यते; तथा च शुद्धस्य

कारणत्वं नोदितं स्यात् । तस्य कारणत्वं तत्रेश्वराध्यासं विना न सिध्यति; अतस्तैत्तिरीयश्रुतिस्तत्रेश्वराध्यासतात्पर्येणापि प्रवृत्तेति बोधयितुं शुद्धस्य कारणत्वबोधिकां छांदोग्यश्रुतिमुदाहरति इदमिति ।

इदमग्रे सदेवाऽसीत् बहुत्वाय तदैक्षत ।
तेजोऽबन्नांडजादीनि ससर्जेति च सामगाः ॥ ६ ॥

इदं परिदृश्यमानं सर्वं जगदग्रे सृष्टेः प्राक् सदेवाद्वितीयं शुद्धं सद्वस्तुमात्रमेवाऽसीत् । तत्सद्वस्तु बहुत्वायानेकधा नामरूपेण भवनायैक्षत आलोचयामास । आलोचनानन्तरं तेजोऽबन्नांडजादीनि, आदिशब्देन जरायुजस्वेदजानि गृह्यन्ते । ससर्ज सृष्टवान्, इति सामगा आहुः "सदेव सोम्येदमग्र आसीदिति (छां॰ ६. २. १.) श्रुताविति शेषः । एवं चैतदेकवाक्यत्वाय सत्यं ज्ञानमित्युपक्रान्तस्यापि शुद्धस्य तस्मादिति पंचम्या श्रुतहेतुत्वोपपादनायोक्तेश्वराध्यासोऽप्यवश्यं स्वीकार्य इति तैत्तिरीयश्रुतेः परस्पराध्यासे तात्पर्यमिति स्पष्टं प्रतीयते । स चेश्वराध्यास उपक्रान्तस्य सत उत्तरत्र वक्ष्यमाणेक्षणादेरुपपादनायेत्यत्राप्यङ्गीकृत इति बोद्धव्यम् । एतेन "यतो वा इमानि भूतानी" (तै॰ ३. १.) त्यादिनोक्तं लक्षणमीश्वरस्यैवोपपद्यते न तु शुद्धस्येति शंकापि परिहृता भवति ॥ ६ ॥

ननु प्रागुक्तदिशा शुद्धेश्वरयोस्तादात्म्याध्यासो बहुश्रुतिसम्मत इति प्रतीयते । तैत्तिरीये "एतस्मादात्मन" (तै. २. १. ) इत्यनेनात्मत्वेन प्रतीयमानस्य जीवस्यैतच्छब्दोपात्तेश्वरस्य चोपवर्णितजीवेश्वरपरस्पराध्यासो न श्रुत्यंतरे प्रतीयत इत्याशंकां परिहर्तुं तदध्यासस्फोरकां श्रुतिमुदाहरति, विस्फुलिंगेति।

विस्फुलिंगा यथा वह्नेर्जायन्तेऽक्षरतस्तथा ।
विविधाश्चिज्जडा भावा इत्याथर्वणिकी श्रुतिः ॥ ७ ॥

यथा वह्नेः विस्फुलिंगा वह्निसमानधर्मा जायन्तेऽनेकशः प्रभवन्ति तथैवाक्षरतो विनाशरहितात् कूटस्थाद्ब्रह्मणः "कूटस्थोऽक्षर उच्यते" इतिस्मृतेः विविधा नानादेहोपाधिभेदभिन्नाश्चिज्जडाश्चिदचिदात्मका भावाः पदार्था जायन्ते । "तदेतत्सत्यं यथा सुदीप्तात् पावकाद्विस्फुलिंगाः सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद्विविधाः सौम्यभावाः प्रजायन्ते तत्र चैवापियन्ति (मुं॰ २. १.) ।

इत्याथर्वणिकी मुंडकश्रुतिराह । एतेनेश्वरे श्रुतजगत्कारणत्वस्यात्राक्षरे कूटस्थे वर्णनाज्जीवेश्वराध्यासो जीवब्रह्मणोरध्यास इति चास्यां प्रतीयन इति तात्पर्यम् ॥७॥

एवमुक्तप्रकारेण मायोपाधिकस्येश्वरस्य जगत्कारणत्वमुक्तम्। तस्य तत्त्वोपपादनाय मायास्वरूपं विवृणोति, जगदिति ।

जगदव्याकृतं पूर्वमासीद्व्याक्रियताधुना ।
दृश्याभ्यां नामरूपाभ्यां विराडादिषु ते स्फुटे ॥ ८ ॥

विराण्मनुर्नरा गावः खराश्वाजादयस्तथा ।
पिपीलिकावधि द्वंद्वमिति वाजसनेयिनः ॥ ९ ॥

पूर्वं सृष्टेः प्रागिदं जगदव्याकृतमव्यक्तनामरूपात्मकमासीत् । अधुना सृष्ट्यनन्तरं दृश्याभ्यां व्यक्ताभ्यां नामरूपाभ्यां व्याक्रियत स्पष्टीकृतम् । "ततो वै सदजायत" "तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियत (बृ. १.४.७.) इति श्रुतेः । ते नामरूपे विराडादिषु स्फुटे । ब्रह्मांडकात्मकस्थूलदेहाभिमानवान् विराट् । विराडादीन्विवृणोति । विराडिति । द्वंद्वं स्त्रीपुरुषयोः । स्पष्टमन्यत् ॥८-९॥

ननु जीवस्यापि ब्रह्मेश्वराभ्यां परस्पराध्याससाधनाय मुंडके श्रूयमाणाक्षरशब्दस्य कूटस्थोऽर्थ इति वर्णितम् । तत्राक्षरशब्देन ब्रह्मेश्वरौ वा गृह्यताम् । किंच भवदभीष्टाध्याससाधनाय कूटस्थपरत उच्यत इत्याशंक्याह, कृत्वेति ।

कृत्वा रूपान्तरं जैवं देहे प्राविशदीश्वरः ।
इति ताः श्रुतयः प्राहुर्जीवत्वं प्राणधारणात् ॥ १० ॥

बहुभवनार्थमीक्षितेश्वरः सर्वसमर्थो रूपान्तरं स्वस्यैवाऽन्यद्रूपं विकारभूतं जैवं जीवसंबंधि कृत्वा देहे प्राविशत् प्राविशदिव भाति । इति ताः पूर्वोदाहृताः "तत्सृष्ट्वा तदेवानुप्राविशत्" (तै. २.६.) "अनेनैव जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" (छां. ६.३.२.) इत्यादयः श्रुतयः प्राहुः । प्राणधारणात् प्राणानां स्वामित्वात् प्रेरकत्वाज्जीवत्वमिति प्राहुः । जीवधातोः प्राणधारणमर्थ इत्यन्यत्र स्पष्टम् । रूपान्तरशब्देन जीवेश्वरयोरभेदोऽभिधीयते । एवं च शुद्धत्वं

स्रष्टृत्वं प्रवेशनकर्तृत्वं चैकस्यैव मिलित्वा सर्वाः श्रुतयो बोधयन्तीति परस्पराध्यासमन्तरा श्रुतिव्यवहारोऽनुपपन्न एव स्यादिति समुदितं तात्पर्यम् ॥ १० ॥

एवं सिद्धं ब्रह्मेश्वरविलक्षणं जीवस्वरूपं दर्शयति, चैतन्यमिति ।

चैतन्यं यदधिष्ठानं लिंगदेहश्च यः पुनः ।
चिच्छाया लिंगदेहस्था तत्संघो जीव उच्यते ॥ ११ ॥

लिंगदेहकल्पनायां यदधिष्ठानमाधारभूतं चैतन्यं तत्र कल्पितो यो लिंगदेहः बुद्धिकर्मेंद्रियप्राणपंचकैर्मनसा धिया संयुतः । लिंगदेहस्था चिच्छाया चिदाभासः तत्संघः तेषां त्रयाणां समूहो जीव इत्युच्यते । अनेन शुद्धचिच्चिदाभासलिंगदेहसमुदायो जीव इति फलितम् ॥ ११ ॥

नन्वेवमनुप्रवेशोक्त्या जीवेस्येश्वररूपत्वे तस्येश्वराज्ञावृत्तित्वदुःखित्वादि कथमुपपद्यत इत्याशंक्याह, माहेश्वरीति ।

माहेश्वरीतु माया या तस्या निर्माणशक्तिवत् ।
विद्यते मोहशक्तिश्च तं जीवं मोहयत्यसौ ॥ १२ ॥

माहेश्वरी महेश्वरसंबंधिनी त्रिगुणात्मिका चिच्छायोपेता या माया विद्यते तस्या निर्माणशक्तिवदानन्दमयादारभ्य समस्तजगतो निर्माणसमर्थनशक्तिरिव मोहशक्तिश्च चिदानन्दस्वरूपविषयका ज्ञानशक्तिश्च विद्यते । असौ मोहशक्तिर्जीवं मोहयति स्वस्वरूपज्ञानविरहितं करोति। "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः" इति स्मृतेः ॥ १२ ॥

तत्फलमाह, मोहादिति ।

मोहादनीशतां प्राप्य मग्नो वपुषि शोचति ।
ईशसृष्टमिदं द्वैतं सर्वमुक्तं समासतः ॥ १३ ॥

एवं मोहमापन्नो जीवः मोहादनीशतामीशभिन्नतां उपलक्षणमिदं असंगचिद्भिन्नतां च प्राप्य स्वस्येश्वरत्वमसंगचिद्रूपत्वं चाज्ञात्वेति यावत् वपुषि शरीरसंघे

मग्नोऽहमिदं ममेदमिति तादात्म्याद्यभिमानाविष्टः शोचति दुःखपरंपरामनुभवति। स्पष्टमन्यत् ॥ १४ ॥

जीवसृष्टद्वैतकथनम् ।

एवमीश्वरसृष्टिं संक्षेपतो निरूप्य प्रमाणपुरस्सरं जीवसृष्टिं विवृणोति, सप्तेति ।

**सप्तान्नब्राह्मणे द्वैतं जीवसृष्टं प्रपंचितम् ।**
**अन्नानि सप्त ज्ञानेन कर्मणाऽजनयत्पिता ॥ १४ ॥**

"यत्सप्तान्नानि मेधया तपसा जनयत्पिते"त्यारभ्ये (बृ. १. ५. २.) बृहदारण्यकान्तर्गतसप्तान्नब्राह्मणे जीवसृष्टं "जाया मे स्यादि"त्यादिकामसाधनभूताभ्यां ज्ञानकर्मभ्यां प्रयुक्तेन जीवेनेश्वरसृष्टभोग्यजातस्य सप्तधा परिकल्पितं द्वैत "महमुपासकोऽन्य उपास्यो देवोऽन्य" इत्यादिभेदबुद्धिविशिष्टं प्रकरणं प्रपंचितम् । एतेन तत्स्रष्टेर्जीवस्य तत्स्रष्टृत्वस्य च प्रमितत्वमुक्तम् । प्रपंचनप्रकारमाह, अन्नानीति । पिता पालको जीवो ज्ञानेन स्वबुद्धिकौशलेन कर्मणा अदृष्टद्वारा सप्तान्नान्यजनयत् । जीवस्य सम्यक् पर्यालोचनेन सर्वलोकभोगानुकूलजगदुत्पादनेन सर्वलोकपालकत्वात्तस्यैव पितृत्वे निर्देश इति तात्पर्यम् ॥ १४ ॥

सप्तान्नोत्पादकत्वस्य ज्ञानपूर्वकत्वं प्रतिनियतविभागप्रदर्शनपूर्वकं विशदयति, मर्त्येति ।

**मर्त्यान्नमेकं देवान्ने द्वे पश्वन्नं चतुर्थकम् ।**
**अन्यत्त्रितयमात्मार्थमन्नानां विनियोजनम् ॥ १५ ॥**

तेष्वेकं मर्त्यान्नं तदधीनमन्नं सर्वमर्त्यसाधारणमन्नं । देवान्ने द्वे । चतुर्थकं पश्वन्नं पश्वधीनम् । सर्वमविशेषेण पश्यतीति पशुः । अन्यदवशिष्टं त्रितयमात्मार्थं आत्मभोगाय कल्पितम् । एवमन्नानां सप्तानां विनियोजनं विनियोग आत्मार्थं सप्तान्नब्राह्मणेनोक्तः । अत्र बृहदारण्यक (१. ५. २.) सप्तान्नब्राह्मणमवलोक्यताम् । इयं श्रुतिर्व्यवहारसिद्धं जीवभेदमादाय प्रवृत्ता । पश्चादितः पृथक्कृत्यात्मनोंशविभजनप्रतिपादनात् ॥ १५ ॥

एवं विनियोजितानि सप्तान्नानि नामतो निर्दिशति, व्रीहीति ।

व्रीह्यादिकं दर्शपूर्णमासौ क्षीरं तथा मनः ।
वाक् प्राणश्चेति सप्तत्वमन्नानामवगम्यताम् ॥ १६ ॥

व्रीह्यादिकं मर्त्येभ्यो विनियोजितमन्नम् । तथा दर्शपूर्णमासौ देवेभ्यो विनियोजिते, क्षीरं पशुभ्यो विनियोजितम्, मनो वाक् प्राणश्चेति त्रितयमात्मने विनियोजितम् । एवमन्नानां सप्तत्वमवगम्यताम् ॥ १६ ॥

ननु सप्तान्नानि जगदन्तःपातित्वादीश्वरनिर्मितानि भवन्ति । एवं सति तेषां जीवसृष्टत्वाभिमानमयुक्तमित्याशंक्य तेषां स्वरूपमीश्वरसृष्टं भोग्यत्वाकारस्तु जीवसृष्टः । तन्मात्रेण तत्सृष्टत्वव्यवहार इत्याह, ईशेनेति ।

ईशेन यद्यप्येतानि निर्मितानि स्वरूपतः ।
तथापि ज्ञानकर्मभ्यां जीवोऽकार्षीत्तदन्नताम् ॥ १७ ॥

स्पष्टोऽर्थः ॥ १७ ॥

मनसो जीवस्य बन्धकारणत्वोक्तिः ।

फलितमाह, ईशेति ।

ईशकार्यं जीवभोग्यं जगद्द्वाभ्यां समन्वितम् ।
पितृजन्या भर्तृभोग्या यथा योषित्तथेष्यताम् ॥ १८ ॥

जगत्स्वरूपत ईशकार्यं ईश्वरकारणजन्यम् । जीवभोग्यं जीवेनानुभवयोग्यं कृतम् । एवं द्वाभ्यामीश्वरकार्यत्वजीवभोग्यत्वाभ्यां समन्वितम् । तत्र दृष्टान्तमाह पित्रिति । स्पष्टमन्यत् ॥ १८ ॥

ईश्वरजीवयोर्जगत्सर्जने कि साधनमित्यत आह, मायेति ।

मायावृत्त्यात्मको हीशसंकल्पः साधनं जनौ ।
मनोवृत्त्यात्मको जीवसंकल्पो भोगसाधनम् ॥ १९ ॥

जनौ जगदुत्पत्तौ मायावृत्त्यात्मको मायावृत्तिविशेषस्वरूप ईशसंकल्पः साधनं करणम्। मायाप्रतिबिम्बितेश्वरस्य संकल्पेन जगत्सृष्टमितिभावः। मनोवृत्त्यात्मको मनसो वृत्तिः "जाया मे स्यात्", "वित्तं मे स्यादि"त्यादिकामरूपा तदात्मकः तत्स्वरूपो जीवसंकल्पो भोगसाधनं। कामनिबद्धेयं जीवस्य प्रवृत्तिर्भोग-कारणं भवति ॥ १९ ॥

कथमेकस्मिन्नेव वस्तुनि भिन्नभोगोपपत्तिरित्यत आह, ईशेति।

ईशनिर्मितमण्यादौ वस्तुन्येकविधे स्थिते।
भोक्तृधीवृत्तिनानात्त्वात्तद्भोगो बहुधेष्यते ॥ २० ॥

भोक्तृधीवृत्तिनानात्वात् अनुभवितुर्जीवस्य मनोवृत्तीनामनेकत्वात्। स्पष्टमन्यत् ॥ २० ॥

सहकारिकारणभेदात्कार्यभेद इति युक्तिसिद्धं भोगभेदं दृष्टान्तमुखेनानु-भावयति, हृष्यतीति।

हृष्यत्येको मणिं लब्ध्वा क्रुध्यत्यन्योऽह्यलाभतः।
पश्यत्येव विरक्तोऽत्र न हृष्यति न कुप्यति ॥ २१ ॥

एको मण्यर्थी मणिं लब्ध्वा हृष्यति। अन्यस्तदर्थी तदलाभतः क्रुध्यति। विरक्तो मणिविषयेऽनुरागहीनो मणिं पश्यत्येव। अत्र मणिं दृष्ट्वा न हृष्यति न कुप्यति। एक एव मणिर्मनोवृत्तिभेदेन हर्षकोपौदासीन्यान्यतमस्य कारणं भवति। तथैवामूल्योऽपि गृहिणोमणिर्भर्तुर्मानसिकवृत्त्यनुरूपं कदाचिदानन्दाय कदाचित्कोपाय कदाचिदौदासीन्याय कल्पते ॥ २१ ॥

पूर्वोक्ताभ्यां द्वाभ्यां कार्यकारणाभ्यां भोगाकारभेदाः प्रदर्शिताः। अधुना स्वरूपभेदं प्रदर्शयति, प्रिय इति।

प्रियोऽप्रिय उपेक्ष्यश्चेत्याकारा मणिगास्त्रयः।
सृष्टा जीवैरीशसृष्टं रूपं साधारणं त्रिषु ॥ २२ ॥

एवं मण्यर्थिनः प्रियः प्रीतिविषय अप्रियो द्वेषविषय उपेक्ष्यः उपेक्षा-विषयश्चेति मणिगाः एकमेव मणि गता आकारास्त्रयः। प्रीतिविषयत्वं, द्वेषविषयत्वं, उपेक्षाविषयत्वं, चेति भिन्नविषयतारूपा दृश्यन्ते। एते आकारा जीवैः सृष्टाः। प्राप्ताप्राप्तविवेकन्यायेन तत्तद्विषयतासृष्टिर्जीवस्येति तद्वैशिष्ट्येन मणिस्रष्टृत्वं जीवस्योक्तम्। जीवैरिति बहुवचनं तु विभिन्नविषयतानां यौगपद्येन सत्वोपपाद-नाय। ईशसृष्टं रूपं त्रिषु समानमित्याह, ईशेति। त्रिष्वाकारेषु ईशसृष्टं रूपं मणिरूपं साधारणं समानम्। एवं च तत्तद्विषयताविशिष्टमणिदृष्टौ जीवस्य-स्रष्टृत्वं विशेषणांशे, ईशस्य तु विशेष्यांशे इति विवेकः॥ २२॥

पूर्वोदाहरणेन भोगाकाराणां त्रैविध्यमिव गम्यते, नत्वनन्तप्रकारत्व-मित्याशयेन तत्र निर्दिष्टस्य प्रत्येकं बहुविधत्वमिति स्फोरणायैकस्य प्रीतिविषय-त्वस्य बहुविधत्वं दर्शयति, भार्येति।

**भार्या स्नुषा ननान्दा च याता मातेत्यनेकधा।**
**प्रतियोगिधिया योषिद्भिद्यते न स्वरूपतः॥ २३॥**

एका योषित् स्वस्य भार्या, स्वपितुः स्नुषा, स्वभार्यायाः ननान्दा भर्तृभगिनी, स्वसोदरभार्यायाः याता देवरपत्नी स्वपुत्रस्य मातेति संबंधभेदेनानेकधा व्यवह्रियमाणतया प्रतियोगिधिया प्रतियोगिभर्त्रादीनां विशिष्टबुद्ध्या भासमानया धिया निरूपिता सती तदनुरूपं भिद्यते न तु स्वरूपतः। विलक्षणप्रीतिविषय-ताश्रयत्वेन संबंधभेदेन भिन्नतया तत्तन्निष्ठप्रीतीनां विलक्षणतया तत्तद्विषयतानां भेदेन तदाश्रयभेदः सिध्यति॥ २३॥

ननु तत्र ज्ञानभेद एव नाकारभेद इति जीवनिर्मितस्य कस्यापि विशेषस्यादर्शनादिति शंकते नन्विति।

**ननु ज्ञानानि भिद्यन्तामाकारस्तु न भिद्यते।**
**योषिद्वपुष्यतिशयो न दृष्टो जीवनिर्मितः॥ २४॥**

नन्विति प्रश्ने। ईश्वरसृष्टं वस्तुजातं जीवेन भोगार्थं बहुधेष्यत इत्युपरि-ष्टाद्भोग्याकारस्य नानात्वमुक्तम्। योषिद्दृष्टान्ते तु प्रतियोगिधिया भार्या

स्नुषेत्यादिज्ञानानि भिद्यन्ताम्; योषित आकारस्तु न भिद्यते । तत्र कारणमाह, योषिदिति । योषिद्वपुषि जीवनिर्मितोऽतिशयो भोग्याकारभेदो न दृष्टः । एवं चाकारभेदो न दृष्टान्ते सिध्यति ॥ २४ ॥

सिद्धान्ती परिहरति, मैवमिति ।

**मैवं मांसमयी योषित्काचिदन्या मनोमयी ।**
**मांसमय्या अभेदेऽपि भिद्यते हि मनोमयी ॥ २५ ॥**

मैवं योषिद्विषय आकारभेदो नास्तीत्येवं माऽऽक्षिपतु । मांसमयी मांसविकारा स्थूलदेहविशिष्टा योषित्काचित्; मनोमयी मनोविकारा योषित्ततोऽन्या भिन्ना । मांसमय्याः योषितोऽभेदेऽपि मनोमयी योषिद्भिद्यत एव । हि निश्चयार्थे । ज्ञानगोचरा योषिन्मांसमय्या भिद्यते । तत्र प्रतियोगिनां ज्ञानान्यत्यन्तविलक्षणानि । अवैलक्षण्ये यस्य भार्यात्वेन ज्ञानं तस्यैव स्नुषात्वेन ज्ञानं प्रसज्येत । नैतदस्ति । अतस्तत्तत्प्रतियोगिज्ञानानि सर्वदाऽत्यन्तविलक्षणानीत्यभ्युपेयम् । ज्ञानवैलक्षण्यं तु ज्ञेयवैलक्षण्यमन्तरा न सिध्यति । अतस्तत्तज्ज्ञेया योषिदत्यन्तविलक्षणेत्यभ्युपेयम् । न च ज्ञेयमांसमययोषिदभिन्नैवेति भ्रमितव्यम् । तस्याः स्वरूपेणाज्ञेयत्वात् । ज्ञेया तु तदाकाराकारिता चित्तवृत्तिरेव । तस्या एवाऽन्तराया आन्तरे चैतन्ये प्रतिफलनसंभवात् । चैतन्यतत्प्रतिफलनमेव ज्ञानमिति सिध्यति । एवं च तदाकाराकारिता मनोमयी चित्तवृत्तिरूपैव योषिज्जीवोपभोग्या । चित्तवृत्तीनां नानात्वात् भोग्ययोषिन्नानात्वं सिध्यतीति भावः ॥ २५ ॥

ननु भ्रान्तिस्थले बाह्यवस्तुनोऽभावान्मनोमयसृष्टिरभ्युपेयताम् जाग्रति बाह्यवस्तुसद्भावान्मनोमयसृष्टिः किमित्यभ्युपेयत, इति शंकते, भ्रान्तीति ।

**भ्रान्तिस्वप्नमनोराज्यस्मृतिष्वस्तु मनोमयम् ।**
**जाग्रन्मानेन मेयस्य न मनोमयतेति चेत् ॥ २६ ॥**

भ्रान्तिस्वप्नमनोराज्यस्मृतिषु मनोमयं मनःकल्पितं योषिदाकारादि वस्त्वस्तु नाम । तत्र बाह्यवस्तुनोऽभावाद्विषयमन्तरा ज्ञानासंभवात विषयसंपत्तये मनोमयं वस्तु किंचिदङ्गीक्रियतां नाम । किंतु जाग्रन्मानेन जाग्रति जाग्रदवस्थायां मानेन

प्रत्यक्षादिप्रमाणेन मेयस्य विषयसंबंधानुरोधेन बहिः सत्वस्याभ्युपेयतया न मनोमयता मनोमयवस्तुकल्पना नावश्यकी । विषयस्य बाह्यत्वेनैव सिद्धत्वादिति चेदित्यस्योत्तरेणान्वयः ॥ २६ ॥

शंकामंशतोऽगींकृत्य परिहरति, बाढमिति ।

बाढं माने तु मेयेन योगात्स्याद्विषयाकृतिः ।
भाष्यवार्तिककाराभ्यामयमर्थ उदीरितः ॥ २७ ॥

बाढं सत्यमेव तव वचः । माने अन्तःकरणवृत्तौ मेयेन प्रमेयविषयेणेंद्रियद्वाराऽन्तःकरणस्य योगात्संबंधाद्विषयाकृतिः विषयाणां प्रमेयाणामाकृतिराकारः स्यात् । अयमेवार्थो भाष्यवार्तिककाराभ्यां भाष्यं "सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुकारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो जना" इति लक्षणोपेतं शारीरकमीमांसाभाष्यं । वार्तिकं वृत्तिरूपेण कृतो ग्रन्थः । तत्कर्तारौ शंकरभगवत्पादसुरेश्वराचार्यौ । ताभ्यामुदीरित उक्तः । एवं चेंद्रिये विषयाकारजननं पूर्वाचार्यसम्मतं न तु स्वकपोलकल्पितमिति सूचितम् ॥ २७ ॥

तत्र भाष्यकारसम्मतिं प्रदर्शयितुं तदीयमुपदेशसहस्रीस्थश्लोकद्वयमुदाहरति, मूषेति ।

मूषासिक्तं यथा ताम्रं तन्निभं जायते तथा ।
रूपादीन् व्याप्नुवच्चित्तं तन्निभं दृश्यते ध्रुवम् ॥ २८ ॥

यथा मूषासिक्तमग्निसंपर्के द्रवीभूतं ताम्रं मूषासिक्तं सत् तन्निभं तत्सदृशाकारं जायते मूषाकारमाप्नोति, तथैव बाह्यान् रूपादीन् व्याप्नुवच्चित्तमिंद्रियद्वारा विषयान् व्याप्नुवत् संबंधमाप्नुवत् यच्चित्तं तन्निभं व्याप्तवस्तुसदृशं ध्रुवं निश्चयं दृश्यते प्रतीयते, तदिव भातीत्यर्थः ॥ २८ ॥

नन्वत्यन्तानिलसंयोगेन द्रुतस्य ताम्रस्य यत्संयोगात् काठिन्यमुपजायते तदाकाराकारितत्वं दृश्यते । मनोवृत्तेर्न तथा दृश्यद्रुतत्वं न वा विषयसंबंधे सति काठिन्यम् । तथा सति तदाकाराकारितत्वं दृष्टान्तेन कथं सिध्यतीत्याशंकां मनसि निधायातथाविधमुदाहरणमितरदाह, व्यंजक इति ।

व्यंजको वा यथाऽलोको व्यंग्यस्याकारतामियात् ।
सर्वार्थव्यंजकत्वाद्धीरर्थाकारा प्रदृश्यते ॥ २९ ॥

यथा व्यंजकोऽभिव्यक्तिजनक आलोकः कान्तिः सूर्यस्य दीपादेर्वा व्यंग्यस्याभिव्यक्तस्य घटादेराकारतामियादाप्नुयात् ; तथैव धीः सर्वार्थव्यंजकत्वादर्थाकारा प्रदृश्यते ॥ २९ ॥

एवं भाष्यकारसम्मतिं प्रदर्श्य वार्तिकाकारसम्मतिमपि दर्शयति, मातुरिति ।

मातुर्मानाभिनिष्पत्तिः निष्पन्नं मेयमेति तत् ।
मेयाभिसंगतं तच्च मेयाभत्वं प्रपद्यते ॥ ३० ॥

मातुः साधिष्ठानबुद्धिगतचिदाभासान्मानाभिनिष्पत्तिर्मानस्यान्तःकरणरूपस्योत्पत्तिर्भवति । निष्पन्नमुत्पन्नं तद्वृत्त्यात्मकमन्तःकरणं चक्षुरादिगोळकद्वारा मेयं बाह्यं प्रमेयं वस्त्वेति प्राप्नोति । तेन सह संबद्धो भवति । मेयाभिसंगतं मेयेन ज्ञेयवस्तुना सहाभिसंगतं तदन्तःकरणं मेयाभत्वं ज्ञेयवस्त्वाकारतां प्रपद्यते प्राप्नोति । तदाकाराकारितं भवति । चिदाभासोज्ज्वलितान्तःकरणवृत्तिश्चक्षुरादिगोळकद्वारा वस्तुसंबंधमेत्य तदाकारमाप्नोतीति भावः ॥ ३० ॥

एवं रूपविमर्शफलमाह, सतीति ।

सत्येवं विषयौ द्वौ स्तो घटौ मृण्मयधीमयौ ।
मृण्मयो मानमेयः स्यात्साक्षिभास्यस्तु धीमयः ॥ ३१ ॥

एवं सति प्रमेयौ विषयौ द्वौ स्तः । कौ तौ? मृण्मयधीमयौ घटौ । मृदात्मको घट एकः, मनोमयोऽन्यः । तयोर्मृण्मयो घटो मानमेयोऽन्तःकरणेन ज्ञेयः ग्राह्यः स्यात् । अन्यो धीमयो घटः साक्षिभास्यः ॥ ३१ ॥

एवं प्रदर्शितं सृष्टिद्वयं । तत्र हेयत्वाज्जीवकृतधीमयसृष्टेः बंधकृत्त्वमन्वयव्यतिरेकाभ्यां दर्शयति, अन्वयेति ।

अन्वयव्यतिरेकाभ्यां धीमयो जीवबंधकृत् ।
सत्यस्मिन् सुखदुःखेस्त स्तस्मिन्नसति न द्वयम् ॥३२॥

धीमयो मनोमय एव । "असति बाधे सर्वं वाक्यं सावधारणमिति" न्यायाज्जीवबंधकृत् जीवस्य बंधहेतुत्वमन्वयव्यतिरेकाभ्यां ज्ञायते । तावेव विवृणोति, सतीति । अस्मिन् धीमये सति सुखदुःखे स्तः; तस्मिन्नसति द्वयं सुखदुःखे न स्तः ॥ ३२ ॥

ननु मनोमय एवेति कोऽसौ निर्बंधः ? बाह्येऽप्यन्वयव्यतिरेकदर्शनात् । बाह्यानुरोधेनैव मनोमयस्य सृष्टेरित्याशंक्य बाह्येऽन्वयव्यतिरेकौ विघटति, असतीति ।

असत्यपि च बाह्यार्थे स्वप्नादौ बध्यते नरः ।
समाधिसुप्तिमूर्छासु सत्यप्यस्मिन्न बध्यते ॥ ३३ ॥

स्वप्नादौ बाह्यार्थेऽसत्यपि मरुमरीचिकादिष्विव नरो बध्यते । तत्र सुखदुःखे अनुभवति। एतेन व्यतिरेकस्य विघटनं प्रदर्शितं समाधिसुप्तिमूर्छासु समाधिः वशीकृतान्तःकरणत्वान्निवातदीपवन्निश्चला स्थितिः; सुप्तिः सुषुप्तिः, सर्वेंद्रियाणामन्तःकरणस्य च लयावस्था ; मूर्छा चित्तस्य जडीभूतावस्था ; तास्वस्मिन् बाह्यार्थे सत्यपि न बध्यते । एतेनान्वयस्य विघटनमुक्तम् । एवं च बंधस्य बाह्येनान्वयव्यतिरेकयोरसंभवान्न बाह्यस्य बंधकत्वमिति तात्पर्यम् ॥ ३३ ॥

मनोमयप्रपंचस्य बंधकारणत्वमुक्त्वाऽन्वयव्यतिरेकावुदाहरणपूर्वकं सार्धश्लोकेन स्पष्टयति, दूरेति ।

दूरदेशं गते पुत्रे जीवत्येवात्र तत्पिता ।
विप्रलंभकवाक्येन मृतं मत्वा प्ररोदिति ॥ ३४ ॥

मृतेऽपि तस्मिन् वार्तायामश्रुतायां न रोदिति ॥ ३४½॥

विप्रलंभकवाक्येन तव पुत्रो मृत इति वंचकस्य मिथ्यावाक्येन । स्पष्टमन्यत् । पुत्रस्य मृतत्वतदभावौ रोदनतदभावयोर्न कारणे, किंतु मृतत्वतद-

भावाकाराकारितवृत्ती । एवं च मानसिकसत्ताविषयोरेवकारणत्वमिति स्फुटमवगम्यते ॥ ३४८ ॥

एतावता फलितमाह, अत इति ।

**अतः सर्वस्य जीवस्य बंधकृन्मानसं जगत् ॥ ३५॥**

मानसं मनःकल्पितमेव । स्पष्टमन्यत् । अत एवोक्तं "मन एव मनुष्याणां कारणं बंधमोक्षयो"रिति ॥ ३५ ॥

विज्ञानवादनिरासः ।

एवं मानसस्येव बंधहेतुत्वे निर्णीयमाने बौद्धमतप्रवेशः स्यादित्याशंक्याह, विज्ञानेति ।

**विज्ञानवादो बाह्यार्थवैयर्थ्यात्स्यादिहेति चेत् ।**
**न हृद्याकारमाधातुं बाह्यस्यापेक्षितत्वतः ॥ ३६ ॥**

इह "सर्वस्य जीवस्य बंधकृन्मानसं जगदि"ति सिद्धान्ते बाह्यार्थवैयर्थ्यात् बाह्यविषयस्य बंधेऽनपेक्षणात् त्वदुदितं सर्वं विज्ञानवाद एव स्यात् इति चेन्न । कारणमाह । नेति । हृदि अन्तःकरणे बाह्यवस्तुन आकारमाधातुं निक्षेप्तुमंतःकरणस्य बाह्यविषयाकाराकारितत्वाय बाह्यस्य विषयस्यापेक्षितत्वतः । तेन तस्य विद्यमानताऽवश्यकीति भावः । बाह्याकारमन्तराऽन्तःकरणस्य तदाकाराकारितत्वासंभवान्न केवलविज्ञानवादिनो वयमिति पूर्वपक्षपरिहारः ।

विज्ञानवादस्त्वित्थम् । बौद्धानां मते बुद्ध एक एवाचार्यः । तस्योपदेशस्तु । "सर्वं क्षणिकं क्षणिकं, दुःखं दुःखं, स्वलक्षणं स्वलक्षणं, शून्यं शून्य"मिति । बौद्धपरिभाषायां सर्वे पदार्थाः क्षणिकाः । उत्पन्नस्य क्षणिकत्वेन द्वितीयक्षणे स्थित्यभावात् । अत एव ते क्षणा इत्युच्यन्ते सर्वो हि संसारो दुःखात्मक इति तद्धेयत्वमिच्छन्ति सर्वे दर्शनप्रदर्शकाः । मुमुक्षूणां तन्निवृत्त्युपाये प्रवृत्तेरुपपत्तेः । सर्वे पदार्थाः स्वीयेनासाधारणरूपेण लक्ष्यन्ते । न तेषां साधारणं लक्षणम् । तेषां सदृशं वस्त्वन्यदस्तीत्यस्यानिर्वचनीयत्वात् । एवं सति शून्यरूपा इति भावनीयाः ॥

एकस्याप्युपदेशस्योपदेश्यानां बुद्धिभेदादर्थभेदकल्पनाभेदकृतेन भावनाभेदेन ते चतुर्विधाः। माध्यमिकयोगाचारसौत्रान्तिकवैभाषिका इति। ते यथाक्रमं सर्वशून्यत्वबाह्यशून्यत्वबाह्यार्थानुमेयत्वबाह्यार्थप्रत्यक्षत्ववादानवलंबन्ते। तत्र बाह्यशून्यत्ववादिनो योगाचारा विज्ञानैकस्कन्धवादिनः। स्कन्धशब्दस्तु पदार्थपरः॥

तेषां मते वेदनाऽङ्गीक्रियते। अन्यथा जगदान्ध्यप्रसक्तेः। वेदनं चात्मा। बाह्यं वस्त्ववास्तवम्। नान्योऽनुभवादनुभाव्योऽनुभविताऽनुभवनं वा। विज्ञानादन्यत्सर्वमवास्तवमेव। बुद्धिकल्पितेन रूपेणान्तःस्थमेव नीलाद्याकारत्वेन प्रमेयं; प्रमेयप्रकाशात्मत्वेन प्रमाणफलम्; प्रमेयप्रकाशनशक्त्यात्मतया प्रमाणम्; शक्त्याश्रयत्वाकारेण प्रमातेति; प्रमाणप्रमेयादिभेदकल्पनेन सर्वो हि व्यवहारः। बाह्यार्थस्य बुद्ध्यारोपामन्तरा प्रमाणादिव्यवहारायोगाद्बुद्धिस्थाकार एव मेयं न तु बाह्यं वस्तु॥

विज्ञानातिरिक्तो बाह्यार्थो नास्ति। यदि विद्यते, उत्पन्नोऽनुत्पन्नोऽतीतो वा? नाद्यः; उत्पन्नस्य क्षणिकत्वेन तदुत्तरक्षणेऽविद्यमानत्वात्; उत्पत्तिक्षणे ज्ञानाविषयत्वात्; कारणस्य कार्यनियतपूर्ववृत्तित्वनियमात्। न द्वितीयः; अविद्यमानस्यार्थस्य ज्ञानजनकत्वासहत्वात्; नापि चरमः; अतीतस्यापि पदार्थस्याविद्यमानस्य ज्ञानजनकत्वसंबंधत्वादिति चेदिन्द्रियाणामपि ज्ञानसाधनत्वेन ज्ञानजनकत्वात्॥

यदि बाह्यार्थो ज्ञानविषयो भवति, किमवयविभूतो घटादिः उतैकदेशभूतः परमाणुः? न द्वितीयः; एकदेशभूतपरमाणुदर्शने घटोऽयं दृष्ट इति न कोऽपि जानाति। नाद्यः; कृत्स्नस्य घटादेरिन्द्रियसंबंधाभावात्; भिन्नत्वाभिन्नत्वविवक्षाशक्यत्वाच्च। घटादिः परमाणुभ्यो भिन्नोऽभिन्नो वा? यदि भिन्नोऽत्यन्तवैलक्षण्यम्; यद्यभिन्नो घटादेः परमाणुमात्रतया घटादिस्थूलरूपेणावभासनासंभवः; अन्याभासोऽन्यगोचरो न भवति। एवं सान्तरेषु वृक्षेषु वनैकप्रत्ययवदेष स्थूलघटप्रत्ययो भ्रान्त एव; परमाणोरिन्द्रियागोचरत्वात्। यदि तस्येन्द्रियगोचरत्वं तस्य निरंशत्वव्याघातः। निरंशस्य परमाणोर्दिशां षट्केन सह युगपत्संबंधो दुस्साधः। यदि भवति तस्य निरंशत्वव्याकोपः॥

एवं जात्यादीनामपि बोध्यम् । जातिः कथं व्यक्तिषु विद्यते? कार्त्स्न्येनो-तैकदेशेन । नाद्यः ; यदि जातिः कृत्स्नतयैकस्मिन् घटे विद्यते तदा घटान्तरे तस्या अनुपलब्धिः । न द्वितीयः ; जातेर्निरवयत्वात् ॥

ननु जायमानस्य ज्ञानस्य साधारणात्मत्वात् बाह्यविषयसारूप्यरूपविशेष-संबंधमन्तरा घटपटादिविविधवस्तुज्ञानस्यासंभवात् ज्ञानस्य विषयसारूप्यमवश्य-मङ्गीकर्तव्यमिति चेन्न । ज्ञानगतविशेषस्यैव ज्ञानेन विषयीकरणान्न बाह्यार्थसिद्धिः; मानाभावात् । कल्पनागौरवाच्च । विज्ञानविषययोरेवमभेदोऽनिवार्य एव ॥

विज्ञानविषययोर्भेदे सति, तयोर्नियतसंबद्धयोर्लोकेऽनुभूयमानो नियतसंबंधो भेदपक्षे नोपपद्यते । एककालावच्छेदेन भासमानयोर्नीलतद्धियोर्विषयविज्ञानयोर्निय-मेन सहोपलब्धिर्लक्ष्यते लोके । तयोरन्यतरानुपलंभे कस्याप्युपलब्धेरभावात् । ययोर्नियतसहोपलब्धिस्तयोस्तादात्म्यसिद्धिः । यथा मृद्घटयोः । तथा विषयविज्ञा-नयोरपि । तयोर्भासमानो भेदो भ्रान्तिकल्पितः । एकस्मिंश्चंद्रे द्वितीयचंद्रस्य दर्शनमिव । "अतैमिरिकचक्षुषा यत्न दृश्यते तद्धि द्वितीयचंद्रस्यासत्वम्" । तस्माद्बाह्यार्थमवास्तवमिति सिद्धम् ॥

जाग्रति ये बुद्धिगोचरा घटपटादिप्रत्यया विनैव बाह्यार्थेन ज्ञेयज्ञातृस्वरूपा भवन्ति; यथा स्वप्ने । अविद्यमानानां मरीच्युदकगंधर्वनगरादीनां स्वप्ने बुद्धि-गोचराः प्रत्ययाः प्रतिदिनमनुभूयन्त एव ॥

वस्तुनो ज्ञानस्वरूपमाकारविधुरम् । न ज्ञानाकारम् । न ज्ञेयाकारम् । भ्रान्तिकृतविपर्यासवशात् ज्ञानं ज्ञातृज्ञानज्ञेयरूपेण त्रिविधमिव प्रतीयते । बाह्यार्थ-स्याभावेऽपि विविधाकारवैचित्र्ये वासनावैचित्र्यमेव कारणम् । अनादौ संसारे मिथ्याभूतवासनानामन्योन्यकार्यकारणभेदेन ज्ञातृज्ञानाकारभेदः संपद्यते । यथा बीजवासनया पुष्पादेर्नीलरक्तिमादिभेदः । अनादिसन्तानान्तर्गतपूर्वज्ञानमेव वासना ॥

एवमक्षोदक्षमो बाह्यार्थः सर्वः शून्य एव । अनादिवासनावशादनेकाकारेण बुद्धिरेवावभासते । एवं बौद्धदेशिकोपदेशबलादखिलज्ञातृज्ञेयवासनानामुच्छेदे विग-लितविषयाकारविशुद्धविज्ञानोदय उत्पद्यत इत्ययमेव महोदयः इति ॥

प्रौढ्या वैयर्थ्यमंगीकृत्यापि बाह्यसत्त्वं समर्थयति ।

**वैयर्थ्यमस्तु वा बाह्यं न वारयितुमीश्महे ।**
**प्रयोजनमपेक्षन्ते न मानानीति हि स्थितिः ॥ ३७ ॥**

बाह्यस्य वैयर्थ्यमस्तु वा । तथाऽपि बाह्यं वारयितुं नेश्महे । बाह्यस्य वारयितुमशक्यत्वात्तदभ्युपगच्छामः । न तु भवानिवापलपामः । कुतस्तद्वारणमशक्यमित्यत आह, प्रयोजनमिति । मानानि प्रमाणानि प्रयोजनं फलं नापेक्षन्ते, इति स्थितिर्हि । चक्षुरादीन्द्रियाणि स्वप्रयोजनवद्वस्तुज्ञानं यथा जनयन्ति तथा स्वप्रयोजनशून्यवस्तुज्ञानमपि जनयन्तीति लोकानुभवः । एवं च निष्प्रयोजनस्यापि मानसिद्धत्वेन प्रमितत्वात् प्रमितपदार्थफलस्यापकर्तुं भवतामिव नास्माकं साहसमिति भावः ॥ ३७ ॥

ईशसृष्टिर्न ज्ञानबाधकं किन्तु साधकम् ।

मानसप्रपंचस्यैव बंधहेतुत्वे सिद्धान्तिते, योगी प्रत्यवतिष्ठते, बंध इति ।

**बंधश्चेन्मानसद्वैतं तन्निरोधेन शाम्यति ।**
**अभ्यसेद्योगमेवातो ब्रह्मज्ञानेन किं वद ॥ ३८ ॥**

मानसद्वैतं मनःकल्पितं कामनिमित्तं द्वैतं जीवस्य बंधः बंधहेतुरित्यभ्युपगम्यते चेत् तन्निरोधेन तस्य मनसो निरोधेन नियमनेन शाम्यति नश्यति । निरुद्धस्य तस्य मनोमयप्रपंचोत्पादकत्वाभावात्तदभावे बंध एव न भवति । अतस्तन्निरोधोपायमाश्रयेदित्याह, अभ्यसेदिति । योगमेव चित्तवृत्तिनिरोधमेवाभ्यसेत् । "योगश्चित्तवृत्तिनिरोध" इति पातंजलसूत्रम् । "यथा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह। बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् । तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् । अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ । (कठ. २. ६. १०, ११.) इति श्रुतिः । एवं श्रुतिसूत्रोपदिष्टयोगाभ्यासेन बंधविमोकरूपस्य मोक्षस्य सिद्ध्या ब्रह्मज्ञानेन किं वद ? तत्प्रयोजनस्यान्यथा सिद्धत्वान्न किमपि प्रयोजनमिति भावः ॥ ३८ ॥

योगेन चित्तवृत्तिनिरोधेन कालिकबंधस्यैव निवृत्तिः नात्यन्तिकी तन्निवृत्तिः; सा तु ब्रह्मज्ञानेनैव साध्या; आत्यन्तिकबंधविमोक एव मोक्ष इत्यस्माकमभिमतम्; ततो योगेन ब्रह्मज्ञानं नान्यथा सिद्धमित्याह, तात्कालिकेति ।

तात्कालिकद्वैतशांतावप्यागामिजनिक्षयः ।
ब्रह्मज्ञानं विना न स्यादिति वेदान्तडिंडिमः ॥ ३९ ॥

तात्कालिकद्वैतशांतौ यावत्कालं चित्तवृत्तिनिरोधस्तावत्कालं द्वैतनिवृत्तिरूपा मनःशान्तिरित्यर्थः, आगामिजनिक्षयः । आगामि योगविरामोत्तरकाले उत्पद्यमानो द्वैतरूपो यो बंधः तस्य क्षयो नाशः, "ज्ञानादेव तु कैवल्यं" "नान्यः पंथा विद्यतेऽयनाये" (श्वे. ३. ८.) त्यादिश्रुतयोऽन्वयव्यतिरेकाभ्यामत्यन्ताबाधितनिःश्रेयसप्राप्तिहेतुत्वेन ब्रह्मज्ञानमेव मुक्तकंठमुपदिशन्तीति भावः ॥ ३९. ॥

कूटस्थचैतन्यविवेकेन मानसिकप्रपंचस्य निवृत्तिः सिध्यतु; तथाप्यद्वितीयब्रह्मज्ञानं कथं सिध्यति? भवदुक्तप्रणाळिकयेशसृष्टस्य बाह्यप्रपंचस्यानिवारणात् । तेन ब्रह्मणः सद्वयत्वाव्याघातात् । बाह्यद्वैतनिवारणमन्तरा मोक्षहेतुभूताद्वितीयब्रह्मज्ञानं नोदेतीति बाढं न वारयितुमीश्महे" (४. ३७.) इति साहसेन प्रतिज्ञायत इत्याशंकां परिहरति, अनिवृत्तइति ।

अनिवृत्तेऽपीशसृष्टे द्वैते तस्य मृषात्मताम् ।
बुद्ध्वा ब्रह्माद्वयं बोद्धुं शक्यं वस्त्वैक्यवादिनः ॥ ४० ॥

ईशसृष्टे मायाप्रतिबिंबितेश्वरकल्पिते नामरूपात्मके द्वैते प्रपंचेऽनिवृत्तेऽपि तस्य जगतो मृषात्मतां मिथ्यास्वरूपतां बुद्ध्वा ज्ञात्वा वस्त्वैक्यवादिनः सत्पदार्थस्यैकत्वमंगीकुर्वतोऽद्वयं ब्रह्म बोद्धुं शक्यं भवति ॥ ४० ॥

ननु द्वैतमृषात्मज्ञानं नाद्वैतज्ञानप्रयोजकं, अपि तु तन्निवारणमेवेत्यभिनिविष्टं प्रत्याह, प्रलय इति ।

प्रलये तन्निवृत्तौ तु गुरुशास्त्राद्यभावतः ।
विरोधिद्वैतभावेपि न शक्यं बोद्धुमद्वयम् ॥ ४१ ॥

प्रलये कल्पान्ते यत्र सर्वो द्वैतः प्रपंचो ब्रह्मणि विलीयते तन्निवृत्तौ तस्य द्वैतस्य विलये सति तदानीं विरोधिद्वैताभावेऽपि गुरुशास्त्राद्यभावतोऽद्वयं बोद्धुं न शक्यम्। श्रवणाद्यवकाशाभावात् "सर्वं खल्विदं ब्रह्मेति" ज्ञानोत्पत्तेरनवकाशः। अतः प्रपंचो नाद्वयज्ञानप्रतिबंधकः, अपि तु तत्सत्यत्वज्ञानं। तस्मिन् प्रतिबंधके मृषात्वज्ञानेनापनोदिते प्रतिबंधकाभावात् प्रपंचस्य सत्वेऽप्यद्वितीयब्रह्मज्ञानं सुसाधमिति भावः ॥ ४१ ॥

ऐश्वरं द्वैतं न निवारयाम इति कोऽसौ निर्बंधः? अस्माकमिव भवतोऽपि द्वेष औदासीन्यं वास्त्वित्याशंकां समाधत्ते, अबाधकमिति।

**अबाधकं साधकं च द्वैतमीश्वरनिर्मितम्।**
**अपनेतुमशक्यं चेत्यास्तां तद्द्विष्यते कुतः ॥ ४२ ॥**

ईश्वरनिर्मितं द्वैतमद्वैतज्ञानं प्रत्यबाधकं न प्रतिबंधकं। अतो न द्वेषः कार्यः। तर्ह्यौदासीन्यमस्त्वित्यत आह, साधकमिति। ईश्वरसृष्टद्वैताभावे गुरुशास्त्रादेरभावप्रसंगेन तदुपदेशासंभवात् ब्रह्मज्ञानं नोदीयादेव। अतो ब्रह्मज्ञानोपायभूतगुरुशास्त्रादिसंपादकत्वेन साधकं च। नातस्तत्रौदासीन्यमपि। किं च तदपनयनप्रयत्नो निष्प्रयोजन एवेत्याशयेनाह, अपनेतुमिति। अपि चापनेतुमशक्यमनिवार्यम्। भवता धार्ष्ट्येन द्वेषे क्रियमाणेऽपि न तेन किमपि साध्यम्। अतो निष्प्रयोजनो द्वेषो न कार्य इति सुहृद्भूत्वा वक्ति। आस्तां प्रपंचोऽस्तु नाम। कुतः तत् द्विष्यते? अनिवार्ये वस्तुनि निष्प्रयोजनो द्वेषो भवता किमिति क्रियत इति भावः ॥ ४२ ॥

जीवद्वैतस्य द्विप्रकारकत्वविचारः।

यद्यपि जीवसृष्टिर्मोक्षसत्वेन मनोनिरोधेन सद्य एव वारयितुं शक्या तथाऽपि ब्रह्मज्ञानसाधकतयांऽशत उपादेयेत्याशयेन तद्विभागपूर्वकमुपादेयांशं दर्शयति, जीवेति।

**जीवद्वैतं तु शास्त्रीयमशास्त्रीयमिति द्विधा।**
**उपाददीत शास्त्रीयमातत्त्वस्यावबोधनात् ॥ ४३ ॥**

जीवद्वैतं जीवसृष्टं मानसिकं द्वैतं शास्त्रीयं ब्रह्मज्ञानोपकारकत्वेन शास्त्रबोधितम् । अशास्त्रीयं तद्भिन्नम् । तच्च निषिद्धम् । इति द्विधा । उपादानकालावधिमाह, आतत्वस्येति । शास्त्रीयं द्वैतं तत्त्वस्य परब्रह्मणः आ अवबोधनात् अवगतिपर्यन्तमुपाददीत स्वीक्रियेत ॥ ४३ ॥

ब्रह्मावबोधनसाधकं शास्त्रीयं द्वैतं विवृणोति, आत्मेति ।

**आत्मब्रह्मविचाराख्यं शास्त्रीयं मानसं जगत् ।**
**बुद्धे तत्त्वे तच्च हेयमिति श्रुत्यनुशासनम् ॥ ४४ ॥**

आत्मब्रह्मविचाराख्यं प्रत्यगात्मपरब्रह्मणोः स्वरूपविचारः श्रवणादिरूपं तदाख्यं शास्त्रीयं शास्त्रसम्मतं मानसं जगत् । उपादानकालावधि प्रमाणयति । बुद्धे इति । तत्त्वे प्रत्यग्ब्रह्मैक्ये बुद्धे ज्ञाते सति, तच्च शास्त्रीयं द्वैतमपि हेयमिति श्रुत्यनुशासनम् श्रुतीनां राज्ञामिवानुलंघनीयाज्ञात्वात् । "नन्वासुप्तेरामृतेः कालं नयेद्वेदान्तचिन्त"येति वाक्येन मानसिकं द्वैतमामरणमहेयमिति चेन्न । अस्य वाक्यस्यानुत्पन्नज्ञानविषयत्वात् । अत एवोक्तं बुद्धे तत्त्वे इति । तावत्पर्यन्तं तस्योपादेयतां श्रुतिरप्यङ्गीकरोतीति भावः ॥ ४४ ॥

तत्त्वावबोधोत्तरं माननस्य हेयत्वप्रतिपादिकां क्रमशो अमृतनाद ब्रह्मबिन्दु-१८ । बृ. ४. ४. २१. मुंडक २. २. ५. श्रुतीरुदाहरति शास्त्राणीति।

**शास्त्राण्यधीत्य मेधावी अभ्यस्य च पुनः पुनः ।**
**परमं ब्रह्म विज्ञाय उल्कावत्तान्यथोत्सृजेत् ॥ ४५ ॥**

**ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः ।**
**पलालमिव धान्यार्थी त्यजेत् ग्रन्थमशेषतः ॥ ४६ ॥**

**तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।**
**नानुध्यायेद्बहून् शब्दान् वाचो विग्लापनं हि तत् ॥ ४७ ॥**

तमेवैकं विजानीथ ह्यन्या वाचो विमुंचथ
यच्छेद्वाङ्मनसी प्राज्ञः इत्याद्याः श्रुतयः स्फुटाः ॥ ४८ ॥

मेधावी बुद्धिमान् शास्त्राणि वेदान्तशास्त्राणि अभ्यस्य गुरुसन्निधौ संप्रदायसिद्धं श्रवणं कृत्वा पुनः पुनः दृढज्ञानोत्पादनपर्यन्तमभ्यस्य मननं कृत्वा परमं ब्रह्म विज्ञाय निदिध्यासनेन साक्षात्कृत्य अथ तदनन्तरं तानि शास्त्राण्यन्न-पचनान्तरमुल्कावदर्धदग्धेंधनमिवोत्सृजेत् विसर्जयेत् ॥ ४५ ॥

यथा धान्यार्थी तत्संग्रहानन्तरं पलालमिव तुषमिव ज्ञानविज्ञानतत्परः ज्ञानं शास्त्रजन्यं ज्ञानं विज्ञानमनुभवजन्यं ज्ञानं तत्परं ग्रन्थं वेदान्तशास्त्रमभ्यस्य तदनन्तरं ग्रंथमशेषतस्त्यजेत् ॥ ४६ ॥

ब्राह्मणः ब्रह्मणोऽयं ब्रह्मणि निरतो मुमुक्षुस्तं प्रत्यगात्मानं विज्ञाय विस्तरेण ज्ञात्वा प्रज्ञां चित्तैकाग्र्यम् कुर्वीत संपादयेत्। बहून् शब्दानन्यानप्युपनिषद्भागान् महावाक्योपपादकान् नानुध्यायेत्। तद्ध्यानं वाचो वागिंद्रियस्य विग्लापनं श्रमहेतुः। हि निश्चयार्थे ॥ ४७ ॥

एकमद्वितीयं तमौपनिषदं पुरुषं विजानीथ अवेत। अन्या अतद्विषयिका वाचो महावाक्योपपादकानन्यानप्युपनिषद्भागान् विमुंचथ। "तमेवैकं जानथ आत्मानमन्या वाचो विमुंचथ" (मुं॰ २॰ २॰ ५॰) इति श्रुतेः। एवंजातीयकाः श्रुतयो बह्व्यः संतीत्याह। यच्छेदिति। इत्याद्या एवं प्रकारकाः श्रुतयः स्फुटाः स्पष्टं वर्तन्ते। श्रुत्यर्थस्तु। प्राज्ञो वाक् तदुपलक्षितानींद्रियाणि मनसि यच्छेत्। छांदसोऽत्र दीर्घः। तन्मनो ज्ञान आत्मनि ज्ञानरूपे यच्छेत् विलापयेत्। वाङ्मनसि दर्शनाच्छब्दादिभ्य इत्यप्यत्र विवक्षितम् ॥ ४८ ॥

अत्रेदं बोध्यम्। एतैः श्लोकैर्नैष्कर्म्यसिद्धिहेतुभूतः सर्वकर्मसंन्यासोऽभि-हितो भवति। ननु सर्वकर्मसन्यासः शास्त्रानभिमत एव। कर्मणोऽपि शास्त्रचोदि-तत्वात्। "अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतत्वमश्नुते" (ईश॰ ११॰) इति विद्याऽविद्ययोर्मोक्षोपकारकत्वस्य श्रुतत्वात्। "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" "यावज्जीवमग्निहोत्रं जुहोति" "तं यज्ञपात्रैर्दहन्ति" इत्याद्यनेकैर्मन्त्र-

वर्णैरादेहपातं नियतकर्तव्यतया कर्म विधीयत इति चेन्न । तस्याविद्याविषयत्वात् । गृहस्थाश्रमप्राप्तं सर्वं पांक्तादिलक्षणं कर्म । "जाया मे स्यादथ प्रजायेय........ एतवान् वै कामः" (बृ. १. ४. १७.) इति जायापुत्रवित्तादिसाध्यसाधननिबद्धो रामप्राप्तो गृहस्थाश्रमः । एवं सर्वं पांक्तं कर्म काम्यमेव । तथा च श्रुतिः । "उभे ह्येते एषणे एव" (बृ. ४. ४. २२.) । एषणा च रागतः प्राप्ता । रागस्त्वज्ञानमूलकः । आप्तकामस्य ज्ञानिनोऽविद्याया अनुपपत्तेः । अन्यथा शास्त्रस्य विरुद्धार्थबोधकत्वापत्तिः स्यात् । विद्याविद्ययोर्युगपदेकस्यैव पुरुषस्याविषयत्वाच्च । "दूरमेते विपरीते विषूची अविद्या या च विद्या" (कठ. १. २. ४.) त्यादिश्रुतिभिर्विद्याविद्ययोर्युगपदेकत्रानवस्थानमेवाभिधीयते । "तपसा ब्रह्म विजिज्ञासस्व" (तै. ३. २.) ति ब्रह्मज्ञानावाप्तये श्रवणाद्यात्मकं तपः साधनं कर्मेतरं मार्गमुपदिष्टं च । एवं कर्मणो ज्ञानस्य प्रतिबंधकत्वं च सूच्यते । तर्हि चोदनाशास्त्रं सर्वं निरर्थकमेव स्यादिति चेन्न । न हि कमपि नियुङ्क्ते शास्त्रं प्रवृत्तिं प्रति । किं तु सहजरागप्राप्तां तामनुसरतोऽविदुषः प्रयोजनाय विधिनिषेधवाक्यैर्व्यवस्थां कल्पयति निरर्थकमेव भवतु नाम विदुषः सर्वं चोदनाशास्त्रम् । न तथा भवत्याध्यात्मिकमौपनिषदं शास्त्रम् । बाढम् तदपि त्याज्यमेवः अवगततत्त्वार्थस्य तस्य वैयर्थ्यात् । निस्संशयज्ञानोत्पादनावधानि गुरुशास्त्रादीनि । किं तैस्साक्षात्कृतात्मतत्त्वस्य? अतिक्रान्ततमस्कस्य किं दीपेनेति ॥ ४८ ॥

ननु शास्त्रीयद्वैतस्य तत्त्वबोधपर्यन्तमुपादेयत्वोक्त्याऽन्यस्य ततः पूर्वमेव हेयतोक्तप्राया । किमित्येवंव्यवस्थया? तस्यापि तावत्पर्यन्तमुपादानमेवास्तु बाधकाभावात्, इत्याशंकां मनसि निधाय पूर्वमेव हेयत्वावश्यकतां दर्शयितुं प्रथममशास्त्रीयं विभजति ।

**अशास्त्रीयमपि द्वैतं तीव्रं मंदमिति द्विधा ।**
**कामक्रोधादिकं तीव्रं मनोराज्यं तथेतरत ॥ ४९ ॥**

स्पष्टोऽ : ॥ ४९ ॥

तयोः प्राग्घेयत्वावश्यकतां दर्शयति, उभयमिति ।

उभयं तत्त्वबोधात् प्राङ्निवार्यं बोधसिद्धये ।
शमः समाहितत्वं च साधनेषु श्रुतं यतः ॥ ५० ॥

स्पष्टः पूर्वार्धः । तत्र कारणमाह । यतः शमः बाह्येन्द्रियनिग्रहः समाहितत्वं च चित्तैकाग्र्यम् च तत्त्वज्ञानस्य साधनेषु श्रुतम् । "शान्तो दान्त उपरतस्तितिक्षुः समाहितः श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्येदि" (बृ. ४. ४. २३.) ति श्रुतेः । साधनचतुष्टयसंपत्त्यनन्तरमेव ब्रह्मजिज्ञासा कर्तव्या । "अथातो ब्रह्मजिज्ञासे" (सू. १. १. १.) ति सूत्रबलात् । नित्यानित्यवस्तुविवेकः, इहामुत्रार्थफलभोगविरागः, शमादिसंपत्तिः, मुमुक्षुतेति साधनचतुष्टयम् । एवं ब्रह्मजिज्ञासायाः प्रागेवावश्यकं संपादयितव्ये शमादिषट्के, एकदेशभूतयोः शमसमाध्योर्विरोधिभूतमशास्त्रीयं द्वैतं शमादितः पूर्वं हेयम् । तत्सत्त्वे शमादेरनुदयात् । एवं च ब्रह्मबोधपर्यन्तमशास्त्रीयद्वैतस्योपादानं न संभवतीति प्रागेव हेयत्वमुक्तम् ॥ ५० ॥

साधनचतुष्टयसंपत्तयेऽशास्त्रीयद्वैतस्य बोधात् पूर्वं हेयत्वप्रतिपादनेऽपि बोधोत्तरं हेयत्वं न प्रतिपादितं स्यात् । अतस्तदानीं तदुपादेयतायां भ्रमः स्यादिति तन्निवारणाय तदाऽपि हेयत्वं प्रतिपादयति, बोधेति ।

बोधादूर्ध्वं च तद्धेयं जीवन्मुक्तिप्रसिद्धये ।
कामादिक्लेशबंधेन युक्तस्य न हि मुक्तता ॥ ५१ ॥

बोधादूर्ध्वं तत्त्वज्ञानोत्पत्त्यनन्तरमपि जीवन्मुक्तिप्रसिद्धये जीवन्मुक्तेः प्रकर्षेण सिद्धये तदशास्त्रीयं द्वैतं हेयमेव । तत्रोपपत्तिमाह, कामेति । कामादिक्लेशबंधेन कामादय एव क्लेशाः तद्रूपो यो बंधः तेन युक्तस्य मुक्तता न संभवति ॥ ५१ ॥

ननु जीवन्मुक्तिः किमित्यभ्युपेया ? यत्प्रसिद्धये बोधादूर्ध्वमशास्त्रीयद्वैतस्य हेयत्वं प्रतिपाद्यते । पुरुषस्य जन्मराहित्येन कृतार्थतासंभवाद्विदेहमुक्त्यैवालमित्याशंक्य प्रतिबंद्या समाधत्ते, जीवन्मुक्तिरिति ।

जीवन्मुक्तिरियं माभूज्जन्माभावे त्वहं कृती ।
तर्हि जन्माऽपि तेऽस्त्वेव स्वर्गमात्रात्कृती भवान् ॥ ५२ ॥

इयं सर्वकामोन्मूलननिमित्ता जीवन्मुक्तिरस्माकं माभूत् । अहं तु जन्माभावे कृती कृतकृत्यः । विदेहमुक्त्यैवालमिति वदन्तमैहिकभोगभंगभिया विदेहकैवल्यावाप्तिव्याजेन जीवन्मुक्तिमपलपन्तं पूर्वपक्षिणं प्रतिबंद्या समाधत्ते । यद्यैहिकत्यागभयाज्जीवन्मुक्तिं त्यजसि तर्हि ते जन्माऽप्यस्तु पुनर्जन्मापि त्वयाङ्गीकार्यं स्यात् । तदभावे ह्यामुष्मिकभोगत्यागभयस्यापरिहार्यतया स्वर्गादिमात्राद्भवान् कृतीति मत्वा विदेहमुक्तिमपि त्यजत्वित्याह, स्वर्गेति । भवान् स्वर्गमात्रात् स्वर्गसुखानुभवमात्रेण कृती भवतु । कामोपस्थापितकर्माचरणफलभूतं स्वर्गमवाप्य यावत्कालमुषित्वा फलभोगानन्तरं पुनः कर्मशेषफलभोगाय जन्मस्वीकरोतीति तावन्मात्रत्वेन कृतकृत्यो भवति । रागस्यानिवृत्तत्वान्न तस्य निःश्रेयसावाप्तिरिति भावः । "ब्रह्मलोकाभिवाञ्छायां सम्यक्सत्यां निरुध्यताम् । विचारयेद्य आत्मानं न तु साक्षात्करोत्ययं" (९. ५१.) मित्यन्यत्रोक्तम् ॥ ५२ ॥

तव प्रतिबंदी न युक्तेति पूर्वपक्षी शंकते, क्षयेति ।

क्षयातिशयदोषेण स्वर्गो हेयो यदा तदा ।
स्वयं दोषतमात्माऽयं कामादिः किं न हीयते ॥ ५३ ॥

अभ्युदयानन्दहेतुः स्वर्गोऽपि क्षयातिशयदोषेण नाशस्य तारतम्यदोषेण हेयः त्याज्यः; अतः स्वर्गमात्रात् 'कृतार्थता न । सिद्धान्ती तां शंकामपि प्रतिबन्द्यैवोत्तरयति, यदेति स्वर्गस्य हेयतया न तेन कृतित्वमिति यदाभ्युपेयते तदा दोषतमात्मा सकलपुरुषार्थविध्वंसकत्वेनात्यन्तदोषस्वरूपः कामादिः किं न हीयते ? अत्यन्तहेयमेवेतिभावः । कामकर्मफलभूतस्य स्वर्गसुखस्य क्षयित्वेन हेयत्वेनाङ्गीकारे तत्कारणभूतस्य कामादेरपि क्षयित्वात्स्वयं सकलपुरुषार्थविघातुकत्वेनातिदुष्टस्वरूपत्वादयं कामादिः किं न हीयते ? उभयोरपि क्षयित्वाविशेषेण स्वर्गवत्कामादिरपि हेयः । सकलपुरुषार्थविघातुकत्वरूपदोषान्तरसद्भावात्सुतरां त्याज्य इति तात्पर्यम् ॥ ५३ ॥

ननु निष्कामकर्माचरणेन शुद्धचित्तस्यैव जिज्ञासोदयात् परंपरया निःश्रेयससाधनचित्तशुद्धिसंपादनार्थमामुष्मिकफलकामना सर्वथा त्याज्या। एवं च तत्र वैराग्यमेव परंपरया निःश्रेयससाधनतया तस्यैव हेयत्वमंगीकार्यम्। ऐहिकफलकामनायाः परंपरानिःश्रेयससाधनामुष्मिकवैराग्याविरोधित्वात्तत्कामना किमिति त्याज्या? साधनचतुष्टयान्तर्गतं वैराग्यममुत्र फलभोगविराग एव। नैहिकफलभोगविरागः, तस्योक्तकारणपरंपरानन्तःपातित्वात्। इत्याशंक्यैहिकफलभोगविरागस्यापि साधनचतुष्टयान्तःपातित्वं प्रतिबन्धकाभावविधयेत्याशयेनाह, तत्त्वमिति।

**तत्त्वं बुद्ध्वापि कामादीन्निःशेषं न जहासि चेत्।**
**यथेष्टाचरणं ते स्यात् कर्मशास्त्रातिलंघिनः॥ ५४॥**

तत्त्वं बुद्ध्वापि कामादीन् निश्शेषं न जहासि चेत् ऐहिकफलकामनां निःशेषं न त्यजसि चेत्, कर्मशास्त्रातिलंघिनः कर्म अधिकृत्य कृतं यच्छास्त्रं तस्य मर्यादामतिक्रम्योत्पत्त इति हेतुगर्भविशेषणं, ते यथेष्टाचरणमैहिकभोगप्रयोजकनिषिद्धकर्माचरणमपि स्यात् प्रसज्येत। एवं च तत्फलभूतपापेन साक्षात्कारः प्रतिबद्ध एव स्यात्। अत एव वक्ष्यति वैराग्यस्य परिपाकाभावो बोधे सत्यपि तस्य पूर्णतां न संपादयतीति। पूर्णबोधस्यैव मोक्षहेतुत्वमिति। वैराग्यतारतम्यमस्तीति च। तत्र कर्मशास्त्रातिलंघेन इत्युक्त्या तत्त्वं बुद्ध्वापीत्यत्रोपात्तो बोधो वस्तुतो न बोधः। किं तु बुद्धत्वाभिमान एव। यथेष्टाचरणापादनमपि कामाद्यधीनाचरणापादनपरमेव; न तु निष्कामाचरणपरं। अत एव ब्रह्मसाक्षात्कारवतः कर्मशास्त्रानपेक्षमुक्तम्। अन्यत्र "निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेध" इति सूचितम्। अनेन तस्य विधिनिषेधापेक्षत्वमुक्तं; न तु तदुलंघनम्। एवं सति तत्त्वबोधानन्तरं गृहस्थाश्रमः समग्रतस्त्याज्य एव भवतिः ज्ञानकर्मणोरत्यन्तविरोधात्। शरीरधारणार्थं भिक्षाटनादेर्नियमेन तुरीयाश्रमिणोऽपि विहितत्वात्तस्यापि नियमाभावाभाव एव। भिक्षाटनादेः कायक्लेशपरिभवाद्यनिष्टहेतोरेषणात्रयपरित्यागानन्तरमपि वरं स्वगृह एव निवासः इति चेन्न; तस्य कामप्रयुक्तत्वात्। शरीरधारणमात्रमिच्छतोऽपि स्वगृहनिवासः कामप्रयुक्त एव। स्वगृहाभिमानदूषितश्च। स्त्रीविशेषविशिष्टमेव गृहमित्येषणात्रयपरित्यागः स्वगृह-

निवासश्चेति परस्परं विरुद्ध्येत । अशनाच्छादनेच्छामात्रस्यापि कामप्रयुक्तत्वात् सम्यक् ज्ञानप्रतिबंधकमेव स भवति ॥ ५४ ॥

ननु तत्त्वविदो यथेष्टाचरणं यद्यनुमन्यते तर्ह्यैहिकफलकामनाप्यनुमता स्यादिति नैषाऽपादनयोग्या । भवतोऽप्यभिमतत्वादित्याशंक्य तत्र सुरेश्वराचार्यवचनमाचष्टे, बुद्धेति ।

**बुद्धाद्वैतस्वतत्त्वस्य यथेष्टाचरणं यदि ।**
**शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे ॥ ५५ ॥**

बुद्धाद्वैतस्वतत्त्वस्य बुद्धमद्वैतस्य स्वतत्त्वं निजस्वरूपं येन तस्य यथेष्टाचरणं स्वेच्छावृत्तिर्यद्यङ्गीक्रियते तदा शुनां कुक्कुराणां तत्त्वदृशां ज्ञानिनां चाशुचिभक्षणे को भेदः न कोऽपि । "आचारहीनं न पुनन्ति वेदा" इति भावः ॥ ५५ ॥

विशेषाभावे इष्टापत्तिरिति वदन्तं प्रति सोपहासमुत्तरमाह, बोधादिति ।

**बोधात्पुरा मनोदोषमात्रात्क्लिश्यस्यथाधुना ।**
**अशेषलोकनिंदा चेत्यहो ते बोधवैभवम् ॥ ५६ ॥**

बोधात्पुरा तवाभिमतज्ञानोत्पत्तेः पूर्वं मनोदोषमात्रात् मनसः कामक्रोधादयो ये दोषास्त मात्रेणैव हेतुना क्लिश्यसि । अधुना तादृशज्ञानोत्पत्त्यनन्तरमशेषलोकनिंदा यथेष्टाचरणप्रयुक्ता सर्वलोकैः क्रियमाणा निंदा तत्प्रयुक्तः क्लेश इति यावत् । एवं क्लेशद्वैगुण्यं तवापततीत्यहो ते बोधवैभवं तव विलक्षणज्ञानशोभा । अहो इत्यनेनाश्चर्यकरमिति द्योतनादुपहासः प्रतीयते । यदि तत्त्वतस्तत्त्वज्ञानी स्यात् कामादिभ्यो यथा न क्लिश्नाति तथा लोकनिंदाया अपि न क्लिश्नाति । तत्त्वज्ञानाभिमानी तु लोकनिंदाया इव कामादिभ्यः क्लिश्नाति । अयमेव विशेषः तत्त्वज्ञानैहिककामनावतोर्यथेष्टाचरणे ॥ ५६ ॥

एवं कृत्वोपहासं सुहृद्भूत्वोपदिशति, विदिति ।

**विड्वराहादितुल्यत्वं मा कांक्षीस्तत्त्वविद्भवान् ।**
**सर्वधीदोषसंत्यागाल्लोकैः पूज्यश्च देववत् ॥ ५७ ॥**

भवान् तत्त्ववित् । तत्त्वतो यदि ज्ञानी स्यात् विड्वराहादितुल्यत्वं ग्रामसूकरादिजन्तुसमतां मा कांक्षीः सर्वधीदोषसंत्यागात् कामक्रोधाद्यशेषबुद्धिदोषपरित्यागाल्लोकैर्देववत् पूज्यश्च भव । लोकपूज्यतामाप्नुहि । कामादिधीदोषपरित्यागेनैव तत्त्वविदो लोके पूज्यता । तदत्यागे तु वस्तुतस्तत्त्वज्ञानित्वाभावेन विड्वराहादिभिस्समं लोकगर्ह्यत्वमेव स्यात् । अतो ह्यैहिककामादीनामपि हेयतावश्यमभ्युपेया । अन्यथा लोकनिंदास्पदतैव भवतीति तात्पर्यम् । एतेनैहिककामादीनामपि हेयत्वमावश्यकमिति सुप्रतिपादितम् ॥ ५७ ॥

ऐहिककामा अपि त्याज्या इत्युक्तम् । तत्त्यागोऽशक्य इत्याशंकामुपायप्रदर्शनेन परिहरति, काम्यादीति ।

**काम्यादिदोषदृष्ट्याद्याः कामादित्यागहेतवः ।**
**प्रसिद्धा मोक्षशास्त्रेषु तानन्विष्य सुखी भव ॥ ५८ ॥**

काम्यादिदोषदृष्ट्याद्याः काम्यानि कामनाविषयानीष्टानि स्रक्चंदनादीनि; आदिशब्देन द्वेष्यान्यनिष्टानि शस्त्रादीनि गृह्यन्ते । इष्टान्यनिष्टानि चेत्यर्थः ; तेषु मनःक्लेशकारितया क्षयित्वादिजीवबंधहेतुत्वरूपो यो दोषो विद्यते तस्य दृष्टिः परिज्ञानम् । आदिशब्देन दोषदर्शनान्तरं तत्परिहाराय कर्तव्ययत्नवैविध्यादिकं सूचितम् । ते कामादित्यागहेतवः कामादीनां त्यागे कारणानि ; इत्ययमंशो न स्वकपोलकल्पित इत्याशयेन श्रुतिसम्मतं तेषां त्यागहेतुत्वमित्याह, प्रसिद्धा इति । उपनिषदादिषु मोक्षशास्त्रेषु प्रसिद्धाः । अतस्तान् दोषान् प्रयत्नादन्विष्य सविमर्शं परीक्ष्य सुखी भव । तद्द्वारा तत्त्यागेन सुखी भव मोक्षानन्दमाप्नुहि ॥ ५८ ॥

ननु बाह्यविषयिकाः कामादयः परिह्रियन्ताम् । मनोभावरूपाणामपि तेषां त्यागाभावे का क्षतिरित्याशंक्याह, त्यज्यतामिति ।

**त्यज्यतामेष कामादिर्मनोराज्ये तु का क्षतिः ।**
**अशेषदोषबीजत्वात् क्षतिर्भगवतेरिता ॥ ५९ ॥**

मनोराज्ये यथेष्टं मनसि विषयध्यानेन क्षतिः हानिः अशेषदोषबीजत्वात् सर्वेषां कामादिदोषाणामुत्पत्तेः कारणम् । स्पष्टमन्यत् ॥ ५९ ॥

मनोराज्यपरित्यागप्रशंसा ।

उक्तप्रकारं भगवद्वाक्यप्रदर्शनेन विशदयति, ध्यायत इति ।

**ध्यायतो विषयान् पुंसः संगस्तेषूपजायते ।**
**संगात्संजायते कामः कामात्क्रोधोऽभिजायते ॥ ६० ॥**

(गी॰२॰६२॰) विषयान् स्रगादीन् ध्यायतो मनसि भावयतः पुंसः तेषु संग आसक्तिरुपजायते। संगात् कामस्तृष्णा संजायते । विफलीकृतात् कामात् क्रोधः कोपोऽभिजायते संपद्यते । दिक्प्रदर्शनमात्रमेतत् । तत्रोक्ता प्रणाळी सर्वाप्यत्रानुसंधेया ॥ ६० ॥

कामादिपरित्यागः काम्यादिदोषदृष्ट्यादिहेतुद्वारा सुशकः । मनोराज्यपरिहारस्तु दुःशक एवेत्याशंक्य तस्यापि हेतुप्रदर्शनेन सुशकत्वं प्रतिपादयति शक्यमिति ।

**शक्यं जेतुं मनोराज्यं निर्विकल्पसमाधितः ।**
**सुसंपादः क्रमात्सोपि सविकल्पसमाधिना ॥ ६१ ॥**

निर्विकल्पसमाधितो निर्विकल्पे विषयिणि परे ब्रह्मणि चित्तैकाग्र्यम् तदाकारा चित्तवृत्तिः । ततो दोषबीजकारणं मनोराज्यं जेतुं शक्यं । तस्य दुःशकत्वमाशंक्य तदुपायप्रदर्शनेन सुशकत्वं प्रदर्शयति, सुसंपादेति । सोऽपि निर्विकल्पसमाधिः सविकल्पसमाधिना सगुणध्यानेनाभ्यासक्रमात् सुसंपादः सुसाधः ॥ ६१ ॥

ननु योगयुक्तस्य भवदुक्तप्रणाळ्युपयुज्यते । योगविरहितस्य का गतिरित्याशंक्य तस्यापि मनोराज्यत्यागदिशमुपदिशति, बुद्धेति ।

**बुद्धतत्त्वेन धीदोषशून्येनैकान्तवासिना ।**
**दीर्घं प्रणवमुच्चार्य मनोराज्यं विजीयते ॥ ६२ ॥**

बुद्धतत्त्वेनावगतब्रह्मात्मैक्यभावेन धीदोषशून्येन कामक्रोधादिधीदोषशून्येन निर्मलमनस्केन एकान्तवासिना एक एव अन्तः सीमा यस्य तस्मिन् वसतीति तथाभूतः तेन विजनप्रदेशनिवासशीलेन दीर्घं कालं प्रणवं प्रकर्षेण नूयते परं ब्रह्मानेनेति प्रणवः ओंकारः तमुच्चार्य जप्त्वा मनोराज्यं विजीयते॥ ६२ ॥

एवं मनोराज्यविजयफलमाह, जित इति ।

**जिते तस्मिन् वृत्तिशून्यं मनस्तिष्ठति मूकवत् ।**
**एतत्पदं वसिष्ठेन रामाय बहुधेरितम् ॥ ६३ ॥**

मूकवद् वृत्तिशून्यं सर्वव्यापारविरहितं मनः तिष्ठति । तदानीं विषयाभावात् तदाकाराकारिता वृत्तयो नोत्पद्यन्ते । वसिष्ठः मुनीनां वरिष्ठः, स्पष्टमन्यत् ॥ ६३ ॥

तदुपदेशप्रकारमाह, दृश्यमिति ।

**दृश्यं नास्तीति बोधेन मनसो दृश्यमार्जनम् ।**
**संपन्नं चेत्तदुत्पन्ना परा निर्वाणनिर्वृतिः ॥ ६४ ॥**

दृश्यं परिदृश्यमानमिदं जगन्नास्ति सत्यत्वेन न विद्यते मिथ्येति बोधेन ज्ञानेन, यथा गृहात् सर्वस्योच्छिष्टस्य सम्मार्जन्याऽपाकरणं तथैव मनसो दृश्यमार्जनं दृश्यस्यापाकरणं संपन्नं चेत्, तत् तदा परा उत्कृष्टा निर्वाणनिर्वृतिः निर्वाणं मोक्षः स एव निर्वृतिरानन्दः उत्पन्ना निष्पन्ना भवति । "नेह नानास्ति किंचनेति" (कठ. २.४.११.) श्रुत्या जगतो निष्कासनेऽवशिष्टः परब्रह्मानन्द एवानुभूयत इति भावः ॥ ६४ ॥

निरतिशयानन्दस्योत्तमपदत्वेन मानसिकमौनं प्रस्तौति, विचारितमिति।

**विचारितमलं शास्त्रं चिरमुद्ग्राहितं मिथः ।**
**संत्यक्तवासनान्मौनादृते नास्त्युत्तमं परम् ॥ ६५ ॥**

विचारितं अलमिति च्छेदः । सर्वमाध्यात्मिकं शास्त्रं अलं साकल्येन विचारितम् । विचारितार्थं गुरुशिष्ययोर्मिथः चिरं कालं संवादद्वारोद्ग्राहितं ।

मननपूर्वकं बुद्धौ सम्यगवधारितम् । तस्येदं पर्यवसितम् । संत्यक्तवासनात् सम्यक् परित्यक्तकामादिसंस्कारान्मौनाद्दते मननसम्पूर्णाभावाद्विनोत्तममधिकं पुरुषार्थसाधनं पदं स्थानमन्यत्रास्तीति ॥ ६५ ॥

एवं संपादितस्य मौनस्यारब्धकर्मणा विक्षेपे सति प्रतीकारमाह, विक्षिप्यत इति ।

विक्षिप्यते कदाचिद्धीः कर्मणा भोगदायिना ।
पुनः समाहिता सा स्यात्तथैवाभ्यासपाटवात् ॥ ६६ ॥

भोगदायिना भोगस्यावश्यंजनयित्रा प्रारब्धेन कर्मणा । अभ्यासपाटवादनुक्षणमेव सविकल्पसमाधेरभ्यासदार्ढ्यात् । स्पष्टमन्यत् ॥ ६६ ॥

सर्वथा विक्षेपरहितः केवलब्रह्मैव भवतीत्याह, विक्षेप इति ।

विक्षेपो यस्य नास्त्यस्य ब्रह्मवित्त्वं न मन्यते ।
ब्रह्मैवायमिति प्राहुर्मुनयः पारदर्शिनः ॥ ६७ ॥

यस्य चित्तस्य विक्षेपो नास्ति अस्य ज्ञानिनो ब्रह्मवित्त्वं न मन्यते वास्तविकं ब्रह्मज्ञानित्वं नाभ्युपेयते । किं त्वौपचारिकमेव । किं नानुमन्यत इत्याशंक्याह, ब्रह्मेति ? अयं ज्ञानी ब्रह्मैव ब्रह्मैवाहमस्मीति महावाक्यस्य लक्ष्य एव भवतीति पारदर्शिनः वेदान्तकोविदो मुनयो मननशीलाः प्राहुः । तस्य ब्रह्मभावादद्वैतस्वरूपत्वेन ब्रह्मविदिति भेदावगाहिव्यवहाराविषयत्वाद्ब्रह्मवित्त्वं तत्रौपचारिकमित्यर्थः ॥ ६७ ॥

अत्र वासिष्ठमुदाहरति, दर्शनेति ।

दर्शनादर्शने हित्वा स्वयं केवलरूपतः ।
यस्तिष्ठति स तु ब्रह्मन्! ब्रह्म न ब्रह्मवित्स्वयम् ॥ ६८ ॥

हे ब्रह्मन् दर्शनादर्शने दर्शनं ज्ञानं अदर्शनमज्ञानं च द्वे हित्वाऽपनुद्य ब्रह्माहं जानामि नाहं जानामित्याकारकव्यवहारद्वयं हित्वा । स्वयं केवलरूपतः

अद्वितीयज्ञानरूपेण यस्तिष्ठति स ब्रह्मैव । न तु ब्रह्मवित् । जानामीति व्यवहारस्य ज्ञातृज्ञानज्ञेयभावसापेक्षत्वेन तद्व्यवहारत्यागस्य ज्ञातृज्ञेयभावपरित्यागपूर्वकतया तदानीं ज्ञातृज्ञेयभावयोर्नष्टत्वेन तत्सापेक्षो ब्रह्मविदिति व्यवहारो न स्वारसिक उपपद्यते । तथा चाह श्रुतिः " परमं ब्रह्म वेद ब्रह्मैव भवती "ति (मुं. ३.२.९) ॥६८॥

ईश्वरद्वैताज्जीवद्वैतविवेचनस्य फलं प्रदर्शयन् प्रकरणमुपसंहरति, जीवन्निति ।

**जीवन्मुक्तेः पराकाष्ठा जीवद्वैतविवर्जनात् ।**
**लभ्यतेऽसावतोऽत्रेदमीशद्वैताद्विवेचितम् ॥ ६९ ॥**

असावेवंरूपा जीवन्मुक्तेः पराकाष्ठा परा उत्कृष्टा च सा काष्ठा सीमा जीवद्वैतविवर्जनाल्लभ्यते । अतोऽत्रास्मिन् प्रकरणे इदं जीवद्वैतमीशद्वैताद्विवेचितम् । जीवद्वैतविवेचनेन तत्परित्याग एव जीवन्मुक्तिः पराकाष्ठाप्राप्तिरिति सैव तत्फलमिति स्फुटमभिहितम् ॥ ६९ ॥

इति

श्रीमत्परमहंसपरिव्राजकाचार्यशृंगेरीश्रीविरूपाक्षश्रीविद्याशङ्करपदमावेशप्रकाशित
जगद्गुरु श्रीकल्याणानन्दभारतीमान्ताचार्यात्यन्तप्रियान्तेवासिनाऽत्रि
गोत्रसमुद्भूतेन **लिङ्गनसोमयाजिना** विरचितेयं द्वैत-
विवेकप्रकरणस्य कल्याणपीयूषव्याख्या समाप्ता ॥
इति द्वैतविवेकप्रकरणम् ।

*

अथ

# कल्याणपीयूषव्याख्यासमेता पंचदशी

## महावाक्यप्रकरणम् ।

जिज्ञासोर्वैराग्योत्पादनधिया विस्तरेण प्रपञ्चितमीश्वरसृष्टस्य जगतो मिथ्यात्वं, क्रियाकारकफलाभिसन्धिप्रयुक्तस्य कर्मकलापस्यानित्यफलहेतुत्वेन हेयत्वं च। जीवात्मब्रह्माभेदश्च संक्षेपतो ज्ञापितः। विशेषतः पदार्थशोधनमन्तरा वैराग्यमात्रेण सम्यक्तत्त्वबोधो नोदेतीति तत्पदार्थस्वरूपनिरूपकाणि सकलवेदार्थसारसंग्रहरूपकाणि महावाक्यान्यवश्यं व्याख्येयानि। विद्यते च प्रसक्तिः स्वरूपशोधनाय। "एकमेवाऽद्वितीयं ब्रह्म" (छां. ६. २. १.), "आत्मा वा इदमेक एवाग्र आसीदि" (ऐ. १. १. १.) त्यादिश्रुतिभिः प्रतिपादितस्य सजातीयविजातीयस्वगतभेदरहितस्य निरुपाधिकस्य कस्यचिदव्यक्तवस्तुनः सद्भावः प्रतिपादितः। तथैव "स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत" (ऐत. १. ३. १२.) इति श्रुतौ श्रूयते सोपाधिकोऽन्य इवात्मा यो वामदेवादिभिरनुदिनमुपास्यत आत्मेति। तैरुपास्यः कोऽयमात्मा? आत्मा कः? किंस्वरूपः? सोपाधिक उत निरुपाधिकः? इत्यात्मनो विशेषस्वरूपमवश्यं विचारणीयम्। अन्यच्च, आत्मनोऽस्मत्प्रत्ययगोचरत्वाद्विविधकोटिमारोहति तद्विचारणारीतिः। चैतन्यात्मकोऽहंप्रत्ययोऽनेकधा अभिव्यज्यते। स्थूलोऽहं, अहं पश्यामि, अहं स्मरामीत्यादिप्रतीतिबलात्। अतः प्रसक्तिर्विद्यते, "कोऽयमात्मेति वयमुपास्महे" (ऐ. ५. १.), इति विचारणाय। एवं विचारणीये विषये संशयकोटिमास्थिते पदार्थशोधनमन्तरा न निश्चयज्ञानमिति चतुर्षु वेदेषूपलभ्यमानैर्महावाक्यैर्यन्निश्चितमात्मस्वरूपं तद्व्याचिकीर्षया प्रारभ्यते पंचमं महावाक्यप्रकरणम्। विशिष्टार्थबोधकतया यदुच्यते तद्वाक्यम्। महच्च तद्वाक्यं च महावाक्यम्। "अन्महदित्या"त्वम्। सर्वेषां ब्रह्मविद्याप्रतिपादकानां

वाक्यानां मध्ये सुव्यक्तं सुसूक्ष्मं सर्ववेदान्तार्थसारभूतब्रह्मात्मैक्यरूपार्थबोधकत्वादेतेषां महत्त्वम् । यद्वा, आत्यन्तिकनिःश्रेयसप्राप्तिप्रदर्शनात्, यद्वा अन्यैर्दुःखेनापि लब्धुमशक्यार्थस्य मुमुक्षोरनुग्रहार्थं वेदान्तार्थस्य सुखेनाविष्करणात्, यद्वा यन्निश्चयज्ञानमलभमाना आसद्भेर्नचिकेतःप्रभृतयो जिज्ञासवः संदिहन्ति स्म तन्निश्चयसंपादकत्वात्, यद्वा, अन्यासां ब्रह्मात्मैक्यस्वरूपप्रकटनपराणामपि भिन्नार्थतया भासमाननामुपनिषदामेकवाक्यतासंपादकत्वात्, यद्वा क्रियकारकफलभेदसंकुलं सकंटकं कर्मारण्यमुत्सृज्यात्मज्ञानारामविहारोपकारकसन्यासपूर्वकब्रह्मनिष्ठाप्रवेशनायानुज्ञापत्रायितत्वात् । वस्तुतो निर्दिष्टहेतुसमुदायरूपधर्मपूगमेव निदानमेतेषां महत्त्वे इति प्रतिभाति ।

प्रज्ञानं ब्रह्मेति वाक्यार्थविचारः ।

तेषां मध्ये प्रथमत ऐतरेयान्तर्गतस्य, "प्रज्ञानं ब्रह्मेति", महावाक्यस्यार्थं प्रतिपिपादयिषुर्वाक्यार्थज्ञानस्य पदार्थज्ञानपूर्वकत्वात्तद्घटकप्रज्ञानपदार्थो निश्चेय इत्यैतरेयश्रुतिमर्थतः, पठति, येनेति ।

**येनेक्षते शृणोतीदं जिघ्रति व्याकरोति च ।**
**स्वाद्वस्वादू विजानाति तत्प्रज्ञानमुदीरितम् ॥ १ ॥**

ब्रह्मवादिनो मुमुक्षुवः परिषदि तत्त्व विचारं कुर्वन्त आत्मनः स्वरूपं प्रति मिथोऽपृच्छन् "कोऽयमात्मेति वयमुपास्महे ? कतरः स आत्मेति ?" (ऐ. ५.१.) विद्यते हि तत्र प्रश्नावकाशः । तथाहि, नित्यशुद्धबुद्धमुक्तस्वभावो निरुपाधिक आत्मेति निगमान्तवाक्यैर्बोध्यते । प्रतिदिनमनुभूयतेऽस्मत्प्रत्ययगोचरश्चक्षुरादीन्द्रियोपाधिः कार्यकरणसंकीर्णः कश्चिच्चेतनात्मक आत्माभिधानः । तयोरभेदो भेदो वा ? अन्त्ये कोऽत्रास्माभिरुपास्य इति परिषदि विचारे प्रसक्तिः । एवं स्थिते, निश्चितमात्मस्वरूपमेव प्रज्ञानशब्दाभिधेयमित्याह, येनेति । येन चक्षुर्मार्गनिर्गतान्तःकरणवृत्त्युपहितेन चैतन्येनेदं चक्षुर्विषयं रूपमीक्षते पश्यति पुरुष इति शेषः, येन श्रोत्रेन्द्रियमार्गनिर्गतान्तःकरणवृत्तिप्रतिबिंबितेन चैतन्येन तद्विषयं शब्दं शृणोति; येन घ्राणेन्द्रियसंपृक्तान्तःकरणवृत्तिप्रतिबिंबितचैतन्येन तद्विषयं गंधं

जिघ्रति; तथैव येन वागिन्द्रियव्यापृतान्तःकरणवृत्तिप्रतिफलितेन तेनैव व्याकरोति संभाषणादिकं निर्वर्तयति, येन जिह्वेन्द्रियव्यापृतान्तःकरणवृत्तिप्रतिबिम्बितेन तेनैव स्वाद्वस्वादु विजानाति। अत्रानुक्तसमुच्चायकेन चशब्देन त्वक्पादादिबहिरिन्द्रियवृत्तीनामान्तरमनोबुद्धिवृत्तीनां च संग्रहेण तत्तदुपहितचैतन्येन तत्तद्विषयाभिव्यंजनमुक्तं भवति। सन्ति बह्व्यो वृत्तयो मनोबुद्धिभेदभिन्नान्तःकरणस्य। संज्ञानेन सम्यग्वस्तुस्वरूपं जानाति। आज्ञानेनाज्ञापयति भृत्यादीन्, विज्ञानेनाशेषकलाकौशलमातनोति, प्रज्ञानेन शास्त्रार्थावगमेन नवनवोन्मेषमाकलयति, तदर्थानवगतान् मेधया धारयति, आपदि धृत्येन्द्रियाण्युत्तंभयति, मत्या सूक्ष्मान् राजनीतिविषयानालोचयति, तत्र मनीषया प्रदर्शयति स्वातन्त्र्यम्, भीत्या प्राप्तावसरेषु कार्येषूद्विग्नतामाप्नोति, स्मृत्याऽनुभूतपूर्वं वस्तु स्मृतिपथमानयति, कर्तव्येषु संकल्पेन साधनसामग्रीं सम्यक् परिकल्प्य तदवश्यकर्तव्यतायां व्यवसायी भवति, प्राणवायोस्संचलनेन प्राणिति, कामेनाकांक्षते, याति काम्यविषयवश्यतान्। एवं सात्विकराजसतामसान्मनोविकारानन्यांश्च बाह्यविषयान् यच्चैतन्यमभिव्यंजयति तच्चैतन्यमात्मरूपं। "संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः संकल्पः क्रतुरसुः कामो वश इति सर्वाण्येतानि प्रज्ञानस्य नामधेयानि भवन्ती"ति (ऐत. ३. २.) श्रुतिः। प्रकृष्टज्ञानरूपत्वात्प्रज्ञानमित्युदीरितमुक्तं भवति। अत्रैतरेयान्तर्गतः "कोऽयमात्मेति वयमुपास्महे" (३. १.) इत्यादिमन्त्रवर्णः समीक्षितव्यः ॥ १ ॥

अथ ब्रह्मशब्दार्थं विवृणोति चतुर्मुखेति।

**चतुर्मुखेंद्रदेवेषु मनुष्याश्वगवादिषु।**
**चैतन्यमेकं ब्रह्मातः प्रज्ञानं ब्रह्म मय्यपि ॥ २ ॥**

चतुर्मुखेन्द्रदेवेषु चतुर्मुखः "हिरण्यगर्भःसमवर्तताग्रे" (ऋ सं. १०. १२१. १.) इत्यादिशास्त्रप्रसिद्धः सृष्टिकर्ता प्रथमशरीरी। इन्द्रः सुकृतफलपरिपाकेन देवराजपदमावेशितोऽकामहतः श्रोत्रियाग्रणीः, देवाश्च, तेषूत्तमजन्मसु। मनुष्याश्वगवादिषु, मनुष्या मध्यमजन्मानः। अश्वगवादयोऽधमजन्मानः। आदिशब्देनांडजादिक्षुद्रमिश्राण्युदीरितानि। तेषु, यत्प्रतीयते चैतन्यं तदेकमेव। चतुर्मुखादिसर्वो-

पाधीनां व्यावृत्ततया परस्परं भिन्नत्वेऽपि सर्वत्र चैतन्यस्यानुवृत्ततयोपाधिकं चैतन्यमुपाधिपरिहाणे एकमेवावतिष्ठते। एवं च सर्वव्यापकत्वाद्व्यापकरूपार्थबोधक-ब्रह्मशब्दस्याभिधेयं तद्भवितुमर्हति। परस्परविलक्षणानां चतुर्मुखामरनराश्वादि-व्यक्तीनां तत्रारोपादनेकधा प्रतीयते। यथा रज्जौ सर्पाध्यासात्तद्रूपेण प्रतीतिः। सहजस्थितिमास्थिताऽपि रज्जुर्भ्रान्त्या सर्प इव विशेषाकारेणावभासते। यदा दीपेन नायं सर्पः रज्जुरेवेति यथार्थज्ञानमुत्पद्यते तदा स्वयं निर्विकारा रज्जुरव-तिष्ठते। सैव तत्राध्यस्तस्य सर्पस्य कारणं भवति। तदभावे भ्रान्तेरेवाभावात्। एवमविद्यया निर्विकारे परे ब्रह्मणि सर्वं जगदध्यस्यते, येन तत्तद्विशेषाकारेण वर्तमानमिव प्रतीयते। एवं च तज्जगतः कारणं भवति। नन्वनिर्ज्ञातपूर्वसर्पस्वरूपस्य कस्यापि कदाचिद्रज्जा न सर्पभ्रान्तिरुदेति। तथैव देवादीनामज्ञातपूर्वतया ब्रह्मणि न तद्भ्रान्तेरवकाश इति चेन्न, अध्यस्तत्वमात्रोपदेशस्यैव दृष्टान्तेन विवक्षितत्वात्। दृष्टान्तधर्मास्सर्वे सर्वथा दार्ष्टान्तिके समन्वेया इत्यसमंजसोऽयं नियमः। "न हि दृष्टान्तदार्ष्टान्तिकयोः क्वचित्कंचिद्विवक्षितांशं मुक्त्वा सर्वसारूप्यं केनचिद्दर्शयितुं युक्तम्"। तथा सति सहृदयाह्लादनायोपात्ता चंद्रवन्मुखमित्युपमा तद्गतकालु-कळंकत्वादिस्फोरणेन प्रत्युतोद्वेजिकाऽपि स्यात्। नैवास्ति तथानुभवः। अतो दृष्टान्तापेक्षितधर्मस्य स्फोरणायैवेष्यते तद्गतस्य नान्यस्य धर्मस्य। नामरूपात्मकस्य जगतो मिथ्यात्वभावे नामादिविविधरूपप्रतीतिः प्रमा स्यात्। "वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्य" (छां॰ ६॰ १॰ ४॰) मिति श्रुत्या विकाराणामनृतत्वं निर्विकारस्य परब्रह्मणः सत्यत्वं च प्रतिपाद्यते। तदनुरोधेन तत्प्रतीतेर्भ्रान्तित्वसिद्धये तेषामध्यासवशेन मिथ्यात्वमेव दृष्टान्तेन बोध्यते। न तु दृष्टान्ते विद्यमानास्सर्वे धर्मा अत्र विवक्षिताः। अन्यथा रज्जुसर्पस्य प्रातिभासिकसत्यत्वं जगतो व्याव-हारिकसत्यत्वमिति व्यवस्थितो व्यवहारो न घटेत। किं चाध्यासे पूर्वानुभवो ऽपेक्षित इति सत्यम्। स च प्रमात्मक एवेति न निर्बंधः। भ्रमात्मकेनाऽप्यनुभवे-नोत्तरोत्तराध्यासस्सिध्यति। अद्वैतनयेऽविद्याया अनादित्वाङ्गीकारेण पूर्वपूर्वाविद्य-योत्तरोत्तरभ्रमस्सिध्यति। प्राक्तनसृष्टिवासनात्मिकाविद्याध्वनसृष्टौ चतुर्मुखा-द्यध्यासं कल्पयतीत्युक्तौ न कापि क्षतिः। अत एव भाष्ये अध्यासलक्षणं "परत्र पूर्वदृष्टावभास" इत्युक्तम्। तत्र दर्शनं भ्रमः प्रमा वा भवतु। प्रमा

मात्रमेव यदि विवक्षितं स्यात् , "पूर्वत्र प्रमितावभास" इत्येव वदेदित्यलम्। अतः परेवस्तुन्यद्वैते नानात्वदर्शनं भ्रम एवेति तत्त्वज्ञास्संतुष्यन्त्येव ॥

अतो मयि यत्प्रज्ञानं दृश्यते तदपि ब्रह्मैव। यच्च "यतो वा इमानि भूतानि जायन्ते (तै. ३. १.), इत्यादिनोक्तं ब्रह्म सृष्टिस्थितिलयकारणत्वेनोक्तम्। तथैव "प्रज्ञाने प्रतिष्ठितम् प्रज्ञानेत्रो लोकः प्रज्ञाने प्रतिष्ठेति" (ऐ. २. ५. ३.) चोक्तं, प्रज्ञानस्य जगत्प्रभवाप्ययत्वादिकारणत्वम्। अतः प्रज्ञानं ब्रह्मेति सामानाधिकरण्येन प्रज्ञानब्रह्मणोरैक्यमेव सिध्यति। एवं देवतिर्यङ्नारादिषु वैलक्षण्येणाप्यनुभूयमान आत्मा ह्येक एव न तु भिन्नः। अनुभूयमानवैलक्षण्यस्योपाधिप्रयुक्तत्वे नोपधेये स्वतो भेदस्य संपादयितुमसमर्थत्वात्। अतः "कतरस्स आत्मेति"प्रश्नो नोदेतीत्येवेति भावः ॥ २ ॥

"अहं ब्रह्मास्मीति" वाक्यार्थविचारः।

ऐतरेयमहावाक्यविचारणानन्तरं, बृहदारण्यकान्तर्गतं "अहं ब्रह्मास्मीति (१. ४. १०.) महावाक्यार्थमुत्तरश्लोकद्वयेनाह। साध्यसाधनोर्मिमालाकुलं धर्माधर्मग्राहगृहीतं संसारसागरं सद्गुरुसमासादितज्ञानोडुपेन तितीर्षवो ब्रह्मवादिनः परब्रह्मस्वभावं प्रति विचारयांचक्रुः, "यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते। किमु तद्ब्रह्मावेत् यस्मात्तत्सर्वमभवदिति"। ।बृ. १.४.९.) यद्ब्रह्मविद्यया सर्वं निरवशेषं भविष्यन्तो भविष्याम इति मनुष्या ब्रह्मविद्याधिकृता मन्यन्ते तद्ब्रह्म किमावेत् ज्ञातवान् यस्मात् ज्ञानात् तद्ब्रह्म सर्वमभवदिति मन्त्रार्थः। यत्किंचित् ज्ञात्वा ब्रह्म सर्वमभवत्। उताज्ञात्वैव? आद्ये ब्रह्मणस्सर्वभवनस्य ज्ञानजन्यत्वादनित्यमेव तस्य सर्वभवनम्। द्वितीये यथा ब्रह्मणस्तथान्येषामप्यज्ञानेनैव सर्वभवनसमर्थता स्यात्। किं ब्रह्मविद्यागौरवेण? किमु विज्ञायैव सर्वमभवदिति च वक्ष्यति श्रुतिः। तर्हि किमु तत् यदावेत् यद्ब्रह्म सर्वमभवदिति ब्रह्मवादिनां प्रश्नविषयः। प्रतिवचनं श्रुत्यैवोच्यते, "ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेत्" "अहं ब्रह्मास्मीति"—अहं ब्रह्मास्मीति ब्रह्मावेत् येन तत्सर्वमभवदित्यर्थः। अत्राहंशब्दार्थं विशदयति परिपूर्ण इति ॥

**परिपूर्णः परात्माऽस्मिन् देहे विद्याधिकारिणि।**
**बुद्धेः साक्षितया स्थित्वा स्फुरन्नहमितीर्यते ॥ ३ ॥**

परिपूर्णः देशकालवस्तुभेदैरपरिच्छिन्नः सर्वसमृद्धः परात्मा "अहं"मितीर्येते कथ्यते । किं कुर्वन् तथेर्यते ? अस्मिन् जगति विद्याधिकारिणि विद्यायाः ब्रह्मविद्यायाः शमादिसाधनसंपत्त्याधिकृते देहे मनुष्यशरीरे, मनुष्याणामेवात्यन्तं सगुणनिर्गुणोपासनायोग्यत्वात् सर्वसंकल्पविकल्पनिश्चयात्मिकाया बुद्धेरन्तःकरणस्य साक्षितया स्थित्वा स्वयं किमप्यकुर्वन् सर्वव्यवहारद्रष्टा भूत्वा स्फुरन् स्वयमविकारी सन्नेव स्वसान्निध्यमात्राद्बुद्ध्यादवभासक इति व्यवहृतस्सन् लक्षणया अहमितीर्यते तत्पदाभिधेयो भवतीति भावः ॥ ३ ॥

अथ ब्रह्मशब्दार्थमाह, स्वत इति ।

## स्वतः पूर्णः परात्माऽत्र ब्रह्मशब्देन वर्णितः ॥ ३॥ ॥

अत्रास्मिन् महावाक्ये स्वत इतरसहायमनपेक्ष्य पूर्णः देशकालवस्त्वनवच्छिन्नः परात्मा ब्रह्मशब्देन वर्णितः । बृहि वृद्धाविति ब्रह्मशब्देन नित्यशुद्धत्वादयोऽर्थाः पूर्णतया प्रतीयन्ते । तेन च नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्मेति विज्ञायते । अत्र केचित्प्रत्यवतिष्ठन्ते । अत्र ब्रह्मशब्देनापरब्रह्मैव भवितुं युक्तम् । वेदनाकर्तुरेव सर्वभवनोक्तिर्वेदनाकर्तुरपरत्वेनानुभूयमानत्वात् । भविष्यत्काले मनुष्याणामपि तत्पदलंघनाधिकारस्य श्रूयमाणत्वात् । "अहं ब्रह्मास्मीति" ज्ञानस्य साधनभेदेनोपदिष्टयोः कर्मोपासनयोरनुरूपो मार्गो गम्यस्थानं फलं च विशेषत उपदिश्यते । दक्षिणोत्तराविति मार्गभेदः, ब्रह्मलोकस्वर्गलोकादिगम्यस्थानभेदः, तत्र निवासस्य-चाप्रलयं कर्मक्षयावधिरूपफलभेदश्च, श्रूयते । तस्माद्युक्तं प्रस्तुतं ब्रह्मापरब्रह्मेत्युच्यते, इति चेन्न । प्रकरणविरोधात् । ज्ञानकर्मणोर्विभूतिवर्णनाव्याजेन तयोरुत्कर्षः पूर्वार्धे प्रकर्षेण स्तूयते । ब्रह्मविद्याया मोक्षहेतुत्वं चोत्तरार्धे प्रदर्श्यते । तदर्थमेव प्राणादीनां परब्रह्मणः कर्मनाम्नामेकैकोपासकस्याकृत्स्नतामभिधाय "आत्मैवोपासीतात्र ह्येते सर्व एकं भवन्ति तदेतत्पदनीयस्य सर्वस्य यदयमात्मानेनह्येतत्सर्वं वेदे" (बृ. १. ४. ७.) त्यात्मैक्यज्ञानस्य फलमात्मनः पदनीयसर्वात्मभवनमिति चाभिहितम् । पुत्रवित्ताद्यन्यस्मात्सर्वस्मात् प्रियतममित्यादिनात्मोपलब्धिरेव तत्पदनीयं पदमिति वर्णितम् । तत्ज्ञानाभिलाषया ब्रह्मवादिनः परस्परमपृच्छन्, "यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदि"ति ।

यत्किंचिदन्यज्ञानफलभूतं सर्वात्मभवनमेवात्र यद्यभिहितं भवति, तर्हि यत् ज्ञात्वा ब्रह्माभवत् तत्सर्वात्मभवनमनित्यमेवस्यात्, न तु निःश्रेयसावाप्तिस्तत् । तत्ज्ञानेनैव वामदेवादयो निःश्रेयसं प्रपेदिरे, इति । अतो निःश्रेयसप्रातिकथनप्रकरणेऽन्यज्ञान-कथनमप्रस्तुतमेव ।

किंच यद्यनात्मज्ञानेनैव सर्वभवनसिद्धिस्तदा ब्रह्मविद्याया वैयर्थ्यात् ब्रह्म-विचारस्यानर्थक्यमेवापतेत् । सर्वोपनिषदुपबृंहितं श्रूयते सर्वशास्त्रनिश्चितार्थतया सैंधवघनवदेकरसं ब्रह्मविज्ञानमेवामृतत्वनिमित्तमिति ।

किंच सर्वात्मभवनस्य ज्ञानजन्यत्वेऽनित्यत्वप्रसक्तेः । यदन्यकारणजन्यं भावान्तरं न तन्नित्यं भवितुमर्हति ।

परब्रह्मणोऽन्यस्य वेदनासंभवाच्च । यद्ब्रह्म प्राक् सृष्टेरासीत्तस्यैव ब्रह्मणः "तदात्मानमावे"दित्यात्मवेत्तृत्वमुक्तं भवति । वेदनसमयेऽपरब्रह्मैव नास्ति । "ब्रह्म वा इदमग्र आसीत् । तदात्मानमावे"दित्युक्तत्वात् । यद्ब्रह्म प्राक्सृष्टेरासी-त्तद्ब्रह्मैवावेदित्यनिवार्यं भवति ।

अपि च । अन्यस्यान्यभावानुपपत्तेः । ननु "ब्रह्मविद्यया सर्वं भविष्याम इति मन्यन्ते मनुष्याः, इत्यनेन ब्रह्मविद्ययाऽन्यभावः श्रुतिसिद्ध इति चेन्न । अन्यभावस्य शास्त्रेणाऽवबोधनात् । ज्ञापकमेव शास्त्रं न तु कारकम् । न हि ब्रह्म-विद्याऽब्रह्माणं ब्रह्माणं करोति । किन्त्वविद्यावरोधेनात्मानमन्यं मन्यमानं "त्वं ब्रह्मेति"ज्ञापयित्वाऽविद्यापनोदनमार्गमुपदिशति । अविद्यावरणोच्छेदे स्वभावसिद्धं परमार्थं वस्तु स्वयं प्रकाशमानं ग्रीवाबद्धकटकमिवावाप्यते । अयमेवाशयस्संदिश्यते सर्वात्मभवनशब्देन । श्रुत्वा गुरुशास्त्राभ्या"महं ब्रह्मास्मी"त्यादिमहावाक्यार्थं तन्मननेन दृढीकृत्वान्यथाभावनिमित्तामविद्यामपहाय ब्रह्मवित्स्वयमभवदित्यलम् ।

एवं पदार्थं निरूप्य वाक्यार्थं फलकथनपूर्वकं दर्शयति, अस्मीति ।

**अस्मीत्यैक्यपरामर्शस्तेन ब्रह्म भवाम्यहम् ॥ ४ ॥**

अहंब्रह्मपदयोस्सामानाधिकरण्यस्य अस्मीत्यनेनैक्यपरामर्शः। तेनैवं वाक्यार्थभूतब्रह्मात्म्यैक्यज्ञानेनाहं ब्रह्म भवामि। ब्रह्मभावमापन्नो जीवब्रह्मैक्यज्ञानस्य ब्रह्मभावप्राप्तिः फलमिति भावः ॥ ४ ॥

"तत्त्वमसीति" महावाक्यार्थविचारः।

तातादेशेनाध्ययनायानुरूपगुरुकुलावासमाचर्य श्वेतकेतुर्महामनाः अनूचानमानी पितृसदनमेयाय। ज्ञात्वा निजपुत्रं विद्यावलिप्तं सन्मार्गनिनीषया पिता तमपृच्छत्, "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति" (छां. ६. १. २.)। विह्वलमनाः श्वेतकेतुरपगतविद्योद्धतिः सर्वानपि वेदानधीत्याप्यकृतार्थमात्मानं मन्वानस्तत्त्वोपदेशाय पितरं प्रार्थयामास। आरुणिः पुत्रवत्सलोऽपगतविद्यागर्वमेनं सौम्यं सौम्यवचनैः, सदेव सोम्येदमग्र आसीदि" (छा. ६. २. १.) त्यादिनाखंडपट्केन सर्वं सृष्टिक्रमं प्रत्यज्ञापयत्। अन्ते सर्वोपदेशशिरोभूषणं परमरहस्यमुपदिदेश, "स य एषोऽणिमैतदात्म्यमिदग्ं सर्वं तत्सत्यग्ं स आत्मा तत्त्वमसि श्वेतकेतो।" इति (छां. ६. ८. ८.)। दुर्ग्राह्यविषयत्वात् "भूय एव मा भगवन् विज्ञापयत्विति" पुनः पुनः प्रार्थयन्तं पुत्रं "तथा सोम्ये"ति गंभीरतमार्थस्य सम्यक्प्रत्यायनाय सादरं सोदाहरणं नवकृत्व उपदिदेश भगवानारुणिः। तदुपदिष्टं समनन्तरप्रसक्तं छांदोग्यघटकमशेषरहस्यानां मकुटालंकारभूतं "तत्त्वमसीति" महावाक्यं व्याचिकीर्षुस्तद्घटकतत्पदार्थनिरूपणाय "सदेव सोम्येति" छांदोग्यमन्त्रमर्थतः पठति।

**एकमेवाद्वितीयं सन्नामरूपविवर्जितम्।**
**सृष्टेः पुराऽधुनाप्यस्य तादृक्त्वं तदितीर्यते ॥ ५ ॥**

जगतः सृष्टेः पुरा प्रागुत्पत्तेरेकमेव स्वकार्यपतितान्यवस्तुविरहितं स्वगतभेदरहितं च अद्वितीयं स्वव्यतिरिक्तान्यवस्तुविरहितं नामरूपविवर्जितं सदस्तितामात्रं वस्त्वासीदिति शेषः। अस्य सद्वस्तुनोऽधुनापि सृष्ट्यनन्तरमपि तादृक्त्वं तथाविधत्वम्। तादृग्वस्तु तच्छब्देनेर्यते कथ्यते। यदि सृष्टेः पूर्वोत्तरयोरेकस्मिन्नेव वस्तुनि विद्यमाने कोऽपि विशेषो विद्यते वा? अयं विशेषः। सृष्टेः प्राङ्नामरूपविवर्जितम् भासते; सृष्ट्युत्तरकाले नामरूपसहितमिव भासते। नामरूपव्याकरण-

स्यैव सृष्टिशब्दाभिधेयत्वात् । नामरूपयोर्मिथ्यात्वात्तयोरपहीयमानयोः, सदेवावशिष्यते । एतदर्थमेव "सदेव सोम्येदमग्र आसीदि"ति छांदोग्यमंत्रप्रकरणे (६. २. १.) सम्यक्प्रदर्शितम् । तदर्थविचारणा च, द्वितीयप्रकरणे २५–३९ श्लोकव्याख्यानावसरे सम्यक्कृतेति नाऽत्राभ्यस्यते ॥ ५ ॥

अनन्तरं त्वंपदार्थ उच्यते, श्रोतुरिति ।

**श्रोतुर्देहेन्द्रियातीतं वस्त्वत्र त्वंपदेरितम् ।**
**एकता ग्राह्यतेऽसीति तदैक्यमनुभूयताम् ॥ ६ ॥**

श्रोतुः "श्वेतकेतो" इति श्रोतारं प्रति संबोधनं क्रियते तस्य श्वेतकेतोरिव मुमुक्षोर्देहेन्द्रियातीतं शरीरत्रयाद्भिन्नं साक्षितया भासमानं वस्त्वत्र महावाक्ये त्वंपदेरितं त्वंशब्देन बोधितम् । असीति शब्देनैकता तत्त्वंशब्दार्थयोरेकता ग्राह्यते । तत् एवं वाक्यार्थभूतं तत्त्वंपदार्थयोः प्रत्यग्ब्रह्मणोस्स्वतः प्रसिद्धमैक्यं मननिदिध्यासपूर्वकमनुभूयताम् । साक्षात्क्रियताम् । नेदं परमरहस्यं केवलशास्त्रचर्चया गोचरीकर्तव्यः, किं तु जीवन्मुक्तैस्साक्षात्कार्य इत्यनुभूयतामिति शब्दस्वारस्यम् ॥ ६ ॥

"अयमात्मा ब्रह्मेति" महावाक्यार्थविचारः ।

अनन्तरमाथर्वणिक"मयमात्मा ब्रह्मे"तिक्रमप्राप्तं तुरीयं महावाक्यं विवृणोति । आत्मोपलब्धिसाधनत्वेन निर्णेयस्यौंकारस्य श्रैष्ठ्यकथनाय प्रवृत्तायां मांडूक्यश्रुत्यां द्वितीयमन्त्रे श्रूयत इदं वाक्यम् । तत्रादावयंशब्दार्थमाचष्टे, स्वेति ।

**स्वप्रकाशापरोक्षत्वमयमित्युक्तितो मतम् ॥ ६॥**

अयमितिविवक्षितार्थप्रतिपत्तये ज्ञानिनां हृत्पुंडरीक एवोपलब्धत्वादंगुल्याः हृदयदेशानयनपूर्वकाभिनयेन उक्तितः दर्शनपूर्वकं कथनेन स्वप्रकाशापरोक्षत्वं स्वप्रकाशेनापरोक्षत्वं प्रत्यगात्मनो मतमभिमतम् । एतेनात्माऽपरोक्षोऽक्ष्णामगोचरश्चेति सूचितः । स्वप्रकाशोऽत एव हृत्पुंडरीके भानादपरोक्षः । स्वयमनुभूतित्वाद्घटादिवदिन्द्रियजन्यज्ञानाविषयोऽत एवाऽगोचरः ॥ ६॥ ॥

अनन्तरमात्मशब्दार्थमाह, अहमिति ।

**अहंकारादिदेहान्तात्प्रत्यगात्मेति गीयते ॥ ७ ॥**

अहंकारादिदेहान्तादहंकारः कर्तृत्वाऽभिमानः । तदादिदेहान्तः देहेन्द्रियमनोबुद्धिसंघातः । तस्मात् प्रत्यगान्तरोऽहंकाराद्यधिष्ठानतया साक्षितया च स्थितः स आत्मेति गीयते आत्मशब्देन प्रतिपाद्यते । स्थूलसूक्ष्मकारणशरीराधिष्ठानत्वेन यस्साक्षी हृदि प्रकाशते स आत्मेति भावः ॥ ७ ॥

अथ ब्रह्मशब्दार्थमाह, दृश्येति ।

**दृश्यमानस्य सर्वस्य जगतस्तत्वमीर्यते ।**
**ब्रह्मशब्देन तद्ब्रह्म स्वप्रकाशात्मरूपकम् ॥ ८ ॥**

रज्जुसर्पादिवद्दृश्यमानस्य मायाकल्पितस्यात एव मिथ्यारूपस्याकाशादेः सर्वस्य जगतस्तत्त्वं यथार्थस्वरूपमधिष्ठानं महावाक्यगतब्रह्मशब्देनेर्यते कथ्यते । एवं पदार्थमुक्त्वा वाक्यार्थं दर्शयति । तदिति । अत्र तच्छब्देनात्मा परामृश्यते । नपुंसकनिर्देशस्तु ब्रह्मशब्दसामानाधिकरण्यात् । सामानाधिकरण्येनाऽन्वयबलाद्ब्रह्मात्मनोरैक्यमवगम्यते । एवं च ब्रह्मात्मैक्यं वाक्यार्थ इति फलितम् । ऐक्यनिश्चये हेतुं विशेषणमुखेन विशदयति, स्वप्रकाशात्मरूपकमिति । पदद्वयप्रतिपाद्यार्थस्य स्वप्रकाशात्मरूपकत्वाविशेषादैक्यं सुस्थम् । एवं सति, तत् आत्मा ब्रह्म तच्च स्वप्रकाशात्मरूपकमिति योजना ॥ ८ ॥

इति
श्रीमत्परमहंसपरिव्राजकाचार्यशृंगेरीश्रीविरूपाक्षश्रीविद्याशङ्करपद्मावेशप्रकाशित
जगद्गुरु श्रीकल्याणानन्दभारतीमान्ताचार्यात्यन्तप्रियान्तेवासिनात्रि
गोत्रसमुद्भूतेन **लिङ्गनसोमयाजिना** विरचितेयं महावाक्य-
प्रकरणस्य कल्याणपीयूषव्याख्या समाप्ता ॥
इति महावाक्यप्रकरणम् ।

*

अथ

# कल्याणपीयूषव्याख्यासमेता

# पंचदशी

## चित्रदीपप्रकरणम् ॥ ६ ॥

एवं सृष्टिद्वैविध्यं तद्धेतुभूतजीवेश्वरस्वरूपभेदं च निरूप्य स्वरूपभेदस्योपाधिकृततया उपाध्योश्च मायातदवान्तरस्वरूपतया चावस्तुत्वं निरूप्य तन्निरूपणेन लब्धं ब्रह्मात्मैक्यं श्रौतमिति बोधयितुं महावाक्यार्थनिरूपणं कृत्वा तद्विवेकेन श्रुतं ब्रह्मात्मैक्यं दृष्टान्तमुखेन सम्यग्बोधयितुमिदं प्रकरणमारभते, यथेति ।

चित्रदीपदृष्टान्तेन परमात्मन्यवस्थाचतुष्टयकथनम् ।

**यथा चित्रपटे दृष्टमवस्थानां चतुष्टयम् ।**
**परमात्मनि विज्ञेयं तथाऽवस्थाचतुष्टयम् ॥ १ ॥**

यथा चित्रपटे चित्रलेखनेन सम्यविनत्रिने पटे अवस्थानां वक्ष्यमाणानां चतुष्टयं दृष्टं, तथा परमात्मनि अवस्थाचतुष्टयमस्तीति विज्ञेयम् ॥ १ ॥

दृष्टान्तदार्ष्टान्तिकयोरवस्थाचतुष्टयमाह, यथेति ।

**यथा धौतो घट्टितश्च लांछितो रंजितः पटः ।**
**चिदन्तर्यामी सूत्रात्मा विराडात्मा तथेर्यते ॥ २ ॥**

यथा पटः धौतो घट्टितो लांछितो रंजित इत्यवस्थाचतुष्टयविशिष्टो ज्ञायते, तथा परमात्माऽपि चित् अन्तर्यामी सूत्रात्मा विराडात्मेत्यवस्थाचतुष्टयवानितीर्यते ॥ २ ॥

पटगतावस्थाचतुष्टयं विवृणोति, स्वत इति ।

**स्वतः शुभ्रोऽत्र धौतः स्याद्घट्टितोऽन्नविलेपनात् ।**
**मष्याकारैर्लाञ्छितः स्याद्रञ्जितो वर्णपूरणात् ॥ ३ ॥**

पटः स्वतः स्वभावतः शुभ्रः स्वच्छः, चित्रविलेखनार्थं धौतः अन्नविलेपनाद्घट्टितो भवति। मसृणीक्रियत इत्यर्थः, तृतीयावस्थायां मष्याकारैः मषीमयैर्लेखनीयाकारैर्लाञ्छितस्संपद्यते । मषीति लेखनसाधनीभूतं द्रवद्रव्यम् । घट्टितपटे मष्या चित्रस्य बाह्याकारमात्रं विलिख्यते । तुरीयावस्थायां यथायोग्यं वर्णपूरणात् रक्तपीतादिवर्णानां पूरणात् चित्रितत्वादित्यर्थः रंजितः स्यात् ॥ ३ ॥

दार्ष्टान्तिकस्यावस्थाचतुष्टयं विवृणोति, स्वत इति ।

स्वतश्चिदन्तर्यामी तु मायावी सूक्ष्मसृष्टितः ।
सूत्रात्मा स्थूलसृष्ट्यैव विराडित्युच्यते परः ॥ ४ ॥

परः परमात्मा स्वतः स्वभावतः चित् माययाऽनालिंगितचैतन्यरूपः मायावी मायया युक्तः अन्तर्यामी अन्तः मध्येऽनुप्रविश्य यमयति पृथिव्यादीनि स्वस्वकर्मस्विति तथाविधः । जीवं वा दारुयन्त्रमिव व्यापारयति । "य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति" (बृ. ३. ७. १.) "यस्सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरोऽयं सर्वाणि भूतानि न विदुः "सर्वाणि भूतान्यन्तरो यमयति" (बृ. ३. ७. १६.), अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् (ब्र. सू. १. २. १९.), इत्यादिभ्यः । सूक्ष्मसृष्टितः सूक्ष्मस्य लिंगशरीरस्य सृष्टेः सूत्रात्मा सूत्रमिव सर्वानुस्यूत आत्मा यस्य सः समष्ट्युपहितचैतन्यो हिरण्यगर्भः । स्थूलसृष्ट्यैव स्थूलस्य पंचीकृतभूतोत्थस्य द्वैतस्य सृष्ट्या विराडित्युच्यते ॥ ४ ॥

चित्रस्य पट इव समस्तजगतो ब्रह्माधिष्ठानमित्याह, ब्रह्मेति ।

ब्रह्माद्यास्तंबपर्यन्ताः प्राणिनोऽत्र जडा अपि ।
उत्तमाधमभावेन वर्तन्ते पटचित्रवत् ॥ ५ ॥

अत्र परे ब्रह्मणि ब्रह्माद्या हिरण्यगर्भादयः स्तंबपर्यन्ताः स्तंबेनाल्पतृणेन परिगतोऽन्तो येषां ते तथाभूताश्च ये प्राणिनो जीवकोटयो जडा अपि अप्राणितया दृष्टाः पर्वतादयश्च ते सर्वे उत्तमाधमभावेन प्रारब्धानुसारेणोच्चनीचस्थितिमासाद्य पटचित्रवत् पटे चित्रवत् वर्तन्ते ॥ ५ ॥

चिदाभासस्य चित्रगतवस्त्राभासानुरूपतां श्लोकद्वयेनाह, चित्रेति ।

**चित्रार्पितमनुष्याणां वस्त्राभासाः पृथक् पृथक् ।**
**चित्राधारेण वस्त्रेण सदृशा इव कल्पिताः ॥ ६ ॥**

**पृथक् पृथक् चिदाभासाश्चैतन्याध्यस्तदेहिनाम् ।**
**कल्प्यन्ते जीवनामानो बहुधा संसरन्त्यमी ॥ ७ ॥**

चित्रार्पितमनुष्याणां चित्रे लिखितानां मनुष्याणां चित्राधारेण चित्रस्य य आधारः पटः तेन वस्त्रेण सदृशा वस्त्राभासाः वस्त्रवद्दृश्यमाना न तु तत्कार्यकारिण इति भावः, ते पृथक् पृथक् कल्पिताः चित्रिताः । चित्रगतानि बहुधा वीक्ष्यमाणानि वस्त्राणि वस्त्रच्छायाभासमात्राण्येव न तु तत्त्वतस्तानीति भावः ।

तथैव चतन्याध्यस्तदेहिनां चैतन्ये परे ब्रह्मण्यध्यस्ता आरोपिता ये देहिनो देवमनुष्यादयस्तेषां जीवनामानो जीव इति नाम येषां तथाभूताश्चिदाभासाश्चित्प्रतिबिंबाः पृथक् पृथक् कल्प्यन्ते । मायया चैतन्यस्याविद्ययाऽन्यथापरिग्रहणमेवात्राध्यासः, यथा रज्जोस्सर्पत्वेन ग्रहणम् । अमी जीवाः बहुधा संसरन्ति संसारमापद्यन्ते ॥ ६-७ ॥

ननु लोके आत्मनस्संसारित्वं कल्प्यत इत्याशंक्याह, वस्त्रेति ।

**वस्त्राभासस्थितान् वर्णान् यद्वदाधारवस्त्रगान् ।**
**वदन्त्यज्ञास्तथा जीवसंसारं चिद्गतं विदुः ॥ ८ ॥**

वस्त्राभासस्थितान् वस्त्रस्याभासेन छायायां स्थितान् प्रतीयमानान् वर्णान् रक्तपीतादीन् अज्ञा यद्वद्वदन्ति तथा जीवसंसारं चिद्गतं चितं गतं विदुर्मन्यन्ते । चित्रे प्रकाशमानस्य वस्त्रवर्णस्याधारो मष्याधिकृताकारो न तु चित्रपटः, तथैव जीवभावस्याधारश्चिदाभासो न तु चिदितिभावः ॥ ८ ॥

गिरिनद्यादीनां चिदाभासाभावे कारणमाह, चित्रेति ।

**चित्रस्थपर्वतादीनां वस्त्राभासो न लिख्यते ।**
**सृष्टिस्थमृत्तिकादीनां चिदाभासस्तथा न हि ॥ ९ ॥**

चित्रस्थपर्वतादीनां चित्रे विद्यमानानां पर्वतादीनां वस्त्राभासो यथा न लिख्यते तथैव सृष्टिस्थमृत्तिकादीनां जडानां चिदाभासो न हि कल्प्यते ॥९॥

अविद्यायाः संसारकारणत्वं, विद्यायास्तन्निवारकत्वम् ।

आत्मनः संसारित्वं मिथ्यामात्रमेवेत्याह, संसार इति ।

**संसारः परमार्थोऽयं संलग्नः स्वात्मवस्तुनि ।**
**इति भ्रान्तिरविद्या स्याद्विद्ययैषा निवर्तते ॥ १० ॥**

अयं संसारः परमार्थः सत्यभूतः स्वात्मवस्तुनि स्वस्वरूपभूते परमात्मनि संलग्न इति भ्रान्तिरविद्या स्यात् । एषाऽविद्या विद्यया "संसारो मिथ्यारूप" इत्येवं निश्चयरूपया निवर्तते ॥ १० ॥

संसारभ्रान्तिनिवर्तकविद्यास्वरूपमाह, आत्मेति ।

**आत्माभासस्य जीवस्य संसारो नात्मवस्तुनः ।**
**इति बोधो भवेद्विद्या लभ्यतेऽसौ विचारणात् ॥ ११ ॥**

संसार आत्माभासस्य जीवस्यैव न त्वसंगस्यात्मवस्तुन इति बोधो ज्ञानं विद्या भवेत् । असौ विद्या वेदान्तवाक्यानां विचारणात् लभ्यते ॥ ११ ॥

विद्यावाप्तये विचारणाविषयमाह, सदेति ।

**सदा विचारयेत्तस्माज्जगज्जीवपरात्मनः ।**
**जीवभावजगद्भावबाधे स्वात्मैव शिष्यते ॥ १२ ॥**

तस्मात् जगज्जीवपरात्मनः सदा विचारयेत् मुमुक्षुभिर्यथा परमात्मस्वरूपविचारोऽवश्यं कर्तव्यस्तथा तदवशेषणाय जगज्जीवस्वरूपविचारोऽपि कर्तव्य इति भावः । जीवभावजगद्भावबाधे जीवस्वरूपस्य जगत्स्वरूपस्य च प्रतिरोधे सति स्वात्मैव सत्यतया शिष्यते ॥ १२ ॥

बाधस्वरूपं विवृणोति, नेति ।

**नाप्रतीतिस्तयोर्बाधः किं तु मिथ्यात्वनिश्चयः ।**
**नो चेत्सुषुप्तिमूर्छादौ मुच्येतायत्नतो जनः ॥ १३ ॥**

जगज्जीवयोरप्रतीतिर्बुद्धावभानं बाधो न भवति । किं तु तयोर्जीवसंसारित्वजगत्सत्यत्वयोर्मिथ्यात्वनिश्चयः । असत्यत्वेन निश्चयज्ञानं बाधः । ईशसृष्टेर्व्यवहारकालेऽनिवृत्तत्वात्तयोर्मृषात्मकत्वज्ञानमावश्यकमिति भावः । नो चेत् सुषुप्तिमूर्छादौ तयोर्भानं नास्तीत्ययत्नतो गुरुशास्त्राभ्यासमंतरेणैव जनो मुच्येत मुक्तो भवेत् । गुरुशास्त्राभ्यामासादितं तन्मिथ्यात्वज्ञानमेव मोक्षकारणं न तु सुषुप्त्यादावनुभूयमानं जगदादेरभानमित्यर्थः ॥ १३ ॥

परमात्माऽवशिष्यत इत्यनेन विवक्षितमर्थमाह, परमात्मेति ।

**परमात्मावशेषोऽपि तत्सत्यत्वविनिश्चयः ।**
**न जगद्विस्मृतिर्नो चेज्जीवन्मुक्तिर्न संभवेत् ॥ १४ ॥**

जगज्जीवयोर्मिथ्यात्वज्ञानसिद्धौ परमात्मावशेषः परमात्मनः परिशिष्टता नाम तत्सत्यत्वविनिश्चयः परमात्मैव सत्यमिति दृढज्ञानमेव । ननु नेति नेतीति सर्ववस्तूनामपहाने यदवशिष्यते तदेव परमात्मेत्युक्तत्वात्किं तत्स्वरूपनिश्चयप्रयत्नगौरवेण ? जगतो मिथ्यात्वज्ञानेनैव तद्विस्मृत्या बंधकप्रपंचनिवृत्तेः । अतः परमात्माऽवशिष्यत इत्यनेन जगद्विस्मृतिरूपावशेष एव विवक्षणीय इत्याशंक्याह । नेति । जगद्विस्मृतिः जगतोऽभानं नावशेषः । नो चेत् जगद्विस्मृतिरेवावशेष इत्युच्यते चेत्, जीवन्मुक्तिः जीवत एव प्राक्छरीरपातान्मुक्तिः ब्रह्मभावापत्तिर्न संभवेत् । जगतो मिथ्यात्वेऽपि तद्भानस्य शरीरपातात्प्रागपरिहार्यतया जगद्विस्मृतेस्तदानीमसत्त्वाज्जीवतस्सतो ब्रह्मभावापत्तेरसंभवादिति भावः ॥ १४ ॥

परोक्षापरोक्षविद्यास्वरूपविचारः ।

सदा विचारयेदित्यत्र विवक्षितकालावधिमाह, परोक्षेति ।

परोक्षा चापरोक्षेति विद्या द्वेधा विचारजा ।
तत्रापरोक्षविद्याप्तौ विचारोऽयं समाप्यते ॥ १५ ॥

विचारजा गुरुशास्त्रविचाराज्जाता विद्या परोक्षाऽपरोक्षेति द्वेधा भवति। तत्रापरोक्षविद्याप्तौ अपरोक्षज्ञानलाभे अयं विचारः सत्यत्वासत्यत्वविषयिकः समाप्यते अपरोक्षसाक्षात्कारोत्पत्तिक्षण एव विचारकालचरमावधिरितिभावः ॥१५॥

परोक्षापरोक्षयोः स्वरूपं दर्शयति, अस्तीति ।

अस्ति ब्रह्मेति चेद्वेद परोक्षज्ञानमेव तत् ।
अहं ब्रह्मेति चेद्वेद साक्षात्कारस्स उच्यते ॥ १६ ॥

स्पष्टोऽर्थः । साक्षात्कारमेवापरोक्षज्ञानमितिभावः ॥ १६ ॥

साक्षात्कारसाधनं प्रतिजानीते, तदिति ।

तत्साक्षात्कारसिद्ध्यर्थमात्मतत्त्वं विविच्यते ।
येनायं सर्वसंसारात्सद्य एव विमुच्यते ॥ १७ ॥

स्पष्टोऽर्थः । जगतो विभजनमेवात्मतत्त्वसाक्षात्कारसाधनम् । तदुत्तरक्षणमेव मुक्तिश्चेति भावः ॥ १७ ॥

चिच्चातुर्विध्यविचारः ।

तत्साधनविवक्षयाऽऽदौ परमात्मनः प्रतीयमानं चिच्चातुर्विध्यमाह, कूटस्थ इति ।

कूटस्थो ब्रह्म जीवेशावित्येवं चिच्चतुर्विधा ।
घटाकाशमहाकाशौ जलाकाशाभ्रखे यथा ॥ १८ ॥

स्पष्टः पूर्वार्धः । तत्र दृष्टान्तमाह । घटेति । यथा घटाकाशो महाकाशो जलाकाशाभ्रखे अभ्रे प्रतिबिंबिताकाशोऽभ्रखं इत्याकाशश्चतुर्विधो दृश्यते तथैवेत्यर्थः । ननु चिच्चातुर्विध्यमस्मिन् प्रकरणेऽपूर्वतया प्रदर्शितं न घटते । अन्यत्र जीव ईशो विशुद्धा चिदिति, चित्त्रैविध्यस्योक्तेरिति चेन्न । अन्यत्र विशुद्धस्यैव

चितः कूटस्थ इति ब्रह्मेति च भेदेन व्यवहारदर्शनात् । तद्व्यवहारस्य कल्पितभेद-मूलकत्वेऽपि ब्रह्मात्मैक्यज्ञानोपायतया सर्वैराश्रितत्वाच्च कल्पितं कूटस्थब्रह्मणोर्भेद-माश्रित्यात्र चातुर्विध्योक्तेः । इयं च कल्पना जिज्ञासूनां सुखबोधायाश्रितेति न क्वापि विप्रतिपत्तिः ॥ १८ ॥

घटाकाशमहाकाशौ सुविज्ञाताविति जलाकाशं विवृणोति, घटेत्यादिना ।

घटावच्छिन्नखे नीरं यत्तत्र प्रतिबिंबितः ।
साभ्रनक्षत्र आकाशो जलाकाश उदीरितः । १९ ॥

अपरिच्छिन्नस्याव्यापकत्वेन घटान्तर्वर्तिनो महाकाशस्य घटोपाधिवशाद्घटा-काश इति नामान्तरं व्यवहारगोचरं भवति । येनावच्छिद्यते सोऽवच्छेदकं इति, योऽवच्छिद्यते सोऽवच्छिन्न इति चोच्यते । घटावच्छिन्नखे घटेन परिमित इव भासमाने घटावच्छिन्नाकाशे यन्नीरं विद्यते तत्र तादृशे जले प्रतिबिंबितः साभ्र-नक्षत्रः आकाशो जलाकाश इत्युदीरित उक्तः ॥ १९ ॥

मेघाकाशस्वरूपं विव्रियते, महाकाशस्येति ।

महाकाशस्य मध्ये यन्मेघमंडलमीक्ष्यते ।
प्रतिबिंबतया तत्र मेघाकाशो जले स्थितः ॥ २० ॥

स्पष्टोऽर्थः । मेघमंडले विद्यमाने जले प्रतिबिंबित आकाशो मेघाकाश इत्यर्थः ॥ २० ॥

अनुमानप्रमाणेन मेघाकाशं साधयति, मेघेति ।

मेघांशरूपमुदकं तुषाराकारसंस्थितम् ।
तत्र खप्रतिबिंबोऽयं नीरत्वादनुमीयते ॥ २१ ॥

मेघांशरूपं मेघे सूक्ष्मावयवरूपमुदकं तुषाराकारसंस्थितं सूक्ष्मावयवरूपेण स्थितं । तत्र तुषारे नीरत्वादयं खप्रतिबिंबो घटगतजलमिवानुमीयते । प्रत्यक्षेणा-दृश्यमानत्वादनुमित इति भावः ॥ २१ ॥

कूटस्थजीवयोरन्योन्याध्यासः

दार्ष्टान्तिके कूटस्थं विवृणोति, अधिष्ठानतयेति

**अधिष्ठानतया देहद्वयावच्छिन्नचेतनः ।**
**कूटवन्निर्विकारेण स्थितः कूटस्थ उच्यते ॥ २२ ॥**

देहद्वयावच्छिन्नचेतनः स्थूलसूक्ष्मरूपदेहद्वयेनावच्छिन्नो यश्चेतनः सोऽधिष्ठानतया देहद्वयस्याधारत्वेन तद्व्यतिरिक्तः कूटवत् कूटः कर्मागारे स्थापितो यस्मिँल्लोहमयानि वस्तूनि निक्षिप्यायोघनेन हन्यंते स उद्धन । तद्वन्निर्विकारेण स्थित इत्यतः कूटस्थ इत्युच्यते ॥ २२ ॥

जीवं विवृणोति, कूटस्थ इति ।

**कूटस्थे कल्पिता बुद्धिस्तत्र चित्प्रतिबिंबकः ।**
**प्राणानां धारणाज्जीवस्संसारेण स युज्यते ॥ २३ ॥**

कूटस्थे मायया बुद्धिः कल्पिता । तत्र बुद्धौ घटगतजले प्रतिबिंबिताकाश इव चित्प्रतिबिंबकः चितः प्रतिबिंबश्चिदाभासः प्राणानां धारणात्प्राणधारणरूपजीवशब्दप्रवृत्तिनिमित्तभूतक्रियासंबंधाज्जीवो जीवसंज्ञिको भवति । एतत्प्राणधारणं कूटस्थस्यैव किं न स्यादित्यत आह, संसारेणेति । स जीवः संसारेण युज्यते संसारी भवति । कूटस्थस्य निष्क्रियत्वेन प्राणधारकत्वासंभवादसंगत्वेन संसारसंबंधासंभवाच्च तदतिरिक्तस्तत्प्रतिबिंबरूपजीव एव संसारी भवतीति भावः ॥२३॥

कूटस्थस्य सत्वेऽपि तस्याभाने कारणमाह, जलेति ।

**जलव्योम्ना घटाकाशो यथा सर्वस्तिरोहितः ।**
**तथा जीवेन कूटस्थः सोऽन्योन्याध्यास उच्यते ॥ २४ ॥**

सुगमा पदयोजना । अत्र जीवेन कूटस्थस्य तिरोधानं न व्यवहारेऽनुभूयमानतिरोधानसदृशम् । किं त्वन्यादृशमेवेत्याह, स इति । स तच्च तिरोधानं अन्योन्याध्यास इत्युच्यते भाष्यादिष्विति शेषः । अन्योन्याध्यासः अन्योन्यता-

दात्म्याध्यासः अन्योन्यं तत्तद्धर्माध्यासश्च विवक्षितः । अस्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां चारोपणं प्रकृतेऽध्यास इति तात्पर्यम् ॥ २४ ॥

आवरणविक्षेपविचारः ।

अन्योन्याध्यासबीजं मूलाविद्येत्याह, अयमिति ।

**अयं जीवो न कूटस्थं विविनक्ति कदाचन ।**
**अनादिरविवेकोऽयं मूलाविद्येति गम्यताम् ॥ २५ ॥**

अयमेवमन्योन्याध्यासेन मिथ्याज्ञानसहितो जीवः कदाचन यदा कदाऽपि कूटस्थं न विविनक्ति स्वस्माद्विविक्ततया न जानाति । अयमनादिरविवेको मूलाविद्येति गम्यतां ज्ञायताम् ॥ २५ ॥

तस्याः विक्षेपावृतिरूपं द्वैविध्यं प्रदर्श्य तत्रावृतिस्वरूपं निरूपयति, विक्षेप इति ।

**विक्षेपावृतिरूपाभ्यां द्विधाऽविद्या व्यवस्थिता ।**
**न भाति नास्ति कूटस्थ इत्यापादनमावृतिः ॥ २६ ॥**

विक्षेपावृतिरूपाभ्यां विक्षेपो विक्षेपशक्तिः ययाऽऽवरणशक्तिमताऽज्ञानेन वस्तुनि तिरोहिते आकाशादयः कल्प्यन्ते सा । आवृतिरावरणशक्तिर्यया विद्यमानस्य वस्तुनः स्वरूपेण भानं प्रतिबध्यते सा । ताभ्यामविद्या द्विधा व्यवस्थिता। तत्रावृतिं निरूपयति, नेति । कूटस्थो न भाति नास्तीत्यापादनं व्यवहारकारणमावृतिरित्युच्यते । विक्षेपावृती ग्रंथकृतैव तृप्तिदीपे ३६, ३७ श्लोकाभ्यां विवरिष्येते ॥ २६ ॥

अज्ञानावरणयोर्लोकानुभवसिद्धतां प्रदर्शयति, अज्ञानीति ।

**अज्ञानी विदुषा पृष्टः कूटस्थं न प्रबुध्यते ।**
**न भाति नास्ति कूटस्थ इति बुध्वा वदत्यपि ॥ २७ ॥**

विदुषा ज्ञानिना "कूटस्थं जानासि किमिति?" पृष्टोऽज्ञानी "न मया प्रबुध्यते" इति प्रतिवदति । एवं च वाक्यप्रयोगस्य वाक्यार्थज्ञानपूर्वकत्वेन

प्रकृते वाक्यार्थस्याज्ञानरूपत्वेन तादृशाज्ञानानुभवो वक्तरि सिद्ध इति भावः। अज्ञानिनस्तत्कृतावरणानुभवं दर्शयति, नेति। स्वस्मिन्नेव साक्षितयाऽज्ञानानुभवरूपेण भासमानं कूटस्थं बुध्वापि कूटस्थो न भाति नास्तीति वदति। इदं प्रतिवचनं तदावरणमंतरा न घटत इत्यावरणानुभवोऽपि दर्शितः ॥ २७ ॥

तमःप्रकाशवद्विरुद्धस्वभावयोः स्वप्रकाशाज्ञानयोः कूटस्थे सह वर्तनं कथं घटत इत्याशंक्याह, स्वप्रकाश इति।

**स्वप्रकाशे कुतोऽविद्या तां विना कथमावृतिः।**
**इत्यादितर्कजालानि स्वानुभूतिर्ग्रसत्यसौ ॥ २८ ॥**

स्वप्रकाशे कूटस्थेऽविद्याऽज्ञानं कुतस्संभवति? न संभवतीति भावः। तां विना अविद्याभावे आवृतिः कथं संभवति? इत्यादितर्कजालानि आवरणाभावे तन्निमित्तस्य विक्षेपस्याभावस्तदभावे ज्ञानवैयर्थ्यं, ततस्तत्प्रतिपादकशास्त्रस्याप्रामाण्यमित्येवंविधां हेतुवादपरंपरां स्वानुभूतिः पूर्वश्लोकोक्तानुभवो ग्रसति बाधत इत्यर्थः। तथाचाह भगवान् भाष्यकारः"अहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहार" इति ॥ २८ ॥

अनुभवबाधितस्य केवलहेतुवादस्य निष्प्रयोजनतामाह, स्वेति।

**स्वानुभूताववि श्वासे तर्कस्याप्यनवस्थितेः।**
**कथं वा तार्किकंमन्यस्तत्त्वनिश्चयमाप्नुयात् ॥ २९ ॥**

स्वानुभूतौ स्वानुभवे अविश्वासे प्रामाण्यसंशये सति, स्वानुभवमपहाय केवलहेतुवादावष्टंभने सतीत्यर्थः, तर्कस्याप्यनवस्थितेः अनुकूलतर्काभावे केवलानुमानस्याप्यनिश्चायकत्वस्य तार्किकैरेवांगीकृततया, तार्किकंमन्यः तार्किकमात्मानं यो मन्यते स न तु तत्त्वतस्तार्किकः स्वानुभवमपरिज्ञाय केवलस्वप्रतिभापरिकल्पितहेतुवादादरुंबीत्यर्थः। सः तत्त्वनिश्चयं कथमाप्नुयात्? स्वानुभवबाधकस्तर्कस्त्याज्य एवेति भावः ॥ २९ ॥

नन्वनुभवस्य तत्त्वनिश्चायकत्वेऽप्यनुभूतस्य तत्त्वस्य संभावितत्वज्ञानार्थं तर्कोऽवश्यमाश्रयणीय एवेत्याशंक्य तर्ह्यनुभवाविरोध्येव तर्को ग्राह्यो न तु तद्बाधात्याह,

**बुद्ध्यारोहाय तर्कश्चेदपेक्षेत तथा सति ।**
**स्वानुभूत्यनुसारेण तर्क्यतां मा कुतर्क्यताम् ॥ ३० ॥**

अनुभूतस्य विषयस्य बुद्ध्यारोहाय सम्यग्बुद्धौ स्थिरीकरणाय तर्कोऽपेक्षेतेति चेत्तथा सति स्वानुभूत्यनुसारेण तर्क्यतां । मा कुतर्क्यतां कुत्सितवादो मा क्रियताम् । "श्रुतिमतस्तर्कोऽनुसंधीयता"मिति श्रुत्यनुकूलतर्कस्यानुसंधीयमानतायाः प्रतिपादितत्वात् ॥ ३१ ॥

अनुभवानुसारिणं तर्कं द्वाभ्यां प्रदर्शयति, स्वेति ।

**स्वानुभूतिरविद्यायामावृतौ च प्रदर्शिता ।**
**अतः कूटस्थचैतन्यमविरोधीति तर्क्यताम् ॥ ३१ ॥**

अविद्यायामावृतौ च स्वानुभूतिः "न भाति नास्ति कूटस्थ"इत्यज्ञानिनोऽनुभवः प्राक् २७ श्लोके प्रदर्शिता । अतः कूटस्थचैतन्यस्याज्ञानावरणयोश्च यौगपद्येन भानात् स्वप्रकाशं कूटस्थचैतन्यमविद्यावरणयोरविरोधीति तर्क्यताम् । ३१ ॥

स्वानुभवानुसारिणं तर्कं प्रदर्शयति, तदिति ।

**तच्चेद्विरोधि केनेयमावृतिर्ह्यनुभूयताम् ।**
**विवेकस्तु विरोध्यस्यास्तत्त्वज्ञानिनि दृश्यताम् ॥ ३२ ॥**

तत् कूटस्थचैतन्यमविद्याया विरोधीतिचेत्, तर्हि तयोरेकत्रावस्थानासंभवे इयमज्ञानिनः स्वानुभूत्या प्रदर्शिता आवृतिः केनानुभूयताम्? यद्यावृतेः स्वप्रकाशस्य चैतन्यस्य चाविरोधस्तदा तत्त्वज्ञानादावरणनाश इति कथमुपपद्यते? इत्यतो मुख्यतया तद्विरोधिनं नाशकं प्रदर्शयति, विवेक इति । आवृतेर्विवेको विचारजन्यं ज्ञानं अस्या आवृतेर्विरोधी नाशकः । स च तत्त्वज्ञानिनि

दृश्यताम। अतो विवेकस्यैवाविद्यानाशकत्वम्। न तु केवलतत्त्वज्ञानस्य। तस्य ज्ञानस्य तत्त्वानतिरेकात्। तत्त्वस्य सर्वदा सत्त्वेन सर्वदा तन्नाशप्रसंग इति भावः ॥ ३२ ॥

आवरणशक्तिस्वरूपं तत्सत्तां च प्रदर्श्य तदतिरिक्तविक्षेपशक्तिस्वरूपं प्रदर्शयति, अविद्येति।

अविद्यावृतकूटस्थे देहद्वययुता चितिः।
शुक्तौ रूप्यवदध्यस्ता विक्षेपाध्यास एव हि ॥ ३३ ॥

शुक्तौ रूप्यवदारोपितं अध्यस्तं रूप्यमिव अविद्यावृतकूटस्थे अविद्यया आवृतो यः कूटस्थस्तस्मिन्नध्यस्था देहद्वययुता स्थूलसूक्ष्मदेहयुता चितिश्चिदाभासो विक्षेपाध्यास एव हि। अन्यस्यान्यथाप्रतीयमानत्वादध्यास इति भावः। येन निर्विकारे कूटस्थेऽन्योन्यधर्मा अन्योन्यस्मिन्नध्यस्यन्ते स एव विक्षेपः ॥ ३३ ॥

शुक्तिरजतदृष्टान्तेनाध्यासविवरणम्।

विषयसौलभ्यायाध्याससाम्यमुभयत्र विवृणोति इदमिति।

इदमंशस्य सत्यत्वं शुक्तिगं रूप्य ईक्ष्यते।
स्वयंत्वं वस्तुताचैवं विक्षेपे वीक्ष्यतेऽन्यगम् ॥ ३४ ॥

आदौ पूर्वार्धेनोक्तः शुक्तौ रजताध्यासो विव्रियते। शुक्तिं दृष्ट्वा "इदं रजतमि"ति व्यवहारे शुक्तिगं शुक्तिगतमिदमंशस्येदन्तारूपस्य पुरोवर्तित्वादेर्व्यावहारिकं यत्सत्यत्वं व्यवहाराबाध्यत्वं तत् रूप्ये आरोपितमीक्ष्यते। पश्चादुत्तरार्धेन कूटस्थे देहद्वयाध्यासो विव्रियते। तथैव कूटस्थगतं स्वयंत्वं वस्तुता विक्षेपे अन्यगं स्थूलसूक्ष्मदेहसहितचिदाभासगतं वीक्ष्यते, तद्गतत्वेनेति भावः ॥ ३४ ॥

दृष्टान्तदार्ष्टान्तिकयोरंशविशेषाप्रतीत्याऽपि साम्यं दर्शयति, नीलेति।

नीलपृष्ठत्रिकोणत्वं यथा शुक्तौ तिरोहितम्।
असंगानन्दताद्येवं कूटस्थेऽपि तिरोहितम् ॥ ३५ ॥

यथा शुक्तौ रजताध्यासे नीलपृष्ठत्रिकोणत्वं शुक्तिगतं तिरोहितं न प्रतीयते । यथा शुक्तौ रजतस्य तद्धर्माणां चाध्यासेन शुक्तिगतनीलपृष्ठत्वादयो न भासन्ते एवं कूटस्थे स्थूलसूक्ष्मदेहादेस्तद्धर्मसंनिहितत्वादेरध्यासेन तद्विरोध्यसंगत्वादयो न भासन्त इति भावः ॥

इदमत्र बोध्यम् । कूटस्थोऽसंगानन्दरूपः । चिदाभासोऽतथाविधः । यथा पुरोवर्तिशुक्तिकायां भ्रांत्येदं रजतमिति रजतत्वारोपे इदंपदार्थे वस्तुतो विद्यमानं नीलपृष्ठत्रिकोणत्वादि तिरोदधाति, एवं कूटस्थे चिदाभासस्याहंशब्दवाच्यस्यारोपे कूटस्थनिष्ठासंगानन्दादि तिरोभवति । शुक्तिकायां विद्यमानं पुरोदेशसंबंधित्वमारोपितरजते यथा भासमानं तथा कूटस्थनिष्ठं स्वयंत्वं चिदाभासे भासमानं भवति । इदं रजतमित्यादाविवेंद्रियसन्निकर्षादेरभावेऽप्यारोप्याधिष्ठानस्यात्मन इंद्रियगोचरत्वेऽपि स्वप्रकाशत्वेनाध्यासः संगच्छते । यद्यपि स्वयमात्मकूटस्थशब्दा एकार्थकाः । तथापि तत्र कूटस्थे आत्मनि चिदाभासाध्यासे स्वयमहंशब्दयोरेकार्थकत्वमपि नापतति । स्वयंशब्दार्थस्य "अहं स्वयं शक्नोमि" "त्वं वीक्षस्व स्वय"मित्यादावनुगतत्वेन व्यापकतया अहंत्वादेर्व्याप्यतया इदंत्वरजतत्वादेरिव सामान्यविशेषभावे न तयोर्भेदस्य निश्चितत्वात् । स्वयंत्वं चान्यत्वं निवारयत्कूटस्थतामेव निश्चाययति । स्वयंत्वात्मत्वयोरेकत्वेऽपि घटादिष्वचेतनेषु स्वयंशब्दप्रयोगो न विरुध्यते । तत्रात्मत्वस्य व्यापकस्य अव्यभिचारात् । घटादिषु स्वयंशब्दप्रयोगेऽपि तत्र बुद्धिप्रतिफलितचैतन्याभावाच्चेतनाचेतनविभागः समंजसः संपद्यत इति तेष्वचेतनव्यवहारस्य नानुपपत्तिः । आत्मन एकत्वेन चिदाभासकल्पनाधिष्ठानत्वस्येव अचेतनघटादिकल्पनाधिष्ठानत्वस्यावश्यमभ्युपगमात् । स्वत्वात्मत्वयोरेकत्वेऽहमादिष्वनुगतस्य स्वत्वादेरात्मत्वमिवेदमात्मत्वं तदात्मत्वमित्यादावनुगतमिदंत्वतत्त्वाद्यात्मत्वमेवेति न शंकनीयम । सम्यगात्मत्वमित्यादौ सम्यक्त्वमात्मत्वानुगतमप्यन्यत्रापि सम्यक्त्वव्यवहारात् पृथग्भूतमिव तदात्मत्वमिदमात्मत्वमिति तत्तेदन्तयोरात्मानुगतत्वेऽपि स घट अयं घटः इत्यत्रापि तत्तेदन्तयोर्दर्शनेनात्मत्वव्यभिचारात् । एते विरुद्धधर्माः । तत्त्वप्रतियोगीदन्त्वम् । स्वत्वप्रतियोग्यन्यत्वम् । त्वन्ताप्रतियोग्यहन्ता । अन्यत्र प्रतियोगिनि स्वयंशब्दार्थे कूटस्थे त्वन्ताप्रतियोग्यहंशब्दार्थः

परिकल्पितः। एवं जीवकूटस्थयोर्भेदः स्फुटमवगम्यमानोऽप्यविद्यावशंवदाः कूटस्थस्य बुद्ध्यगोचरत्वात्तयोरेकतामवगच्छन्ति । अविद्यापरिकल्पित एवैष जीवकूटस्थयोर्भ्रमोऽविद्यानिवर्तकं ज्ञानं विना न निवर्तत इति द्विपंचाशच्छ्लोकपर्यन्तं वक्ष्यमाणग्रन्थस्य संगृहीतोऽर्थ इति ॥३५॥

उभयत्रान्यारोपेण केषांचिदंशानामप्रतीत्या नामान्तरप्राप्त्यापि साम्यमित्याह् । आरोपितस्येति ।

आरोपितस्य दृष्टान्ते रूप्यं नाम यथा तथा।
कूटस्थाध्यस्तविक्षेपनामाऽहमिति निश्चयः ॥ ३६ ॥

यथा दृष्टान्ते शुक्तिस्थले आरोपितस्य वस्तुनो रूप्यमिति नाम भवति तथा कूटस्थाध्यस्तविक्षेपनाम कूटस्थेऽध्यस्थो यो विक्षेपश्चिदाभासस्वरूपस्तस्य नाम अहमिति निश्चयः ॥३६॥

विपरीतनामानुभवं दर्शयति इदमिति ।

इदमंशं स्वतः पश्यन् रूप्यमित्यभिमन्यते ।
तथा स्वं च स्वतः पश्यन्नहमित्यभिमन्यते ।३७॥

यथा शुक्तिस्थले इदमंशमिदन्तां स्वतः पश्यन् पुरोवर्तिनीं शुक्तिं वस्तुमात्रेण निर्दिशन् तत् रूप्यमित्यभिमन्यते रजताभिमानी भवति, तथा स्वतः परमार्थतः स्वयंप्रकाशं स्वमात्मानमेव पश्यन्नहमित्यभिमन्यते तत्राहंकाराभिमानी भवति ॥३७॥

इदन्त्वरूप्यत्वांशयोर्विशेषणीभूतयोर्भिन्नत्वेऽपि विशेष्यभूतो व्यक्त्यंशो यथा दृष्टान्तेऽभिन्नस्तथा दार्ष्टान्तिके स्वयन्ताऽहन्तयोर्विशेषणीभूतयोर्धर्मयोर्भिन्नत्वेऽपि धर्मीणोऽभेद एवेत्युभयोरप्युभयत्र समाना प्रतीतिरित्याह, इदमिति ।

इदन्त्वरूप्यते भिन्ने स्वत्वाहन्ते तथेष्यताम्।
सामान्यं च विशेषश्च ह्युभयत्रापि गम्यते ॥ ३८ ॥

शुक्तिरजतस्थले इदन्त्वरूप्यते शुक्तिवस्तुनि निर्दिश्यमानमिदन्त्वं, तदारोपिता रूप्यता च भिन्ने यथा, तथा कूटस्थे विद्यमानं स्वत्वं, तस्मिन्नारोपिताऽहन्ता च भिन्ने, इतीष्यताम्। उभयत्राऽपि दृष्टान्तदार्ष्टान्तिकयोस्सामान्यमुभयानुगतो धर्मो विशेषः प्रत्येकमसाधारणो धर्मश्च गम्यते प्रतीतिगोचरो भवति ॥ ३८ ॥

स्वयंशब्दस्य सामान्यार्थवाचकत्वं लौकिकप्रयोगेन द्रढयति, देवदत्त इति।

देवदत्तः स्वयं गच्छेत्त्वं वीक्षस्व स्वयं तथा।
अहं स्वयं न शक्नोमीत्येवं लोके प्रयुज्यते ॥ ३९ ॥

देवदत्तः स्वयं गच्छेत् , त्वं स्वयं वीक्षस्व, अहं स्वयं न शक्नोमीत्येवरूपः प्रयोगो लोके प्रयुज्यते। तस्मात् स्वयन्त्वं सर्वानुगो धर्मोऽहन्ताचाभिमानमात्रगत इत्यनयोस्सामान्यविशेषभावो बोध्यः ॥ ३९ ॥

दृष्टान्ते इदंशब्दस्य दार्ष्टान्तिके स्वयंशब्दस्य च सर्वत्रानुगतधर्मार्थकत्वप्रदर्शनेन सामान्यार्थकतां स्पष्टयति, इदमिति।

इदं रूप्यमिदं वस्त्रमिति यद्वदिदं तथा।
असौ त्वमहमित्येषु स्वयमित्यभिमन्यते ॥ ४० ॥

इदं रूप्यमिदं वस्त्रमिति रूप्यवस्त्रयोः साधारण्येनेदं शब्दो यद्वत् प्रयुज्यते तथाऽसौ त्वमहमित्येषु स्वयमिति सामान्यतोऽभिमन्यते। तेषु स्वयं शब्दस्य प्रयोगदर्शनात्तदर्थस्य सामान्यरूपत्वमित्यर्थः। त्वमहमसावित्यादिसर्वव्यवहारेषु स्वयंतायाः प्रतीत्यनुगमेन तस्याः सामान्यत्वं, वदननुगतानां युष्मत्त्वादीनां विशेषत्वमित्यनेन सूचितम् ॥ ४० ॥

कूटस्थात्मस्वयंशब्दानां समानार्थकत्वनिरूपणम्।

ननु स्वत्वाहन्तयोर्भेदे तदाश्रययोः कूटस्थजीवयोर्भेदस्सिध्यतीति तव सिद्धान्तहानिरित्याशंक्य समाधत्ते, अहंत्वादिति।

अहन्त्वाद्भिद्यतां स्वत्वं कूटस्थे तेन किं तव ।
स्वयंशब्दार्थ एवैष कूटस्थ इति मे भवेत् ॥ ४१ ॥

यद्यपि कूटस्थे स्वत्वमहन्त्वाज्जीवे वर्तमानाद्भिद्यतां नाम । तेन तव पूर्वपक्षिणः किं को लाभः? नेन भेदमात्रेण विशेष्ये भेदालाभात् । तदेतदाह, स्वयमिति । स्वयंशब्दार्थः स्वयंशब्दजन्यबोधविशेष्य एष कूटस्थ एवेति मे भवेत् ॥ ४१ ॥

स्वयंशब्दार्थः कूटस्थं बोधयतीति कथमुच्यते ? स्वत्वस्य तद्विशेषणीभूतस्य धर्मान्तरनिवारकत्वात् कूटस्थत्वस्य तत्त्वादित्याशंकां समाधत्ते अन्यत्वेति ।

अन्यत्ववारकं स्वत्वमिति चेदन्यवारणम् ।
कूटस्थस्यात्मतां वक्तुरिष्टमेव हि तद्भवेत् ॥ ४२ ॥

त्वत्वं स्वयंशब्दार्थविशेषणीभूतो धर्मोऽन्यत्ववारकमन्यत्वरूपस्य धर्मस्य निवारकमिति वदसि चेत्तदन्यवारणं स्वयंशब्दार्थस्य कूटस्थस्यात्मतां वक्तुर्मे इष्टमेव भवेत् । अन्यत्वनिवारकेण स्वयंत्वेन बोधितो यः कूटस्थः स एवात्मेति सिध्यति । एवं च नेति नेतीति वाक्येन कूटस्थेतरनिवारणेनैव ब्रह्मणस्सिद्धिरित्यतः स्वयंशब्दस्येतरार्थनिवारकताऽस्माकमपीष्टार्थसाधिकैवेति भावः ॥ ४२ ॥

स्वयंशब्दार्थः कूटस्थोऽस्तु । तस्यात्मता कुतः सिध्यति ? स्वयंशब्दार्थ विशेषणीभूतस्वत्वस्यान्यनिवारकत्वाभ्युपगमेनात्मत्वस्यापि निवारणप्रसंगादि त्याशंक्य स्वत्वमात्मत्वं चैकमेव, न भिन्नौ धर्मौ, अतः स्वत्वमात्मत्वं न वार यतीत्युपपादयति, स्वयमिति ।

स्वयमात्मेति पर्यायौ तेन लोके तयोस्सह ।
प्रयोगो नास्त्यतः स्वत्वमात्मत्वं चान्यवारकम् ॥ ४३ ॥

स्वयमात्मेति द्वौ शब्दौ पर्यायौ समानप्रवृत्तिनिमित्तकौ। ययोः शब्दयोः प्रयोगे एक एवार्थो बुध्यते तौ शब्दौ पर्यायावित्युच्येते । तेन कारणेन लोके तयोस्स्वयमात्मशब्दयोः सहप्रयोगः स्वयमात्मेति युगपत्प्रयोगो नास्ति; तत्प्रवृत्तिनिमि-

तयोरेकत्वात् । सहप्रयोगे च धर्मभेदो नियामकः । तथा च सहप्रयोगाभावेन स्वत्वात्मत्वयोर्भिन्नधर्मत्वं नास्तीत्यवगन्तुं शक्यते । एवं सहप्रयोगाभावेन स्वत्वात्मत्वयोर्भेदं निराकृत्य तयोर्व्यापारैक्येनापि भेदाभावं साधयति, अत इति । अतः स्वत्वमात्मत्वं चान्यवारकमिति स्वत्वात्मत्वयोरन्यवारणमेव व्यापारो नान्यः । एवं च व्यापारैक्यात् तदैक्यं च ज्ञातुं शक्यमिति भावः ॥ ४३ ॥

एतावता प्रबन्धेन स्वत्वं कूटस्थात्मधर्म इति साधितम् । आत्मा च चेतनः । एवं च चेतनधर्मस्य स्वत्वस्याचेतने कथं स्थितिः ? तदभावे "घटः स्वयं न जानाती"त्यादिव्यवहारः कथमुपपद्यते ? अचेतने घटे स्वयन्ताया बाधादित्याशंक्य समाधत्ते, घट इत्यादि ।

**घटः स्वयं न जानातीत्येवं स्वत्वं घटादिषु ।**
**अचेतनेषु दृष्टं चेद्दृश्यतामात्मसत्वतः ॥ ४४ ॥**

ननु "घटः स्वयं न जानाती"त्येवं रूपे प्रयोगेऽचेतनेषु घटादिषु स्वत्वं स्वत्वरूपो धर्मो दृष्टः । तत्र स्वयन्ताभावे एतत्प्रयोगानुपपत्तेरितिचेदात्मसत्वतस्तेष्वप्यात्मसत्वतः स्फुरणरूपेण आत्मनो विद्यमानत्वात्स्वयं शब्दप्रयोगो दृश्यताम् । आत्मनिष्ठस्वत्वस्य घटेऽध्यासादयं व्यवहार औपचारिकः, वस्तुनो घटे स्वत्वं नास्त्येवेति भावः ॥ ४४ ॥

यदि घटाद्यचेतनेष्वात्मत्वस्वयंत्वव्यवहारस्तर्हि चेतनाचेतनविभाग एव न स्यादित्याशंक्याह, चेतनेति ।

**चेतनाचेतनभिदा कूटस्थात्मकृता न हि ।**
**किं तु बुद्धिकृताभासकृतैवेत्यवगम्यताम् ॥ ४५ ॥**

चेतनाचेतनभिदा अयं चेतनोऽयमचेतन इति भेदः कूटस्थात्मकृता कूटस्थरूपो य आत्मा तेन कृता न हि, तद्भेद आत्मनो भावाभावकल्पितो नेत्यर्थः, उभयत्राप्यात्मनः सत्वस्य समानत्वात् । तर्हि कुतोऽयं भेद इत्यत आह, किंत्विति । बुद्धिकृताभासकृता बुद्ध्या कृतो बुद्धौ प्रतिबिंबितो य आभासश्चिदा-

भासस्तेन कृता तन्निमित्तेत्यवगम्यताम् । चिदाभासविशिष्टबुद्धिसत्त्वे चेतन इति, तदभावेऽचेतन इति च व्यवहार इति भावः ॥ ४५ ॥

कूटस्थाभ्युपगमं विना चिदाभाससत्वासत्वाभ्यां चेतनाचेतनविभागस्य सद्भावेऽपि यथा चिदाभासः कूटस्थे भ्रांतिकल्पित इत्यभ्युपगतं, तथा घटादिरचेतनोऽपि कूटस्थे भ्रांतिकल्पित इत्यभ्युपगन्तव्यः, अन्यथा सिद्धान्तभंगापत्तेरित्याह, यथेति ।

**यथा चेतन आभासः कूटस्थे भ्रान्तिकल्पितः ।**
**अचेतनो घटादिश्च तथा तत्रैव कल्पितः ॥ ४६ ॥**

चेतन आभासः चेतनतया व्यवह्रियमाणश्चिदाभासस्तत्प्रतिबिंबितत्वात्, यथा कूटस्थे प्रत्यगात्मनि भ्रान्तिकल्पित आरोपित एव तथा अचेतनो घटादिश्च तत्रैव कूटस्थे कल्पित आरोपितः ॥ ४६ ॥

स्वत्वस्य सर्वत्रानुगमादात्मत्वमिति निश्चित्य सम्यगात्मत्वमित्यादौ सम्यक्त्वस्य स्वत्वमात्मत्वमप्येकमेव तत्त्वमिति निश्चितम् । तेन यत्सर्वानुगतं तदात्मत्वमिति लब्धम् । एवं च तत्तेदन्तयोरप्यात्मता स्यादिति शंकते, तत्त इति ।

**तत्तेदन्ते अपि स्वत्वमिव त्वमहमादिषु ।**
**सर्वत्रानुगते तेन तयोरप्यात्मतेति चेत् ॥ ४७ ॥**

त्वमहमादिषु स्वत्वमिव त्वं स्वयं वीक्षस्व अहं स्वयं न शक्नोमीति यथा स्वत्वं सर्वत्रानुगच्छति, तथैव तत्तेदन्ते तदिदंशब्दबोद्ध्यौ धर्मौ व्यवहारे सर्ववस्तुसाधारणतया स्वयंत्ववत्सर्वत्रानुगते । तेन स्वयंत्वस्य यथाऽऽत्मतारूपत्वं तथा तयोरप्यात्मताऽऽत्मत्वरूपत्वं स्यादिति भावः ॥ ४७ ॥

समाधत्ते, त इति ।

**ते आत्मत्वेऽप्यनुगते तत्तेदन्ते ततस्तयोः ।**
**आत्मत्वं नैव संभाव्यं सम्यक्त्वादेर्यथा तथा ॥ ४८ ॥**

ते तत्तेदन्ते आत्मत्वं तदात्मत्वमिदमात्मत्वमिति प्रयोगदर्शनादात्मत्वेऽप्यनुगते । ततः तन्मात्रेणैव तयोस्तत्तेदन्तयोरात्मत्वमात्मतारूपत्वं नैव संभाव्यं । तत्र दृष्टान्तमाह, सम्यगिति । यथा सम्यक्त्वादेः सम्यगात्मत्वं असम्यगात्मत्वमित्यादौ सम्यक्त्वासम्यक्त्वयोरात्मत्वानुगतत्वेऽपि, सम्यगुक्तं त्वयेत्यादावपि सम्यक्त्वादेर्दर्शनादधिकदेशवृत्तित्वेन यथा तयोरात्मत्वाभावस्तथा स घटः अयं घट इत्यादौ घटत्वाद्यनुगतत्वेनापि तत्तेदन्तयोर्दर्शनादात्मापेक्षया अधिकदेशवृत्तित्वेन न तयोरात्मत्वमिति भावः ॥ ४८ ॥

तत्तेदन्तयोरपि, स्वयंत्वस्येवात्मत्वमभ्युपेयम् । तन्निवारणे कोऽसौ तव निर्बंध, इत्याशंकां, यदि तत्तेदन्तेऽप्यात्मत्वरूपे स्यातां प्रतिद्वंद्विभावेन लोकसिद्धस्तयोर्व्यवहारो भज्येतेत्याशयेन परिहरति, तत्तेति ।

**तत्तेदन्ते स्वताऽन्यत्वे त्वन्ताहन्ते परस्परम् ।**
**प्रतिद्वंद्वितया लोके प्रसिद्धे नास्ति संशयः ॥ ४९ ॥**

तत्तेदन्ते, स्वतान्यत्वे, त्वन्ताहन्ते, परस्परं प्रतिद्वंद्वितया लोके प्रसिद्धे । प्रतिद्वंद्विभूतौ विरुद्धावित्यनुभवः । एवं च विरुद्धद्वयात्मकत्वमात्मत्वस्य न युज्यत इति भावः । तत्र संशयो नास्ति ॥ ४९ ॥

कूटस्थं प्रति प्रतिद्वंद्विफलितमाह, अन्यताया इति ।

**अन्यतायाः प्रतिद्वंद्वी स्वयं कूटस्थ इष्यताम् ।**
**त्वन्तायाः प्रतियोग्येषोऽहमित्यात्मनि कल्पितः ॥ ५० ॥**

स्वयं स्वयंशब्दार्थः कूटस्थोऽन्यताया अन्यशब्दबोध्यधर्मस्य प्रतिद्वंद्वी विरोधी, त्वन्तायाः त्वंशब्दबोध्यधर्मस्य प्रतियोगी विरोधिभूताहन्ताश्रयोऽहंशब्दबोध्यधर्माश्रयः, एषोऽहंकर्तृत्वाभिमानोऽहंशब्दबोधित एव चिदाभासश्चात्मनि कल्पित इतीष्यताम् ॥ ५० ॥

नन्वहं स्वयं जानामीति प्रतीतिबलात्स्वयन्ताहन्तयोस्सामानाधिकरण्यप्रतीतेरहन्तायाः कथं कल्पितत्वमुच्यत इत्याशंकां परिहरति, अहन्तेति ।

**अहन्तास्वत्वयोर्भेदे रूप्यतेदन्तयोरिव ।**
**स्पष्टेऽपि मोहमापन्ना एकत्वं प्रतिपेदिरे ॥ ५१ ॥**

रूप्यतेदन्तयोरिव यथेदमिति निर्दिश्यमाने वस्तुनि शुक्तौ भ्रान्त्या तद्भिन्नस्य रूप्यत्वस्यारोपितत्वात् भेदे स्पष्टेऽपि तमजानन्तो मोहमापन्ना एकत्वं प्रतिपेदिरे "इदं रजतमित्यभेदेन व्यवहरन्ति, तथाऽहन्तास्वत्वयोरहंस्वयंशब्द-बोध्ययोर्धर्मयोर्भेदे पूर्वोक्तदिशा स्पष्टेऽपि जीवकूटस्थयोर्भेदे सुविदितेऽपीत्यर्थः । मोहमापन्ना जना अन्यधर्मानन्यस्मिन्नारोप्यैकत्वं प्रतिपेदिरे ॥ ५१ ॥

तत्र भ्रान्तेः कारणमाह, तादात्म्येति ।

**तादात्म्याध्यास एवात्र पूर्वोक्ताविद्यया कृतः ।**
**अविद्यायां निवृत्तायां तत्कार्यं विनिवर्तते ॥ ५२ ॥**

अत्र भिन्नयोरहन्तास्वत्वयोरेकत्वापादने तादात्म्याध्यासो जीवकूटस्थयो-रैक्यकल्पना पूर्वोक्ताविद्यया पूर्वस्मिन् पंचविंशतितमश्लोके उक्ता या अविद्या जीवकूटस्थविवेचनासामर्थ्यरूपानादिरविवेकात्मकमूलाविद्या तया कृतः कल्पितः । अविद्यायां निवृत्तायां तत्कार्यं तस्या अविद्यायाः कार्यमध्यासरूपं विनिवर्तते स्वयमेव नश्यति । उपादानकारणनाशे कार्यनाशस्य लोके दृष्टत्वादितिभावः ॥ ५२ ॥

अविद्यानिवृत्तौ तत्कार्यनाशः ।

नन्वविद्यानिवृत्तौ तत्कार्यं विनिवर्तत इत्यनुपपन्नम्, आविद्यानाशकब्रह्मा-त्मैकत्वविद्यायां जातायामप्यविद्याकार्यस्य देहादेर्ज्ञानदशायामप्युपलंभादित्या-शंक्याह, अविद्येति ।

**अविद्यावृतितादात्म्ये विद्ययैव विनश्यतः ।**
**विक्षेपस्य स्वरूपस्तु प्रारब्धक्षयमीक्षते ॥ ५३ ॥**

विद्यया चिदाभासकूटस्थैक्यज्ञानेन अविद्यावृतितादात्म्ये अविद्यामात्रकृते आवृतिर्न भाति नास्ति कूटस्थ इत्याकारिका तादात्म्यमविद्यावृतकूटस्थस्य देहद्वय-विशिष्टचिदाभासस्य चैक्याध्यासरूपविक्षेपश्च विनश्यतः । किं तु प्रारब्धकर्म

सहिताविद्याजन्यविक्षेपरूपं स्थूलसूक्ष्मशरीरात्मकं देहद्वयं प्रारब्धक्षयमीक्षत प्रारब्धातिरिक्तं कर्म ज्ञानेन विनश्यति। प्रारब्धस्तु प्रारब्धाधीनयावच्छरीरपाता-वधिकमितिभावः। अयमत्रसंग्रहः। "न भाति नास्ति कूटस्थ" इत्याकाराऽऽवृतिः कूटस्थे चिदाभासाध्यासरूपदेहद्वयसंयुता। तद्देहद्वयं च प्रारब्धप्राप्तम्। तत्र चिदाभासस्यारोपिततत्त्वज्ञानोदयेनाऽविद्याविनाशे सत्यावृतिविक्षेपौ विनश्यतः। इदं शवकल्पं। चिदाभासस्य शरीरद्वयं तु तत्पातेनैव विनश्यतीति ॥ ५३ ॥

नन्वविद्याया नाशे तदाश्रया विक्षेपशक्तिः किमाश्रया तिष्ठतीत्याशंक्य, निराश्रयस्य किंचित्कालं स्थितिर्नैयायिकैरप्यभ्युपेयत एवेति समाधत्ते, उपादान इति।

उपादाने विनष्टेऽपि क्षणं कार्यं प्रतीक्षते।
इत्याहुस्तार्किकास्तद्वदस्माकं किं न संभवेत् ॥ ५४ ॥

उपादाने कारणे विनष्टेऽपि तस्य कार्यं क्षणं नाशक्षणकालं प्रतीक्षते स्वनाशार्थं निरीक्षते, इति तार्किका आहुः। तद्वदस्माकं मतेऽप्यविद्याया नाशेऽपि तच्छक्तिभूतो विक्षेपः किंचित्कालं किं न संभवेत्? कालतारतम्यपरीक्षाया अत्राप्रयोजकत्वादिति भावः ॥ ५३ ॥

ननु कारणनाशस्य कार्यनाशजनकत्वात्कार्यनाशं प्रति प्रतियोगिनोऽपि कारणत्वात्कारणनाशक्षणे प्रतियोगिभूतकार्यस्यापि निराश्रया स्थितिरभ्युपेयते, क्षणमात्रं तत्स्थित्यङ्गीकारेणैवोपपत्तौ दीर्घकालस्थितिः कथमभ्युपेयत इत्यत आह, तंतूनामिति।

तंतूनां दिनसंख्यानां तैस्तादृक् क्षण ईरितः।
भ्रमस्यासंख्यकल्पस्य योग्यः क्षण इहेष्यताम् ॥ ५५ ॥

दिनसंख्यानां क्षणसमुदायात्मकदिनगतसंख्यापरिच्छिन्नानां वस्त्रस्योपादान-कारणभूतानां तंतूनां विषये तैस्तार्किकैस्तदवयवसूक्ष्मकालरूपः क्षणः कार्यस्थित्य-नुकूल ईरितः। असंख्यकल्पस्य असंख्याः कल्पा यस्य तस्य संख्यावदवयवशून्य-

कल्पस्याखंडकल्पस्यानादिकालमनुवृत्तस्येत्यर्थः। भ्रमस्य तत्कृतसंसारस्य योग्यः क्षण इह विक्षेपविषये इष्यताम् ॥ ५५ ॥

मतानामनेकत्वे सम्यग्विचाराभाव एव कारणम् ।

वस्तुतो युक्तिमात्रं प्रमाणीकृत्य वदतां रीतिमनुसृत्य समाधानमिदमुक्तम्। श्रुतिप्रमाणकानां वेदान्तिनां श्रुतिसिद्धार्थे न केवलयुक्त्यपेक्षेति मुख्यं समाधान-माह, विनेति ।

**विना क्षोदक्षमं मानं तैर्वृथा परिकल्प्यते ।**
**श्रुतियुक्त्यनुभूतिभ्यो वदतां किं नु दुश्शकम् ? ॥ ५६ ॥**

क्षोदक्षमं विचारसहं मानं प्रमाणं विना तैस्तार्किकैर्वृथा शास्त्रप्रमाण-मन्तरेण निरर्थकं केवलयुक्त्या कल्प्यते। श्रुतियुक्त्यनुभूतिभ्यः श्रुतिः "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथसंपत्स्य" (छां. ६. १४. २.) इत्यादिः, युक्तिर्मुक्ते-षुवदित्यादिः, अनुभूतिः ज्ञानिनां, ताभ्यः तदालंबनेनेत्यर्थः । वदतां वेदान्तिनाम-स्माकं किं नु दुश्शकं ? न किमपि ॥ ५६ ॥

अतिफल्गुतया तार्किकवादमुपेक्ष्य वक्तव्यमाह, आस्तामिति ।

**आस्तां दुस्तार्किकैस्साकं विवादं प्रकृतं ब्रुवे ।**
**स्वाहमोस्सिद्धमेकत्वं कूटस्थपरिणामिनोः ॥ ५७ ॥**

दुस्तार्किकैः प्रमाणमपहाय केवलयुक्त्यवष्टंभतया दुष्टा ये तार्किकास्तैस्साकं विवाद आस्ताम्, तद्विषये नास्माभिरतीव प्रयत्यते, प्रकृतमुपदेश्यं ब्रुवे। किं तदित्यत आह, स्वेति। स्वाहमोः स्वयन्ताहन्ताविशिष्टयोः कूटस्थपरिणामिनोः कूटस्थस्योपाधिकल्पितपरिणामवच्चिदाभासस्य च एकत्वं तादात्म्यं सिद्धं भ्रान्ति-सिद्धं। भ्रान्तिपरिहाणेऽहंकारास्पदचिदाभासादतिरिक्त एव कूटस्थो न त्वहंकारा-स्पद इति प्रतीयते ॥ ५७ ॥

तद्वादस्य फल्गुतयोपेक्ष्यत्वे कारणमाह, भ्राम्यन्त इति ।

भ्राम्यन्ते पंडितंमन्याः सर्वे लौकिकतैर्थिकाः ।
अनादृत्य श्रुतिं मौर्ख्यात्केवलं युक्तिमाश्रिताः ॥ ५८ ॥

सर्वे लौकिकतैर्थिकाः युक्तिमात्रानुसारेण तत्त्वं निश्चितुं प्रवृत्ता दर्शनप्रवर्तकाः पंडितंमन्याः पंडितानात्मनो मन्यमानाः श्रुतिमनादृत्य मौर्ख्यात् केवलं युक्तिमाश्रिता भ्राम्यन्ते भ्रान्तिं गत्वाऽपमार्गेषु प्रवर्तन्त इत्यर्थः ॥ ५८ ॥

ननु नास्तिकदर्शनप्रवर्तकानां श्रुत्यनादरणसत्त्वेऽप्यास्तिकदर्शनप्रवर्तकसाधारण्येन तदनादरणोक्तिरनुचितेत्याशंक्य तेषामप्यन्यादृशमनादरणमस्तीत्याह, पूर्वेति ।

पूर्वापरपरामर्शविकलास्तत्र केचन ।
वाक्याभासान् स्वस्वपक्षे योजयन्त्यप्यलज्जया ॥ ५९ ॥

तत्र तैर्थिकानां मध्ये केचन कणादकपिलभट्टादय आस्तिकदर्शनप्रवर्तकाः पूर्वापरपरामर्शविकलाः प्रमाणवाक्यानां पूर्वापरसंदर्भविचारेणैकवाक्यताकल्पने विकला भग्ना अशक्ताः स्वस्वपक्षेऽलज्जया वाक्याभासान् योजयन्ति कल्पयन्ति ॥ ५९ ॥

तत्र सर्वथा श्रुतिमनादृत्य श्रुतिरप्रमाणमेवेति वदतां मध्ये आदौ लोकायतिकानां मौर्ख्यं विशदयति, कूटस्थेति ।

कूटस्थादिशरीरान्तसंघातस्यात्मतां जगुः ।
लोकायताः पामराश्च प्रत्यक्षाभासमाश्रिताः ॥ ६० ॥

लोकायताः लोके आयतो विस्तृतोऽनायाससाध्यत्वादिति लोकायतश्चार्वाकमतसिद्धान्तः, तदालंबिनोऽपि लोकायताश्चार्वाकाः केवलप्रत्यक्षप्रमाणवादिनः । पामरास्सामान्यतश्शास्त्रज्ञानविकलाश्च प्रत्यक्षाभासं प्रमाणवदाभासमानप्रत्यक्षमात्रं प्रमाणत्वेनाश्रिताः, कूटस्थादिशरीरान्तसंघातस्य यस्य कूटस्थ आदिश्शरीरमन्तः तस्य संघातस्य स्थूलदेहस्य "स्थूलोऽहं कृशोऽहमित्यादिप्रात्यक्षिकप्रतीतिबलादात्मतां जगुः । प्रत्यक्षेणानुभूयमानत्वात् स्थूलशरीरमेवात्मेति मन्यमानास्ते

नास्तिकाः प्रत्यक्षमपि न सम्यग्विचारयन्ति । मरणानन्तरं स्थूलशरीरस्य सत्त्वेऽपि चैतन्यस्याभावाद्व्यवहृतेरदर्शनादिति भावः ॥ ६० ॥

आत्मस्वरूपविषये विविधमतविचारः ।

प्रत्यक्षाभासाश्रयेण प्रवर्तिते स्वमते "श्रुतिसिद्धमेव प्रमितं नान्यदिति" वादिनामङ्गीकारसंपादनायं श्रुत्यैकदेशं स्वार्थेऽविश्रान्तं किंचिच्छ्रुतिवाक्यं तेनास्तिका उदाजहुरित्याह, श्रौतीकर्तुमिमि ।

श्रौतीकर्तुं स्वपक्षं ते कोशमन्नमयं तथा ।
विरोचनस्य सिद्धान्तं प्रमाणं प्रतिजज्ञिरे ॥ ६१ ॥

ते लोकायतिकाः स्वपक्षं श्रौतीकर्तुं परप्रत्ययनाय श्रुतिसिद्धमिति प्रदर्शयितुमन्नमयं कोशं "स वा एष पुरुषोऽन्नरसमय" (तै. २. १.) इति विरोचनस्यासुरराजस्य सिद्धान्त"मात्मैव देहमय"इत्येतद्रूपं प्रमाणं प्रतिजज्ञिरे । प्रमाणत्वेनाङ्गीचक्रुरित्यर्थः ॥ ६१ ॥

अस्मिन्मते दोषदर्शनवतामन्येषां मतमाह, जीवेति ।

जीवात्मनिर्गमे देहमरणस्यात्र दर्शनात् ।
देहातिरिक्त एवात्मेत्याहुर्लोकायताः परे ॥ ६२ ॥

परे लोकायताः स्थूलदेहाज्जीवात्मनिर्गमे जीवात्मत्वेनाभिमतस्य जीवस्य निर्गमेऽत्र अन्नमयकोशरूपस्थूलदेहनाशरूपस्य देहमरणस्य दर्शनादात्मा देहातिरिक्तः स्थूलदेहाद्भिन्न एवेत्याहुः ॥ ६२ ॥

तेषां मते कीदृशोऽयमात्मेत्यत आह, प्रत्यक्षेति ।

प्रत्यक्षत्वेनाभिमताऽहंधीर्देहातिरेकिणम् ।
गमयेदिन्द्रियात्मानं वच्मीत्यादिप्रयोगतः ॥ ६३ ॥

अहं वच्मीत्यादिप्रयोगतः प्रत्यक्षेणाभिमता अंगीकृताऽहंधीर्देहातिरेकिणं स्थूलदेहाद्भिन्नमिन्द्रियात्मानमिन्द्रियाण्येवात्मा तं गमयेत् ज्ञापयेत् ॥ ६३ ॥

वागादिषुचैतन्यस्याभावात्कथमात्मत्वमित्याशंक्य चैतन्यप्रदर्शनेन परिहरति, वागादीनामिति ।

वागादीनामिंद्रियाणां कलहः श्रुतिषु श्रुतः ।
तेन चैतन्यमेतेषामात्मत्वं तत एव हि ॥ ६४ ॥

श्रुतिषु छांदोग्यबृहदारण्यकादिषूपनिषत्सु (छां. ५. १. बृ. ६. ७.) वागादीनामिन्द्रियाणां कलहः चेतनसहजधर्मः श्रुतः तेन तेषां चैतन्यमस्तीति तत एव चैतन्यसत्त्वाद्देहात्मत्वं च सिध्यति : हीति निश्चयार्थे ॥ ६४ ॥

इन्द्रियाणामनात्मत्ववादिनां हैरण्यगर्भाणां मतमाह, हैरण्येति ।

हैरण्यगर्भाः प्राणात्मवादिनस्त्वेवमूचिरे ।
चक्षुराद्यक्षलोपेऽपि प्राणसत्त्वे तु जीवति ॥ ६५ ॥

स्पष्टोऽर्थः ॥ अक्षाणींद्रियाणि । प्राणस्य सत्त्वे ॥ ६५ ॥

प्राणस्यात्मत्वे श्रुतिः प्रमाणमित्याह, प्राण इति ।

प्राणो जागर्ति सुप्तेऽपि प्राणश्रैष्ठ्यादिकं श्रुतम् ।
कोशः प्राणमयस्सम्यग्विस्तरेण प्रपंचितः ॥ ६६ ॥

सुप्तेऽपींद्रियाणीतराणि लयं गतानि प्राणस्तु जागर्ति । "प्राणाग्नय एवैतस्मिन् पुरे जागर्ति" (प्रश्न. ४३.) इति श्रुतेः । तत्प्राणे प्रपन्न उद्तिष्ठत् तदुक्थमभवत्तदेतदुक्थम् प्राणो वा व ज्येष्ठश्च श्रेष्ठश्च" (छां. ५.१. १.) "यस्मिन् व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्यते स वः श्रेष्ठः" (छां. ५. १. ७.) इत्यादिभ्यः प्राणश्रैष्ठ्यादिकं श्रुतम् । "अन्योऽन्तर आत्मा प्राणमयः (तै. २. २.) इत्यादिना प्राणमयः कोशः सम्यग्विस्तरेण बहुधा प्रपञ्चितः । एवं प्राणस्यात्मत्वं निश्चीयते ॥ ६६ ॥

अन्ये प्राणस्यात्मत्वे दूषणं दर्शयित्वा मनस आत्मत्वमावदयन्तीत्याह, मन इति

मन आत्मेति मन्यन्ते उपासनपरा जनाः ।
प्राणस्याभोक्तृता स्पष्टा भोक्तृत्वं मनसस्ततः ॥ ६७ ॥

प्राणो नात्मा, किंतु मन आत्मेत्युपासनपरा जना मन्यन्ते । तत्र कारणमाह प्राणस्येति । प्राणस्याभोक्तृताऽहं भुंजे इत्यादिष्वहन्ता सामानाधिकरण्येनानुभूयमानस्य भोक्तृत्वस्याभावः प्राणे स्पष्टा । नातः प्राण आत्मा । ततो मनसो भोक्तृत्वं स्पष्टमित्युत्तरेणान्वयः ॥ ६७ ॥

मनस आत्मत्वे युक्तिबोधकं प्रमाणमाह, मन एवेति ।

मन एव मनुष्याणां कारणं बंधमोक्षयोः ।
श्रुतो मनोमयः कोशस्तेनात्मेतीरितं मनः ॥ ६८ ॥

मन एव मनुष्याणां बंधमोक्षयोः कारणमिति श्रुतम् । किं च "तस्माद्वा एतस्मात्प्राणमयादन्योऽन्तर आत्मा मनोमयः" (तै. २. ३.) इति मनोमयः कोशोऽपि श्रुतः । तेन मन आत्मेतीरितं प्रतिपादितम ॥ ६८ ॥

अनन्तरं विज्ञानवादिनां बौद्धानां मतमाह, विज्ञानमिति ।

विज्ञानमात्मेति पर आहुः क्षणिकवादिनः ।
यतो विज्ञानमूलत्वं मनसो गम्यते स्फुटम् ॥ ६९ ॥

सुगमा पदयोजना । मनोविज्ञानयोः कार्यकारणभावस्य सत्त्वादित्यर्थः । क्षणिकवादिनो बौद्धैकदेशिनः ॥ ६९ ॥

मनसो विज्ञानमूलत्वं द्वाभ्यां विशदयितुकामः आदौ मनोविज्ञानयोः स्वरूपमाह,

अहंवृत्तिरिदंवृत्तिरित्यन्तःकरणं द्विधा ।
विज्ञानं स्यादहंवृत्तिरिदंवृत्तिर्मनो भवेत् ॥ ७० ॥

अहंवृत्तिरहमित्याकारकं ज्ञानं, इदंवृत्तिरिदमित्याकारकं ज्ञानमित्यन्तःकरणं, द्विधा द्विप्रकारकम् । तत्राहंवृत्तिर्विज्ञानं स्यात् । इदंवृत्तिश्च मने

भवेत् । अहंवृत्तिः ज्ञातारं स्वमेव विषयीकरोति । इदंवृत्तिस्तु विज्ञातुरन्यद्बाह्यं वस्तु विषयीकरोतीति भावः ॥ ७० ॥

एवं स्वरूपमुक्त्वा, मनसो विज्ञानमूलत्वमनुमानेन दर्शयति, अहमिति ।

**अहंप्रत्ययबीजत्वमिदंवृत्तेरिति स्फुटम् ।**
**अविदित्वा स्वमात्मानं बाह्यं वेत्ति न तु क्वचित् ॥ ७१ ॥**

इदंवृत्तेरिदमित्याकारकस्य ज्ञानस्य अहंप्रत्ययबीजत्वमहंज्ञानकारणत्वमिति स्फुटम् । अनेनेदंवृत्तिरहंवृत्तिमूलिकेति प्रतिज्ञा प्रदर्शिता । तत्र व्यतिरेकमुखेन हेतुमाह, अविदित्वेति । स्वमात्मानमविदित्वा बाह्यं ज्ञातुर्भिन्नं वस्तु क्वचिदपि न वेत्ति । अनेनाहंवृत्तिरूपस्य ज्ञानपूर्वकत्वादिति हेतुः प्रदर्शितः ॥ ७१ ॥

एवं विज्ञानं संसाध्य तस्य क्षणिकत्वं साधयति, क्षणमिति ।

**क्षणे क्षणे जन्मनाशावहंवृत्तेर्मितौ यतः ।**
**विज्ञानं क्षणिकं तेन स्वप्रकाशं स्वतो मितेः ॥ ७२ ॥**

यतोऽहंवृत्तेः क्षणे क्षणे जन्मनाशौ मितौ ज्ञानविषयौ भवतस्तेन विज्ञानं क्षणिकं क्षणमात्रस्थायि भवेत् । स्वतो मितेर्विज्ञानस्य स्वयमेव भानात् स्वप्रकाशं च ॥ ७२ ॥

विज्ञानस्यात्मत्वे प्रमाणमाह, विज्ञानेति ।

**विज्ञानमयकोशोऽयं जीव इत्यागमा जगुः ।**
**सर्वसंसार एतस्य जन्मनाशसुखादिकः ॥ ७३ ॥**

पूर्वार्धः स्पष्टः । आगमाः "तस्माद्वा एतस्मान्मनोमयादन्योऽन्तर आत्मा विज्ञानमयः" (तै. २.४.) इत्यादयः । जन्मनाशसुखादिकः सुकृतदुष्कृतफल-भोगात्मकः सर्वसंसार एतस्य जीवस्यैव ॥ ७३ ॥

बौद्धैकदेशिनां माध्यमिकानां मतमाह, विज्ञानमिति ।

विज्ञानं क्षणिकं नात्मा विद्युदभ्रनिमेषवत् ।
अन्यस्यानुपलब्धत्वाच्छून्यं माध्यमिका जगुः ॥ ७४ ॥

विद्युदभ्रनिमेषवत् क्षणिकं क्षणस्थायि विज्ञानमात्मा न भवति। अन्यस्यात्मनोऽनुपलब्धत्वादप्राप्तत्वादात्मा शून्यमिति माध्यमिका जगुः ॥ ७४ ॥

शून्यत्वे प्रमाणमाह, असदिति।

असदेवेदमित्यादाविदमेव श्रुतं ततः ।
ज्ञानज्ञेयात्मकं सर्वं जगद्भ्रान्तिप्रकल्पितम् ॥ ७५ ॥

असदेवेदमित्यादौ (छां. ६. २. १.) वाक्यं इदं शून्यमेव श्रुतम्। तर्हि प्रतीयमानस्य जगतः का गतिरित्याशंकायामाह, तत इति। ततो ज्ञानज्ञेयात्मकं सर्वं जगत् भ्रान्तिप्रकल्पितम्। अत्र ४-३५ श्लोकव्याख्या समीक्षितव्या ॥ ७५ ॥

सिद्धान्ती तन्मतं खंडयति, निरधिष्ठानेति।

निरधिष्ठानविभ्रान्तेरभावादात्मनोऽस्तिता ।
शून्यस्यापि ससाक्षित्वादन्यथा नोक्तिरस्य ते ॥ ७६ ॥

निरधिष्ठानविभ्रान्तेः अधिष्ठानरहिताया विभ्रान्तेरभावात् रज्ज्वभावे सर्पभ्रान्तेरिव लोकेऽनुपलंभादधिष्ठानभूतस्यात्मनोऽस्तिता सिद्ध्यतीति शेषः। आत्मास्तित्वे कारणान्तरमाह, शून्यस्येति। शून्स्यापि ससाक्षित्वात् शून्यविषयकज्ञानस्य शून्यवादिनाप्यवश्यमभ्युपगम्यत्वादित्यर्थः। तदेव च ज्ञानं साक्षिचैतन्यमात्मरूपमित्यात्मास्तित्वं सिद्धमिति भावः। अन्यथा ज्ञानाभावेऽस्य शून्यस्योक्तिः शून्यमासीदिति व्यवहारस्ते शून्यवादिनो न सिद्ध्यति, शाब्दव्यवहारस्य ज्ञानपूर्वकत्वात् ॥ ७६ ॥

एवं बौद्धादिनास्तिकमतनिरसनानन्तरमास्तिकमतविवक्षयाऽऽत्मस्वरूपमाह, अन्य इति।

अन्यो विज्ञानमयत आनंदमय आन्तरः ।
अस्तीत्येवोपलब्धव्य इति वैदिकदर्शनम् ॥ ७७ ॥

विज्ञानमयतोऽन्यस्तस्मादान्तर स्सूक्ष्मतर आनंदमय आत्माऽस्तीत्येवोपलब्धव्यः। ब्रह्मणो व्यवहारातीतकल्पितां नास्तित्वबुद्धिमपहायास्तित्वमात्रबुद्ध्या साक्षात्कार्य इति वैदिकदर्शनम् वेदार्थतत्त्वप्रदर्शकं शास्त्रमित्यर्थः। "तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमयः" (तै. २. ५.) "अस्ति ब्रह्मेति चेद्वेद संतमेनं ततो विदु" (तै. २. ६.) रित्यादिश्रुतिभ्यः ॥ ७७ ॥

आत्मपरिमाणविषये विविधमतविचारः।

एवमात्मनोऽस्तित्वं प्रदर्श्य तस्य परिमाणविषये वादिविप्रतिपत्तीर्दर्शयति, अणुरिति।

**अणुर्महान् मध्यमो वेत्येवं तत्रापि वादिनः।**
**बहुधा विवदन्ते हि श्रुतियुक्तिसमाश्रयात ॥ ७८ ॥**

तत्राप्यात्मपरिमाणविषयेऽपि अणुरिति केचिन्महानित्यन्ये मध्यमः मध्यमपरिमाण इत्यपरे वादिनो दर्शनप्रदर्शकाः श्रुतियुक्तिसमाश्रयात् स्ववादोपोद्बलकत्वेन श्रुतियुक्तोरालंब्येत्यर्थः, बहुधा विवदन्ते। "विभाषाविप्रलापे" इत्यात्मनेपदम् ॥ ७८ ॥

तत्राणुत्ववादिनां मतमाह, अणुमिति।

**अणुं वदन्त्यान्तराळास्सूक्ष्मनाडीप्रचारतः।**
**रोम्णः सहस्रभागेन तुल्यासु प्रचरत्ययम् ॥ ७९ ॥**

अन्तराळाः सूक्ष्मनाडीप्रचारतः सूक्ष्मनाडीषु संचारादात्मानमणुमणुपरिमाणं वदन्ति। अयमात्मा रोम्णः सहस्रभागेन तुल्यासु सूक्ष्मतमास्वित्यर्थः। नाडीषु प्रचरतीत्यतोऽणुपरिमाण इति भावः ॥ ७९ ॥

अणुपरिमाणे श्रुतिं (श्वे. ३. २०.) प्रमाणयति, अणोरिति।

**अणोरणीयानेषोऽणुः सूक्ष्मात्सूक्ष्मतरं त्विति।**
**अणुत्वमाहुः श्रुतयः शतशोऽथ सहस्रशः ॥ ८० ॥**

एषोऽणुरणुपरिमाण आत्माऽणोरप्यणीयान् सूक्ष्मात् सूक्ष्मतरं त्विति चाणुत्वं शतशः सहस्रशः बह्व्यः श्रुतयन् आहुः। "अणोरणीया" (श्वेत. ३.२०.) "एषोऽणुरात्मा चेतसा वेदितव्यः" (मुं. ३. १. ७.) "अणीयान् व्रीहेर्यवाद्वा" (छां. ३. १४. ३.) "आराग्रमात्रो ह्यवरोपि दृष्टः" (श्वे. ५. ८.) इत्याद्याः श्रुतयः ॥ ८०॥

तत्र श्वेताश्वतरश्रुतिमुदाहरति, वालाग्रेति।

**वालाग्रशतभागस्य शतधा कल्पितस्य च।**
**भागो जीवस्य विज्ञेय इति चाहापरा श्रुतिः॥ ८१॥**

शतधाकल्पितस्य वालाग्रशतभागस्य वालस्य रोम्णो यदग्रं तच्छतभागस्य योऽन्यतमो भागस्तद्वदतिसूक्ष्मो जीव इति विज्ञेय इत्यपरा श्रुतिराह॥ ८१॥

मध्यमपरिमाणवादिनां श्रुतियुक्तिपूर्वकं वादमुत्थापयति, दिगंबरा इति।

**दिगंबरा मध्यमत्वमाहुरापादमस्तकम्।**
**चैतन्यव्याप्तिसंदृष्टेरानखाग्रश्रुतेरपि॥ ८२॥**

दिगंबरा आत्मनो मध्यमत्वं मध्यमपरिमाणतामाहुः। तत्रोपपत्तिमाह, आपादेति। आपादमस्तकं पादादिशिरःपर्यन्तं सर्वत्र चैतन्यव्याप्तिसंदृष्टेः चैतन्यस्य व्याप्तेः संदर्शनात्। तत्र श्रुतिप्रामाण्यमाह, आनखेति। "स एष इह प्रविष्ट आनखाग्रेभ्य" (बृ. १. ४. ७.) इति श्रुतेः॥ ८२॥

नन्वात्मनो मध्यमपरिमाणत्वे कथं सुप्रसिद्धसूक्ष्मनाडीप्रचारः संपद्यत इत्यत आह, सूक्ष्मेति।

**सूक्ष्मनाडीप्रचारस्तु सूक्ष्मादवयवैर्भवेत्।**
**स्थूलदेहस्य हस्ताभ्यां कंचुकप्रतिमोकवत्॥ ८३॥**

स्पष्टः पूर्वार्धः। तत्र दृष्टान्तमाह, स्थूलेति। अवयवभूताभ्यां हस्ताभ्यां तद्द्वारेत्यर्थः स्थूलदेहस्य कंचुकप्रतिमोकवत् कंचुकप्रवेश इव, अवयवभूतयोर्हस्तयोः

कंचुकप्रवेशेन देहस्य यथा कंचुकप्रवेशस्तथा, सूक्ष्माणामात्मावयवानां सूक्ष्मनाडीप्रवेशेनात्मनोऽपि नाडीप्रवेश उपपद्यत इति भावः ॥ ८३ ॥

तस्य चात्मनः संकोचविकोचशालित्वेन न किंचिन्नियतं परिमाणम् । किं त्वणुत्वमहत्त्वव्यावृत्तमानियतं परिमाणमस्तीति दर्शयति, न्यूनेति ।

न्यूनाधिकशरीरेषु प्रवेशोऽपि गमागमैः ।
आत्मांशानां भवेत्तेन मध्यमत्वं विनिश्चितम् ॥ ८४ ॥

न्यूनाधिकशरीरेषु हस्तिमशकाद्यल्पशरीरेष्वात्मांशानां गमागमरूपचयापचयाभ्यां गमनागमनैः प्रवेशा भवेत् । तेन मध्यमत्वमात्मनो विनिश्चितम् ॥८४॥

आत्मन उपचयापचयौ सावयवत्वमन्तरा न सिध्यतः । नाशस्यावयवव्यापकत्वात्तस्य नाशोऽवश्यंभावीत्यनित्यत्वं प्रसज्येतेत्याह, सांशस्येति ।

सांशस्य घटवन्नाशो भवत्येव तथा सति ।
कृतनाशाकृताभ्यागमयोः को वारको भवेत् ॥ ८५ ॥

सांशस्य सावयवस्यात्मनो घटवन्नाशो भवति । एवेति निश्चयार्थे । तत्रेष्टापत्तिः कर्तुमशक्येत्याह, तथेति । तथा सति, देहेन सहात्मनोऽपि नाशे, कृतनाशाकृताभ्यागमयोः कृतस्य पुण्यपापरूपस्य कर्मणः फलस्य भोगमन्तरेण नाशः, अकृताभ्यागमोऽकृतस्य पुण्यपापादिभिरकृतस्याकस्मिकस्यागमश्चेत्येतयोर्दोषयोर्वारको निवारकः को भवेत् । एतज्जन्मन्याचरितयोः पुण्यपापफलयोः फलानुभवनिमित्तमन्यज्जन्म न स्यात्, तदात्मनो भिन्नत्वात्, एतज्जन्मन्यनुभूयमानस्य फलस्याकस्मिकत्वं च प्रसज्ज्येत । न चैतत्फलस्य कारणं पूर्वजन्मकृतं भवति । तदात्मनोऽपि भिन्नत्वात् । नह्यन्येन कृतमन्येनानुभूयते ॥ ८५ ॥

पारिशेष्यान्महत्वं स्थापयति, तस्मादिति ।

तस्मादात्मा महानेव नैवाणुर्नापि मध्यमः ।
आकाशवत्सर्वगतो निरंशः श्रुतिसम्मतः ॥ ८६ ॥

तस्मात् अणुत्वे आनन्त्यश्रुतिविरोधात्, मध्यमपरिमाणत्वेऽनित्यत्वप्रसंगाच्च, आत्मा महानेव अणुर्न मध्यमोऽपि न, किं त्वाकाशवत्सर्वगतः सर्वव्यापी निरंश इति श्रुतिसम्मतः। "स वा एष महानज आत्मा योऽयं विज्ञानमयः" (बृ. ४. ४. २२.) "आकाशवत्सर्वगतश्च नित्यः" इत्यादिश्रुत्यभिमत इति भावः ॥ ८६ ॥

आत्मनः स्वरूपविचारः।

एवं सर्वगतत्वनिरंशत्वे संस्थाप्यात्मनस्स्वरूपविचारमारभते, इतीति।

**इत्युक्त्वा तद्विशेषे तु बहुधा कलहं ययुः।**
**अचिद्रूपोऽथ चिद्रूपश्चिदचिद्रूप इत्यपि ॥ ८७ ॥**

पूर्वार्धः स्पष्टः। कलहकारणान्यात्मनः स्वरूपविशेषे भिन्नमतान्याह। आत्माऽचिद्रूप इति केचित्, चिद्रूप इत्यन्ये, चिदचिद्रूप इति विशिष्टरूपत्वमपरे, आहुः ॥ ८७ ॥

अचिद्रूपवादिनां मतमाह, प्राभाकरा इति।

**प्रभाकरास्तार्किकाश्च प्राहुरस्याचिदात्मताम्।**
**आकाशवद्द्रव्यमात्मा शब्दवत्तद्गुणश्चितिः ॥ ८८ ॥**

प्राभाकराः पूर्वमीमांसकानामन्यतमास्तार्किकाश्च केचिदस्यात्मनोऽचिदात्मतां आत्मा द्रव्यं सर्वव्यापकत्वात् आकाशवत् इत्यनुमानेन प्राहुः। नन्वात्मनो द्रव्यत्वे कथं तस्य चेतनत्वमित्यत आह, शब्दवदिति। आकाशस्य शब्दवत् तद्गुणः तस्यात्मनो गुणः चितिः। एवं चात्मा न चिद्रूपः, अपि तु चिदाश्रय इति भावः। ज्ञानाधिकरणमात्मेति मन्यन्ते तार्किकाः ॥ ८८ ॥

अचिदात्मके आत्मन्यन्येऽपि गुणास्सन्तीत्याह, इच्छेति।

**इच्छाद्वेषप्रयत्नाश्च धर्माधर्मौ सुखासुखे।**
**तत्संस्काराश्च तस्यैते गुणाश्चितिवदीरिताः ॥ ८९ ॥**

स्पष्टः पूर्वार्धः । तत्संस्कारा अनुभूतार्थविषयकसंस्कारा भावनाख्याः॥८९॥

एतेषां गुणानामुत्पत्तिविनाशयोः कारणमाह, आत्मन इति ।

**आत्मनो मनसा योगे स्वादृष्टवशतो गुणाः ।**
**जायन्तेऽथ प्रलीयन्ते सुषुप्तेऽदृष्टसंक्षयात् ॥ ९० ॥**

स्वादृष्टवशतः पूर्वजन्मकृतकर्मजन्यधर्माधर्मवशात् आत्मनो मनसा सह योगे जाते सति, गुणा जायन्ते । अथ सुषुप्तेऽदृष्टसंक्षयात् अदृष्टस्य कालविशेषेण फलजननियमात् तत्कालस्य सुषुप्ताविभावात्, ते प्रलीयन्ते लयं यान्ति ॥ ९० ॥

नन्वात्मनोऽप्याकाशवज्जडात्मकता स्यादित्याशंक्याह, चितीति ।

**चितिमत्त्वाच्चेतनोऽयमिच्छाद्वेषप्रयत्नवान् ।**
**स्याद्धर्माधर्मयोः कर्ता भोक्ता दुःखादिमत्त्वतः ॥ ९१ ॥**

अयमात्मा चेतनश्चितिमत्त्वात् । तत्र हेत्वसिद्धिं तत्कार्यप्रदर्शनेन परिहरति, इच्छेति । अयमात्मा इच्छाद्वेषप्रयत्नवान् । ततो धर्माधर्मयोः कर्ता स्यात् । दुःखादिमत्त्वतः धर्माधर्मजन्यसुखदुःखादिमान् भवति । तद्भावात्तेषां भोक्ता च भवति । एतेनेच्छाद्वेषप्रयत्नधर्माधर्मसुखदुःखानां सामानाधिकरण्यलाभात्तेषां सर्वेषामप्येक आश्रय इत्युक्तं भवति ॥ ९१ ॥

आत्मनो नित्यत्वे सर्वगतत्वे च धर्माधर्मयोस्सत्वे सर्वदा सर्वत्र सुखाद्यनुभवः स्यादित्याशंक्याह, यथेति ।

**यथाऽत्र कर्मवशतः कादाचित्कं सुखादिकम् ।**
**तथा लोकान्तरे देहे कर्मणेच्छादि जन्यते ॥ ९२ ॥**

कर्मवशतः कर्मबलाज्जायमानं सुखदुःखादिकमत्रास्मिन् देहे देहावच्छेदेन कादाचित्कं कालविशेषस्थं तत्तत्कालावच्छेदेन यथाऽनुभूयते न सर्वत्र न सर्वदा, तथा लोकान्तरे देहे तत्स्थदेहे तद्देहावच्छेदेन तत्तत्कालावच्छेदेन चेच्छादि कर्मणा जन्यते । आदिशब्देन फलपर्यन्तं द्वेषादयो गृह्यन्ते। अयं भावः । कर्मणः

फलजननक्षमत्वेऽपि देशकालादिसर्वकार्यनिमित्तकारणसद्भावसापेक्षत्वात्, कस्मिंश्चित्काले कस्मिंश्चिद्देशे किंचिद्देहावच्छेदेनैव फलजनकत्वनियमोऽस्माकमनुभवसिद्ध इति, सर्वत्र कर्मणां तत्तद्देशकालदेहाद्यवच्छेदेनैव फलोत्पादकत्वादात्मनो नित्यत्वविभुत्वयोरपि न भोगसांकर्यप्रसंगो, न वा सार्वकालिकत्वप्रसंग इति ॥ ९२ ॥

तत्र प्रमाणमाह, एवमिति ।

**एवं सर्वगतस्यापि संभवेतां गमागमौ ।**
**कर्मकांडस्समग्रोऽत्र प्रमाणमिति ते ब्रुवन् ॥ ९३ ॥**

स्पष्टोऽर्थः । एवं फलस्य देशकालभेदेन भोगोपपत्ताविव्यर्थः । ते प्राभाकरादयः । अन्यत्र च तत्र तत्र समग्र इत्यनेनोपनिषत्स्वपि विद्यमानः । "स यदाऽस्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति", (कौषी. ३. ३.) "ये वैके चास्माल्लोकात्प्रयन्ति चंद्रमसमेव ते सर्वे गच्छन्ति" (कौषी. १. २.), "तस्माल्लोकात्पुनरेत्यास्मै लोकाय कर्मणे", (बृ. ४. ४. ६.) इत्यादिः कर्मप्रतिपादको भागः संग्राह्य इति सूचितम् । अत्रायं विवेकः । जीवस्य व्यापकत्वेन गमनागमनेऽत्र सर्वत्र कर्मानुगुणफलोपभोगानुकूलशरीरान्तरस्य देशान्तरे समुद्भवात्तद्देशावच्छेदेन फलोपभोग इत्यौपचारिके गमनागमने । सर्वगस्याप्यात्मनः कर्मवशादिच्छादिवशात् प्रकृतदेहेऽवस्थितिरिवेति बोध्यम् ॥ ९३ ॥

नन्विच्छादयो गुणाः कर्तृत्वभोक्तृत्वे च विज्ञानमय एव संभवन्ति । विज्ञानमयादन्य आन्तर आनंदमय इति श्रूयते । अन्यस्यान्तरस्यानन्दमयस्य कथं विज्ञानमयधर्मभूतेच्छादिकं कर्तृत्वादिकं च घटत ? इत्याशंकां, समाधत्ते, आनन्देति ।

**आनंदमयकोशो यः सुषुप्तौ परिशिष्यते ।**
**अस्पष्टचित्स आत्मैषां पूर्वकोशोऽस्य ते गुणाः ॥ ९४ ॥**

सुषुप्तावस्पष्टचित् अस्पष्टचैतन्यवान् य आनन्दमयकोशः सर्वेन्द्रियाणामुपरतत्वात्परिशिष्यते स पूर्वकोशः एषां प्राभाकराणामात्मा भवति। अस्यात्मनस्ते

पूर्वोक्ताज्ञानद्वेषादयः कर्तृत्वादिकं च गुणा भवन्ति । अत्रायं भावः । विज्ञानमय आनन्दमयश्चेत्येकमेव तत्त्वम् । तस्य यदा मनसा योगात्तदेच्छादिगुणाः प्रतीयन्ते । तद्गुणसंबंधे सत्येव विज्ञानमयस्येति व्यवहारः । यदा मनसा योगो नास्ति, तदा सुषुप्त्यवस्थायां गुणानां प्रलये सति, यो गुणविनिर्मुक्त इवात एवास्पष्टचिदवशिष्यते स एवानन्दमयकोशः । मनोयोगायोगाभ्यां विज्ञानानन्दमययोर्बाह्यान्तरे इच्छादिगुणसद्भावो न विरुध्यते । आनन्दमये गुणानां सत्त्वेऽप्यस्पष्टचित्कतया ते गुणा न प्रतीयन्ते । तदानीमप्रतीतिरेव तेषां लयः । एवं चानन्दमयस्य यदुक्तमिच्छादिगुणकत्वं तन्नामपपन्नमिति ॥ ९४ ॥

केवलजडात्मवादविमुखानां भाट्टानां मतमाह, गूढमिति ।

गूढं चैतन्यमुत्प्रेक्ष्य जडबोधस्वरूपताम् ।
आत्मनो ब्रूवते भाट्टाश्चिदुत्प्रेक्षोत्थितस्मृतेः ॥ ९५ ॥

भाट्टाः प्रभाकरगुरुर्भाट्टः तस्यानुयायिनः पूर्वमीमांसका आत्मनो गूढमस्पष्टं चैतन्यमुत्प्रेक्ष्य तस्य जडबोधस्वरूपतां जडस्वरूपत्वज्ञानस्वरूपत्वं च ब्रुवते वर्णयन्ति । आत्मनो निगूढचैतन्यस्योत्प्रेक्षायां लिंगमाह, चिदिति । उत्थितस्मृतेः सुषुप्त्यनन्तरमुत्थितस्य स्मृतेरुत्थानात्प्रागनुभूतविषयस्मरणरूपज्ञानाच्चिदुत्प्रेक्षा भवति। स्मरणस्यानुभवपूर्वकत्वात्, सुषुप्तिकालेऽप्यनुभवरूपायाश्चित उत्प्रेक्षा अनुमितिः । चितं विना स्मृतेरसंभवात्सौषुप्तिकस्मृतेश्चानुभवसिद्धत्वात्सुषुप्तौ चित्सत्ताऽवश्यमूहनीयेति भावः ॥ ९५ ॥

एवं स्मृतिबलात्सुप्तस्य चिद्रूपतामनुमाय जडरूपत्वमप्यनुमानेन साधयति, जड इति ।

जडो भूत्वा तदाऽस्वाप्समिति जाड्यस्मृतिस्तथा ।
विना जाड्यानुभूतिं न कथंचिदुपपद्यते ॥ ९६ ॥

तदा सुषुप्तिसमये जडो भूत्वा किंचिदप्यविज्ञाय अस्वाप्समिति जाड्यस्मृतिस्सुषुप्तिसमयेऽनुभूतस्य जाड्यस्याज्ञानस्य स्मृतिः तदा सुषुप्तिसमये विना जाड्यानु-

भूतिं जडत्वस्यानुभवं विना कथंचिदपि नोपपद्यते। अतस्सुषुप्तिकाले जाड्यानुभवस्य सत्तानुमानादात्मनि जडत्वमपि सिद्ध्यतीति भावः ॥ ९६ ॥

ननु जाड्यस्य चैतन्यविरुद्धत्वात्सुषुप्तावनुमीयमानजाड्यसत्ताकाले चैतन्यं नष्टमित्यवश्यमभ्युपेयम्। तथा च कथमात्मनो युगपच्चिदचिद्रूपतेत्याशंकां परिहरति, द्रष्टुरिति।

**द्रष्टु र्दृष्टेरलोपश्च श्रुतस्सुप्तौ ततस्स्वयम्।**
**अप्रकाशप्रकाशाभ्यामात्मा खद्योतवद्युतः ॥ ९७ ॥**

द्रष्टुरात्मनः स्वरूपभूतायाः दृष्टेरलोपो लोपो नास्ति, जाड्यसत्ताकालेऽपीत्यर्थः। यदि जाड्यसत्ताकाले चैतन्यं न स्यात्तर्हि तदनुभव एव न स्यात्, तस्यानुभवरूपत्वात्। तदभावे च, सुप्तोत्थितस्य जाड्यस्मृतिर्न स्यात्। एवं च जाड्यरूपदर्शिग्राहकमानसिद्ध एव तयोरविरोधः। एवं चानुमानसिद्धमविरोधं प्रमाणमूर्धन्येन प्रमाणयति, श्रुत इति "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वा"दिति (बृ. ४. ३. २३.) श्रुतिरपि तयोरविरोधे मानमिति तात्पर्यम्। ततोऽयमात्मा खद्योतवत् स्फुरणास्फुरणस्वभावः कीटविशेषः खद्योतः। तद्वदप्रकाशप्रकाशाभ्यां युक्तो भवतीत्यर्थः॥ ९७ ॥

भाट्टमतदोषप्रदर्शकं सांख्यमतमुपपादयति, निरंशस्येति।

**निरंशस्योभयात्मत्वं न कथंचिद्धटिष्यते।**
**तेन चिद्रूप एवात्मेत्याहुस्सांख्यविवेकिनः ॥ ९८ ॥**

निरंशस्य निरवयवस्योभयात्मत्वं चिज्जडस्वरूपत्वं कथंचिदपि न घटिष्यते, अस्य सांशत्वे त्वंशतो जडरूपत्वमंशतश्चिद्रूपत्वं च घटेत। यथा दृष्टान्तभूते खद्योते, नान्यथेत्यर्थः तेन कारणेनात्मा चिद्रूप एवेति सांख्यविवेकिनः। "संख्यां प्रकुर्वते चैव प्रकृतिं च प्रचक्षते। चतुर्विंशतितत्त्वानि तेन सांख्याः प्रकीर्तिता" इति लक्षणलक्षिता आहुः ॥ ९ ॥

अन्यथानयनप्रकारमेवाह, जाड्येति।

जाड्यांशः प्रकृते रूपं विकारित्रिगुणं च तत् ।
चितो भोगापवर्गार्थं प्रकृतिस्सा प्रवर्तते ॥ ९९ ॥

आत्मनो जाड्यांश आत्मनि भासमानो जाड्यभागो नात्मनः किंतु प्रकृतेः रूपम् । प्रकृतिकृतविकार इत्यर्थः । सत्त्वरजस्तमसां साम्यावस्थारूपमेव प्रकृतिः । सैव सांख्यैः प्रधानमित्युच्यते । तच्च महदादिकार्यकलापकारणं, न त्वस्य प्रधानस्य मूलान्तरमस्तीति सांख्यसमयः तद्रूपं त्रिगुणं सत्त्वरजस्तमोगुणात्मकम् । विकारि च । प्रकृतेः कल्पनायां प्रयोजनमाह चिदिति । चितश्चैतन्यस्वरूपस्यात्मनो भोगापवर्गार्थं कर्मफलस्य भोगो मोक्षश्च । तदर्थं सा प्रकृतिः प्रवर्तते । एवं च प्रकृतिजन्यो भोगोऽविविक्ते आत्मनीव तन्निष्ठजाड्यमपि तत्र प्रतीयते, स्फटिकलौहित्यवदिति भावः । एवं च प्रातीतिकमेवाविरोधमनुमानादि साधयितुमीष्टे न वास्तविकमिति भावः ॥ ९९ ॥

नन्वसंगस्यात्मनो भोगापवर्गौ प्रकृतिः कथं कल्पयतीत्यत आह, असंगाया इति ।

असंगायाश्चितेर्बंधमोक्षौ भेदाग्रहान्मतौ ।
बंधमुक्तिव्यवस्थार्थं पूर्वेषामिव चिद्भिदा ॥ १०० ॥

असंगायाः संगरहितायाश्चितेर्बंधमोक्षौ भेदाग्रहात्प्रकृतिपुरुषयोर्भेदस्याग्रहणात्स्मृतावंगीकृतौ । बंधमुक्तिव्यवस्थार्थं बंधमुक्तयोर्नियमनार्थं पूर्वेषामिव नैयायिकानामिव चिदात्मनो नानात्वमिष्यते । नैय्यायिका इव सांख्या अप्यात्मनानात्वमंगीकुर्वन्तीति भावः ॥ १०० ॥

प्रकृतेस्सद्भावे पुरुषस्यासंगत्वे च श्रुतिप्रामाण्यमाह, महत इति ।

महतः परमव्यक्तमिति प्रकृतिरुच्यते ।
श्रुतावसंगता तद्वदसंगो हीत्यतिस्फुटा ॥ १०१ ॥

महतो महत्तत्वात् परं भिन्नमव्यक्तमिन्द्रियावेद्यमिति श्रुतौ योगरूढ्या प्रकृतिरुच्यते । तद्वत्, "असंगो हीति, श्रुतौ पुरुषस्यासंगता चातिस्फुटा ।"

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयस्सप्त। षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुष" इति सांख्यानां तत्त्वविभागः। पुरुषश्चासंगचिद्रूपः पुष्करपलाशवन्निर्लिप्तोऽकर्ता नाना ॥ १०१ ॥

ईश्वरस्वरूपविचारः।

एवमात्मविषये भिन्नमतानि प्रदर्श्येश्वरविषयेऽपि तत्प्रदर्शनाय योगिमताभिमतमीश्वरस्वरूपमाह, चिदिति।

**चित्सन्निधौ प्रवृत्तायाः प्रकृतेर्हि नियामकम्।**
**ईश्वरं ब्रुवते योगाः स जीवेभ्यः परः श्रुतः ॥ १०२ ॥**

योगाः पातंजलयोगमतानुयायिनः चित्सान्निधौ चित आत्मनस्सन्निधौ प्रवृत्तायाः प्रकृतेर्नियामकं नियन्तारमीश्वरं ब्रुवते। योगिनः सांख्यानभिमतमीश्वरं कंचन पुरुषविशेषं जीवेभ्य उत्कृष्टमभ्युपगच्छन्तीत्यर्थः। तथा च योगसूत्रं "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर" इति। नेयं प्रकृतिपुरुषातिरिक्तेश्वरकल्पना प्रमाणविरुद्धेत्याह, स इति। स ईश्वरो जीवेभ्यः परः श्रेष्ठ इति श्रुतिषु श्रुतः ॥ १०२ ॥

तत्र श्वेताश्वतरश्रुति (६. १५.) प्रामाण्यमेवाह, प्रधानेति।

**"प्रधानक्षेत्रज्ञपतिर्गुणेश" इति हि श्रुतिः।**
**आरण्यकेऽसंभ्रमेण ह्यंतर्याम्युपपादितः ॥ १०३ ॥**

प्रधानक्षेत्रज्ञपतिः प्रधानस्य प्रकृतेः क्षेत्रज्ञानां क्षेत्रं शरीरमात्मत्वेन जानंत्यभिमानं कुर्वन्ति ये तेषां च पतिरधिपतिः गुणेशो गुणानां सत्त्वादीनां नियामक इति श्रुतिः प्रवर्तते हि। अत्र गुणशब्देन गुणत्रयसाम्यावस्थारूपं प्रधानमुपलक्षितं भवति। प्रमाणान्तरमप्याह, आरण्यक इति। आरण्यकेऽन्तर्यामिब्राह्मणे "यस्सर्वाणि भूतान्यन्तरो यमयत्येष त आत्माऽतंर्याम्यमृतः" (बृ. ३. ७. १५.), इति श्रुतावन्तर्यामीश्वरोऽसंभ्रमेणासकृदुपपादितः ॥ १०३ ॥

अत्रापि मानुषशेमुषीप्रागल्भ्यप्रयुक्तं मतभेदमाह, अत्रापीति।

अत्रापि कलहायन्ते वादिनः स्वस्वयुक्तिभिः ।
वाक्यान्यपि यथाप्रज्ञं दार्ढ्यायोदाहरन्ति हि ॥ १०४ ॥

स्पष्टोऽर्थः ॥ १०४ ॥

तत्र सेश्वरसांख्यमतप्रवर्तकेन पतंजलिनोक्तं "क्लेशकर्मविपाकैस्तदाशयैरपरामृष्टः पुरुषविशेष ईश्वर" इति सूत्रमर्थतः पठति, क्लेशेति ।

क्लेशकर्मविपाकैस्तदाशयैरप्यसंयुतः ।
पुंविशेषो भवेदीशो जीववत्सोऽप्यसंगचित् ॥ १०५ ॥

क्लेशकर्मविपाकैः क्लेशाः अविद्याऽस्मितारागद्वेषाभिनिवेशा इति पंचधा प्रसिद्धाः । तत्रानात्मनि देहादावात्मबुद्धिरविद्या, सत्त्वपुरुषयोरहमस्मीत्येकताभिमानोऽस्मिता, सुखाभिज्ञस्य सुखानुस्मृतिपूर्वकः सुखसाधनेषु तृष्णारूपो गर्धो रागः, दुःखाभिज्ञस्य तदनुस्मृतिपुरस्सरं तत्साधनेषु निवृत्तिर्द्वेषः । पूर्वजन्मानुभूतमरणदुःखानुभववासनाबलात् सर्वस्य आजन्मभूमात्रस्य आक्रिमेरा च विदुषस्संजायमानः शरीरविषयादेर्वियोगो मम मा भूदिति प्रत्यहं निमित्तं विना प्रवर्तमानो भयरूपोऽभिनिवेशः, इत्येते पंच च, कर्माणि विहितप्रतिषिद्धरूपाणि ज्योतिष्टोमब्रह्महत्यादीनि, विपाकाः कर्मफलानि, जात्यायुर्भोगाः । आफलविपाकाच्चित्तभूमौ शेरत इत्याशया धर्माधर्मसंस्काराः, तैरप्यसंयुतोऽसंस्पृष्टः पुंविशेष ईशः । सोऽपि जीववदसंगचित्, जीवेश्वरावुभावप्यसंगचिद्रूपावित्याशयः ॥ १०५ ॥

ईश्वरस्याप्यसंगचिद्रूपत्वाविशेषात्कथं तस्यैव नियंतृत्वं घटत इत्याशंक्याह, तथापीति ।

तथापि पुंविशेषत्वाद्घटतेऽस्य नियन्तृता ।
अव्यवस्थौ बंधमोक्षावापतेतामिहान्यथा ॥ १०६ ॥

तथापीश्वरस्यासंगचिद्रूपत्वेऽपि क्लेशाद्यपरामृष्टत्वेन पुंविशेषत्वात्पुरुषाणां नानात्वाच्चास्य नियन्तृता सर्वजीवनियामकता घटते । अन्यथा इहास्मिन् लोके बंधमोक्षावव्यवस्थौ व्यवस्थारहितौ आपतेतां भवेताम् । सर्वेषां बद्धत्वं मुक्तत्वं वा

स्यात्, न तु केषांचिद्बद्धता, केषांचिन्मुक्तनेति व्यवस्था स्यात्, अतस्तद्व्यवस्थापकः कश्चिदेतेभ्योऽतिशयितः पुरुषो लोकानामसंभेदायाङ्गीकार्यः। स एवेश्वर इति तात्पर्यम् ॥ १०६ ॥

तत्र क्लेशादिराहित्ये नियन्तृत्वेन श्रुतिमुदाहरति, भीषेति।

**भीषास्मादित्येवमादावसंगस्य परात्मनः।**
**श्रुतं तद्युक्तमप्यस्य क्लेशकर्माद्यसंगमात् ॥ १०७ ॥**

भीषास्मादित्येवमादौ "भीषास्माद्वातः पवते" (तै. २.५.) इत्यादिश्रुतिष्वसंगस्य संगरहितस्य परात्मनस्तन्नियन्तृत्वं श्रुतम्। क्लेशकर्माद्यसंगमात् अस्य तन्नियन्तृत्वं युक्तमपि स्यात् ॥ १०७ ॥

ननु जीवानामप्यसंगत्वेन क्लेशादिराहित्याभावात् तत्कृतविशेषस्त्वेतेषामप्यविशिष्ट इत्याशंक्याह, जीवानामिति।

**जीवानामप्यसंगत्वात् क्लेशादिर्न ह्यथापि च।**
**विवेकाग्रहतः क्लेशकर्मादि प्रागुदीरितम् ॥ १०८ ॥**

जीवानामप्यसंगत्वात् क्लेशादिः न विद्यते हि। अथापि विवेकाग्रहतः प्रकृतिपुरुषयोर्विवेकस्य भेदस्य बुद्ध्या ग्रहणाभावात्, क्लेशकर्मादि प्राक् पंचोत्तरशततमे श्लोके उदीरितं प्रतिपादितम्। एवं च वस्तुतो जीवानामपि क्लेशकर्मादिराहित्यसाम्येऽपि विवेकाग्रहेणोपाधिकृतक्लेशकर्मादिमत्त्वं जीवानाम्, ईश्वरस्य तु तादृशमपि नास्ति। तस्य विवेकाग्रहाभावात्। तदेव तत्र विशिष्टतानियामकमिति भावः ॥ १०८ ॥

सांख्ययोगमतानन्तरमीश्वरस्य सर्वनियन्तृत्वे नैयायिकाभिप्रायमाह, नित्येति।

**नित्यज्ञानप्रयत्नेच्छागुणानीशस्य मन्वते।**
**असंगस्य नियन्तृत्वमयुक्तमिति तार्किकाः ॥ १०९ ॥**

ईशस्यासंगस्येति हेतुगर्भं विशेषणम्, नियन्तृत्वमयुक्तमिति हेतोस्तार्किका नित्यज्ञानप्रयत्नेच्छागुणान् मन्वते। ते गुणा विद्यन्त इत्यभिप्रयन्ति ॥ १०९ ॥

ईश्वरस्य व्यवह्रियमाणं पुंविशेषत्वमपि न क्लेशादिराहित्यकृतं मुक्तेष्वपि तस्य सत्वात्। किंतु गुणकृतमेव तदित्यङ्गीकार्यमित्याह, पुंविशेषेति।

पुंविशेषत्वमप्यस्य गुणैरेव न चान्यथा।
सत्यकामः सत्यसंकल्प इत्यादिश्रुतिर्जगौ ॥ ११० ॥

अस्येश्वरस्य नित्यज्ञानप्रयत्नेच्छागुणैरेव पुंविशेषत्वम्। अन्यथा क्लेशादि-राहित्येन न। तत्र प्रमाणमाह, सत्येति। सत्यकामः सत्यसंकल्पः (छा. ८.७.१.) इत्यादिश्रुतिस्तस्य गुणनित्यत्वं जगावगायत् ॥ ११० ॥

अस्मिन् दोषदृशां हैरण्यगर्भानां मतमाह, नित्येति।

नित्यज्ञानादिमत्त्वेऽस्य सृष्टिरेव सदा भवेत्।
हिरण्यगर्भ ईशोऽतो लिंगदेहेन संयुतः ॥ १११ ॥

अस्येश्वरस्य नित्यज्ञानादिमत्त्वे सदा सृष्टिरेव भवेत्। न हि तथा दृश्यते। अतो न सत्यज्ञानाश्रय ईश्वरः। तर्हि कोऽसावीश्वर इत्यत आह, हिरण्येति। अतो लिंगदेहेन पंचकत्रयेण बुद्ध्या मनसा सहितेन सूक्ष्मशरीरेण संयुतो युक्तो हिरण्यगर्भ ईशो भवेदिति हैरण्यगर्भा ऊचुः। एवं च तादृशलिंग-देहयुक्तस्य सृष्ट्यादिनियामकत्वे तल्लिंगदेहस्य सावयवत्वेन नाशे ब्रह्मकल्पान्ते सर्वस्यापि सृष्टेरभावेन प्रलय उपपद्यते। एवं चात्र पक्षे सृष्टेस्सदातनत्वापत्तिर्ना-स्तीति भावः ॥ १११ ॥

तत्र प्रमाणमाह, उद्गीथेति।

उद्गीथब्राह्मणे तस्य माहात्म्यमतिविस्तृतम्।
लिंगसत्त्वेऽपि जीवत्वं नास्य कर्माद्यभावतः ॥ ११२ ॥

तस्य हिरण्यगर्भस्य माहात्म्यमुद्गीथब्राह्मणे छांदोग्यान्तर्गते प्रथमाध्याये षष्ठखंडे "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः" (छां १. ६. ६.) इत्यतिविस्तृतं प्रपञ्चितम्। तस्यापि लिंगसत्वे जीवादविशेष इति कथं तस्येशत्वमुच्यत? इत्यत आह, लिंगेति। लिंगसत्त्वेऽपि सूक्ष्मस्य विद्यमानत्वेऽपि कर्माद्यभावतः आदिशब्देनाविद्याकामादयो गृह्यन्ते। अविद्याकामकर्मादीनामभावेनेत्यर्थः। अस्य जीवत्वं न, कर्मादिमत्त्वमेव जीवत्वप्रयोजकं न लिंगवत्त्वमिति भावः ॥ ११२ ॥

हिरण्यगर्भमतदोषदृशां विराडुपासकानां मतमाह, स्थूलेति।

**स्थूलदेहं विना लिंगदेहो न क्वापि दृश्यते।**
**वैराजो देह ईशोऽतः सर्वतो मस्तकादिमान् ॥ ११३ ॥**

स्पष्टः पूर्वार्धः। सदा लिंगदेहस्य स्थूलदेहाश्रितत्वात्। अतः सर्वतो मस्तकादिमान् शिरश्चक्षुःपाण्यादिमान् वैराजो देहः विराट्पुरुषसंबंधी देहः ईशः ॥ ११३ ॥

वैराजानां प्रमाणवाक्यमुदाहरति, सहस्रेति।

**सहस्रशीर्षेत्येवं च विश्वतश्चक्षुरित्यपि।**
**श्रुतमित्याहुरनिशं विश्वरूपस्य चिन्तकाः ॥ ११४ ॥**

स्पष्टोऽर्थः ॥ ११४ ॥

तन्मतं दोषाविष्टमिति पश्यतां पुत्रार्थिनां मतमाह, सर्वत इति।

**सर्वतः पाणिपादत्वे कृम्यादेरपीशता।**
**ततश्चतुर्मुखो देव एवेशो नेतरः पुमान् ॥ ११५ ॥**

स्पष्टोऽर्थः ॥ ११५ ॥

तेषां प्रमाणमाह, पुत्रार्थमिति।

**पुत्रार्थं तमुपासीना एवमाहुः प्रजापतिः।**
**प्रजा असृजतेत्यादि श्रुतिं चोदाहरन्त्यमी ॥ ११६ ॥**

स्पष्टोऽर्थः । "प्रजापतिः प्रजा असृजत" प्रजाकामो वै प्रजापतिस्स तपोऽतप्यत" (प्र. १.४.) इति श्रुतिम् ॥ ११६ ॥

भागवतमतमाह, विष्णोरिति ।

विष्णोर्नाभेः समूद्भूतो वेधाः कमलजस्ततः ।
विष्णुरेवेश इत्याहुर्लोके भागवता जनाः ॥ ११७ ॥

स्पष्टोऽर्थः ॥ ११७ ॥

शैवानां मतमाह, शिवस्येति ।

शिवस्य पादावन्वेष्टुं शार्ङ्ग्यशक्तस्ततश्शिवः ।
ईशो न विष्णुरित्याहुः शैवा आगममानिनः ॥ ११८ ॥

स्पष्टोऽर्थः । अत्र देवीभागवते (५. ३३. ३०.) कथाऽनुसंधेया ॥ ११८ ॥

गाणपत्यमतमाह, पुरेति ।

पुरत्रयं साधयितुं विघ्नेशं सोऽप्यपूजयत् ।
विनायकं प्राहुरीशं गाणपत्यमते रताः ॥ ११९ ॥

स्पष्टोऽर्थः । अत्र गणपतिपुराणगाथानुसंधेया ॥ ११९ ॥

एवमन्यदेवतोपासाकनां तत्तभिमतमतानां यथाकथंचिच्छ्रौतत्वसंपादनप्रकारमाह, एवमिति ।

एवमन्ये स्वस्वपक्षाभिमानेनान्यथान्यथा ।
मन्त्रार्थवादकल्पादीनाश्रित्य प्रतिपेदिरे ॥ १२० ॥

एवमन्ये भैरवोपासकाद्याः स्वस्वपक्षाभिमानेनान्यथान्यथा बहुप्रकारैः स्वस्वोपास्यदेवतानुसारेण मन्त्रार्थवादकल्पादीन् अर्थवादाः तत्तद्देवतास्तोत्रपराः, कल्पाः स्थलपुराणानि । तदादीनाश्रित्य स्वाभिमतदेवताया ईश्वरत्वं प्रतिपेदिरे कल्पयन्ति । स्वमतस्य श्रौतीचिकीर्षया मन्त्रार्थवादादीन् प्रमाणयन्तीति भावः॥१२०॥

एवं श्रुतिमनादृत्य पण्डितम्मन्यकल्पितानां मतानामानन्त्यमाह, अन्तर्यामिणमिति ।

**अन्तर्यामिणमारभ्य स्थावरान्तेशवादिनः ।**
**सन्त्यश्वत्थार्कवंशादेः कुलदैवतदर्शनात् ॥ १२१ ॥**

एममश्वत्थार्कवंशादेः स्थावराणामपीति भावः । लोके कुलदैवतदर्शनात् कुले देवभावेन पूजितत्वस्य दर्शनादितिहेतोरन्तर्यामिणमीश्वरमारभ्य स्थावरान्तेशवादिनः वृक्षादिस्थावरपर्यन्तमीशवादिनः स्वेष्टदेवतैवेश्वर इति विवदमानास्सन्ति ॥ १२१ ॥

ईश्वरविषयकसर्वमतसमन्वयः ।

एवं मतबाहुल्ये किमस्माभिरवलम्बनीयमित्यत आह, तत्त्वेति ।

**तत्त्वनिश्चयकामेन न्यायागमविचारिणाम् ।**
**एकैव प्रतिपत्तिः स्यात् साप्यत्र स्फुटमुच्यते ॥ १२२ ॥**

एवं मतानामनन्तत्वे तत्त्वनिश्चयकामेन स्वाभिमानमपहाय न्यायागमविचारिणां न्यायः प्रमाणानुकूलो युक्तिवादः आगमः शास्त्रं तयोर्विचारं कुर्वतां परिशीलनशालिनामित्यर्थः । एकैव प्रतिपत्तिः ज्ञानं स्यात् । सा प्रतिपत्तिरत्र स्फुटमुच्यते ॥ १२२ ॥

तत्प्रतिपत्तिविवक्षया तदनुकूलां श्वेताश्वतरश्रुतिमुदाहरति, मायामिति ।

**मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।**
**अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥ १२३ ॥**

मायां तु प्रकृतिं जगदुपादानकारणं विद्याज्जानीयात् । मायिनं तु मायोपाधिकमन्तर्यामिणमेव महेश्वरं मायाधिष्ठातारं निमित्तकारणं जानीयात् । अस्य मायिनोऽवयवभूतैरंशरूपैश्चतुर्विधभूतग्रामैः सर्वमिदं जगत् व्याप्तम् ॥ १२३ ॥

एवं श्रुतिदर्शने फलमाह, इतीति ।

इति श्रुत्यनुसारेण न्याय्यो निर्णय ईश्वरे।
तथा सत्यविरोधः स्यात् स्थावरान्तेशवादिनाम् ॥ १२४ ॥

इत्येवंप्रकारं श्रुत्यनुसारेण श्रुत्यर्थानुकूल्येनेश्वरे तत्स्वरूपनिरूपणे निर्णयो न्याय्यो न्यायादनपेतो युक्तिसम्मतो भवति। तथैवं नीर्णीते सति, स्थावरान्तेशवादिनां सर्वमतावलम्बिनामित्यर्थः अविरोधः सामरस्यं स्यात्। सर्वस्यापीश्वरत्वाभ्युपगमादिति भावः ॥ १२४ ॥

मायातत्कार्यविचारः।

अथ मायास्वरूपं निरूपयति, मायेति।

माया चेयं तमोरूपा तापनीये तदीरणात्।
अनुभूतिं तत्र मानं प्रतिजज्ञे श्रुतिः स्वयम् ॥ १२५ ॥

स्पष्टः पूर्वार्धः। तत्र तत्तमोरूपत्वेऽनुभूतिं लोकानुभवं मानं प्रमाणं श्रुतिः स्वयं प्रतिजज्ञे प्रतिज्ञां चकार ॥ १२५ ॥

मायाया जडत्वे लोकानुभवमाह, जडमिति।

जडं मोहात्मकं तच्चेत्यनुभावयति श्रुतिः।
आबालगोपं स्पष्टत्वादानन्त्यं तस्य साऽब्रवीत् ॥ १२६ ॥

तच्च मायारूपं जडं मोहात्मकं चाविद्यानिमित्तं चेति श्रुतिरनुभावयति। तस्य मोहात्मकरूपस्यानन्त्यमाबालगोपालमव्युत्पन्नमतिपर्यन्तं सर्वेषामपि स्पष्टत्वादिति सा श्रुतिरब्रवीत् ॥ १२६ ॥

जडमोहशब्दयोर्लौकिकार्थमाह, अचिदिति।

अचिदात्मघटादीनां यत्स्वरूपं जडं हि तत्।
यत्र कुंठीभवेद्बुद्धिः स मोह इति लौकिकाः ॥ १२७ ॥

अचिदात्मघटादीनामचेतनानां घटादीनां यत्स्वरूपं विद्यते तज्जडमित्युच्यते हि। यत्र यद्विषयग्रहणे बुद्धिः कुंठीभवेत् उपलेऽसिरिवापगतनिशितस्वभावा भवति स मोह इति लौकिका लोकव्यवहारपराः शास्त्रभावानभिज्ञा ब्रुवन्ति ॥१२७॥

अथ मायायाश्शास्त्रनिरूपितं स्वरूपमाह, इत्थमिति ।

इत्थं लौकिकदृष्ट्यैतत्सर्वैरप्यनुभूयते ।
युक्तिदृष्ट्या त्वनिर्वाच्यं नासदासीदिति श्रुतेः ॥ १२८ ॥

इत्थमुक्तप्रकारेणैतज्जडमोहात्मकं तमः तद्रूपा मायेत्यर्थः सर्वैर्लौकिकदृष्ट्या अचुंबितशास्त्रदृष्ट्यानुभूयते । वस्तुतस्तत्स्वरूपं दुर्निरूपमेवेत्याह, युक्तिदृष्ट्येति । नासदासीदिति श्रुतेर्युक्तिदृष्ट्या सहेतुकपरामर्शेनाप्यनिर्वाच्यं सत्यमिति वा असत्यमिति वा वक्तुमशक्यमित्यर्थः ॥१२८॥

निरुक्तश्रुतिमर्थतः पठति, नासदिति ।

नासदासीद्विभातत्वान्नो सदासीच्च बाधनात् ।
विद्यादृष्ट्या श्रुतं तुच्छं तस्य नित्यनिवृत्तितः ॥ १२९ ॥

तमोरूपिणी माया विभातत्वात्प्रत्यक्षतया प्रतीयमानत्वादसदभावरूपिणी नासीत् नाभवत् । "नेह नानास्ति किंचने" (कठ. २.४.११.)ति श्रुत्यनुप्राणितया "नो सदासीदि"ति (तै. ब्रा. २.८.९.३.) श्रुत्या बाधनान्निषिद्धत्वात्सत् भावरूपिण्यपि नो आसीन्नाभवत् । भावाभावभिन्नं न कदापि युक्तिसिद्धम् । एवं मायाया अनिर्वचनीयत्वं युक्त्यनुरूपं प्रदर्श्य तस्यास्तुच्छत्वं प्रदर्शयति, विद्येति । नित्यनिवृत्तितः निरन्तरं ज्ञानेन निवारितत्वाद्विद्यादृष्ट्या ज्ञानदृशा मायास्वरूपं तुच्छमलीकं शशविषाणवदिति "तुच्छमिदं रूपमस्ये"ति श्रुतौ श्रुतम् ॥१२९॥

एवं मायायास्त्रिप्रकारत्वमाह, तुच्छेति ।

तुच्छाऽनिर्वचनीया च वास्तवी चेत्यसौ त्रिधा ।
ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः ॥ १३० ॥

असौ माया श्रौतयौक्तिकलौकिकैः श्रुतियुक्तिलोकसंबंधिभिस्त्रिभिर्बोधैर्ज्ञानैर्यथाक्रमं तुच्छाऽनिर्वचनीया वास्तवीति त्रिधा त्रिप्रकारिका भवति। लौकिकदृष्ट्या वास्तवतया भासमाना माया युक्तिदृष्ट्या सत्त्वासत्त्वाभ्यामनिर्वचनीया शास्त्रतोऽसत्येति भावः ॥ १३० ॥

मायायाः कृत्यमाह, अस्येति।

**अस्य सत्त्वमसत्त्वं च जगतो दर्शयत्यसौ।**
**प्रसारणाच्च संकोचाद्यथा चित्रपटस्तथा ॥ १३१ ॥**

प्रसारणाच्चित्रपटगतं चित्रं संकोचात्तस्याभावं च। जगतः सत्त्वमसत्त्वं च भावाभावादित्यर्थः। स्पष्टमन्यत् ॥ १३१ ॥

मायायाः स्वातन्त्र्यास्वातन्त्र्ये आह, अस्वतंत्रेति।

**अस्वतन्त्रा हि माया स्यादप्रतीतेर्विना चितिम्।**
**स्वतन्त्रापि तथैव स्यादसंगस्यान्यथाकृतेः ॥ १३२ ॥**

चितिं विना स्वप्रकाशकं चैतन्यमन्तरेण अप्रतीतेर्माया अस्वतन्त्रा स्वस्य तन्त्रा अधीना स्वतन्त्रा इतरव्यापारानधीना सा न भवतीति तथा। मायाप्रतीतिश्चिदधीनेति भावः। तथैवासंगस्य कूटस्थस्यान्यथा जगदाकारेण कृतेः कारणात् स्वतन्त्रापि स्यात् ॥ १३२ ॥

असंगस्यान्यथाकरणं विवृणोति, कूटस्थेति।

**कूटस्थासंगमात्मानं जगत्त्वेन करोति सा।**
**चिदाभासस्वरूपेण जीवेशावपि निर्ममे ॥ १३३ ॥**

सा माया कूटस्थासंगं कूटस्थोऽत्र एवासंगश्च तथाभूतमात्मानं प्रत्यगात्मानं जगत्त्वेन करोति चिदाभासस्वरूपेण जीवेशावपि निर्ममेऽसृजत्। जीवेश्वरविभागं चाकल्पयदिति भावः ॥ १३३ ॥

ननु कूटस्थस्य जगत्त्वेन करणे कूटस्थत्वहानिः स्यादित्यत आह, कूट स्थेति ।

**कूटस्थमनुपद्रुत्य करोति जगदादिकम् ।**
**दुर्घटैकविधायिन्यां मायायां का चमत्कृतिः ॥ १३४ ॥**

कूटस्थमनुपद्रुत्य अबाधित्वा तत्र विकारमसंपाद्येत्यर्थः । जगदादिकं तस्मिन् करोति कल्पयति यथा रज्जुस्वरूपमबाधित्वा सर्पम् । कूटस्थस्य भंगाभावेऽन्यरूपेण प्रतीतिसंभवः कथमित्याशंक्याह, दुर्घटेति । दुर्घटैकविधायिन्यां अघटितघटनामात्रफलिकायामिति भावः । मायायां का चमत्कृतिः न किमप्याश्चर्यमित्यर्थः ॥ १३४ ॥

दुर्घटैकविधायित्वं तस्यास्सहजमित्याह, द्रवत्वमिति ।

**द्रवत्वमुदके वह्नावौष्ण्यं काठिन्यमश्मनि ।**
**मायाया दुर्घटत्वं च स्वतस्सिध्यति नान्यतः ॥ १३५ ॥**

स्पष्टोऽर्थः । एते गुणास्तत्तद्वस्तुषु स्वतः सिद्धा नान्यवस्तुकल्पिता इति भावः ॥ १३५ ॥

यथार्थज्ञानावधिर्मायायाश्चमत्कार इत्याह, नेति ।

**न वेत्ति लोको यावत्तां साक्षात्तावच्चमत्कृतिम् ।**
**धत्ते मनसि पश्चात्तु मायैषेत्युपशाम्यति ॥ १३६ ॥**

लोकस्तां मायां यावत्कालं साक्षात्प्रत्यक्षतो न वेत्ति तावत्कालं तां चमत्कृतिं मनसि धत्ते । पश्चात् विज्ञाय एषा चमत्कृतिर्मायेति मायाकल्पितेत्युपशाम्यति ॥ १३६ ॥

एवं मायायाः स्वरूपादिकं युक्त्या निरूप्य वस्तुतस्तन्निरूपणं नावश्यकमित्याह, प्रसरन्तीति ।

**प्रसरन्ति हि चोद्यानि जगद्वस्तुत्ववादिषु ।**
**न चोदनीयं मायायां तस्याश्चोद्यैकरूपतः ॥ १३७ ॥**

जगद्वस्तुत्ववादिषु जगतो वस्तुत्वस्य सत्यत्वस्य वादिषु नैयायिकादिषु चोद्यानि "इदं किंस्वरूपं? किं कार्यकं? कथं घटेते?" त्याद्याक्षेपाः प्रसरन्ति। तत्वतो मायायां चोदनीयं शंकनीयं न विद्यते। कुतः? तस्याश्चोद्यैकरूपतः चोद्यमेवैकं केवलं रूपमित्यतो मुख्यस्वरूपत्वात् ॥ १३७ ॥

तद्विषये चोद्यं तव न घटत इत्याह, चोद्येपि।

**चोद्येऽपि यदि चोद्यं स्यात्त्वच्चोद्ये चोद्यते मया।**
**परिहार्यं ततश्चोद्यं न पुनः प्रतिचोद्यताम् ॥ १३८ ॥**

चोद्येऽपि चोद्यरूपेऽपि चोद्यमाक्षेपो यदि स्यात्त्वच्चोद्ये तत्राक्षेपे मया चोद्यते आक्षिप्यते। ततो मदाक्षेपानन्तरं चोद्यं मदीयाक्षेपः परिहार्यं निरसनीयः, पुनर्न प्रतिचोद्यतां। पुनराक्षेपोपर्याक्षेपो न कार्यः। आक्षेपार्हे वस्तुनि कृतो य आक्षेपः स पुनः प्रत्याक्षेपं नार्हतीति भावः ॥ १३८ ॥

सर्वेषामपि चोद्यानां मायारूपतया चोद्यपरिहारे प्रयतमानाः सर्वेऽप्यस्मत्पक्षान्तःपातिन एव भवन्तीति साकूतमाह, विस्मयेति।

**विस्मयैकशरीराया मायायाश्चोद्यरूपतः।**
**अन्वेष्यः परिहारोऽस्या बुद्धिमद्भिः प्रयत्नतः ॥ १३९ ॥**

चोद्यरूपतः चोद्यस्वरूपतया विस्मयैकशरीरायाः। आश्चर्यमात्रस्वरूपाया अस्या मायायाः परिहारः प्रतिकृतिरेव बुद्धिमद्भिः प्रयत्नतोऽन्वेष्यः। तदन्वेषणमेवास्माभिः क्रियते यदि भवन्तोऽपि बुद्धिमन्तस्तदा तदन्वेषणमार्गमवलम्ब्य मत्पक्षेऽन्तर्भावमभिलषन्त्विति सोत्प्रासोक्तिरियम् ॥ १३९ ॥

मायास्वरूपे सिद्धे तत्परिहारोऽन्वेष्टुं शक्यः। तदेव न सिद्धम्। कथं परिहारान्वेषणमित्याशंक्याह, मायात्वमिति।

**मायात्वमेव निश्चेयमिति चेत्तर्हि निश्चनु।**
**लोकप्रसिद्धमायाया लक्षणं यत्तदीक्ष्यताम् ॥ १४० ॥**

मायापरिहारान्वेषणाय तस्या मायात्वमेव प्रथमतो निश्चेयमिति वदसि चेत्तर्हि तल्लोकप्रसिद्धमायात्वं निश्चिनु। लोकप्रसिद्धमायाया यल्लक्षणं तदेव मायाया लक्षणमितीक्ष्यताम् ॥ १४० ॥

लोकप्रसिद्धमायालक्षणमाह, नेति।

न निरूपयितुं शक्या विस्पष्टं भासते च या।
सा मायेतीन्द्रजालादौ लोकाः संप्रतिपेदिरे ॥ १४१ ॥

लोके इन्द्रजालादाविदमित्थमिति निरूपयितुं या न शक्या तथापि विस्पष्टं भासते प्रत्यक्षतः प्रतीयते सा मायेति लोकास्संप्रतिपेदिरे जज्ञिरे ॥ १४१ ॥

उक्तं लक्षणं प्रकृते योजयति, स्पष्टमिति।

स्पष्टं भाति जगच्चेदमशक्यं तन्निरूपणम्।
मायामयं जगत्तस्मादीक्षस्वापक्षपाततः ॥ १४२ ॥

स्पष्टोऽर्थः। अपक्षपाततः तटस्थबुद्ध्या ॥ १४२ ॥

जगतोऽनिरूपणीयत्वमुपपादयति, निरूपयितुमिति।

निरूपयितुमारब्धे निखिलैरपि पण्डितैः।
अज्ञानं पुरतस्तेषां भाति कक्षासु कासु चित् ॥ १४३ ॥

स्पष्टोऽर्थः। पण्डिताः कपिलकणादयो जगत्स्वरूपविचारं कृतवन्तो दर्शनप्रवर्तकाः ॥ १४३ ॥

निरूपणक्रमेऽज्ञानेनोपसंहारमुदाहरणेन दर्शयति, देहेति।

देहेन्द्रियादयो भावा वीर्येणोत्पादिताः कथम्।
कथं वा तत्र चैतन्यमित्युक्ते ते किमुत्तरम् ॥ १५५ ॥

स्पष्टः पूर्वार्धः। भावाः पदार्थाः। तत्र देहे चैतन्यं कथं वासीदित्युक्ते जगतो निरूपणीयत्ववादिनस्ते उत्तरं समाधानं किम्? ॥ १४४ ॥

प्रथमतो जगन्निरूपणप्रस्तावे स्वभाववादिना ज्ञानमंगीकारयत्युपसंहारे, वीर्यस्येति ।

वीर्यस्यैष स्वभावश्चेत्कथं तद्विदितं त्वया ।
अन्वयव्यतिरेकौ यौ भग्नौ तौ वन्ध्यवीर्यतः ॥ १४५ ॥

न जानामि किमप्येतदित्यंते शरणं तव ।
अत एव महान्तोऽस्य प्रवदन्तीन्द्रजालताम् ॥ १४६ ॥

एष देहेन्द्रियोत्पादनं वीर्यस्य स्वभाव इति वदसि चेत्त्वया कथं विदितम्? अनुमानेनेति यदि ब्रूषे, तर्हि तस्य दुष्टतेत्याह, अन्वयेति । तत्र व्यतिरेकभंगस्य स्वेदजेषु गोमयवृश्चिकादिषु च बहुशो दृष्टत्वात्तमपहायान्वयभंगं दर्शयति, वंध्यवीर्यत इति । व्याप्तिसाधकौ यावन्वयव्यतिरेकौ तौ भग्नौ वन्ध्यवीर्यतो, मोघवीर्यसद्भावात् । एवं चाप्यन्वयोऽपि नास्ति । एवं प्रचलिते विवादेऽन्ते किमपि न जानामीत्युत्तरमेव तव शरणम् । अत एव अनिरूप्यत्वादेव महान्तो मुनयोऽस्य जगत इन्द्रजालतामिन्द्रजालप्रायतां प्रवदन्ति । केवलयुक्तिवादातीताः काश्चित्कक्षा विद्यन्ते आध्यात्मिकविषया येऽतीतमानुषशेमुषीविषया इति भावः ॥ १४५–१४६ ॥

उक्तार्थे प्राचामङ्गीकारं दर्शयति, एतस्मादिति ।

एतस्मात्किमिवेन्द्रजालमपरं यद्गर्भवासस्थितम् ।
रेतश्चेतति हस्तमस्तकपदप्रोद्भूतनानांकुरम् ।
पर्यायेण शिशुत्वयौवनजरावेषैरनेकैर्वृतम् ।
पश्यत्यत्ति शृणोति जिघ्रति तथा गच्छत्यथागच्छति ॥१४७॥

एतस्माद्वक्ष्यमाणाच्चोद्यादपरमिन्द्रजालं किमिव? न किमपीत्यर्थः । किं तच्चोद्यतममिन्द्रजालम्? यद्गर्भवासस्थितं, वासो निवासस्थानं, तत्र स्थितं रेतो हस्तमस्तकपदप्रोद्भूतनानांकुरम् हस्तमस्तकरूपेणोत्पन्नं बहुविधाङ्कुरं यस्य तत्

चेतति चैतन्यमाप्नोति, पर्यायेणोत्पत्त्यनन्तरं जगन्नाटकरंगस्थले शिशुत्वयौवनजरा-वेषैरनेकैर्वृत्तं सत् पश्यत्यत्ति शृणोति जिघ्रति तथैव गच्छत्यथागच्छति च । विविधाः क्रियाः करोतीति भावः ॥ १४७ ॥

एवमेव स्थावरादीनां परिणामविशेषस्यापि दुर्निरूपत्वमाह, देहवदिति ।

**देहवद्वटधानादौ सुविचार्य विलोक्यताम् ।**
**क धानाः कुत्र वा वृक्षस्तस्मान्मायेति निश्चिनु ॥१४८॥**

देहवत् वटधानादौ न्यग्रोधादिमहावृक्षबीजविषये सुविचार्य विलोक्यताम् । सूक्ष्मतरस्वरूपा धानाः क ? कुत्र वा तदुद्भूतो मूलस्कंधशाखाकोमलकिसलय-पुष्पफलविपुलच्छायावृक्षः ? तस्मादिदं सर्वमपि मायेति निश्चिनु ॥ १४८ ॥

इतः पूर्वमेव जगत्सत्यत्ववादिनां मतं खंडितमित्याह, निरुक्ताविति ।

**निरुक्तावभिमानं ये दधते तार्किकादयः ।**
**हर्षमिश्रादिभिस्ते तु खण्डनादौ सुशिक्षिताः ॥ १४९ ॥**

निरुक्तौ जगन्निर्वचनविषये येऽभिमानं मिथ्याज्ञानकृतमभिनिवेशं दधते तार्किकादयः ते हर्षमिश्रादिभिः खंडनादौ खंडनखाद्यादिग्रंथेषु तन्मतखंडनेन सुशिक्षिताः । तत्र हि "उपयन्नपयन् धर्मो विकरोति हि धर्मिणम्," इति न्यायमनुसृत्य परमाणूनामुपचये विकारित्वात्तेषामनित्यत्वं स्यादित्युपपाद्य निरंशानां संयोगस्य दुर्घटतया संयोगवशादुपचयोऽपि न घटत इति "संयोगोऽव्याप्यवृत्तित्वा-देकदेशेऽस्ति संमतः । तदेकदेशस्य प्रश्ने संयोग एव कः ?" इति दूषयित्वा परमाणुकारणवादिनामपि जगत्कल्पितत्वसिद्धान्तस्सिद्ध एवेति "अणौ निरंशे नितरां कल्पिते कल्पितं जगदित्यु"क्त्वा वस्तुतः कणादस्याप्ययमेव हृदयंगमस्सि-द्धान्त इति "कणादः पारिमांडल्यसंयोगात् द्व्यणुकक्रमात् जगदुत्प्रेक्षयन् मायावाद-सादरमानस" इत्यादिना बहुधा शिक्षिताः विनेयतां गमिताः ॥ १४९ ॥

सृष्टेर्मायाबीजत्वविचारः ।

अनिरूपणीयार्थनिरूपणाभिनिवेशं प्राज्ञोऽपि न्यषेधिषुरित्याह, अचिन्त्या इति ।

**अचिन्त्याः खलु ये भावा न तांस्तर्केषु योजयेत् ।**
**अचिन्त्यरचनारूपं मनसाऽपि जगत्खलु ॥ १५० ॥**

ये भावाः पदार्थाः मनसा अचिन्त्यास्तान् तर्केषु युक्तिवादेषु न योजयेत्। तदेवोक्तमभियुक्तैः— "समस्तलोकशास्त्रैकमत्यमाश्रित्य नृत्यतोः का तवास्ति गतिस्तर्कैर्वस्तुधीव्यवहारयोः" इति । तस्मात्केवलयुक्तिवादेन विचारणा अयोग्येति भावः । प्रस्तुते योजयति अचिन्त्येति । जगन्मनसाप्यचिन्त्यरचनारूपं खलु अचिन्त्यरचनारूपस्यास्य जगतोऽतः केवलयुक्तिवादैर्निर्वचनं, दुश्शकमिति भावः ॥ १५० ॥

अचिन्त्यरचनारूपस्यास्य जगतो बीजं किमित्यत आह, अचिंत्येति ।

**अचिन्त्यरचनाशक्तिबीजं मायेति निश्चिनु ।**
**मायाबीजं तदेवैकं सुषुप्तावनुभूयते ॥ १५१ ॥**

स्पष्टः पूर्वार्धः । तच्च कुत्रानुभूयत इत्यत आह, मायेति । तदेकमनन्यं मायाबीजं तमोरूपं सुषुप्तावनुभूयते ॥ १५१ ॥

सुषुप्त्यनुभूतं जगतो मायाबीजं विवृणोति, जाग्रदिति ।

**जाग्रत्स्वप्नजगत्तत्र लीनं बीज इव द्रुमः ।**
**तस्मादशेषजगतो वासनास्तत्र संस्थिताः ॥ १५२ ॥**

यथा बीजे सूक्ष्मांशतो द्रुमो लीन तथा जाग्रत्स्वप्नजगत् जाग्रति स्वप्ने च यज्जगत्प्रतीयते तत्तत्र सुषुप्तौ लीनं वासनामात्रेण विद्यते । तस्मादशेषजगतो वासनास्संस्कारास्तत्र मायायां सूक्ष्मांशतया संस्थिताः ॥ १५२ ॥

ननु मायाया जगद्बीजत्वसमर्थनाय बीजे वृक्ष इवाशेषजगद्वासनारूपेण मायायां लीनमित्युक्तम् । एवं सति सृष्ट्यवस्थायां मायाकल्पितं सर्वमपि जगज्जडरूपमेव स्यात् । एवं च तत्र तत्र परिदृश्यमानं चैतन्यं न घटेतेत्याशंक्य तद्घटयति, येति ।

**या बुद्धिवासनास्तासु चैतन्यं प्रतिबिंबति ।**
**मेघाकाशवदस्पष्टचिदाभासोऽनुमीयताम् ॥ १५३ ॥**

बुद्धिवासना बुद्धौ या जगद्वासना विद्यन्ते तासु चैतन्यं प्रतिबिंबति । तर्हि कुतो नानुभूयत इत्यत आह, मेघेति । मेघाकाशो मेघमंडलगते जले महाकाशप्रतिबिंबः स इवास्पष्टचिदाभासोऽननुभूतोऽप्यनुमीयताम् । यथा मेघाकाशस्यास्पष्टत्वेऽपि घटोदकप्रतिबिंबिताकाशस्य स्पष्टत्वात्तद्दृष्टान्तेन सोऽनुमीयते । तथैव चिदाभासोऽप्यनुमीयते । एवं च तत्र वासनाश्चिदाभासविशिष्टा एव जगतो बीजभूता न केवला इति तात्पर्यम् ॥ १५३ ॥

मेघाकाशस्येव चिदाभासस्यानुमाने सामग्रीसद्भावमाह, साभासमिति ।

**साभासमेव तद्बीजं धीरूपेण प्ररोहति ।**
**अतो बुद्धौ चिदाभासो विस्पष्टं प्रतिभासते ॥ १५४ ॥**

साभासमस्पष्टचिदाभासेन सहितमेव तद्बीजं वासनारूपं कारणं धीरूपेण जाग्रत्स्वप्नयोः प्ररोहति । अतश्चिदाभासो बुद्धौ विस्पष्टं प्रतिभासते । सुषुप्तावस्पष्टचिदाभासविशिष्टमज्ञानमेव जाग्रत्स्वप्नयोर्बुद्धिरूपेण परिणम्य विस्पष्टचिदाभासं भवति । बुद्ध्यवस्थाविशेषत्वाद्बुद्धिवासनाश्चित्प्रतिबिंबवत्यो भवन्ति । एवं च जगत्यनुभूयमानं चैतन्यं चिदाभासरूपमेव । तच्च बीजेऽप्यस्ति । तथा च चैतन्यविशिष्टमेव जगत्स्वसजातीयं साभासं मायाबीजमनुमापयतीति न काप्यनुपपत्तिः ॥१५४

ईश्वरस्य मायोपाधिकत्वविचारः ।

जीवेश्वरयोरपि मायाकल्पितत्वमुदाहरति, मायेति ।

**मायाभासेन जीवेशौ करोतीति श्रुतौ श्रुतम् ।**
**मेघाकाशजलाकाशाविव तौ सुव्यवस्थितौ ॥ १५५ ॥**

मायाशक्तिः आभासेन चिदाभासरूपेण जीवेशौ करोति कल्पयतीति श्रुतौ श्रुतम् । तयोर्भेदं सदृष्टान्तमाह, मेघेति । तावीश्वरजीवौ मेघाकाशजलाकाशा-

विव मेघान्तर्गतजलप्रतिबिंबितोऽस्पष्टाकाशो मेघाकाशः, घटोदकप्रतिबिंबितः स्पष्टाकाशो जलाकाशः, ताविव सुव्यवस्थितौ अस्पष्टोपाधिभेदेन व्यवस्थितौ॥१५५

ईश्वरस्य मेघाकाशसाम्यं स्पष्टयति, मेघ इति ।

**मेघवद्वर्तते माया मेघस्थिततुषारवत् ।**
**धीवासनाश्चिदाभासस्तुषारस्थखवत् स्थितः ॥ १५६ ॥**

माया मेघवद्वर्तते । एवं च तत्प्रतिबिंबिताकाशसदृशो मायागतचित्प्रतिबिंबरूप ईश्वरः । एवं चेश्वरस्य मायोपाधिरिति फलितम् । धीवासना संस्कारा मेघस्थिततुषारवद्वर्तन्ते । जीवस्य तुषाकारसाम्यं स्फुटयति, तुषारेति । चिदाभासस्तुषारस्थखवत् मेघगततुषारस्थिताकाशवत् स्थितः । अत्राऽयं निर्गलितोऽर्थः । तुषाराणां मेघस्थत्वोक्त्या धीवासनानां जीवोपाधिभूतानां मायैकदेशवृत्तित्वं सूचितम् । जीवरूपचिदाभासस्य तुषारप्रतिबिंबितखसादृश्योक्त्या तदुपाधीनां धीवासनानामल्पत्वं सूचितम् । एवं चाभाससाम्येऽप्यल्पोपाधिको जीवोऽधिकोपाधिक ईश्वर इति तयोरौपाधिको भेदस्सुव्यवस्थित इति ॥ १५६॥

ईशस्य मायोपाधिकत्वे प्रमाणमाह, मायेति ।

**मायाधीनश्चिदाभासः श्रुतो मायी महेश्वरः ।**
**अन्तर्यामी च सर्वज्ञो जगद्योनिस्स एव हि ॥ १५७ ॥**

मायाधीनो मायोपाधिकश्चिदाभासः श्रुतौ मायी महेश्वर इति श्रुतः । "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं" (श्वेत. ४. १०.) इति श्रुतिः । एवं च मायोपाधिचिदाभासस्येश्वरत्वं सिद्धम् । स एवेश्वररूपश्चिदाभासोऽन्तर्यामी प्रत्यगात्मा सर्वज्ञो जगद्योनिरिति हि श्रुतः ॥ १५७ ॥

वासनाप्रतिबिंबितचिदाभासस्य तद्व्यापकमायाप्रतिबिंबिताचिदाभासानतिरिक्ततयाऽऽनंदमयकोशस्येश्वरत्वादिकं श्रुतिः प्रतिपादयतीत्याशयेनाह, सौपुप्तमिति ।

सौषुप्तमानंदमयं प्रक्रम्यैवं श्रुतिर्जगौ ।
एष सर्वेश्वर इति सोयं वेदोक्त ईश्वरः ॥ १५८ ॥

"सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभु"गिति (मांडूक्य. ५.) सौषुप्तं सुषुप्तिसंबंधिनमानन्दमयमीश्वरं वर्णितुमुपक्रम्य मांडूक्य-श्रुतिः "एष सर्वेश्वर" इत्येवं "एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिस्सर्वस्य प्रभवाप्ययौ हि भूताना" (मांडूक्य. ६.) मित्युक्तरीत्या जगौ । स सर्वज्ञत्वसर्वेश्व-रत्वान्तर्यामित्वजगद्योनित्वप्रभवाप्ययकारणत्वगुणविशिष्टोऽयं मायाधिष्ठान सर्वेश्वरो वेदोक्तो वेदैरुपवर्णित ईश्वरः । न तु पातंजलाद्यभिमतः । अत्रेश्वरस्य सर्वेश्वरत्वा-दीन्यभिहितानि । तेषां व्याख्यानस्वरूपेण प्रवृत्तोऽयमुत्तरग्रन्थः । तत्र "अयं यदिति" (६-१६०) पद्ये सर्वेश्वरत्वं "सर्वज्ञत्वादिके" इत्यस्मिन् "अशेषप्राणि-बुद्धीना"मित्यस्मिन् "वासनाना"मित्यस्मिंश्च (६ १५९-१६१-१६२) सर्वज्ञत्वं "विज्ञानमयमुख्येष्वि"त्या"धेतस्य वे"त्यन्ते ग्रन्थेऽ (६-१६३-१८२) न्तर्यामित्वं "जगद्योनि"रित्यादि "मायी सृजतीत्याद्यन्ते ग्रन्थे (६-१८२-१९७) जगद्योनित्वं च यथाक्रमं विव्रियते ॥ १५८ ॥

ईश्वरस्य सर्वेश्वरत्वविचारः ।

नन्वानन्दमयस्य सर्वज्ञत्वादिकं न युक्तिसहमित्याशंक्याह, सर्वज्ञत्वेति ।

सर्वज्ञत्वादिके तस्य नैव विप्रतिपद्यताम् ।
श्रौतार्थस्यावितर्क्यत्वान्मायायां सर्वसंभवात् ॥ १५९ ॥

तस्यानंदमयकोशस्य सर्वज्ञत्वादिके आदिशब्देन सर्वशक्तिमत्त्वादिर्गृह्यते तद्विषये नैव विप्रतिपद्यताम् । तत्र हेतुमाह, श्रौतेति । श्रौतार्थस्यावितर्क्यत्वात् । तच्चान्यत्र प्रपञ्चितम् । श्रौतार्थस्यावितर्क्यत्वांगीकारेऽप्याह, मायेति । मायायां सर्वसंभवात् दुर्घटैकविधायिन्या मायाया अवितर्क्यत्वस्य पूर्वमुपपादितत्वेन तस्यां सर्वज्ञत्वादीनां संभवादुपपन्नत्वादित्यर्थः ॥ १५९ ॥

आनन्दमयस्य सर्वेश्वरत्वे उपपत्तिमाह, अयमिति ।

अयं यत्सृजते विश्वं तदन्यथयितुं पुमान् ।
न कोऽपि शक्तस्तेनायं सर्वेश्वर इतीरितः ॥ १६० ॥

स्पष्टोऽर्थः । अन्यथयितुं अन्यथा कर्तुम् ॥ १६० ॥

ईश्वरस्य सर्वज्ञत्वविचारः ।

सर्वेश्वरत्वमुपपाद्य तस्य सर्वज्ञत्वमुपपादयति, अशेषेति ।

अशेषप्राणिबुद्धीनां वासनास्तत्र संस्थिताः ।
ताभिः क्रोडीकृतं सर्वं तेन सर्वज्ञ ईरितः ॥ १६१ ॥

अशेषप्राणिबुद्धीनां वासनास्संस्कारास्तत्र सौषुप्तिकाज्ञाने संस्थिताः । ताभिर्वासनाभिस्सर्वं क्रोडीकृतं विषयीकृतं भवति । तेन सर्वज्ञ इतीरितः । अशेषप्राणिबुद्धिवासनाविशिष्टमायोपाधिकत्वात्स सर्वं जानातीति सर्वज्ञ इति भावः ॥१६१॥

आनन्दमये सर्वज्ञत्वस्याप्रत्यक्षत्वे कारणमाह, वासनानामिति ।

वासनानां परोक्षत्वात्सर्वज्ञत्वं न हीक्ष्यते ।
सर्वबुद्धिषु तद्दृष्ट्वा वासनास्वनुमीयताम् ॥ १६२ ॥

बुद्धेर्वासनानां संस्काराणां परोक्षत्वादानन्दमये सर्वज्ञत्वं न हीक्ष्यते न प्रत्यक्षीक्रियते । कथं तर्हि तस्यावस्थितिर्निश्चीयत इत्यत आह, सर्वेति । सर्वबुद्धिषु तत्सर्वज्ञत्वं समस्त्या विद्यमानं दृष्ट्वा सर्वासु वासनासूपाधिष्वनुमीयताम् ऊह्यताम् । तत्तद्वासनागोचराः पदार्थाः तत्तद्ज्ञानस्य विषयीभवन्तीत्यत्र न विवादः । मायायां सर्ववस्तुविषयकवासनानां तदंशभूतानामव्यभिचारेण सर्ववासनागोचरतत्तत्पदार्थज्ञानं मायोपाधिके संभवतीति न सर्वज्ञत्वहानिः । नास्त्येव तद्वस्तु, यद्वासनानामपि गोचरं न भवेत् । सति वस्तुनि कस्याश्चिदपि बुद्धेर्वासनागोचरता भवत्येव । अतस्तदुपाधिमायांशवासनानां यदगोचरं तच्छशशृङ्गवदलीकमेव स्यात् । अतो मायोपाधिकस्य सर्वथा सर्वज्ञत्वं सेत्स्यतीति भावः ॥ १६२ ॥

ईश्वरस्यान्तर्यामित्वविचारः।

अन्तर्यामिशब्दार्थमाह, विज्ञानेति।

**विज्ञानमयमुख्येषु कोशेष्वन्यत्र चैव हि।**
**अन्तस्तिष्ठन्यमयति तेनान्तर्यामितां व्रजेत्॥ १६३॥**

यतो विज्ञानमयमुख्येषु कोशेषु अन्यत्र पृथिव्यादिरेतोऽन्तेषु वस्तुष्वन्तस्तिष्ठन्नपि तदन्यो भूत्वा यमयति सर्वव्यवहारं नियोजयति। तेनान्तर्यामितां व्रजेदन्तर्यामीत्युच्यत इत्यर्थः। "यो विज्ञाने तिष्ठन् विज्ञानादन्तरोऽयं विज्ञानं न वेद; यस्य विज्ञानं शरीरं, यो विज्ञानमन्तरो, यमयत्येष त अन्तर्याम्यमृत" इति श्रुतेः (बृ. ३. ७. २२.) ॥१६३॥

अस्मिन्नर्थे सर्वमन्तर्यामिब्राह्मणं प्रमाणमिति दिदर्शयिषया तदेकदेशभूतां "यो मनसि तिष्ठन् मनसोऽन्तरो.....यमयत्येष त आत्माऽन्तर्याम्यमृत" (बृ. ३. ७. २०.) इति श्रुतिमर्थतः पठति, बुद्धाविति।

**बुद्धौ तिष्ठन्नान्तरोऽस्या धियाऽनीक्ष्यश्च धीवपुः।**
**धियमंतर्यमयतीत्येवं वेदेन घोषितम्॥ १६४॥**

अन्तर्यामीश्वरो बुद्धौ तिष्ठन्नप्यस्या आन्तरः। तदन्तःस्थितेस्स बुद्ध्या न ज्ञायत इत्यर्थः। धीवपुर्धीस्वरूपः। यद्रूपेण यद्दृश्यते तत्तस्य वपुरिति न्यायात्। धियाऽनीक्ष्यः धीविषयश्च न भवति। साक्षिस्वरूपत्वात्। किं तु धियमन्तर्यमयतीत्येवं वेदेन पूर्वोक्तब्राह्मणेन घोषितम्॥ १६४॥

ईश्वरो बुद्धौ तिष्ठतीति कथं निश्चीयते? अत्रास्थितस्यापि नियामकत्वं नगरस्थराजस्य देशनियामकत्ववदुपपन्नमित्याशंक्य तत्र स्थितिमुपपादयति, तन्तुरिति।

**तन्तुः पटे स्थितो यद्वदुपादानतया तथा।**
**सर्वोपादानरूपत्वात्सर्वत्रायमवस्थितः॥ १६५॥**

स्पष्टः पूर्वार्धः । तद्वत्सर्वोपादानरूपत्वात् सर्वस्य जगतः उपादानकारणभूतत्वादयमन्तर्यामी सर्वत्रावस्थितः । बुद्धेरप्युपादानत्वाद्बुद्धावपि तिष्ठतीत्यर्थः ॥ १६५ ॥

ननु पटस्यान्तरस्तन्तुः पटोपादानं भवितुमर्हति तथा बुद्धेरपि सांशत्वात् तदंशा एव तदुपादानीभवितुमर्हन्ति । तथा च तत्रान्तरत्वेनोपादानतया ईश्वरः किमित्यभ्युपेय ? इत्यत आह, पटादिति ।

**पटादप्यान्तरस्तन्तुस्तन्तोरप्यंशुरान्तरः ।**
**आन्तरत्वस्य विश्रान्तिर्यत्रासावनुमीयताम् ॥ १६६ ॥**

पटादपि तन्तुरान्तरः सूक्ष्मतरः, तन्तोरप्यंशुः परमाणुरान्तरः, तथैव यत्रान्तरत्वस्य विश्रान्तिरसावीश्वर इत्यनुमीयताम् । यथा पटस्य तन्तोरुपादानत्वेऽपि तदवयवानां तदुपादानमित्येवमवयवपरंपरायाः यत्र विश्रान्तिस्तत्र परमाणौ परंपरया सर्वोपादानत्वम् । एवं बुद्ध्यंशानां साक्षाद्बुद्ध्युपादानत्वेऽपि तत्तदान्तरोपादानचिन्तायां यत्र तद्विश्रान्तिस्स एवेश्वर इति तस्य परंपरया बुद्ध्युपादानत्वं न हीयते । यथा च पटस्य परंपरयोपादानभूतपरमाणुः पटे तिष्ठति तद्वद्बुद्धावीश्वर इति भावः ॥ १६६ ॥

ननु तन्त्वान्तराणां केषांचिदंशानामिन्द्रियवेद्यत्वदर्शनादयमीश्वरः कुतो नेन्द्रियवेद्य इत्यत आह, द्वित्रेति ।

**द्वित्रान्तरत्वकक्षाणां दर्शनेऽप्ययमान्तरः ।**
**न वीक्ष्यते ततो युक्तिश्रुतिभ्यामेव निर्णयः ॥ १६७ ॥**

द्वित्रान्तरत्वकक्षाणां, द्वे वा तिस्रो वा द्वित्राः "बहुव्रीहौ संख्येये" इति डच्, तदान्तरत्वकक्षाणां दर्शनेऽपि तदान्तरकक्षाभूतद्व्यणुकपरमाण्वोरदर्शनादयमान्तरः । आंतरत्वविश्रान्तिधामेश्वरो न वीक्ष्यते । परमाणुवन्नेक्ष्यत इति भावः । अनीक्ष्यत्वे कुतस्तत्सत्तानिर्णय इत्यत आह, तत इति । ततो बुद्धेरनीक्ष्यत्वात् युक्तिश्रुतिभ्यामेव, युक्तिः बुद्धेस्तदंशानां च सर्वेषां कार्यत्वात्तेषां किंचिन्नित्यमुपादानमन्तराऽसंभवः । अतः कार्यमात्रसाधारण उपादानभूतः कश्चन पदार्थः

सत्यमित्याद्युपक्रान्तस्य ससंगत्वं वाऽभ्युपेयम् । हेतोस्ससंगवृत्तित्वनियम उपक्रान्तस्यासंगत्वं च केन निर्बंधेनाङ्गीक्रियत इत्याशंक्योभयमपि प्रमाणासिद्धमिति स एव निर्बंध इत्याशयेनाह, उपक्रमेति ।

**उपक्रमादिभिर्लिंगैस्तात्पर्यस्य विचारणात् ।**
**असंगं ब्रह्म मायावी सृजत्येष महेश्वरः ॥ १९५ ॥**

उपक्रमादिभिर्लिंगैः "उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णये" इत्युक्तेर्लिंगैः श्रुतेस्तात्पर्यस्य विचारणादिदं सिद्धम् । उपक्रान्तं ब्रह्मासंगं सर्वसंगरहितं निष्क्रियं निर्गुणम् । मायावी मायाशक्तिसहितः ससंग एष महेश्वरो जगत्सृजतीत्यवगम्यत इत्यर्थः । अतोऽसंगं तदा परामृश्य तस्य पंचम्या हेतुत्वबोधनमीश्वरब्रह्मणोरन्योन्याध्यासमन्तरा न घटत इत्ययमध्यासः । श्रुतिसिद्ध इति तात्पर्यादवगम्यते । उपक्रमो ग्रन्थस्यारंभः, उपसंहारस्तत्समाप्तिः, उपक्रमोपसंहारावित्येकं लिंगम् । अभ्यासः पौनःपुन्येन कथनम् , अपूर्वता प्रमाणान्तरानवगतत्वम्, फलं प्रयोजनम्, अर्थवादः, प्रतिपाद्यार्थप्रशंसनम्, उपपत्तिः तत्र श्रुत्युक्ता युक्तिः, इत्येते तात्पर्यनिर्णये षड्विधं लिंगम् ॥ १९५ ॥

ब्रह्मणोऽसंगत्वं श्रुतितात्पर्यविषयमिति तात्पर्यनिर्णायकलिंगेषूपक्रमोपसंहारादित्याद्यलिंगेन दर्शयति, सत्यमिति ।

**सत्यं ज्ञानमनन्तं चेत्युपक्रम्योपसंहृतम् ।**
**यतो वाचो निवर्तन्त इत्यसंगत्वनिर्णयः ॥ १९६ ॥**

"सत्यं ज्ञानमनन्तं ब्रह्म" त्युपक्रम्य "आनन्दं ब्रह्मणो विद्वा" नित्यानंदवल्ल्यां ब्रह्मलक्षणमुपसंहृतम् । "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" "ब्रह्मपुच्छं प्रतिष्ठा" "रसो वैसः" इत्याद्यभ्यासः । ब्रह्मज्ञाने मानान्तराभावादपूर्वता । "आप्नोति परमि"ति फलं । सोऽश्नुते सर्वान् कामानित्यर्थवादः । भीषास्माद्वातः पवते इत्युपपत्तिः । इति हेतोर्ब्रह्मणोऽसंगत्वनिर्णयः क्रियते ॥१९६॥

अस्मान्मायीसृजते विश्वमेतत्तास्मिंश्चान्यो माययासन्निरुद्धः (श्वे. ४.९.) इतीश्वरकर्तृकसृष्टिप्रतिपादिकां श्रुतिमर्थतः पठति, मायीति ।

यन्त्रारूढानि यन्त्राणि शरीराणि तान्यारूढानि तेष्वात्मत्वाभिमानेनाधिष्ठितानि सर्वभूतानि भ्रामयन् तत्तत्कर्मसु प्रवर्तयन् ईश्वरः सर्वभूतानां हृद्देशे तिष्ठति। अन्तर्यामिप्रेरणया प्राप्तं कर्म धर्ममधर्मं वा ईश्वराधीनो जनः परिहर्तुं न शक्नोति। एवं चान्तर्यामिप्रेरणया प्रवृत्तः सन्नधर्मे निवृत्तौ धर्मे प्रवृत्तौ वा जानन्नपि न प्रभवति ॥ १७१ ॥

उदाहृतगीतावाक्यार्थव्याचिकीर्षया तत्रादौ संभावितसर्वभूतभ्रामणस्य पूर्वांगत्वेन स्वयमेवान्तर्यामी हृद्गतपूर्ववासनानुरूपां विकृतिमापन्न इव भातीत्याह, सर्वेति।

सर्वभूतानि विज्ञानमयास्ते हृदये स्थिताः।
तदुपादानभूतेशस्तत्र विक्रियते खलु ॥ १७२ ॥

सर्वभूतानि विज्ञानमयाः तेऽहंकर्तृत्वाभिमानिनस्सन्तो हृदये विज्ञानस्य प्रधानस्थाने स्थिताः। तदुपादानभूतेशः तेषां विज्ञानमयानामुपादानकारणभूत ईश्वरस्तत्र हृदये विक्रियते खलु। तन्निष्ठपूर्ववासनानुरूपं विकारमापन्न इव भाति। यथा स्वच्छं स्फटिकं सन्निहितरक्तादिवर्णैस्तत्तद्रूपमिवाभाति ॥ १७२ ॥

उक्तार्थं विवृणोति, देहेति।

देहादिपंजरं यन्त्रं तदारोहोऽभिमानिता।
विहितप्रतिषिद्धेषु प्रवृत्तिर्भ्रमणं भवेत् ॥ १७३ ॥

स्पष्टः पूर्वार्धः। विहितप्रतिषिद्धेषु धर्माधर्मरूपेषु मार्गेषु प्रवृत्तिः अन्तर्यामिविकारानुरूपं जीवस्य प्रवर्तनं भ्रमण भवेत् ॥ १७३॥

भ्रामयन् माययेत्यत्र णिच्प्रत्ययस्य मायाशब्दस्य चार्थमाह, विज्ञानेति।

विज्ञानमयरूपेण तत्प्रवृत्तिस्वरूपतः।
स्वशक्त्येशो विक्रियते मायया भ्रामणं हि तत् ॥ १७४ ॥

ईशः स्वशक्त्या मायया विज्ञानमयरूपेण तत्प्रवृत्तिस्वरूपतः तेषां विज्ञानमयानां प्रवृत्तिः प्रवर्तनं यत्तत्स्वरूपतः तद्रूपेण विक्रियते। तद्धि मायया भ्राम-

णम्। विज्ञानोपाधिरीश्वरो मायावशात् प्राणिकर्मजन्यवासनानुगुणमुपाधिकृत-विकृतिमापद्याभिमानाविष्टो विहितप्रतिषिद्धवर्तनमनुवर्तत इति भावः ॥ १७४ ॥

श्रुत्याप्ययमेवार्थो बोधित इत्याह, अन्तरिति।

**अन्तर्यमयतीत्युक्त्यायमेवार्थः श्रुतौ श्रुतः।**
**पृथिव्यादिषु सर्वत्र न्यायोऽयं योज्यतां धिया ॥१७५॥**

श्रुतावुक्तश्रौतवाक्येऽन्तर्यमयतीत्युक्त्या देहादिपंजरगतो जीवः साभिमान-मनिच्छन्नपि धर्माधर्मकार्येषु प्रकृत्या नियुज्यत इत्ययमेवार्थः श्रुतः। एवं देहेन्द्रि-यादिनियमनं श्रुतिसिद्धं केवलजडेषु पृथिव्यादिष्वप्यतिदिशति, पृथिवीति। अयं न्यायः पृथिव्यादिषु सर्वत्र धिया योज्यताम्। पृथिव्याद्यधिष्ठातृदेवतास्वपि केषांचिद्विकाराणां दर्शनात्तद्विकारेऽपि तासां स्वातन्त्र्याभावात्तासामपि कार्यतया तदुपादानतया तत्रापि तदधिष्ठान ईश्वरस्सिद्धः। स एव तत्तत्प्राणिकर्मफलभोगाय पृथिव्याद्यधिष्ठातृदेवतासु तांस्तान्विकारांस्तदनुकूलतया स्वयमुपाधिवशाद्विक्रियमाणो जनयतीत्यूर्मिति तात्पर्यम् ॥ १७५ ॥

उक्तार्थे पांडवगीतायां दुर्योधनप्रोक्तं प्राचामनुभवं दर्शयति, जानामीति।

**जानामि धर्मं न च मे प्रवृत्तिः जनाम्यधर्मं न च मे निवृत्तिः।**
**केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि ॥१७६॥**

अहं धर्मं शास्त्रविहितं कर्म जानामि। तथापि तत्र मे प्रवृत्तिर्व्यापारो न भवति। अधर्मं प्रतिषिद्धं कर्म च जानामि। अनिष्टसाधनमिति जानामि। तथापि तदनुष्ठानान्मे निवृत्तिर्विमुखता न भवति। विध्युक्तकर्मानुष्ठाने प्रतिषिद्ध-कर्माननुष्ठाने वा जानतोऽपि न हि जन्तोस्स्वातन्त्र्यमित्यर्थः। तत्र कारणं वक्ति केनेति, हृद्यन्तःकरणे स्थितेन केनाप्यन्तर्यामिणा देवेन यथा यत्कर्माचरणे नियुक्तो-ऽस्मि धर्माधर्मविचारणमन्तरेण तथा करोमि नियुक्तमार्गमेवानुसरामि ॥ १७६ ॥

तर्हि पुरुषकारो निरर्थकस्स्यादित्याशंक्याह, नेति ।

**नार्थः पुरुषकारेणेत्येव मा शंक्यताम् यतः ।**
**ईशः पुरुषकारस्वरूपेणापि विवर्तते ॥ १७७ ॥**

स्पष्टा पदयोजना । अयं भावः । ईश्वरविक्रियाया अपि तत्तद्वासनाधीनतायाः पूर्वमुपपादितत्वेन तत्तद्वासनानां पूर्वपुरुषकाराधीनतया पूर्वस्मिन् जन्मनि यादृशः पुरुषकारस्तादृश्य एव वासना अस्मिन् जन्मनीशविक्रियकारिण्यो भूत्वा तदीयविक्रियानुरोधेनैव पुनरस्मिन् जन्मनि पुरुषकारं जनयन्ति । एवमयं पुरुषकारो भाविजन्मनि वासनारूपेणेशविक्रियद्वारा तदनुसारिपुरुषकारं जनयतीत्येवं चक्रपर्यालोचने ईशः पुरुषकाररूपतां प्रतिपद्यते । पुरुषकारोऽपीशरूपतां प्रतिपद्यत इति, न पुरुषकारवैयर्थ्यम् । पुरुषकारमन्तरा ईशस्य विकारनैयत्याभावादिति ।

अत्रायं विवेकः । मायाधिष्ठानं परं ब्रह्मैवेश्वर इत्युच्यते । स चेश्वरस्तत्कृतजगत्सर्जनादेरन्यस्यान्यथाकर्तुमशक्यत्वात् सर्वेश्वर इति, सकलबुद्धिवासनावदज्ञानोपाधिकत्वेन सर्वज्ञ इति, पृथिव्यादिदेवतासु विज्ञानमयादिकोशेषु चाधिष्ठातृत्वेन तदुपाधिभूतया चान्तर्यामीति च व्यवह्रियते । विज्ञानमयादीनामन्तरोऽन्तर्यामी विज्ञानमयादिभिस्तद्वपुरप्य‌परिज्ञायमानः पटादीनामिव तन्तुसंकोचविकासाभ्यां प्राक्तनज्ञानानुगुणवासनारूपोपाधिवशात् यथा विकृतिमापद्यते तथा स्वाधिष्ठितं विज्ञानमयादिकं विकारयति । तेन देहादावभिमानाविष्टस्य जीवस्य विविधासु क्रियासु प्रवृत्तिनिवृत्ती दृश्येते । अन्नमयादिष्वभिमानवतो जीवस्य विहितेषु प्रतिषिद्धेषु चान्तर्यामिप्रेरणानुगुणा प्रवृत्तिर्निवृत्तिर्वा भ्रमणमिति, तत्तत्प्राणिकर्मानुरूपवासनाविष्टस्यान्तर्यामिणो विज्ञानमयादिद्वारा प्रवर्तना भ्रामणमिति च निगद्यते । विहितेषु निषिद्धेषु च प्रवृत्तिर्निवृत्तिर्वान्तर्यामिणः प्रेरणामनुसृत्यैव पुरुषस्य भवति ।

प्रकरणेऽस्मिन् प्राक्तनकर्मभिर्जायमानाः काश्चिद्वासनाः सर्वभूतान्तर्यामिणि संसृष्टाः परे जन्मनि तत्तत्प्राणिप्रवृत्तौ निवृत्तौ च वासनानुकूलतयान्तर्यामिणो विकृतेः कारणानि संपद्यन्ते । तथा संपन्ना यथाविकारमन्तर्यामिणः पुरुषस्य प्रवृत्ति

निवृत्तिं वा जनयन्ति। एवं च वासनानुगुणेश्वरप्रेरणात्मकं भ्रामणं, ईश्वरप्रेरणानुगुणपुरुषप्रवृत्त्यात्मकं भ्रमणमुभयमपि न विभिन्नं भवति। ईश्वरस्यैव पुरुषकारस्वरूपेण विवर्तनात्। एवं च न लोक इवात्र पुरुषकारपदमिष्टसाधनानिष्टप्रहाणप्रयोजकं पुरुषप्रयत्नसामान्यं बोधयति। अपितु संकोचेन विषयविशेषात्मकमीश्वर प्रेरणानुगुणं पुरुषप्रयत्नमात्रं बोधयति।

अन्तर्यामिणो नियामकत्वं पुरुषस्य नियम्यत्वमित्येतद्द्वयमपि प्राक्तनजीवकर्मापेक्षकमेव। कर्मणः कर्मजन्यवासनायाश्च जडभूतयोश्चेतानानधिष्ठितयोः फलसंपादकत्वा न युज्यत इत्यन्तर्यामिणो नियन्तृत्वमवश्यमभ्युपगन्तव्यम्। ततश्चानायत्या पुरुषस्य नियम्यत्वं पर्यवस्यति। न च पुरुषकारस्येश्वरप्रेरणातोऽभिन्नतायां तस्य नैष्फल्यमनिच्छतोऽप्यापततीति वक्तव्यम्। ईश्वर एव पुरुषकाररूपेण विवर्तत इत्यभ्युपगमात्। नापि पुरुषप्रयत्नस्यापीश्वरात्मकत्वेऽन्तर्यामिप्रेरणं वितथं स्यादिति वाच्यम्। अचेतनस्य कर्मणस्तज्जन्यापूर्वस्य वा प्रवर्तकत्वं न युज्यते। नापि केवलस्य जीवस्य स्वैरप्रवृत्तिरभ्युपगन्तुं शक्यते, कृतहानाकृताभ्यागमप्रसङ्गात्। इति प्राक्तनजीवकर्मसापेक्षिकः प्रवर्तकः फलप्रदाता कश्चिदन्तर्यामी एष्टव्यः। तस्य चोपाधिपरिहाणेन केवलस्यासङ्गत्वावबोधाच्छ्रुतिस्मृतिप्रतिपादिता बन्धनिवृत्त्यात्मिका मुक्तिरेव परमं फलं भवति।

निरुक्तविधया पूर्वकर्मानुगुणेश्वरप्रेरणात्मकपुरुषप्रयत्नस्यैव पुरुषकारपदेन सर्वत्र कथने प्रवृत्तिनिवृत्त्योः कर्मफलोपलब्धौ च न जीवस्य स्वातन्त्र्यम्। किन्तु सर्वात्मनान्तर्यामिपारतन्त्र्यमिति फलति। तथा च पुरुषप्रयत्नस्य वैयर्थ्यं विधिनिषेधशास्त्राणामानर्थक्यं विषमसृष्टेः परमेश्वरस्य वैषम्यनैर्घृण्ये चापतन्तीति न मन्तव्यम्। प्राक्तनं कर्मापेक्ष्येश्वरः प्राणिजातं सुखदुःखमोहानुबन्धि सृजति। न सर्वात्मना स्वातन्त्र्येण। यद्यपीश्वरः स्वतन्त्रः। तच्च स्वातन्त्र्यं कर्मानुगुणतया सर्जकत्वेन प्रेरकत्वेन च। यथा स्वतन्त्रः कर्ता लौकिको वास्यादिकर्मजातमपेक्ष्यैव स्वकार्यं निर्वर्तयति। न केवलः प्रभवति कार्यकरणे। एवमीश्वरोऽपि। जीवोऽन्तर्यामिपराधीनोऽपि देहेन्द्रियसंघातस्य प्रेरणायां स्वतन्त्रः। ईश्वरो जीवेन न प्रेर्यते।

एवं जीवोऽपीन्द्रियैर्नैप्रेर्यते। तथा च जीवः प्राक्तनकर्मानुगुणान्तर्यामिप्रेरणाया बलीयस्या अभावे स्वविवेचनाशक्तया इन्द्रियग्रामं निगृह्य साधुनि प्रवर्तते, असाधुनि निवर्तते। एवं यो यः स्वकमिन्द्रियग्राममधीनीकृत्य स्वैरप्रवृत्तिर्नभवति तमुन्निनीषते ईश्वरः। यो यः स्वकस्येन्द्रियग्रामस्य पराधीनः स्वैरप्रवृत्तिश्च भवति तमधोनिनीषते। अतः पुरुषकारस्य न वैयर्थ्यम्। न वा विधिनिषेधशास्त्राणामानर्थक्यम्। कर्मापेक्षतया सर्जकत्वेन पर्जन्यादिवत्साधारणकारणस्येश्वरस्य वैषम्यनैर्घृण्ये च न प्रसजतः। फलप्रदाने तु परमं स्वातन्त्र्यमीश्वरस्यैव, न जीवस्य। स्वेन स्वानिष्टफलोत्पादनासंभवात्। विज्ञानमयोऽपि नैसर्गिककर्मवासनावासितस्तदनुगुणतया प्रेरितश्चानिष्टेष्विव भ्रान्त्या प्रवर्तमानो महद्दुःखमश्नुते। न वा कर्मणोऽपिविनष्टस्य तस्य फलजनकत्वायोग्यत्वात्। नापि वापूर्वस्य, अचेतनस्य तस्य दानकर्तृत्वाप्रसक्तेः। इत्यनवद्यमीश्वरस्य फलप्रदातृत्वम्। विवेचितं चैतत् वैषम्यनैर्घृण्याधिकरणे (ब्र. सू. २. १. १२) फलाधिकरणे चेति ॥ १७७ ॥

ननु पुरुषकाराधीना वासना वासनाधीनश्च पुनः पुरुषकार इत्येवं चक्रेणैवालम्। किं मध्ये ईश्वरप्रवेशेनेति शंकां समाधत्ते, ईदृगिति ॥

ईदृग्बोधेनेश्वरस्य प्रवृत्तिर्मैव वार्यताम्।
तथापीशस्य बोधेन स्वात्मासंगत्वधीजनिः ॥ १७८ ॥

ईदृग्बोधेन ईश्वरः पुरुषकारेण विवर्तत इत्याकारेणेश्वरस्य प्रवृत्तिरन्तर्यामिरूपेण प्रेरणा मा वार्यताम्। बोधेन प्रयोजनमाह - तथेति। तथा बोधेनेशस्य स्वात्मासंगत्वधीजनिः स्वस्य रूपस्यासंगत्वविषयिका या बुद्धेरुत्पत्तिः सा स्यात्। पुरुषकारस्य वासनानां च स्वतो जडत्वेन चेतनानधिष्ठितानां तेषां विकारासंभवेनाधिष्ठानतया कश्चिच्चेतनो मध्येऽभ्युपेयः। तच्चैतन्यस्य शुद्धरूपत्वेनासंगतया तत्प्रयुक्तं जडेषु विकारादिकं किमपि न स्यात्। अतः किंचिच्छबलितं चैतन्यमेव मध्ये प्रवेशनीयम्। तत्र विक्रियासंभवात्। विक्रियावदुपाधिमच्चैतन्यमेवेश्वरः। तदुपादानके जगति विकाराणामुपपत्तिश्च भवति। एवंविधमध्ये प्रविष्टस्येशस्य बोधे सति, तत्र विकारवदंशभूतोपाधिपरित्यागेऽसंगचिद्रूपस्वस्वरूपप्रतिपत्तौ नैष्कर्म्यसि-

नानुकूलः कालः समायाति तदानीमेव तद्भोगानुकूला जगत उत्पत्तिर्भवति। सैव सृष्टिरित्युच्यत इत्ययमेवार्थः [illegible] म्यामत्र विवक्षितः ॥ १८३ ॥

लयप्रकारमाह, पुनरिति।

पुनस्तिरोभावयति स्वात्मन्येवाखिलं जगत्।
प्राणिकर्मक्षयवशात्संकोचितपटो यथा ॥ १८४ ॥

यथा संकोचितः पटः स्वगतं चित्रं संकोचयति, तथा स्वेनैवाविर्भावितं अखिलं जगत् स्वात्मन्येव पुनः प्राणिकर्मक्षयवशात् उपभोगेन क्षयात् तिरोभावयति लयंकरोति। प्रत्येकं तत्तत्प्राणिनां देहपातो मरणम्। सर्वप्राणिनां युगपद्देहपातो लय इति भेदः। अयं जगन्नाटकसूत्रधारः नाटकान्ते जगद्रंगभूमिं जवनिकयाऽच्छादयतीति भावः ॥ १८४ ॥

आविर्भावतिरोभावयोर्दृष्टान्तान्तराण्याह, रात्रीति।

रात्रिघस्रौ सुप्तिबोधावुन्मीलननिमीलने।
तूष्णींभावमनोराज्ये इव सृष्टिलयाविमौ ॥ १८५ ॥

इमौ सृष्टिलयौ रात्रिघस्रौ रात्र्यहनीत, सुप्तिबोधौ सुषुप्तिजाग्रती, नयनपक्ष्मणोरुन्मीलननिमीलने, तूष्णींभावमनोराज्ये तूष्णींभावो मनसो निर्व्यापारस्थितिर्मनोराज्यं तस्य स्वेच्छाविजृंभणं, ते इव वर्तेते। चक्रभ्रमणमिव पर्यायप्रवृत्तीत्यर्थः ॥ १८५ ॥

ईश्वरस्य जगदुपादानकारणत्वविचारः।

नन्वीश्वरस्य जगदुत्पत्तिहेतुत्वं आरंभकत्वेन वा स्वीयाकारपरिणामेनवेत्याशंक्याह, आविर्भावेति।

आविर्भावतिरोभावशक्तिमत्त्वेन हेतुना।
आरंभपरिणामादिचोद्यानां नात्रसंभवः ॥ १८६ ॥

ईश्वरस्य जगत आविर्भावतिरोभावशक्तिमत्त्वेन हेतुना आरंभपरिणामादिचोद्यानां आरंभः परमाणूनां द्व्यणुकादिक्रमेण संयोगेन पदार्थस्यारंभ इति

नैयायायिकवादः, परिणामः प्रकृतिर्महदादिना विकारमापद्य स्वयमेवान्यदिव परिणमते यथाक्षीरं दधिरूपेणेति साङ्ख्यवादः, आदिशब्देन ईश्वरनिरीश्वरवादिनामन्येषां मतानि गृह्यन्ते, तदेतेषां चोद्यानां पूर्वपक्षाणां संभवोऽत्र अस्मन्मते न। अद्वितीयत्वान्नारंभवादस्य, निरवयवत्वान्न परिणामवादस्य, च संभव इति भावः। अन्ततो विवर्तवाद एव सिद्धान्तः। साधनमन्तरेणैव मायावीव जगतो व्याकरणाव्याकरणे शक्तिमत्त्वात्स्वयमेव निमित्तोपादानकारणभूतत्वाज्जगत्सृष्टिमारचयत्। "तदात्मानमेव स्वयमकुरुत" इति श्रुते। (तै. २. ७.) रित्यर्थः। त्रयोदशाध्याये ४९–५३ श्लोकेष्वयमारंभपरिणामादिवादो विस्तरेण व्याख्यातः। पाठकमहाशयास्तत्रावलोकयन्तु ॥ १८६ ॥

ननु चेतनाचेतनात्मकस्यास्य जगतः कथमेक एवेश्वर उपादानकारणं भवतीत्याशंक्याह, अचेतनानामिति।

**अचेतनानां हेतुः स्याज्जाड्यांशेनेश्वरस्तथा।**
**चिदाभासांशतस्त्वेष जीवानां कारणं भवेत् ॥ १८७ ॥**

ईश्वरो मायोपाधिको जाड्यांशेन मायांशेन अचेतनानां देहेंद्रियादिजडानां हेतुरुपादानम्। एष ईश्वरश्चिदाभासांशतो जीवानां कारणं भवेत्। उपाधिप्राधान्येनाचेतनानां चित्प्राधान्येन जीवानां चोपादानं भविष्यतीत्यर्थः ॥ १८७ ॥

मायाशबलितेश्वरस्य चेतनाचेतनजगत्कारणत्वं पूर्वमुक्तम्। वार्तिककारस्तु शुद्धचैतन्यस्यैव भिन्नसहकारिकारणसमवधानेन चेतनाचेतनकारणत्वमुक्तवान्। अनयोर्विरोधस्सुस्पष्टइत्याशंक्य सुरेश्वराचार्याशयविवरणेन विरोधं परिहर्तुकामः प्रथमं सुरेश्वराचार्यमतं द्वाभ्यां दर्शयति, तम इति।

**तमःप्रधानः क्षेत्राणां चित्प्रधानश्चिदात्मनाम्।**
**परः कारणतामेति भावनाज्ञानकर्मभिः ॥ १८८ ॥**

**इति वार्तिककारेण जडचेतनहेतुता।**
**परमात्मन एवोक्ता नेश्वरस्येति चेच्छृणु ॥ १८९ ॥**

तमःप्रधानः मायोपाधिकः परः क्षेत्राणां जडवस्तूनां कारणतामेति। अचेतनसृष्टौ तमोमात्रसहकारिकारणकं चैतन्यं कारणमित्यर्थः। पर एव चित्प्रधान श्चैतन्यप्रधानो भूत्वा चिदात्मनां जीवानां भावनाज्ञानकर्मभिः भावना संस्कारः ज्ञानमुपासनादिकं कर्माणि धर्माधर्मरूपाणि तैस्तैः कारणतां जगदुत्पत्तेर्हेतुतामेति। पर एव मायाकार्यभावनाज्ञानकर्मसहकारिकारणसहकृतश्चेतनानां सृष्टौ कारणतामेतीति भावः। इत्येवं वार्तिककारेण परमात्मन एव सहकारिभेदेन जडचेतनहेतुतोक्ता नत्वीश्वरस्येति वदसि चेच्छृणु ॥ १८८-१८९ ॥

सुरेश्वराशयाविष्कारेण विरोधं वारयति, अन्योन्येति।

अन्योन्याध्यासमत्रापि जीवकूटस्थयोरिव।
ईश्वरब्रह्मणोस्सिद्धं कृत्वा ब्रूते सुरेश्वरः ॥ १९० ॥

यथा जीवकूटस्थयोरन्योन्याध्यासस्तथाप्यारोप्याधिष्ठानयोरीश्वरब्रह्मणो-रन्योन्याध्यास इति सिद्धंकृत्वा एवं सुरेश्वरो ब्रूते ॥ १९० ॥

कुत्र दृष्टाध्यासं सिद्धवत्कृत्य वार्तिककारोक्तिरित्याशंक्य तदध्यासदर्शन-स्थलं प्रामाणिकमाह, सत्यमिति।

सत्यं ज्ञानमनन्तं यद्ब्रह्म तस्मात्समुत्थिताः।
खं वाय्वग्निजलोर्व्योषध्यन्नदेहा इति श्रुतिः ॥ १९१ ॥

"सत्यं ज्ञानमनन्त" मित्यनेन यदुपक्रान्तं ब्रह्म तस्मात् खं वाय्वग्नि-जलोर्व्योषध्यन्नदेहाः आकाशपवनतेजोऽबुर्वः ओषधयोऽन्नं देहश्च समुत्थिता-स्संभूताः। "तस्माद्वा एतस्मादात्मन आकाशःसंभूतः" (तै. १.२.) इत्यादिश्रुतिरुप-क्रान्तं शुद्धचैतन्यं तदा परामृश्य तस्यैव जगत्कारणतां ब्रूते ॥ १९१ ॥

ब्रह्मणो जगद्धेतुत्वमध्यासमूलकम्।

नन्विदं श्रुत्युक्तहेतुत्वमसंगस्य शुद्धब्रह्मणो न घटते, एवंच श्रुतेरप्रामाण्य-प्रसंगः, श्रुतिश्च सर्वथा प्रमाणभूतैव, अतस्तत्प्रामाण्यलक्षणं केनाप्युपायेन श्रुतिप्रामाण्यवादिनां कर्तव्यमित्याशयेनोक्तं हेतुत्वमुपपादयति, आपातेति।

आपातदृष्टितस्तत्र ब्रह्मणो भाति हेतुता ।
हेतोश्च सत्यता तस्मादन्योन्याध्यास इष्यते ॥ १९२ ॥

आपातदृष्टितः सम्यक्पर्यालोचनाविरहितमतेर्ब्रह्मणो निष्क्रियस्य हेतुता जगत्कारणता तत्र भाति । तथैव तत्रैव श्रुतौ हेतोर्जगद्धेतुभूतस्येश्वरस्य सत्यता च तदा परामर्शाद्भाति । तस्माद्भासमानं शुद्धस्य हेतुत्वं हेतुभूतस्य चिदाभासस्य सत्यत्वं चान्योन्यासध्यासमन्तरा न घटते । अतः स इष्यत । एवं श्रुतिसिद्ध-मीश्वरशुद्धचैतन्ययोरन्योन्याध्यासं सिद्धवत्कृत्य वार्तिककारैः परस्य जगत्कारणत्वं पूर्वं प्रतिपादितमिति न तयोस्तद्विधशंकावकाश इति भावः ॥ १९२ ॥

नन्वध्यस्तयोरीश्वरब्रह्मणोरैक्यं कथं सिध्यतीत्याशंक्य भ्रान्तिमूलकं तदैक्यमित्याह, अन्योन्येति ।

अन्योन्याध्यासरूपोऽसावन्नलिप्तपटो यथा ।
घट्टितेनैकतामेति तद्भ्रान्त्यैकतां गतः ॥ १९३ ॥

यथान्नलिप्तः पटः घट्टितेनैकतामेति । स्वतश्शुभ्रः उपरि घट्टितेनान्नेना-च्छादितो भवतीत्यर्थः । तद्वदसौ परमात्माऽन्योन्याध्यासमापन्नस्सन् भ्रान्त्या ईश्वरेणैकतां गतः ॥ १९३ ॥

दृष्टान्तान्तरं स्मारयति, मेघेति ।

मेघाकाशमहाकाशौ विविच्येते न पामरैः ।
तद्वद्ब्रह्मेशयोरैक्यं पश्यन्त्यापातदर्शिनः ॥ १९४ ॥

स्पष्टोऽर्थः ॥ १९४ ॥

षड्विधलिंगैस्तात्पर्यविचारणाफलम् ।

श्रुतौ तदोपक्रान्तस्य शुद्धस्य हेतुत्वे स्पष्टं प्रतीयमानेऽसिद्धमीश्वरस्य हेतुत्वं पंचम्या बोध्यत इत्यभ्युपेत्याघटिततद्धेतुत्वघटनाय मध्येऽध्यासः श्रुति-सिद्ध इति निश्चीयते । यथाश्रुतं सिद्धस्य हेतुत्वं कुतो नाद्रियते । श्रुतिबलाद-संगस्यैव हेतुत्वं वाऽगींकार्यम् । हेतुत्वस्य ससंगमात्रवृत्तित्वानियमाभ्युपगमे

सत्यमित्याद्युपक्रान्तस्य ससंगत्वं वाऽभ्युपेयम् । हेतोस्ससंगवृत्तित्वनियम उपक्रान्तस्यासंगत्वं च केन निर्बंधेनाङ्गीक्रियत इत्याशंक्योभयमपि प्रमाणसिद्धमिति स एव निर्बंध इत्याशयेनाह, उपक्रमेति ।

उपक्रमादिभिर्लिंगैस्तात्पर्यस्य विचारणात् ।
असंगं ब्रह्म मायावी सृजत्येष महेश्वरः ॥ १९५ ॥

उपक्रमादिभिर्लिंगैः "उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णये" इत्युक्तैर्लिंगैः श्रुतेस्तात्पर्यस्य विचारणादिदं सिद्धम् । उपक्रान्तं ब्रह्मासंगं सर्वसंगरहितं निष्क्रियं निर्गुणम् । मायावी मायाशक्तिसहितः ससंग एष महेश्वरो जगत्सृजतीत्यवगम्यत इत्यर्थः । अतोऽसंगं तदा परामृश्य तस्य पंचम्या हेतुत्वबोधनमीश्वरब्रह्मणोरन्योन्याध्यासमन्तरा न घटत इत्ययमध्यासः । श्रुतिसिद्ध इति तात्पर्यादवगम्यते । उपक्रमो ग्रन्थस्यारंभः, उपसंहारस्तत्समाप्तिः, उपक्रमोपसंहारावित्येकं लिंगम् । अभ्यासः पौनःपुन्येन कथनम् , अपूर्वता प्रमाणान्तरानवगतत्वम् , फलं प्रयोजनम्, अर्थवादः, प्रतिपाद्यार्थप्रशंसनम् , उपपत्तिः तत्र श्रुत्युक्ता युक्तिः, इत्येते तात्पर्यनिर्णये षड्विधं लिंगम् ॥ १९५ ॥

ब्रह्मणोऽसंगत्वं श्रुतितात्पर्यविषयमिति तात्पर्यनिर्णायकलिंगेषूपक्रमोपसंहारादित्याद्यलिंगेन दर्शयति, सत्यमिति ।

सत्यं ज्ञानमनन्तं चेत्युपक्रम्योपसंहृतम् ।
यतो वाचो निवर्तन्त इत्यसंगत्वनिर्णयः ॥ १९६ ॥

"सत्यं ज्ञानमनन्तं ब्रह्म" त्युपक्रम्य "आनन्दं ब्रह्मणो विद्वा" नित्यानंदवल्ल्यां ब्रह्मलक्षणमुपसंहृतम् । "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" "ब्रह्मपुच्छं प्रतिष्ठा" "रसो वैसः" इत्याद्यभ्यासः । ब्रह्मज्ञाने मानान्तराभावादपूर्वता । "आप्नोति परमि"ति फलं । सोऽश्नुते सर्वान् कामानित्यर्थवादः । भीषास्माद्वातः पवते इत्युपपत्तिः । इति हेतोर्ब्रह्मणोऽसंगत्वनिर्णयः क्रियते ॥१९६॥

अस्मान्मायीसृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः (श्वे. ४.९.) इतीश्वरकर्तृकसृष्टिप्रतिपादिकां श्रुतिमर्थतः पठति, मायीति ।

मायी सृजति विश्वं सन्निरुद्धस्तत्र मायया ।
अन्य इत्यपरा ब्रूते श्रुतिस्तेनेश्वरः सृजेत् । १९७ ॥

मायी मायासचिव ईश्वरो विश्वं सृजति । अन्यो जीवस्तत्र जगति मायया सन्निरुद्धस्सम्यक्प्रतिबद्धः इत्यपरा श्रुतिर्ब्रूते । तेन हेतुना ईश्वरो जगत् सृजेत् ॥ १९७ ॥

जगत्सृष्टिवर्णना ।

एवमानन्दमयस्येश्वरत्वं तस्यैव जगत्कारणत्वं च निरूप्य तत्कर्तृकसृष्टिप्रकारं विशदयति, आनन्दमय इति ।

आनन्दमय ईशोऽयं बहुस्यामित्यवैक्षत ।
हिरण्यगर्भरूपोऽभूत्सुप्तिः स्वप्नो यथा भवेत् ॥ १९८ ॥

आनन्दमयस्तत्कोशाधिष्ठाताऽयमीशो बहुस्यां कारणान्तरमन्तरेणाहमेव बहुधा भवेयमित्यवैक्षत नामरूपव्याकरणरूपेणेति भावः । "स ईक्षत बहुस्यां प्रजायेयेति" श्रुतेः (छां. ६. २. ३.) तथेक्षणानन्तरमाकाशाद्यपञ्चीकृतभूतपंचकमभवत् । ततस्तेषां गुणकल्पितं समष्टिव्यष्टिरूपसूक्ष्मशरीरमभवत् । तत्र समष्टिरूपेऽहमित्यभिमानेनेशो हिरण्यगर्भरूपोऽभूत् । यथा सुप्तिः स्वप्नो भवेत् तथैव । यथानुद्बुद्धसंस्काराणां किंचिदुद्बोधवशात्तात्कालिकसृष्टिरनुभूयते सा सृष्टिः सत्यत्वेनापि सुप्तपुरुषमात्रगोचरा शून्या भवति । तत्सृष्टेः स्वप्नावस्थामात्रकालिकत्वात् । एवं च सुषुप्तेरेवावस्थान्तरं स्वप्न इति सिध्यति । तथेश्वरोऽपीच्छामात्रगोचरकृतप्रपंचकस्तादृशप्रपंचं स्फुटं व्यावहारिकसत्यत्वेनाप्यवभासयंस्तिष्ठति । तदा तस्यावस्थान्तरं हिरण्यगर्भ इति तात्पर्यम् ॥ १९८ ॥

तर्हि सर्वं जगद्युगपदुद्भूतमाहोस्वित् क्रमशो वेत्याकांक्षायामाह, क्रमेणेति ।

क्रमेण युगपद्वैषा सृष्टिर्ज्ञेया यथाश्रुति ।
द्विविधश्रुतिसद्भावाद्द्विविधस्वप्नदर्शनात् ॥ १९९ ॥

एषा सृष्टिर्यथाश्रुति श्रुतौ यथा श्रूयते तथा क्रमेण वा युगपद्वा ज्ञेया "तस्माद्वा एतस्मादात्मन आकाशः संभूतः, (तै. २. १.) इत्यत्र क्रमसृष्टिः श्रूयते। स इमांल्लोकानसृजत अंभोमरीचिर्मरीमापोऽदोऽम्भ", इत्यत्र (ऐत. १. २.) युगपत्सृष्टिः श्रूयते। केतराऽस्माभिः प्रतिगृहीतव्येत्याकांक्षायां, द्विविधश्रुतिसद्भावादुभयविधाप्यभ्युपेया, क्रमिकत्वयौगपद्ययोरसंभवं दृष्टान्तमुखेनाह, द्विविधस्वप्नदर्शनात् इति। यथा लोके स्वप्ने दृश्यमानं पदार्थजातं कदाचित्क्रमेणोत्पद्यमानं कदाचिद्युगपदुत्पद्यमानं सदुभयथाप्यनुभूयते। तद्वदिहापि। अन्यत्रापि सृष्टिरभिहिता छांदोग्ये "तत्तेजोऽसृजतेत्यादिः" (छां. ६. २. ३.), मुंडके "एतस्माज्जायते प्राणः" (मुं. २. १. ३.) इत्यादिः। एतावन्मात्रेण क्रमसृष्टिबोधकतैत्तिरीयश्रुतेरासां श्रुतीनां पारस्परिको विरोध इति नात्र शंकितुं शक्यते। उपनिषदां सर्वासामपि ब्रह्मबोधायैव प्रवृत्तत्वात्तात्पर्यविषये जगत्स्रष्टरि ब्रह्मणि विरोधाभावात्। सृज्यविरोधपरिहारस्य यथाश्रुति स्वाप्निकसृष्टिसादृश्येन अभ्युपगंतुं शक्यत्वाच्च। वस्तुतस्तु श्रुतीनां ब्रह्मण्येव तात्पर्यम्। फलवत्सन्निधौ अफलं तदंगमिति न्यायेन तासां सृष्टिवर्णने प्रयोजनाभावात्। न तु सृष्टिबोधने इति विरोध एव नास्ति। भाष्यकारास्तु तैत्तिरीये सृष्टिक्रमश्रवणेनान्यत्र तदश्रुतिः सृष्टिमात्रबोधनविवक्षयेति सर्वत्र तैत्तिरीयोक्तसृष्टिक्रम एवाभ्युपगंतव्य इति सर्वासां श्रुतीनामैककंठ्यं छांदोग्ये (६. २. ३.) भाष्ये वर्णयन्ति। अत्र "तेजोऽतस्तदा ह्याहे"ति (२. ३. १०.) सूत्रस्य भाष्यमप्यवलोक्यताम्॥ १९९॥

हिरण्यगर्भस्वरूपं निरूपयति, सूत्रेति।

**सूत्रात्मा सूक्ष्मदेहाख्यः सर्वजीवघनात्मकः।**
**सर्वाहंमानधारित्वात् क्रियाज्ञानादिशक्तिमान्॥ २००॥**

सूत्रात्मा यथा पटे सूत्रमनुस्यूतं तथा जगत्यनुस्यूतोऽयं सूत्रात्मा हिरण्यगर्भः सूक्ष्मदेहाख्यो लिंगशरीराभिधः क्रियाज्ञानादिशक्तिमान् इच्छाज्ञानक्रियाशक्तियुक्तः सर्वाहंमानधारित्वात्सर्वेषां व्यष्टिशरीराणामहंमानस्याहमित्यभिमानस्य धारणात्सर्वजीवघनात्मकः सर्वलिंगशरीरोपाधिकानां समष्टिस्वरूपो भवति॥ २००॥

सूक्ष्मदेहावस्थायां जगद्भानमस्फुटमिति दृष्टान्तमुखेनाह, प्रत्यूष इति ।

प्रत्यूषे वा प्रदोषे वा मग्नो मंदे तमस्ययम् ।
लोको भाति यथा तद्वदस्पष्टं जगदीक्ष्यते ॥ २०१ ॥

प्रत्यूषे प्रति उषः ओषति नाशयत्यन्धकारमित्युषः, सूर्योदयात्पूर्वसंध्यायां, प्रदोषे, प्रक्रांता दोषा रात्रिरस्मिन् काले, सूर्यास्तमयानन्तरकाले, मंदेऽल्पे तमसि । स्पष्टमन्यत् ॥ २०१ ॥

अत्र चित्रपटदृष्टान्तमाह, सर्वत इति ।

सर्वतो लाञ्छितो मष्या यथा स्याद्घट्टितः पटः ।
सूक्ष्माकारैस्तथेशस्य वपुस्सर्वत्र लाञ्छितः ॥ २०२ ॥

सूक्ष्माकारैरपञ्चीकृतपंचमहाभूतैः । स्पष्टमन्यत् ॥ २०२ ॥

जगदंकुरस्यान्यं दृष्टान्तमाह, सस्यमिति ।

सस्यं वा शाकजातं वा सर्वतोऽङ्कुरितं यथा ।
कोमलं तद्वदेवैष पेलवो जगदङ्कुरः ॥ २०३ ॥

अङ्कुरितं बीजादभिनवोत्पन्नम् । कोमलं सूक्ष्मतरम् । पेलवः सूक्ष्मः । स्पष्टमन्यत् ॥ २०३ ॥

एवं हिरण्यगर्भस्वरूपं तत्कार्यभूतं जगत्स्वरूपं च प्रपञ्च्य विराट्स्वरूपं दृष्टान्तत्रयेण विशदयति, आतपेति ।

आतपाभातलोको वा पटो वा वर्णपूरितः ।
सस्यं वा फलितं यद्वत्तथा स्पष्टवपुर्विराट् ॥ २०४ ॥

आतपाभातलोकः सूर्यकान्त्या स्फुटप्रकाशितो लोकः, वर्णपूरितो नीलपीतादिभी रञ्जितः पटः, अथवा फलितं सस्यं वा, यद्वत् स्पष्टवपुर्भवति तथा पञ्चीकृतभूतकार्योपाधिको विराट् स्पष्टवपुः संपूर्णतो व्याकृतवपुः विश्वरूपेणेति भावः ॥ २०४ ॥

विराट्पुरुषसद्भावे प्रमाणमाह, विश्वरूपेति ।

विश्वरूपाध्याय एष उक्तिः सूक्तेऽपि पौरुषे ।
धात्रादिस्तंबपर्यन्तानेतस्यावयवान् विदुः ॥ २०५ ॥

गीताशास्त्रे विश्वरूपाध्याये एकादशे, "पश्यादित्यान् वसू"नित्यादिना, पौरुषे सूक्ते, "सहस्रशीर्षा पुरुषः", इत्यादिना चैष विराट्पुरुष उक्तो वर्णितः। धात्रादिस्तंबपर्यन्तानेतस्य विराजोऽवयवान् विदुः । पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यमित्युक्तेरित्यर्थः । विराट्पुरुष एवेमां सर्वां भूमिमावृत्यात्यतिष्ठद्दशांगुलमिति भावः ॥ २०५ ॥

सर्वस्य वस्तुजातस्य पूज्यत्वविचारः ।

धात्रादिस्तंबपर्यन्तस्य जगतो विराट्पुरुषस्यावयवरूपत्वात्सर्ववस्तुजातं पूज्यतां गतमित्याह, ईशेति ।

ईशसूत्रविराड्वेधोविष्णुरुद्रेन्द्रवह्नयः ।
विघ्नभैरवभैरालमरिकायक्षराक्षसाः ॥ २०६ ॥

विप्रक्षत्रियविट्छूद्रा गवाश्वमृगपक्षिणः ।
अश्वत्थवटचूताद्या यवव्रीहितृणादयः ॥ २०७ ॥

जलपाषाणमृत्काष्ठवास्याकुद्दालकादयः ।
ईश्वरास्सर्व एवैते पूजिताः फलदायिनः ॥ २०८ ॥

ईशोऽन्तर्यामी, सूत्रो हिरण्यगर्भो, विराट् वेधाः कार्यब्रह्म विप्रा विद्वद्ब्राह्मणाः, "जन्मना ब्राह्मणो ज्ञेयस्संस्कारैर्द्विज उच्यते । विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते" । वास्या तक्षोपकरणविशेषाः, कुद्दालकः खननोपकरणविशेषः, एते सर्व ईश्वरावयवालक्षणया तत्स्वरूपा एव । अतो यदि पूजिताः फलदायिनः फलप्रदाःस्युः ॥ २०६-२०८ ॥

फलस्य न्यूनाधिक्ययोः कारणमाह, यथेति ।

**यथा यथोपासते तं फलमीयुस्तथा तथा ।**
**फलोत्कर्षापकर्षौ तु पूज्यपूजानुसारतः ॥ २०९ ॥**

तमीश्वरं यथा यथा यद्यद्भावेनोपासते जनस्तथा तथा फलमीयुः । एतान्यापेक्षिकफलानि नत्वात्यन्तिकम् । फलोत्कर्षापकर्षौतु पूज्यपूजानुसारतो भवतः । अर्चनविधानन्यूनाधिक्यमेव फलतारतम्ये कारणमित्यर्थः ॥ २०९ ॥

मुक्तिस्तु ज्ञानादेव ।

तर्हि कथं मोक्षप्राप्तिरित्यत आह, मुक्तिरिति ।

**मुक्तिस्तु ब्रह्मतत्त्वस्य ज्ञानादेव न चान्यथा ।**
**स्वप्रबोधं विना नैव स्वस्वप्नो हीयते यथा ॥ २१० ॥**

यथा स्वप्रबोधं विना स्वजागरणमन्तरेण स्वस्वप्नः स्वस्वप्नकल्पितप्रपञ्च इत्यर्थः, न हीयते न निवर्तते, तथा ब्रह्मतत्त्वस्य ब्रह्मणो यथार्थस्वरूपस्य ज्ञानादेव मुक्तिस्सिध्यति । अन्यथा कर्मणा उपासनयोभयधा वा न सिध्यति "ज्ञानादेव तु-कैवल्यं" "नान्यः पंथा विद्यते अयनाये (श्वेता. ३. ८.) त्यादिश्रुतिभ्यः । अद्वितीयब्रह्मेतरस्य द्वैतस्य स्वप्नतुल्यत्वात्तत्प्रबोधेनैव मुक्तिरिति भावः ॥ २१० ॥

ब्रह्मज्ञानाविरुद्धस्य द्वैतस्य स्वप्नतुल्यत्वमनुपपन्नमित्याशंक्य तत्तौल्यं स्पष्टयति, अद्वितीयेति ।

**अद्वितीयब्रह्मतत्त्वे स्वप्नोऽयमखिलं जगत् ।**
**ईशजीवादिरूपेण चेतनाचेतनात्मकम् ॥ २११ ॥**

ईशजीवादिरूपेण भासमानं चेतनाचेतनात्मकमखिलं जगत् अद्वितीय-ब्रह्मतत्त्वे निर्धुताखिलद्वैतब्रह्मस्वरूपे स्वप्न एव भवति । अनेन जीवेश्वरयोरपि जगदन्तःपातित्वेन स्वप्नवदयथार्थत्वमुक्तं भवति ॥ २११ ॥

जीवेश्वरभेदो मायाकल्पितः ।

जीवेश्वरयोरुक्तं जगदन्तःपातित्वमेव विवृणोति, आनन्दमयेति ।

आनन्दमयविज्ञानमयावीश्वरजीवकौ ।
मायया कल्पितावेतौ ताभ्यां सर्वं प्रकल्पितम् ॥ २१२ ॥

आनन्दमयविज्ञानमयौ तन्नामककोशोपाधिकावेतावीश्वरजीवकौ । स्पष्टमन्यत् ॥ २१२ ॥

उक्तां जीवेश्वरसृष्टिं विभजति, ईक्षणेति ।

ईक्षणादिप्रवेशान्ता सृष्टिरीशेन कल्पिता ।
जाग्रदादिविमोक्षान्तस्संसारो जीवकल्पितः ॥ २१३ ॥

ईक्षणादिप्रवेशान्ता ईक्षणा सृष्टिसंकल्पः तदादिः प्रवेशान्ता ईक्षणानन्तरमंभोमरीचिवुपृथिव्यादीन् पुरुषं तदंगेभ्यो लोकपालांस्तेभ्योऽन्नं च सृष्ट्वा "कथं न्विदं मदृते स्यादिती"क्षित्वा एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत" इति श्रुत्युक्तः, प्रवेशस्तदन्ता च सृष्टिरीशेन कल्पिता । "स इमान्लोकानसृजत" (ऐत. १.१.२.) इत्यारभ्य "एतया द्वारा प्रापद्यत" (ऐत. १. ३. ११.) इत्यन्तायामैतरेयश्रुतावीश्वरसृष्टिः श्रूयते । जाग्रदादिविमोक्षान्तस्संसारो भोगेच्छया जीवकल्पितः । अत्र "तस्य त्रय आवसथा" इत्यारभ्य "स एतमेव पुरुषं ब्रह्म ततमपश्यदि"त्यन्ता ऐतेरेयश्रुतिश्छांदोग्यश्रुतिश्चानुसंधेया (ऐत. १–३–१२–१३) (छां. ६–२–३–६) ॥ २१३ ॥

अद्वितीयब्रह्मतत्त्वानभिज्ञतैव विभिन्नवादानां कारणमित्याह, अद्वितीयमिति ।

अद्वितीयं ब्रह्मतत्त्वमसंगं तन्न जायते ।
जीवेशयोर्मायिकयोर्वृथैव कलहं ययुः ॥ २१४ ॥

ब्रह्मतत्त्वं निर्गुणब्रह्मस्वरूपमद्वितीयं सजातीयादिभेदरहितमसंगं सर्वसंगरहितं च । तद्रहस्यं ये द्वैतवादिनो न जानते, ते मायिकयोर्मायाकल्पितयोर्जीवेश्वरयोर्विषये वृथा कलहं ययुः । कलहवैयर्थ्यं स्पष्टयितुमत्र मायिकयोरिति साभिप्रायं विशेषणम् ॥ २१४ ॥

जीवेश्वरयोर्मायिकत्वाभिज्ञानेनैवात्मनः कृतकृत्यतामाह, ज्ञात्वेति ।

**ज्ञात्वा सदा तत्त्वनिष्ठां ननु मोदामहे वयम् ।**
**अनुशोचाम एवान्याञ्च भ्रान्तैर्विवदामहे ॥ २१५ ॥**

मिथो विवदन्तां नामाद्वैततत्त्वानभिज्ञाः, वयन्तु ब्रह्मतत्त्वं ज्ञात्वा सदा तत्त्वनिष्ठा अनवरतब्रह्मनिष्ठा मोदामहे ननु । अविच्छिन्नानन्दरसं निश्चयमनुभवामः । नन्वित्यामन्त्रणे । प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु । अन्यान्यथार्थज्ञानविहीनाननुशोचाम । दृष्ट्वा तेषामज्ञानमनुकंपामहे । तैर्भ्रान्तैर्न विवदामहे। अनेन तन्मतानामतिफल्गुत्वं सूचितम् । "स एवाधस्तात्" (छां. ७. २५. १.) "अहमेवाधस्तात्" (छां ७. २५. १.) "आत्मैवाधस्तात्" (छा. ७. २५. २.) "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद" (बृ. २. ४. ६.) "ब्रह्मैवेदं सर्वं" "आत्मैवेदं सर्वं" (छां. ७. २५. २.) "नेह नानास्ति किंचन" (बृ. ४. ४. १९.) "यस्मात्परं नापरमस्ति किंचित्" (श्वे. ३. ९.) ब्रह्मैवेदं विश्वमिदं वरिष्ठम् (मुं. २. २. ११.) इत्यादिश्रुतिशतानि ब्रह्मातिरिक्तं वस्त्वन्तरं वारयन्तीति भावः ॥ २१५ ॥

जीवेश्वरयथार्थस्वरूपानभिज्ञान् भ्रान्तान् पृथग् दर्शयति, तृणेति ।

**तृणार्चकादियोगान्ता ईश्वरे भ्रान्तिमाश्रिताः ।**
**लोकायतादिसांख्यान्ता जीवे विभ्रान्तिमाश्रिताः ॥ २१६ ॥**

स्पष्टा अक्षरयोजना । एतत्सर्वमस्मिन् प्रकरणे ६०–१२१ श्लोकेषु सम्यग्विचारितम् ॥ २१६ ॥

ब्रह्मज्ञानशून्यानां न मोक्षो नाप्यैहिकं सुखमित्याह, अद्वितीयेति ।

**अद्वितीयब्रह्मतत्त्वं न जानन्ति यदा तदा ।**
**भ्रान्ता एवाखिलास्तेषां क्व मुक्तिः क्वेह वा सुखम् ॥ २१७ ॥**

स्पष्टोऽर्थः । सर्वस्य द्वैतस्य कामाद्युपहितत्वेन चित्तविश्रान्तेरभावादिह सुखाभाव इति भावः ॥ २१७ ॥

ननु तेषां मोक्षाभावेऽपि न्यूनाधिकफलप्राप्तिरस्त्येवेत्याशंक्य तावता को लाभ इत्याह, उत्तमेति ।

उत्तमाधमभावश्चेत्तेषां स्यादस्तु तेन किम् ।
स्वप्नस्थराज्यभिक्षाभ्यां न बुद्धः स्पृश्यते खलु ॥ २१८ ॥

स्पष्टः पूर्वार्धः । तेषामभ्युदयरूपफलस्य सत्त्वेऽपि विनाशितया तस्यान्ततो दुःखत्वेन तत्तारतम्यचिन्ता आत्यन्तिकफलाभिलाषिणां निष्फलैवेति भावः । स्पष्टमन्यत् । न स्पृश्यते न विक्रियामाप्नोति । स्वप्नेऽनुभूतराज्यभिक्षे इव द्वैतोपासनाफलमनित्यमित्यर्थः ॥ २१८ ॥

तस्मान्मुमुक्षुभिः कर्तव्यमाह, तस्मादिति ।

तस्मान्मुमुक्षुभिर्नैव मतिर्जीवेशवादयोः ।
कार्या किंतु ब्रह्मतत्त्वं विचार्य बुध्यतां च तत् ॥२१९॥

स्पष्टोऽर्थः । जीवेशवादयोर्भ्रान्तिपरिगृहीतत्वादिति भावः ॥ २१९ ॥

ननु ब्रह्मतत्त्वबोधस्य विचारोत्तरकालिकतया विचारस्य जीवेश्वरादिवादपूर्वकतया च तत्र मतिर्न कार्येत्ययुक्तमित्याशंक्याह, पूर्वपक्षेति ।

पूर्वपक्षतया तौ चेत्तत्त्वनिश्चयहेतुताम् ।
प्राप्नुतोऽस्तु निमज्जस्व तयोर्नैतावताऽवशः ॥ २२० ॥

स्पष्टा पदयोजना । यस्य कस्यापि वस्तुनस्तत्त्वनिश्चये तत्प्रतियोगिज्ञानस्यावश्यकतास्तु नाम तत्प्रसंगः । तत्त्वनिश्चयोपयोगिविचाराङ्गमात्रतयैव तद्ज्ञानं संपादनीयं तस्मिन् मग्नो भूत्वा ब्रह्मविचारविमुखो माभूदिति भावः ॥२२० ॥

ननु न्मतसिद्धयोर्जीवेश्वरयोश्शोधनेऽसंगचिद्रूपत्वमेवोपलभ्यते । साङ्ख्यैर्जीवस्यासंगचिद्रूपत्वमुच्यते । योगिभिश्चेश्वरस्याप्येवं चिन्तितम् । एवं च तन्मतयोर्भवत्सिद्धान्तान्तर्भावात्कुतः पूर्वपक्षत्वमुच्यत इत्याशंक्यांशतः पूर्वपक्षत्वं निरूपयितुमाह, असंगचिदिति ।

असंगचिद्विभुर्जीवस्सांख्योक्तस्तादृगीश्वरः ।
योगोक्तस्तत्त्वमोरर्थौ शुद्धौ ताविति चेच्छृणु ॥ २२१ ॥

जीवोऽसंगचित् संगरहितश्चिच्चैतन्यस्वरूपो विभुस्सर्वव्यापीति साङ्ख्योक्त ईश्वरः तादृगसंगचिद्विभुरिति योगोक्तः । तत्र नास्माकं विप्रतिपत्तिः। विप्रतिपत्तिस्थलमाह, तत्त्वमोरिति । शुद्धावसंगचिद्रूपौ तावीश्वरजीवौ तत्त्वमोस्तच्छब्दयुष्मच्छब्दयोरर्थौ तच्छब्दयुष्मच्छब्दवाच्याविर्यत्रांश एव विप्रतिपत्तिः । भिन्नशब्दप्रतिपाद्ययोर्भेदस्य नियतत्वेन तादृशयोर्भेद इत्यर्थस्यापि प्रतीतेरस्मन्मतसिद्धान्तहानिरित्यपि तदुक्त्योट्टंकितं भवति । वस्तुतस्तादृशस्य शब्दाभिधेयत्वमेव न सिध्यति । शब्दानां गुणवृत्तित्वात् । तेषां शब्दाभिधेयत्वं च किंचिदुपाधिं कल्पितमाश्रित्यैव वक्तव्यम् । उपदेशस्तु शब्दव्यवहारमन्तरा न सिध्यति। अतश्शुद्धयोस्तयोश्शाब्दव्यवहारासंभवात्सोपाधिकयोरेव तदर्थत्वं वाच्यम् । तादृशयोर्भेदभानेऽपि शुद्धेन अभेद इत्याशयेन तदीयं मतं निरस्यति शृण्वित्युपक्रमेण ॥ २२१ ॥

न तत्त्वमोरुभावर्थावस्मत्सिद्धान्ततां गतौ ।
अद्वैतबोधनायैव सा कक्षा काचिदिष्यते ॥ २२२ ॥

तत्त्वमोरुभावर्थौ सांख्ययोगोक्तावसंगचिद्रूपजीवेशौ अस्मत्सिद्धान्ततां अस्माकमद्वैतिनां सिद्धान्ततां न गतौ । न वयं तत्त्वमोरसंगचिद्रूपं वाच्यमर्थमंगीकुर्म इति भावः । ननु कूटस्थो ब्रह्म इति भिन्नतया युष्माभिरपि निरूपितावेवेत्याशंकायामाह, अद्वैतेति । अद्वैतबोधनायैव यौ कूटस्थब्रह्मेति लोके भेदेन व्यवह्रियेते तन्निरासपूर्वकं तयोरभिन्नताप्रतिपादनाय सा काचित् कक्षा तयोर्भेदकोटिरिष्यते । तत्र कूटस्थब्रह्मणोरभेदनिदिदर्शयिषयैव लोकव्यवहारसिद्धपार्थक्यानभ्युपगमे शाब्दव्यवहारस्यैव विलयापत्त्यैव शाब्दव्यवहारमन्तरोपदेशस्यासंभवेन तदनुरोधेन कल्पितं व्यावहारिकं सोपाधिकयोर्भेदमनुसृत्य तयोस्तत्त्वंपदवाच्यत्वमुच्यते । न तु वस्तुतस्तस्य पदाभिधेयत्वमिति भावः ॥ २२२ ॥

शुद्धब्रह्मणश्शब्दाभिधेयत्वे तत्त्वंपदार्थपरिशीलनं निष्फलमेवेत्याशंकां परिहरति, अनादीति ।

अनादिमायया भ्रान्ता जीवेशौ सुविलक्षणौ ।
मन्यन्ते तद्व्युदासाय केवलं शोधनं तयोः ॥ २२३ ॥

अनादिमायया भ्रान्ताः सांख्यादयः पामराश्चान्ये जीवेशौ सुविलक्षणौ सम्यग्भिन्नस्वभावाविति मन्यन्ते । तद्व्युदासाय तदाशयनिरासाय केवलं तयोस्तत्त्वंशब्दयोः शोधनं विमर्शपूर्वकार्थविचारः क्रियते । तयोरर्थे विचारितेऽसोतिपदबोध्या भेदोपपत्तये तत्त्वंपदोपस्थितयोरर्थयोर्भेदप्रतीतिप्रयोजका ये धर्मास्तेषां "नेति नेती"ति वाक्यगतनशब्देन निरसनस्यावश्यकतया तन्निरसने चासंगचिद्रूपमेकमेवावशिष्यत इत्यसिपदबोध्यमैक्यं सूपपन्नं भवतीत्याशयेन तदर्थविचारोऽस्माभिराद्रियत इति तात्पर्यम् ॥ २२३ ॥

प्रकरणारंभोक्तघटाकाशदृष्टान्त (६–१९) एतदर्थप्रकाशनयोजक एवेति तस्यौचित्यं स्मारयति, अत इति ।

अत एवात्र दृष्टान्तो योग्यः प्राक् सम्यगीरितः ।
घटाकाशमहाकाशजलाकाशाभ्रखात्मकः ॥ २२४ ॥

सुलभा पदयोजना । प्राक् प्रकरणादौ । दृष्टान्ते उपाधिभेदेन भेदप्रतीतावपि तद्विनिर्मोके यथाकाशस्यैक्यं सिध्यति तथेहापीति भावः ॥ २२४ ॥

पदार्थशोधनविवक्षया दृष्टान्तं विवृणोति, जलेति ।

जलाभ्रोपाध्यधीने ते जलाकाशाभ्रखे तयोः ।
आधारौ तु घटाकाशमहाकाशौ सुनिर्मलौ ॥ २२५ ॥

ते जलाकाशाभ्रखे जलाभ्रोपाध्यधीने अतस्साश्रये । तयोर्जलाभ्राकाशयोराधारावाश्रयौ घटाकाशमहाकाशौ सुनिर्मलावुपाधिनिरपेक्षौ ॥ २२५ ॥

दृष्टान्तं दार्ष्टान्तिके समन्वयति, एवमिति ।

एवमानन्दविज्ञानमयौ मायाधियोर्वशौ ।
तदधिष्ठानकूटस्थब्रह्मणी तु सुनिर्मले ॥ २२६ ॥

एवमानन्दविज्ञानमयावीश्वरजीवौ तावुभौ मायाधियोर्वशौ तदुपाधिकौ । तदधिष्ठानकूटस्थब्रह्मणी तयोर्जीवेश्वरयोरधिष्ठाने कूटस्थब्रह्मणी जीवस्य कूटस्थ, ईश्वरस्य ब्रह्मचाधिष्ठाननिश्चयंश । सुनिर्मले निरधिष्ठाने बिंबभूतः कूटस्थो बुद्धौ प्रतिबिंबितस्सन् जीव इत्युच्यते । एवं बिंबभूतं ब्रह्म मायायां प्रतिबिंबितं सदीश्वर इत्युच्यते ॥ २२६ ॥

एवं परिशोधनोपायतया साङ्ख्ययोगमताभ्युपगमवदन्यमताभ्युपगमोऽप्यंगीकार्यः न तेषु विशेषतो विद्वेषः कार्य इत्याह, एतदिति ।

एतत्कक्षोपयोगेन साङ्ख्ययोगौ मतौ यदि ।
देहोऽन्नमयकक्षत्वादात्मत्वेनाभ्युपेयताम् ॥ २२७ ॥

पूर्वार्धः सुगमः । तर्ह्यन्नमयकक्षत्वाद्देहः स्थूलदेह आत्मत्वेनात्मेत्यभ्युपेयताम् । लोकायतिकाद्यैर्यत्प्रतिपादितं मतं तदपि नात्माऽन्नमयकोश इति प्रतिपादनोपयोगित्वात्कक्षान्तरतयाऽङ्गीक्रियताम् । तथा च तेषु द्वेषोऽनुचित एवेति भावः ॥ २२७ ॥

साङ्ख्ययोगयोर्वेदान्तविरोधांशविचारः ।

साङ्ख्ययोगयोरंशतस्सम्मतिमाह, आत्मेति ।

आत्मभेदो जगत्सत्यमीशोऽन्य इति चेत्त्रयम् ।
त्यज्यते तैस्तदा साङ्ख्ययोगवेदान्तसम्मतिः ॥ २२८ ॥

आत्मभेद आत्मनानात्वं जगत्सत्यं ईशोऽन्यो जगज्जीवाभ्यामित्यंशत्रयं तैस्साङ्ख्ययोगैर्यदि त्यज्यते तदा साङ्ख्ययोगवेदान्तसम्मतिस्साङ्ख्ययोगवेदान्तानां सामरस्यं भवति ॥ २२८ ॥

आत्मनानात्वं जगत्सत्यत्वं जगज्जीवेश्वरभेदश्चेति त्रीणि साङ्ख्ययोगयोरद्वैतस्य च सिद्धान्तभेदस्थानानि । अत्र साङ्ख्ययोगयोरपसिद्धान्तप्रदर्शनाय तत्प्रयुक्ता युक्तीरेव स्वपक्षदार्ढ्याय सप्तभिर्विमृश्य निराकुर्वन् तत्रादौ जीवस्यासंगत्वमात्रेण कृतार्थत्वमनुपपन्नमिति प्रतिबंदिमुखेनाह, जीव इति ।

जीवोऽसंगत्वमात्रेण कृतार्थ इति चेत्तदा ।
स्रक्चंदनादिनित्यत्वमात्रेणापि कृतार्थता ॥ २२९ ॥

कृतार्थः आत्यन्तिकसुखवानित्यर्थः । सुगमा पदयोजना । स्रक्चंदनादिनित्यत्ववत्तन्मते जीवासंगत्वस्य दुर्निरूपत्वादिति भावः ॥ २२९ ॥

तदेतदाह, यथेति ।

यथा स्रगादिनित्यत्वं दुःसंपादं तथाऽत्मनः ।
असंगत्वं न संभाव्यं जीवतोर्जगदीशयोः ॥ २३० ॥

जगदीशयोर्जीवतोस्सतोरात्मनोऽसंगत्वं न संभाव्यम् संगिपदार्थान्तरस्य सत्त्वात् । स्पष्टमन्यत् । एवं च जगदीश्वरयोः कल्पितत्वनिश्चयमन्तरा जीवस्यासंगत्वनिश्चयो दुर्निरूप एव । अतस्तवासंगत्वज्ञानं भ्रम एवेति तात्पर्यम् ॥ २३० ॥

जगतस्सत्यत्वे ईश्वरस्य सत्त्वेऽपि स्वस्यासंगत्वं जीवन्मुक्तस्येव कुतो न स्यादित्याशंक्याह, अवश्यमिति ।

अवश्यं प्रकृतिस्संगं पुरे वापादयेत्तदा ।
नियच्छत्येतमीशोऽपि कोऽस्य मोक्षस्तथा सति ॥ २३१ ॥

जगदीश्वरयोस्सत्यत्वे प्रकृतिर्जगन्निदानभूता पुरेव तस्यासंगत्वनिश्चयात्पूर्वं यदा तदनिच्छया संगमापादयेत् तदा तद्वदसंगत्वनिश्चयोत्तरमपि संगमापादयेत् । ईश्वरसद्भाववादिनां तस्य नियामकतया यथा प्रकृतिस्सज्जति तथा ईशोऽपि प्रकृतिं नियच्छति । तथा सति तदानीमस्य जायमानस्यासंगत्वनिश्चयस्य भ्रमत्वात्तस्य मोक्षः कः ? नास्त्येव ॥ २३१ ॥

अविवेककृतस्संगो नियमश्चेति चेत्तदा ।
बलादापतितो मायावादस्साङ्ख्यस्य दुर्मतेः ॥ २३२ ॥

जीवस्य प्रकृतिसंपादितस्संगो देहेंद्रियाद्यभिमानः ईश्वरकृतप्रकृतिनियमश्चाविवेककृतोऽविवेकस्य कार्यमिति चेत्तो विवेकेन नश्यतीति यद्युच्यते तदा दुर्मते-

स्सम्यगनालोचितमतेस्साङ्ख्यस्य मायावादो बलादनिच्छतोऽप्यापतितः। को नामाविवेकः? विवेकस्यात्यन्ताभावो, यद्वा विवेकाद्भिन्नः? द्वितीयेऽविरोधी विरोधी वा? नाद्यः अभावस्य संगनियमनादिभावकार्योत्पादनाशक्तिकत्वात्। न द्वितीये प्रथमः। विवेकादन्यस्य घटादेस्तदुत्पादनासंभवात्। तर्हि द्वितीयस्स्यात्। अविवेको नाम विवेकविरोधीति वक्तव्यम्। स एवाद्वैतिनां मते मायाकार्यमज्ञानमित्युच्यते। तच्च ज्ञानेन नश्यति। एवं साङ्ख्यानां वादो मायावाद एवावश्यं भवतीति भावः ॥ २३२ ॥

आत्मनः परमार्थतो बन्धाभावविचारः

एवं साङ्ख्याभिमतं जगत्सत्यत्वमीशान्यत्वं च निराकृत्यात्मभेदमाशंक्य निराकरोति, बंधेति।

**बन्धमोक्षव्यवस्थार्थमात्मनानात्वमिष्यताम्।**
**इति चेन्न यतो माया व्यवस्थापयितुं क्षमा ॥ २३३ ॥**

बन्धमोक्षव्यवस्थार्थं बंधस्य मोक्षस्य च व्यवस्थासिद्धये आत्मनानात्वं जीवानामनेकत्वमिष्यताम्। जीवस्यैकत्वे एकस्य बंधोऽन्यस्य मोक्ष इति नो घटते। अतस्तस्यानेकत्वमवश्यमभ्युपगन्तव्यमितिचेन्न। त वस्थापयितुमद्वैतिनां यतो मायैव क्षमा समर्था भवति ॥ २३३ ॥

जीवस्य बंधमोक्षयोर्व्यवस्थाया अवसर एव न स्यात् तयोर्मायावृतत्वेन सत्यत्वाभावादित्याह, दुर्घटमिति।

**दुर्घटं घटयामीति विरुद्धं किं न पश्यसि।**
**वास्तवौ बंधमोक्षौ तु श्रुतिर्न सहतेतराम् ॥ २३४ ॥**

पूर्वार्धः स्पष्टः। किं न पश्यसीति काकुः। मायिकेषु विरुद्धघटनां पश्यस्येवेति प्रसिद्धिर्दर्शिता। एवं च लोके मायिकपदार्थानामिव बंधमोक्षयोरप्यवास्तवत्वं प्रदर्शितम्। एतच्छ्रुतिसिद्धमित्याह, वास्तवाविति। आत्मनो वास्तवौ बंधमोक्षौ श्रुतिर्न सहतेतरामीषदपि नाङ्गीकरोति। स्वभावतो बन्धमोक्षविरहिते आत्मनि तौ विरुद्धधर्मौ मायाकल्पितावित्यर्थः ॥ २३४ ॥

बंधमोक्षयोरवास्तवत्वबोधिकां ब्रह्मबिंदूपनिषच्छ्रुत्यर्थप्रतिपादिकां गौडपादाचार्यकारिकां (मां. गौ. का. २–३२) पठति, नेति ।

**न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।**
**न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ २३५ ॥**

निरोधो नाशो न । नोत्पत्तिः । बद्धो देहेंद्रियधर्मनिबद्धो न । साधकः श्रवणाद्यनुष्ठाता न । मुमुक्षुस्साधनचतुष्टयसंपन्नो न । मुक्तोऽपगताज्ञानो न । इत्येषा परमार्थता । पूर्वोक्तास्सर्वेऽपि परमार्थतया न सन्तीति भावः । सर्वत्र नञ्श्रवणात्तत्तन्निषेधे आदरातिशयः स्फुटं प्रतीयते ॥ २३५ ॥

एवमुपपादितं मायाकृतजीवेश्वरादिभेदमुपसंहरति, मायेति ।

**मायाख्यायाः कामधेनोर्वत्सौ जीवेश्वरावुभौ ।**
**यथेच्छं पिबतां द्वैतं तत्त्वं त्वद्वैतमेव हि ॥ २३६ ॥**

स्पष्टोऽर्थः ॥ २३६ ॥

कूटस्थब्रह्मणोरभेदविचारः ।

ननु जीवेश्वरयोर्मायाकल्पितत्वेन भेदस्य मिथ्यात्वेऽप्यमायिकयोः कूटस्थब्रह्मणोर्भेदः पारमार्थिकः स्यादित्याशंक्याह, कूटस्थेति ।

**कूटस्थब्रह्मणोर्भेदो नाममात्रादृते न हि ।**
**घटाकाशमहाकाशौ वियुज्येते न हि क्वचित् ॥ २३७ ॥**

स्पष्टोऽर्थः । नामप्रपञ्चस्य मायिकत्वेन कूटस्थब्रह्मणोर्निर्गुणत्वेन शब्दावेद्यतया तयोर्व्यवहारानर्हत्वाद्व्यवहारमन्तरोपदेशासंभवादुपदेशोपपत्तये तत्रासदेव नामोपलक्षणतयोपादाय व्यवहार इति तात्पर्यम् ॥ २३७ ॥

एवं मिथ्यात्वप्रतिपादनफलकथनपूर्वकमद्वैतप्रतिपादकश्रुत्यर्थं पठति, यदिति ।

**यदद्वैतं श्रुतं सृष्टेः प्राक् तदेवाद्य चोपरि ।**
**मुक्तावपि वृथा माया भ्रामयत्यखिलान् जनान् ॥ २३८ ॥**

"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय"मिति (छां. ६. २. १.) श्रुतौ सृष्टेः प्राग्यदद्वैतं श्रुतं । तदेवाद्य सृष्ट्यनन्तरं वर्तमानकाले उपरि लयानन्तरं च भविष्यत्काले मुक्तावपि वर्तते । कालत्रयाबाधितमेकमेवाद्वितीयं ब्रह्म परमार्थं तत्त्वमित्यर्थः । किं त्वखिलान् जनान् माया विलक्षणभावैर्वृथा भ्रामयति ॥ २३८॥

नन्वविदुषामिव विदुषामपि संसारे भ्रमदर्शनात्तत्त्वज्ञानं न संसारनिवर्तकम् । ततश्चविद्याफलं संसारनिवृत्तिरिति न घटत इत्याशंकते, य इति ।

**ये वदन्तीत्थमेतेऽपि भ्राम्यन्तेऽविद्ययात्र किम् ।**
**न यथापूर्वमेतेषामत्र भ्रान्तेरदर्शनात् ॥ २३९ ॥**

इत्थमद्वितीयब्रह्म सत्यमन्यत्सर्वं मायिकमित्येवं ये उपदेष्टारो वदन्ति एतेऽप्यत्र संसारे भ्राम्यन्ते संचरन्ति । अतो विद्यया किं फलम् ? समाधत्ते नेति । अत्र संसारे तेषां विदुषां यथापूर्वं ज्ञानोदयात्पूर्वमभिमानपूर्वकं यथा भ्रमणं तथा न । तत्र कारणमाह, भ्रान्तेरदर्शनादिति । भ्रान्तेरानन्दमयादिकोशेष्वात्मभ्रान्तेरदर्शनात् । तेषां प्रारब्धाधीनविक्षेपशक्तेस्सत्त्वेऽपि ब्रह्मसाक्षात्कारेणावरणस्य नाशात् बालोन्मत्तादिवदनिच्छयैव भ्रमणं प्रारब्धकर्मफलक्षयपर्यन्तं, "तस्य तावदेव चिरं (छां. ६. १४. २.) इति, श्रुतेरिति भावः ॥ २३९ ॥

अज्ञानिनामभिमानपूर्विकां प्रवृत्तिं दर्शयति, ऐहिकेति ।

**ऐहिकामुष्मिकः सर्वः संसारो वास्तवस्ततः ।**
**न भाति नास्ति चाद्वैतमित्यज्ञानिविनिश्चयः ॥ २४० ॥**

ऐहिकामुष्मिकः संसारो वास्तवः सत्य एव । ततोऽद्वैतं न भाति तेषां भ्रान्तिपिहितदृष्टीनां बुद्धेर्न प्रतीयते । अतो नास्तीति अज्ञानिविनिश्चयः ॥ २४० ॥

ज्ञानिनि तद्वैपरीत्यमाह, ज्ञानिन इति ।

**ज्ञानिनो विपरीतोऽस्मान्निश्चयः सम्यगीक्ष्यते ।**
**स्वस्य निश्चयतो बद्धो मुक्तोऽहं चेति मन्यते ॥ २४१ ॥**

स्पष्टः पूर्वार्धः। स्वस्य निश्चयतः स्वस्य निश्चयानुसारमज्ञानी "अहं बद्ध" इत्यात्मानं मन्यते। ज्ञानी "त्वहं मुक्त" इति च ॥ २४१ ॥

अद्वैतद्वैतयोः सत्यत्वासत्यत्वविचारः।

नन्वद्वैते भासकस्य वस्त्वन्तरस्याभावात्तस्यापरोक्षतया भानं न संभवति। अभाने च कुतस्तन्निश्चय इत्याशंक्य परिहरति, नेति।

**नाद्वैतमपरोक्षं चेन्न चिद्रूपेण भासनात्।**
**अशेषेण न भातं चेत् द्वैतं किं भासते तव? ॥ २४२ ॥**

अद्वैतमपरोक्षं प्रत्यक्षं न भवतीत्यतोऽनिश्चेयमिति चेन्न तथा वक्तव्यम्। घटो भाति पटो भातीत्येवं घटादिष्वनुस्यूततया चिद्रूपेण चैतन्यस्वरूपेण भासनात्। तस्य स्वप्रकाशत्वेन प्रकाशान्तरानपेक्षणादपरोक्षत्वमनुभवसिद्धमेव। घटपटादिष्वनुस्यूततया भानस्य प्रतीतिरस्तु नाम। तथाप्यशेषेणानन्दादिरूपेण न भातं नानुभूत इति चेद्द्वैतमखिलं किंचिद्ज्ञतादशायां भासते किम्? तव किंचिद्ज्ञतादशायां द्वैतस्य साकल्येनाभानवन्ममाज्ञानदशायां साकल्येनाभानमस्तु। तव सर्वज्ञतादशायां द्वैतस्य साकल्येन भानं तथा ज्ञानदशायां ममाप्यद्वैतस्य साकल्येन भानमुपपद्यत इति भावः ॥ २४२ ॥

संपूर्णभानाभावस्योभयोस्समाने द्वैतसिद्धिवत्कथमद्वैतसिद्धिर्न स्यादिति शङ्कते, दिङ्मात्रेणेति।

**दिङ्मात्रेण विभानं तु द्वयोरपि समं खलु।**
**द्वैतसिद्धिवदद्वैतसिद्धिस्ते तावता न किम् ॥ २४३ ॥**

दिङ्मात्रेणैकदेशमात्रेण। सुलभा पदयोजना। द्वैताद्वैतयोर्विभाने समे सति द्वैतसिद्धिवदेकदेशमात्रस्य भानेन यथा द्वैतसिद्धिर्भवति तथा चैतन्यस्य भानेनाद्वैतसिद्धिस्तावतैकदेशप्रतीत्या किं न स्यात्। भवेदेवेतिभावः। यथैकदेश-स्फुरणेन द्वैतसिद्धिस्तथा चिद्रूपस्याप्येकदेशस्फुरणेनाद्वैतसिद्धिः स्यादिति भावः ॥ २४३ ॥

द्वैताद्वैतयोस्तमःप्रकाशवद्विरुद्धस्वभावयोर्युगपज्ज्ञानस्यासंभवाद्द्वैते प्रतीयमानेऽद्वैतप्रतीतिर्न स्यादिति पुनः शंकते, द्वैतेनेति ।

**द्वैतेन हीनमद्वैतं द्वैतज्ञाने कथं त्विदम् ।**
**चिद्भानं त्वविरोध्यस्य द्वैतस्यातोऽसमे उभे ॥ २४४ ॥**

द्वैतेनाद्वैतं हीनं विरुद्धम् । शून्यमित्यर्थः । अतो द्वैतज्ञाने सतीदमद्वैतं कथं सिध्यति । विरुद्धयोस्तमःप्रकाशयोर्युगपत्प्रतीत्यसंभवात् । सति द्वैतज्ञानेऽद्वैतप्रतीत्यसंभवादिति चेदद्वैतभाने द्वैतस्य प्रतीतिस्तथापि न संभवतीति सममिति भावः । पूर्वपक्षी प्रतिबंदीं परिहरति, चिद्भानमिति । चिद्भानं तु चैतन्यप्रतीतिस्त्वस्य द्वैतस्याविरोधि । चिद्भानकालेऽपि द्वैतस्य भ[illegible] । चिद्भानमेव खलु तवाद्वैतम् । एवं चाद्वैतेन द्वैतस्य विरोधो नास्तीति स्फुटम् । अत उभे असमे ॥ २४४ ॥

एवं द्वैतेनाप्यद्वैतस्य विरोधो नास्तीति परिहरति, एवमिति ।

**एवं तर्हि शृणु द्वैतमसन्मायामयत्वतः ।**
**तेन वास्तवमद्वैतं परिशेषाद्विभासते ॥ २४५ ॥**

एवं तर्हि द्वैतस्य प्रतीतावप्यद्वैतस्याप्रतीतिरित्युच्यते चेत्परिहारं शृणु । मायामयत्वत ईश्वरादिस्तंबपर्यन्तं यद्द्वैतं प्रतीयते तत्सर्वं मायाविकारत्वादसदैवेंद्रजालिकवस्तुवदविद्यमानमेव, तेन मायामयतयाऽवास्तवत्वेन तत्प्रतीतावपि "नेति नेती" त्यादिवाक्यैर्द्वैते निरस्ते परिशेषाद्वास्तवमबाधितमद्वैतं विभासते प्रतीयते ॥ २४५ ॥

अद्वैतस्य परिशेषप्रकारमाह, अचिंत्येति ।

**अचिन्त्यरचनारूपं मायैव सकलं जगत् ।**
**इति निश्चित्य वस्तुत्वमद्वैते परिशेष्यताम् ॥ २४६ ॥**

अचिन्त्यरचनारूपं मनसाऽपि चिंतितुमशक्या या रचना सैव रूपं यस्य तत्सकलं जगन्मायैवेति द्वैतस्यावस्तुतां निश्चित्याद्वैते चैतन्ये वस्तुत्वं परिशेष्यताम् । असत्यत्वेन द्वैते निरस्ते सत्यद्वैतमेवावशिष्यत इति भावः ॥ २४६ ॥

ननु निरस्तमपि द्वैतं वासनाबलात् पुनःपुनर्भात्येवेत्याशंक्य परिहरति, पुनरिति ।

**पुनर्द्वैतस्य वस्तुत्वं भाति चेत्त्वं तथा पुनः ।**
**परिशीलय को वात्र प्रयासस्तेन ते वद ॥ २४७॥**

स्पष्टोऽर्थः । "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेने" (कठ. १.२.२२.–मुंड. ३.२.२.) त्यात्मोपलब्धेरतिप्रयाससाध्यतां मनसि निधाय "श्रोतव्यो मन्तव्यो निदिध्यासितव्य", इति (बृ. ४. ५. ६.) श्रुतेरसकृदावृत्तेरुपदिष्टत्वात् पौनःपुन्येन परिशीलने न कोऽपि प्रयास इत्यर्थः ॥ २४७॥

अद्वैतसिद्धिसंपादने कालदैर्घ्यमविचारणीयमित्याह, कियन्तमिति ।

**कियन्तं कालमिति चेत् खेदोऽयं द्वैत इष्यताम् ।**
**अद्वैते तु न युक्तोऽयं सर्वानर्थनिवारणात् ॥ २४८ ॥**

कियन्तं कालमियं परिशीलना कर्तव्येति चेदयं खेदो द्वैते विषये इष्यताम् । द्वैते प्रसक्ततत्तदनर्थपरिहारार्थं कियान् कालो यापनीय इत्यालोचना कार्या । तत्रैकस्यानर्थस्य निवारणेऽप्यन्यस्यानर्थस्यापातात् । अद्वैते विषये तु तद्वियं खेदो न युक्तः, कुतः ? अद्वैतस्य सर्वानर्थनिवारकत्वात् । सर्वानर्थनिवारकस्याद्वैतस्य श्रमसाध्यत्वेऽपि स श्रमः श्रमत्वेन न परिगणनीय इत्यर्थः, आत्यन्तिकफलजनकत्वात् ॥ २४८ ॥

ज्ञानात्प्रागिव तदनन्तरमपि जीवस्य पिपासादयोऽनुभूयन्त एवेत्यत आह, क्षुदिति ।

**क्षुत्पिपासादयो दृष्टा यथापूर्वं मयीति चेत् ।**
**मच्छब्दवाच्येऽहंकारे दृश्यन्तां नेति को वदेत् ॥ २४९ ॥**

यथापूर्वं ज्ञानोत्पत्तेः पूर्वं यथा भवति तथाऽनन्तरमपि मयि जीवे क्षुत्पिपासादय आदिशब्देन रागप्राप्ता इतरेऽपि गृह्यन्ते, दृष्टा इति वदसि चेत्, मच्छब्दवाच्येऽहंकारे कर्तृत्वाभिमानाविष्टे जीवे ते पिपासादयो दृश्यन्ताम् ।

क्षुत्पिपासादयोऽहंकाराभिमानस्य जीवस्य धर्मा न त्वात्मन इति भावः। ते धर्मा जीवे न दृश्यन्त इति को वदेत्? न कोऽपीत्यर्थः। ज्ञानी त्वहंकारादिनिर्मुक्त इति तस्य न सन्त्येव क्षुत्पिपासादय इति भावः ॥ २४९ ॥

ननु क्षुत्पिपासादयो न केवलमहंकारे दृश्यन्ते, किंतु कूटस्थेऽपीत्याशंक्याह,

चिद्रूपेऽपि प्रसज्येरंस्तादात्म्याध्यासतो यदि ।
मा ध्यानं कुरु किंतु त्वं विवेकं कुरु सर्वदा ॥ २५० ॥

तादात्म्याध्यासतः सत्यानृते मिथुनीकृत्याहमिदं ममेदमित्यन्योन्यधर्माणामन्योन्यस्मिन्नध्यासेन क्षुत्पिपासादयो जीवधर्माश्चिद्रूपे कूटस्थे यद्यपि प्रसज्येरन्, तर्हि चिद्रूपेऽहंकारतादात्म्याद्ध्यानं मा कुरु। सर्वदा त्वं कूटस्थोऽहंकारादेर्भिन्न इति विवेकं कुरु ॥ २५० ॥

चिरकालवासनाबलादध्यासस्य सम्यङ्निवर्तनं न सुलभतरमित्याशंक्य तत्प्रतीकारमाह, झटितीति।

झटित्यध्यास आयाति दृढवासनयेति चेत् ।
आवर्तयेद्विवेकं च दृढं वासयितुं सदा ॥ २५१ ॥

स्पष्टोऽर्थः। आवर्तयेत् पुनःपुनरनुसंधानं कुर्यात्। पुनःपुनरनुसंधानेन विवेकवासनायां दृढीकृतायां तादात्म्यवासनाः स्वयमेव नश्यन्तीति भावः ॥ २५१ ॥

एवं पुनःपुनरनुसंधानमहिम्ना विवेकेऽनुभूयमाने युक्तिसिद्धं द्वैतमिथ्यात्वं क्रमेणानुभवपदमधिरोहतीत्यनुभवेनैव मिथ्यात्वेऽवगतेऽध्यासस्यावकाश एव नास्ति, अतस्तद्वासनानां क्षय आनुषंगिको नान्तरीयक इत्याह, विवेक इति।

विवेके द्वैतमिथ्यात्वं युक्त्यैवेति न भण्यताम् ।
अचिन्त्यरचनात्वस्यानुभूतिर्हि स्वसाक्षिकी ॥ २५२ ॥

विवेके सति द्वैतमिथ्यात्वं युक्त्यैव युक्तिवादमात्रेण सिध्यतीति न भण्यतां नोच्यताम्। किं त्वचिन्त्यरचनात्वस्य मिथ्यात्वस्यानुभूतिरनुभवः स्वसाक्षिके स्वेनैव प्रकाशिता स्वयं भासमाना दृश्यते ॥ २५२ ॥

अचिन्त्यरचनात्वं मिथ्यात्वमिति लक्षणस्य चिद्रूपेऽतिव्याप्तिरित्याशंक्याह, चिदिति।

**चिदप्यचिन्त्यरचना यदि तर्ह्यस्तु नो वयम्।**
**चितिं सुचिन्त्यरचनां ब्रूमो नित्यत्वकारणात् ॥ २५३ ॥**

चिदप्यचिन्त्यरचनेति यद्युच्यते तर्ह्यस्तु, अङ्गीकुर्म एवेत्यर्थः। वयं चितिं सुचिन्त्यरचनां नो ब्रूमः। कुतः? नित्यत्वकारणात्, आत्मनः प्रागभावाभावात्। एवं च कारणस्य सदातनत्वे कार्यस्यापि तत्त्वापत्त्या तस्य रचनायाः सुचिन्त्यत्वाभावः ॥ २५३ ॥

तत्र हेतुसिद्धिप्रदर्शनव्याजेन मिथ्यात्वमन्यथयितुमाह, प्रागभाव इति।

**प्रागभावो नानुभूतश्चितेर्नित्या ततश्चितिः।**
**द्वैतस्य प्रागभावस्तु चैतन्येनानुभूयते ॥ २५४ ॥**

तत्र चितेः प्रागभावो नानुभूतः। ततश्चितिर्नित्या। तस्याश्चितेः प्रागभावस्याननुभवात्प्रागभावाप्रतियोगित्वं तथैव प्रध्वंसाभावस्याननुभवात् ध्वंसाप्रतियोगित्वमपि सिद्ध्यतीति प्रागभावप्रध्वंसाप्रतियोगित्वरूपनित्यत्वं चितेस्सिद्धम्। तस्य रचनायां कारणत्वे रचना सुचिंत्या स्यात्। सादेः कार्यस्य कारणान्तरविरहितस्यानादेः कारणत्वं न घटते। अतो रचनायास्सुचिंत्यत्वं नोपपद्यते। तर्ह्यचिन्त्यरचनात्वरूपं मिथ्यात्वं चितेरायातीति चेत्तद्वारणाय प्रागभावप्रतियोगित्वे सतीति विशेषणं मिथ्यात्वलक्षणे देयम्। विशेषणस्य चितावभावान्नातिव्याप्तिरिति गूढाभिसंधिः। चितेः प्रागभावोऽस्तीत्यत्र किंमानम्? अनुभव एव मानमिति चेत्किं चिता उतान्येन? चिदन्यस्य जडस्य अनुभवितृत्वमनुपपन्नम्। तथा च चितैवानुभूयत इत्यभ्युपेयम्। सा चिदन्या स्वस्वरूपा वा? नाद्यः अद्वैतनये चिदन्तराभावात्? तत्स्वीकारेऽपि चित्प्रागभावस्य प्रतियोगिनमन्तरा ग्रहीतुमशक्य-

तया प्रतियोगिभूतचितश्चिदन्तरग्राह्यत्वे घटादिवत्तस्य जडत्वापत्तिः । न द्वितीयः । स्वाभावस्य स्वेन ग्रहीतुमशक्यत्वात् । अतश्चित्प्रागभावो नानुभूत इत्युक्तिस्सम्यगेवेति बोध्यम् । न चैवं रीत्या द्वैतस्यापि प्रागभावस्याननुभवात् तस्यापि नित्यत्वप्रसंग इत्याशंकां परहरति, द्वैतस्येति । द्वैतस्य प्रागभावस्तु चैतन्येऽनुभूयते । जाग्रति वर्तमानस्य द्वैतस्य प्रागभावस्सुषुप्तौ साक्षिणानुभूयते ॥ २५४ ॥

प्रागभावयुतत्वे सत्यचिन्त्यरचनात्वं मिथ्यात्वमिति लक्षणं द्वैते समन्वेति, प्रागभावेति ।

प्रागभावयुतं द्वैतं रच्यते हि घटादिवत् ।
तथापि रचनाऽचिन्त्या मिथ्या तेनेन्द्रजालवत् ॥ २५५ ॥

प्रागभावयुतं द्वैतं जगत् घटादिवत्सत्यत्वेन भासमानमिव रच्यते नियतिकृतनियमेन विन्यस्यते । तथापि तस्य रचनाऽचिन्त्या बुद्धेरगोचरा । तेन बुद्धेरगम्यत्वेनेन्द्रजालवन्मिथ्या अनिर्वचनीया ॥ २५५ ॥

ननु चितेर्द्वैतसाक्षितया ज्ञानरूपत्वेन स्वप्रकाशत्वं सत्यत्वमपरोक्षत्वं च सिद्धमेव । तथा च "न तदनुभूयते प्रत्यक्षतये"ति वदतामज्ञातृत्वमेवेत्याह, चिदिति ।

चित्प्रत्यक्षा ततोऽन्यस्य मिथ्यात्वं चानुभूयते ।
नाद्वैतमपरोक्षं चेत्येतन्न व्याहतं कथम् । २५६ ॥

चित्प्रत्यक्षा स्वप्रकाशत्वेन नित्या अपरोक्षा । ततोऽन्यस्य द्वैतस्य मिथ्यात्वं च चितानुभूयते । एवं च सत्यद्वैतमपरोक्षं न, अप्रत्यक्षं । एतद्वचनं कथं न व्याहतं भवेत् ? अद्वैतस्य चिदनतिरेकित्वात् ॥ २५६ ॥

एवमद्वैतस्य प्रत्यक्षत्वेन केषांचिदविश्वासः कुत इति शंकां प्रतिबंद्योत्तरयति, इत्थमिति ।

इत्थं ज्ञात्वाप्यसंतुष्टाः केचित्कुत इतीर्यताम् ।
चार्वाकादेः प्रबुद्धस्यात्मा देहः कुतो वद ॥ २५७ ॥

इत्थमद्वैततत्त्वं नित्यापरोक्षं ज्ञात्वाऽपि, केचित्कुतोऽसन्तुष्टा इत्यत्र कारणमीर्यतामिति प्रश्ने उत्तरयति, चार्वाकादेरिति । प्रबुद्धस्याप्यूहापोहकुशलस्य । स्पष्टमन्यत् । कुशलबुद्धीनामपि चार्वाकाणां देहस्यात्मत्वेनांगोकारे यथा सम्यग्विचारशून्यत्वमुत स्ववादमौर्ख्यं वा कारणं, द्वैतिनामपि तथैवेति भावः ॥ २५७ ॥

धीदोषाच्चार्वाकादेर्विचारे सम्यक्त्वाभावादेहात्मबुद्धिरिति यदि समाधीयते, तदस्माकमपि समाधानं तुल्यमित्याह, सम्यगिति ।

**सम्यग्विचारो नास्त्यस्य धीदोषादिति चेत्तथा ।**
**असन्तुष्टास्तु शास्त्रार्थं न त्वैक्षन्त विशेषतः ॥ २५८ ॥**

सम्यग्विचारः संप्रदायसिद्धवेदान्तार्थविचारः । असन्तुष्टाः शास्त्रार्थः प्रति विश्वासरहिताः । शास्त्रार्थं शास्त्रसिद्धमद्वैतं । स्पष्टमन्यत् । शास्त्रसिद्धस्य सत्यचिद्रूपस्य सच्चिद्रूपेण सत्यप्यनुभवे विशेषाकारेणानन्दस्वप्रकाशकत्वादिरूपेण न पश्यन्ति ॥ २५८ ॥

तत्त्वज्ञानफलनिरूपणम्

एवं तत्त्वं विचार्य तत्फलं विचारयितुं फलप्रतिपादिकां श्रुतिमाह, यदेति ।

**यदा सर्वे प्रमुच्यन्ते कामा योऽस्य हृदि स्थिताः ।**
**इति श्रौतं फलं दृष्टं नेति चेद्दृष्टमेव तत् ॥ २५९ ॥**

यथाऽस्य मुमुक्षोर्हृदि स्थिता "अहमिदं ममेदमित्यध्यासनिमित्ता रागप्रयुक्ता ये कामास्तेसर्वे प्रमुच्यन्ते" । तदा "मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" (कठ. २. ६. १४.) इत्युत्तरार्धे श्रुत्यैव कामविमोचनफलमुक्तम् । इदं फलं घटते वा न वेति विचारं प्रस्तौति, इतीति । इत्युक्तरीत्या श्रौतं श्रुत्युपदिष्टं फलं दृष्टं । तत्र न घटत इति शंकते, नेति विचारस्य फलं सर्वकामप्रमोकः । न कदाऽपि नानुभूयते, तथा च स फलमिति कथं वा वक्तुं शक्यत इतिचेत्समाधत्ते, दृष्टमिति । तत्फलं दृष्टमेव अनुभवसिद्धमेव । एवं च तव हेतुरसिद्ध इति भावः ॥ २५९ ॥

तदनुभवकालं स्वशेषेण दर्शयति, यदेति ।

**यदा सर्वे प्रभिद्यन्ते हृदयग्रन्थयस्त्विति ।**
**कामा ग्रन्थिस्वरूपेण व्याख्याता वाक्यशेषतः ॥ २६० ॥**

यदा सर्वे प्रभिद्यन्ते हृदयग्रन्थयस्त्विति (कठ. २. ६. १५.) वाक्यशेषतः एतादृशवाक्यशेषेण कामा ग्रन्थिस्वरूपेण व्याख्याताः । एतादृशवाक्यशेषेण कामाः ग्रन्थिस्वरूपेण व्याख्यातत्वेन कामाः ग्रन्थिरूपत्वेन व्याख्यातप्रायाः एवं च परतत्त्वसाक्षात्कारे सति कामविमोक इति श्रुत्या कालविशेषोऽपि दर्शित इति तदानीं तत्फलमनुभूयत इति तात्पर्यम् ॥ २६० ॥

ननु लोके कामस्येच्छापरपर्यायतया दृष्टत्वात् ग्रन्थिशब्देन कथं कामो विवक्ष्यत इत्याशंक्याह, अहंकारेति ।

**अहंकारचिदात्मानावेकीकृत्याविवेकतः ।**
**इदं मे स्यादिदं मे स्यादितीच्छाः कामशब्दिताः ॥ २६१ ॥**

अविवेकतोऽहंकारचिदात्मानावहंकारः कर्तृत्वाभिमानी जीवः चिदात्मा निर्विकारः कूटस्थस्तावुभावेकीकृत्यान्यस्य धर्मानन्यस्मिन्नध्यस्येदं मे स्यादिदं मे स्यादिति जाया मे स्याद्वित्तं मे स्यादित्याकारिकाः इच्छाः इच्छाविशेषाः कामशब्दिताः कामशब्दवाच्याः । एवं चेच्छामात्रस्य न कामत्वेनात्र विवक्षितत्वम् । किंत्वध्यासमूलकेच्छाविशेषस्यैवात्र कामत्वेन विवक्षिततया तस्य बन्धकत्वेन ग्रन्थित्वमुपपन्नमेवेति भावः ॥ २६१ ॥

यद्यध्यासमूलककामानां त्याग एव तत्त्वज्ञानफलं स्यात्तर्हीतरकामानां तत्त्वज्ञानिनोऽभ्युपगमप्रसंग इत्यापत्तिमिष्टापत्त्या परिहरति, अप्रवेश्येति ।

**अप्रवेश्य चिदात्मानं पृथक्पश्यन्नहंकृतिम् ।**
**इच्छंस्तु कोटिवस्तूनि न बाधो ग्रन्थिभेदतः ॥ २६२ ॥**

चिदात्मानं कूटस्थमहंकारेऽप्रवेश्य अनध्यस्य अहंकृतिं कर्तृत्वाभिमानं पृथक् विविक्ततया पश्यन् कोटिवस्तूनीच्छन्नपि कामयमानोऽपि बाधो न ।

कुतः ? ग्रन्थिभेदतः अध्यासमूलककामानां विच्छिन्नत्वात्। तेषामेव बंधकत्वादितरकामानां सत्त्वेऽपि तादृशकामाभावे बंधाभाव इति भावः ॥ २६२ ॥

नन्विच्छैव नोदेतीति किमिति तादृशानां कामानामभ्युपगम इत्यत आह, ग्रन्थिभेद इति।

ग्रन्थिभेदेऽपि संभाव्या इच्छाः प्रारब्धदोषतः।
बुद्ध्वापि पापबाहुल्यादसंतोषो यथा तव ॥ २६३ ॥

हृदयस्य ग्रन्थिभेदेऽपि प्रारब्धदोषत इच्छास्संभाव्याः। तत्र दृष्टान्तमाह, बुद्ध्वापीति। चितः प्रत्यक्षत्वं जगतो मिथ्यात्वं च बुद्ध्वाऽपि पापबाहुल्यात् प्रारब्धकर्मजन्यपापप्राबल्यात् यथा तवासंतोषो जायते तथेत्यर्थः ॥ २६३ ॥

अध्यासाभावे केवलेच्छानामबाधकत्वमेव दृष्टान्तरूपेण विवृणोति, अहंकारेति।

अहंकारगतेच्छाद्यैर्देहव्याध्यादिभिस्तदा।
वृक्षादिजन्मनाशैर्वा चिद्रूपात्मनि किं भवेत् ॥ २६४ ॥

अहंकारगतेच्छाद्यैः कूटस्थेऽनध्यस्तैस्तदा देहव्याध्यादिभिर्वृक्षादिजन्मनाशैश्चिद्रूपात्मनि किं भवेत्। न किमपीति भावः। अध्यासाभावे कूटस्थस्य देहसंबंधाभावात्तद्गतव्याध्यादेर्न तस्य पीडा। अत्र वृक्षादिजन्मनाशैर्यथा कूटस्थस्य बाधो नास्ति तथा देहव्याधिभिश्च न बाधः। वा शब्द इवार्थः ॥ २६४ ॥

अनन्तरं यथा व्याध्यादिपीडाशान्तिस्तथा तत्पूर्वमपि चास्तु। तत इदं तत्त्वज्ञानफलं कथं भवेदित्याशंक्येष्टापत्त्या परिहरति, ग्रंथिभेदादिति।

ग्रन्थिभेदात्पुराप्येवमिति चेत्तन्न विस्मर।
अयमेव ग्रन्थिभेदस्तव तेन कृती भवान् ॥ २६५ ॥

हृदयस्य ग्रन्थिभेदात्पुराप्यविवेकदशायामपि असंगचिद्रूपत्वेन कूटस्थ एवं व्याध्यादिभिरपीडित एवेति वदसि चेत्तदस्माकमपीष्टापत्तिरेव। ततस्तदसंगत्वं न विस्मर। अयमेव कूटस्थस्यासंगत्वविवेक एव तव ग्रन्थिभेदः पाशनाशः। तेन

द्वैताद्वैतयोस्तमःप्रकाशवद्विरुद्धस्वभावयोर्युगपद्भानस्यासंभवाद्द्वैते प्रतीयमानेऽद्वैतप्रतीतिर्न स्यादिति पुनः शंकते, द्वैतेनेति ।

द्वैतेन हीनमद्वैतं द्वैतज्ञाने कथं त्विदम् ।
चिद्भानं त्वविरोध्यस्य द्वैतस्यातोऽसमे उभे ॥ २४४ ॥

द्वैतेनाद्वैतं हीनं विरुद्धम् । शून्यमित्यर्थः । अतो द्वैतज्ञाने सतीदमद्वैतं कथं सिध्यति । विरुद्धयोस्तमःप्रकाशयोर्युगपत्प्रतीत्यसंभवात् । सति द्वैतज्ञानेऽद्वैतप्रतीत्यसंभवादिति चेदद्वैतभाने द्वैतस्य प्रतीतिस्तवापि न संभवतीति सममिति भावः । पूर्वपक्षी प्रतिबंदीं परिहरति, चिद्भानमिति । चिद्भानं तु चैतन्यप्रतीतिस्त्वस्य द्वैतस्याविरोधि । चिद्भानकालेऽपि द्वैतस्य भानात् । चिद्भानमेव खलु तवाद्वैतम् । एवं चाद्वैतेन द्वैतस्य विरोधो नास्तीति स्फुटम् । अत उभे असमे ॥ २४४ ॥

एवं द्वैतेनाप्यद्वैतस्य विरोधो नास्तीति परिहरति, एवमिति ।

एवं तर्हि शृणु द्वैतमसन्मायामयत्वतः ।
तेन वास्तवमद्वैतं परिशेषाद्विभासते ॥ २४५ ॥

एवं तर्हि द्वैतस्य प्रतीतावप्यद्वैतस्याप्रतीतिरित्युच्यते चेत्परिहारं शृणु । मायामयत्वत ईश्वरादिस्तंबपर्यन्तं यद्द्वैतं प्रतीयते तत्सर्वं मायाविकारत्वादसदैवैंद्रजालिकवस्तुवदविद्यमानमेव, तेन मायामयतयाऽवास्तवत्वेन तत्प्रतीतावपि "नेति नेती"त्यादिवाक्यैर्द्वैते निरस्ते परिशेषाद्वास्तवमबाधितमद्वैतं विभासते प्रतीयते ॥ २४५ ॥

अद्वैतस्य परिशेषप्रकारमाह, अचिंत्येति ।

अचिन्त्यरचनारूपं मायैव सकलं जगत् ।
इति निश्चित्य वस्तुत्वमद्वैते परिशेष्यताम् ॥ २४६ ॥

अचिन्त्यरचनारूपं मनसाऽपि चिंतितुमशक्या या रचना सैव रूपं यस्य तत्सकलं जगन्मायैवेति द्वैतस्यावस्तुतां निश्चित्याद्वैते चैतन्ये वस्तुत्वं परिशेष्यताम् । असत्यत्वेन द्वैते निरस्ते सत्यद्वैतमेवावशिष्यत इति भावः ॥ २४६ ॥

ननु निरस्तमपि द्वैतं वासनाबलात् पुनःपुनर्भात्येवेत्याशंक्य परिहरति, पुनरिति ।

**पुनर्द्वैतस्य वस्तुत्वं भाति चेत्त्वं तथा पुनः ।**
**परिशीलय को वात्र प्रयासस्तेन ते वद ॥ २४७ ॥**

स्पष्टोऽर्थः । "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन" (कठ. १. २. २२. – मुंड. ३. २. ३.) त्यात्मोपलब्धेरतिप्रयाससाध्यतां मनसि निधाय "श्रोतव्यो मन्तव्यो निदिध्यासितव्य", इति (बृ. ४. ५. ६.) श्रुतेरसकृदावृत्तेरुपदिष्टत्वात्, पौनःपुन्येन परिशीलने न कोऽपि प्रयास इत्यर्थः ॥ २४७ ॥

अद्वैतासिद्धिसंपादने कालदैर्घ्यमविचारणीयमित्याह, कियन्तमिति ।

**कियन्तं कालमिति चेत् खेदोऽयं द्वैत इष्यताम् ।**
**अद्वैते तु न युक्तोऽयं सर्वानर्थनिवारणात् ॥ २४८ ॥**

कियन्तं कालमियं परिशीलना कर्तव्येति चेदयं खेदो द्वैते विषये इष्यताम् । द्वैते प्रसक्ततत्तदनर्थपरिहारार्थं कियान् कालो यापनीय इत्यालोचना कार्या । तत्रैकस्यानर्थस्य निवारणेऽप्यन्यस्यानर्थस्यापातात् । अद्वैते विषये तु तद्वयं खेदो न युक्तः, कुतः ? अद्वैतस्य सर्वानर्थनिवारकत्वात् । सर्वानर्थनिवारकस्याद्वैतस्य श्रमसाध्यत्वेऽपि स श्रमः श्रमत्वेन न परिगणनीय इत्यर्थः, आत्यन्तिकफलजनकत्वात् ॥ २४८ ॥

ज्ञानात्प्रागिव तदनन्तरमपि जीवस्य पिपासादयोऽनुभूयन्त एवेत्यत आह, क्षुदिति ।

**क्षुत्पिपासादयो दृष्टा यथापूर्वं मयीति चेत् ।**
**मच्छब्दवाच्येऽहंकारे दृश्यन्तां नेति को वदेत् ॥ २४९ ॥**

यथापूर्वं ज्ञानोत्पत्तेः पूर्वं यथा भवति तथाऽनन्तरमपि मयि जीवे क्षुत्पिपासादय आदिशब्देन रागप्राप्ता इतरेऽपि गृह्यन्ते, दृष्टा इति वदसि चेत्, मच्छब्दवाच्येऽहंकारे कर्तृत्वाभिमानाविष्टे जीवे ते पिपासादयो दृश्यन्ताम् ।

क्षुत्पिपासादयोऽहंकाराभिमानस्य जीवस्य धर्मा न त्वात्मन इति भावः। ते धर्मा जीवे न दृश्यन्त इति को वदेत्? न कोऽपीत्यर्थः। ज्ञानी त्वहंकारादिविनिर्मुक्त इति तस्य न सन्त्येव क्षुत्पिपासादय इति भावः ॥ २४९ ॥

ननु क्षुत्पिपासादयो न केवलमहंकारे दृश्यन्ते, किंतु कूटस्थेऽपीत्याशंक्याह, चिद्रूपेति।

**चिद्रूपेऽपि प्रसज्येरंस्तादात्म्याध्यासतो यदि।**
**मा ध्यानं कुरु किंतु त्वं विवेकं कुरु सर्वदा ॥ २५० ॥**

तादात्म्याध्यासतः सत्यानृते मिथुनीकृत्याहमिदं ममेदमित्यन्योन्यधर्माणामन्योन्यस्मिन्नध्यासेन क्षुत्पिपासादयो जीवधर्माश्चिद्रूपे कूटस्थे यद्यपि प्रसज्येरन्, तर्हि चिद्रूपेऽहंकारतादात्म्याद्ध्यानं मा कुरु। सर्वदा त्वं कूटस्थोऽहंकारादेर्भिन्न इति विवेकं कुरु ॥ २५० ॥

चिरकालवासनाबलादध्यासस्य सम्यङ्निवर्तनं न सुलभतरमित्याशंक्य तत्प्रतीकारमाह, झटितीति।

**झटित्यध्यास आयाति दृढवासनयेति चेत्।**
**आवर्तयेद्विवेकं च दृढं वासयितुं सदा ॥ २५१ ॥**

स्पष्टोऽर्थः। आवर्तयेत् पुनःपुनरनुसंधानं कुर्यात्। पुनःपुनरनुसंधानेन विवेकवासनायां दृढीकृतायां तादात्म्यवासनाः स्वयमेव नश्यन्तीति भावः ॥ २५१ ॥

एवं पुनःपुनरनुसंधानमहिम्ना विवेकेऽनुभूयमाने युक्तिसिद्धं द्वैतमिथ्यात्वं क्रमेणानुभवपदमधिरोहतीत्यनुभवेनैव मिथ्यात्वेऽवगतेऽध्यासस्यावकाश एव नास्ति, अतस्तद्वासनानां क्षय आनुषंगिको नान्तरीयक इत्याह, विवेक इति।

**विवेके द्वैतमिथ्यात्वं युक्त्यैवेति न भण्यताम्।**
**अचिन्त्यरचनात्वस्यानुभूतिर्हि स्वसाक्षिकी ॥ २५२ ॥**

विवेके सति द्वैतमिथ्यात्वं युक्त्यव युक्तिवादमात्रेण सिध्यतीति न भण्यतां नोच्यताम्। किं त्वचिन्त्यरचनात्वस्य मिथ्यात्वस्यानु तिरनुभवः स्वसाक्षिके स्वेनैव प्रकाशिता स्वयं भासमाना दृश्यते ॥ २५२ ॥

अचिन्त्यरचनात्वं मिथ्यात्वमिति लक्षणस्य चिद्रूपेऽतिव्याप्तिरित्याशंक्याह, चिदिति।

**चिदप्यचिन्त्यरचना यदि तर्ह्यस्तु नो वयम्।**
**चितिं सुचिन्त्यरचनां ब्रूमो नित्यत्वकारणात् ॥ २५३ ॥**

चिदप्यचिन्त्यरचनेति यद्युच्यते तर्ह्यस्तु, अङ्गीकुर्म एवेत्यर्थः। वयं चितिं सुचिन्त्यरचनां नो ब्रूमः। कुतः? नित्यत्वकारणात्, आत्मनः प्रागभावाभावात्। एवं च कारणस्य सदातनत्वे कार्यस्यापि तत्त्वापत्त्या तस्य रचनायाः सुचिन्त्यत्वाभावः ॥ २५३ ॥

तत्र हेतुसिद्धिप्रदर्शनव्याजेन मिथ्यात्वमन्यथयितुमाह, प्रागभाव इति।

**प्रागभावो नानुभूतश्चितेर्नित्या ततश्चितिः।**
**द्वैतस्य प्रागभावस्तु चैतन्येनानुभूयते ॥ २५४ ॥**

तत्र चितेः प्रागभावो नानुभूतः। ततश्चितिर्नित्या। तस्याश्चितेः प्रागभावस्याननुभवात्प्रागभावाप्रतियोगित्वं तथैव प्रध्वंसाभावस्याननुभवात् ध्वंसाप्रतियोगित्वमपि सिद्ध्यतीति प्रागभावप्रध्वंसाप्रतियोगित्वरूपनित्यत्वं चितेस्सिद्धम्। तस्य रचनायां कारणत्वे रचना सुचिंत्या स्यात्। सादेः कार्यस्य कारणान्तरविरहितस्यानादेः कारणत्वं न घटते। अतो रचनायास्सुचिंत्यत्वं नोपपद्यते। तर्ह्यचिन्त्यरचनात्वरूपं मिथ्यात्वं चितेरायातीति चेत्तद्वारणाय प्रागभावप्रतियोगित्वे सतीति विशेषणं मिथ्यात्वलक्षणे देयम्। विशेषणस्य चितावभावान्नातिव्याप्तिरिति गूढाभिसंधिः। चितेः प्रागभावोऽस्तीत्यत्र किंमानम्? अनुभव एव मानमिति चेत्किं चिता उतान्येन? चिदन्यस्य जडस्य अनुभवितृत्वमनुपपन्नम्। तथा च चितैवानुभूयत इत्यभ्युपेयम्। सा चिदन्या स्वस्वरूपा वा? नाद्यः अद्वैतनये चिदन्तराभावात्? तत्स्वीकारेऽपि चित्प्रागभावस्य प्रतियोगिनमन्तरा ग्रहीतुमशक्य-

तया प्रतियोगिभूतचितश्चिदन्तरग्राह्यत्वे घटादिवत्तस्य जडत्वापत्तिः। न द्वितीयः। स्वाभावस्य स्वेन ग्रहीतुमशक्यत्वात्। अतश्चित्प्रागभावो नानुभूत इत्युक्तिस्सम्यगेवेति बोध्यम्। न चैवं रीत्या द्वैतस्यापि प्रागभावस्याननुभवात् तस्यापि नित्यत्वप्रसंग इत्याशंकां परहरति, द्वैतस्येति। द्वैतस्य प्रागभावस्तु चैतन्येऽनुभूयते। जाग्रति वर्तमानस्य द्वैतस्य प्रागभावस्सुषुप्तौ साक्षिणानुभूयते ॥ २५४ ॥

प्रागभावयुतत्वे सत्यचिन्त्यरचनात्वं मिथ्यात्वमिति लक्षणं द्वैते समन्वेति, प्रागभावेति।

**प्रागभावयुतं द्वैतं रच्यते हि घटादिवत्।**
**तथापि रचनाऽचिन्त्या मिथ्या तेनेन्द्रजालवत् ॥ २५५ ॥**

प्रागभावयुतं द्वैतं जगत् घटादिवत्सत्यत्वेन भासमानमिव रच्यते नियतिकृतनियमेन विन्यस्यते। तथापि तस्य रचनाऽचिन्त्या बुद्धेरगोचरा। तेन बुद्धेरगम्यत्वेनेन्द्रजालवन्मिथ्या अनिर्वचनीया ॥ २५५ ॥

ननु चितेर्द्वैतंसाक्षितया ज्ञानरूपत्वेन स्वप्रकाशत्वं सत्यत्वमपरोक्षत्वं च सिद्धमेव। तथा च "न तदनुभूयते प्रत्यक्षतये"ति वदतामज्ञातृत्वमेवेत्याह, चिदिति।

**चित्प्रत्यक्षा ततोऽन्यस्य मिथ्यात्वं चानुभूयते।**
**नाद्वैतमपरोक्षं चेत्येतन्न व्याहतं कथम्। २५६ ॥**

चित्प्रत्यक्षा स्वप्रकाशत्वेन नित्या अपरोक्षा। ततोऽन्यस्य द्वैतस्य मिथ्यात्वं च चितानुभूयते। एवं च सत्यद्वैतमपरोक्षं न, अप्रत्यक्षं। एतद्वचनं कथं न व्याहतं भवेत्? अद्वैतस्य चिदनतिरेकित्वात् ॥ २५६ ॥

एवमद्वैतस्य प्रत्यक्षत्वेन केषांचिदविश्वासः कुत इति शंकां प्रतिबंद्योत्तरयति, इत्थमिति।

**इत्थं ज्ञात्वाप्यसंतुष्टाः केचित्कुत इतीर्यताम्।**
**चार्वाकादेः प्रबुद्धस्यात्मा देहः कुतो वद ॥ २५७ ॥**

इत्थमद्वैततत्त्वं नित्यापरोक्षं ज्ञात्वाऽपि, केचित्कुतोऽसन्तुष्टा इत्यत्र कारणमीर्यतामिति प्रश्ने उत्तरयति, चार्वाकादेरिति । प्रबुद्धस्याप्यूहापोहकुशलस्य । स्पष्टमन्यत् । कुशलबुद्धीनामपि चार्वाकाणां देहस्यात्मत्वेनांगोकारे यथा सम्यग्विचारशून्यत्वमुत स्ववादमौर्ख्यं वा कारणं, द्वैतिनामपि तथैवेति भावः ॥ २५७ ॥

धीदोषाच्चार्वाकादेर्विचारे सम्यक्त्वाभावाद्देहात्मबुद्धिरिति यदि समाधीयते, तदस्माकमपि समाधानं तुल्यमित्याह, सम्यगिति ।

सम्यग्विचारो नास्त्यस्य धीदोषादिति चेत्तथा ।
असन्तुष्टास्तु शास्त्रार्थं न त्वैक्षन्त विशेषतः ॥ २५८ ॥

सम्यग्विचारः संप्रदायसिद्धवेदान्तार्थविचारः । असन्तुष्टाः शास्त्रार्थः प्रति विश्वासरहिताः । शास्त्रार्थं शास्त्रसिद्धमद्वैतं । स्पष्टमन्यत् । शास्त्रसिद्धस्य सत्यचिद्रूपस्य सच्चिद्रूपेण सत्यप्यनुभवे विशेषाकारेणानन्दस्वप्रकाशकत्वादिरूपेण न पश्यन्ति ॥ २५८ ॥

तत्त्वज्ञानफलनिरूपणम्

एवं तत्त्वं विचार्य तत्फलं विचारयितुं फलप्रतिपादिकां श्रुतिमाह, यदेति ।

यदा सर्वे प्रमुच्यन्ते कामा योऽस्य हृदि स्थिताः ।
इति श्रौतं फलं दृष्टं नेति चेद्दृष्टमेव तत् ॥ २५९ ॥

यथाऽस्य मुमुक्षोर्हृदि स्थिता "अहमिदं ममेदमित्यध्यासनिमित्तरागप्रयुक्ता ये कामास्तेसर्वे प्रमुच्यन्ते" । तदा "मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत" (कठ. २. ६. १५.) इत्युत्तरार्धे श्रुत्यैव कामविमोचनफलमुक्तम् । इदं फलं घटते वा न वेति विचारं प्रस्तौति, इतीति । इत्युक्तरीत्या श्रौतं श्रुत्युपदिष्टं फलं दृष्टं । तत्र न घटत इति शंकते, नेति विचारस्य फलं सर्वकामप्रमोकः । न कदाऽपि नानुभूयते, तथा च स फलमिति कथं वा वक्तुं शक्यत इतिचेत्समाधत्ते, दृष्टमिति । तत्फलं दृष्टमेव अनुभवसिद्धमेव । एवं च तव हेतुरसिद्ध इति भावः ॥ २५९ ॥

तदनुभवकाले क्वचिच्छेषेण दर्शयति, यदेति ।

यदा सर्वे प्रभिद्यन्ते हृदयग्रन्थयस्त्विति ।
कामा ग्रन्थिस्वरूपेण व्याख्याता वाक्यशेषतः ॥ २६० ॥

यदा सर्वे प्रभिद्यन्ते हृदयग्रन्थयस्त्विति (कठ. २. ६. १५.) वाक्यशेषतः एतादृशवाक्यशेषेण कामा ग्रन्थिस्वरूपेण व्याख्याताः । एतादृशवाक्यशेषेण कामाः ग्रन्थिस्वरूपेण व्याख्यातत्वेन कामाः ग्रन्थिरूपत्वेन व्याख्यातप्रायाः एवं च परतत्त्वसाक्षात्कारे सति कामविमोक इति श्रुत्या कालविशेषोऽपि दर्शित इति तदानीं तत्फलमनुभूयत इति तात्पर्यम् ॥ २६० ॥

ननु लोके कामस्येच्छापरपर्यायतया दृष्टत्वात् ग्रन्थिशब्देन कथं कामो विवक्ष्यत इत्याशंक्याह, अहंकारेति।

अहंकारचिदात्मानावेकीकृत्याविवेकतः ।
इदं मे स्यादिदं मे स्यादितीच्छाः कामशब्दिताः ॥ २६१ ॥

अविवेकतोऽहंकारचिदात्मानावहंकारः कर्तृत्वाभिमानी जीवः चिदात्मा निर्विकारः कूटस्थस्तावुभावेकीकृत्यान्यस्य धर्मानन्यसिन्नध्यस्येदं मे स्यादिदं मे स्यादिति जाया मे स्याद्वित्तं मे स्यादित्याकारिकाः इच्छाः इच्छाविशेषाः कामशब्दिताः कामशब्दवाच्याः । एवं चेच्छामात्रस्य न कामत्वेनात्र विवक्षितत्वम् । किन्त्वध्यासमूलकेच्छाविशेषस्यैवात्र कामत्वेन विवक्षिततया तस्य बन्धकत्वेन ग्रन्थित्वमुपपन्नमेवेति भावः ॥ २६१ ॥

यद्यध्यासमूलककामानां त्याग एव तत्त्वज्ञानफलं स्यात्तर्हीतरकामानां तत्त्वज्ञानिनोऽभ्युपगमप्रसंग इत्यापत्तिमिष्टापत्या परिहरति, अप्रवेश्येति ।

अप्रवेश्य चिदात्मानं पृथक्पश्यन्नहंकृतिम् ।
इच्छंस्तु कोटिवस्तूनि न बाधो ग्रन्थिभेदतः ॥ २६२ ॥

चिदात्मानं कूटस्थमहंकारेऽप्रवेश्य अनध्यस्य अहंकृतिं कर्तृत्वाभिमानं पृथक् विविक्ततया पश्यन् कोटिवस्तूनीच्छन्नपि कामयमानोऽपि बाधो न ।

कुतः ? ग्रन्थिभेदतः अध्यासमूलककामानां विच्छिन्नत्वात्। तेषामेव बंधकत्वादितरकामानां सत्त्वेऽपि तादृशकामाभावे बंधाभाव इति भावः ॥ २६२ ॥

नन्विच्छैव नोदेतीति किमिति तादृशानां कामानामभ्युपगम इत्यत आह, ग्रन्थिभेद इति ।

ग्रन्थिभेदेऽपि संभाव्या इच्छाः प्रारब्धदोषतः ।
बुद्ध्वापि पापबाहुल्यादसंतोषो यथा तव ॥ २६३ ॥

हृदयस्य ग्रन्थिभेदेऽपि प्रारब्धदोषत इच्छास्संभाव्याः । तत्र दृष्टान्तमाह, बुद्ध्वापीति । चितः प्रत्यक्षत्वं जगतो मिथ्यात्वं च बुद्ध्वाऽपि पापबाहुल्यात् प्रारब्धकर्मजन्यपापप्राबल्यात् यथा तवासंतोषो जायते तथेत्यर्थः ॥ २६३ ॥

अध्यासाभावे केवलेच्छानामबाधकत्वमेव दृष्टान्तरूपेण विवृणोति, अहंकारेति ।

अहंकारगतेच्छाद्यैर्देहव्याध्यादिभिस्तदा ।
वृक्षादिजन्मनाशैर्वा चिद्रूपात्मनि किं भवेत् ॥ २६४ ॥

अहंकारगतेच्छाद्यैः कूटस्थेऽनध्यस्तैस्तदा देहव्याध्यादिभिर्वृक्षादिजन्मनाशैश्चिद्रूपात्मनि किं भवेत् । न किमपीति भावः। अध्यासाभावे कूटस्थस्य देहसंबंधाभावात्तद्गतव्याध्यादेर्न तस्य पीडा । अत्र वृक्षादिजन्मनाशैर्यथा कूटस्थस्य बाधो नास्ति तथा देहव्याधिभिश्च न बाधः । वा शब्द इवार्थः ॥ २६४ ॥

अनन्तरं यथा व्याध्यादिपीडाशान्तिस्तथा तत्पूर्वमपि चास्तु । तत इदं तत्त्वज्ञानफलं कथं भवेदित्याशंक्येष्टापत्त्या परिहरति, ग्रंथिभेदादिति ।

ग्रन्थिभेदात्पुराप्येवमिति चेत्तन्न विस्मर ।
अयमेव ग्रन्थिभेदस्तव तेन कृती भवान् ॥ २६५ ॥

हृदयस्य ग्रन्थिभेदात्पुराप्यविवेकदशायामपि असंगचिद्रूपत्वेन कूटस्थ एवं व्याध्यादिभिरपीडित एवेति वदसि चेत्तदस्माकमपीष्टापत्तिरेव । ततस्तदसंगत्वं न विस्मर । अयमेव कूटस्थस्यासंगत्वविवेक एव तव ग्रन्थिभेदः पाशनाशः । तेन

तद्ज्ञानेन भवान् कृती कृतकृत्यो भवति । कूटस्थस्यासंगत्वज्ञानमेव सर्वग्रन्थिभेद इत्यर्थः ॥ २६५ ॥

ज्ञान्यज्ञानिनोर्हृदयग्रन्थेर्भावाभावावेव वैषम्यहेतू इत्याह, नैवमिति ।

नैवं जानन्ति मूढाश्चेत्सोऽयं ग्रन्थिर्नचापरः ।
ग्रन्थितद्भेदमात्रेण वैषम्यं मूढबुद्धयोः ॥ २६६ ॥

यतो मूढाः एवं कूटस्थस्य नित्यासंगतां न जानान्ति अतोऽयं पूर्वोक्तोऽध्यासमूल इच्छाविशेष एव ग्रन्थिः, अपरो न । मूढबुद्धयोरज्ञानिज्ञानिनोर्ग्रन्थितद्भेदमात्रेण वैषम्यम् । ग्रन्थेस्सत्त्वे मूढत्वं तद्भेदे बुद्धत्वमिति वैषम्यम् ॥ २६ ॥

ज्ञान्यज्ञानिनोर्भेद एतत्कृत एव न तु प्रवृत्तिनिवृत्तिकृत इत्याह, प्रवृत्ताविति ।

प्रवृत्तौ वा निवृत्तौ वा देहेन्द्रियमनोधियाम् ।
न किंचिदपि वैषम्यमन्त्यज्ञानिविबुद्धयोः ॥ २६७ ॥

प्रवृत्तौ कर्मणामाचरणे, निवृत्तौ तदनाचरणे । स्पष्टमन्यत् ॥ २६७ ॥

तत्र दृष्टान्तमाह, व्रात्येति ।

व्रात्यश्रोत्रिययोर्वेदपाठापाठकृता भिदा ।
नाहारादावस्ति भेदस्सोऽयं न्यायोऽत्र योज्यताम् ॥ २६८ ॥

व्रात्य उपनयनादिसंस्कारहीनः । श्रोत्रियो वेदेषु शिक्षितस्सदाचारसंपन्नः । भिदा भेदः । स्पष्टमन्यत् ॥ २६८ ॥

ग्रंथिशून्यस्य ज्ञानिनो लक्षणं गीतावाक्येनाचष्टे, नेति । (गी. १८–१०)

न द्वेष्टि संप्रवृत्तानि न निवृत्तानि कांक्षति ।
उदासीनवदासीन इति ग्रन्थिभिदोच्यते ॥ २६९ ॥

ज्ञानी संप्रवृत्तान संप्राप्तानि दुःखानि न द्वेष्टि। निवृत्तानि सुखानि न कांक्षति। किं तूदासीनः प्रवर्तते। इतीयमेव ज्ञानिनो ग्रन्थिभिदा हृदयग्रन्थेरभाव उच्यते। सुखदुःखनिवृत्तिप्राप्तयोर्न ज्ञानी विकारमेतीति भावः॥ २६९॥

ननु ज्ञानान्तरमप्यौदासीन्यपरमिदं वाक्यम्, न तु ग्रन्थिभेदार्थबोधकमित्याशंक्य परिहरति, औदासीन्यमिति।

**औदासीन्यं विधेयं चेद्वच्छब्दव्यर्थता तदा।**
**न शक्ता अस्य देहाद्या इति चेद्रोग एव सः॥ २७०॥**

औदासीन्यमेव विधेयमेतद्वाक्येन बोध्यमित्युच्यते चेत्तदा वच्छब्दव्यर्थता उदासीनवदित्यत्र वच्छब्दस्य वैयर्थ्यं स्यात्। तत्र ह्युदासीनो भूत्वाऽऽसीन इति नोक्तम्। किं तूदासीनवदासीन इत्युक्तम्। तस्मादुदासीन इव दृश्यते। स्वतस्तु सर्वपाशविनिर्मुक्तत्वात्सुखदुःखाभ्यां न स्पृश्यते। अतो नेदं वाक्यमौदासीन्यपरं किंतु ग्रन्थिशून्यत्वे प्रमाणमित्यर्थः। ननु ज्ञानिनः पवृत्तिनिवृत्त्यभावे सामर्थ्याभाव एव कारणं न तु ग्रन्थ्यभाव इत्याशंक्याह, नेति। अस्य ज्ञानिनो देहाद्या देहेन्द्रियादयः प्रवृत्तिनिवृत्त्योर्न शक्ता असमर्था इति चेत्स शक्त्यभावो रोग एव रोगनिमित्तक एव न त्वसंगत्वज्ञाननिमित्तकः॥२७०॥

ब्रह्मज्ञानिनोऽसंगनिमित्तमौदासीन्यमशक्तिकृतमिति वदतां बुद्धिकौशलमुपहसति, तत्त्वबोधमिति।

**तत्त्वबोधं क्षयं व्याधिं मन्यन्ते ये महाधियः।**
**तेषां प्रज्ञाऽतिविशदा किं तेषां दुश्शकं वद॥ २७१॥**

ज्ञानिनस्तत्त्वबोधं तत्त्वज्ञाननिमित्तमसंगस्वभावं क्षयं व्याधिं राजयक्ष्मेति ये महाधियो मन्यन्ते तेषां प्रज्ञाऽतिविशदा अत्यन्तनिर्मला। तेषां दुश्शकं किमस्तीति वदेति सोपहासं वचः॥ २७१॥

ननु केवलमस्थाने परिहासोऽयं यतो ज्ञानिनामौदासीन्यं पुराणप्रसिद्धमिति चेद्ज्ञानिनोऽपि प्रवृत्त्यादेः श्रुतौ प्रतिपादनात्तन्नेत्याह, भरतादेरिति।

भरतादेरप्रवृत्तिः पुराणोक्तेति चेत्तदा ।
जक्षन् क्रीडन् रतिं विंदन्नित्यश्रौषीर्न किं श्रुतिम् ॥ २७२ ॥

भरतादेर्ज्ञानिनो जनस्यापि लोकव्यवहारेऽप्रवृत्तिः पुराणोक्ता पुराणप्रसिद्धेति चेत्तदा जक्षन् क्रीडन् रतिं विंदन्निति, "जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा वयस्यैर्वा नोपजनं स्मरन्निदं शरीरं" (छां. ८. १२. ३.) मिति, श्रुतिं नाश्रौषीः किम्? प्रवृत्तिप्रतिपादकं श्रौतं वाक्यं त्वया किं न श्रुतमित्यर्थः ॥ २७२ ॥

किंच तव शंकाऽपि पुराणतात्पर्यानभिज्ञतामूलिकानुभवविरुद्धा चेत्याह, नेति ।

न ह्याहारादि संत्यज्य भरताद्याः स्थिताः क्वचित् ।
काष्ठपाषाणवत्किंतु संगभीता उदासते ॥ २७३ ॥

स्पष्टः पूर्वार्धः । काष्ठपाषाणवदचेतनपदार्था इव न स्थिताः । किन्तु तत्र प्रवर्तन्त एवेत्यनुभवः । संगभीता उदासते औदासीन्येन वर्तन्ते । नान्तरीयकप्रवृत्तीतरप्रवृत्तिशून्या एव वर्तन्त इति पुराणतात्पर्यविषयीभूतोऽर्थ इति तात्पर्यम् ॥ २७३ ॥

निस्संगत्वमेव सर्वैर्मुमुक्षुभिरेष्टव्यमिति तदेव स्तौति, संगीति ।

संगी हि बाध्यते लोके निस्संगः सुखमश्नुते ।
तेन संगः परित्याज्यः सर्वदा सुखमिच्छता ॥ २७४ ॥

स्पष्टोऽर्थः ॥ २७४ ॥

ननु विषयाभिमानत्यागस्यैव ज्ञानिलक्षणत्वेऽन्तर्विषयाभिमानशून्येषु बहिरभिमानवद्व्यवहरत्स्वज्ञत्वं जनैः कथं व्यवह्रियत इत्याशंक्य परिहरति, अज्ञात्वेति ।

अज्ञात्वा शास्त्रहृदयं मूढो वक्त्यन्यथाऽन्यथा ।
मूर्खाणां निर्णयस्त्वास्तामस्मत्सिद्धान्त उच्यते ॥ २७५ ॥

शास्त्रहृदयं तत्त्वम् । अन्यथाऽन्यथा ज्ञानिनमज्ञत्वादिप्रकारैर्वक्ति व्यवहरति । स्पष्टमन्यत् ॥ २७५ ॥

वेदान्तसिद्धान्तस्वरूपमाह, वैराग्येति ।

**वैराग्यबोधोपरमाः सहायास्ते परस्परम् ।**
**प्रायेण सह वर्तन्ते वियुज्यन्ते क्वचित् क्वचित् ॥ २७६ ॥**

वैराग्यबोधोपरमाः वैराग्यं विषयेषु वीतरागत्वं बोधो ब्रह्मात्मनोरैक्यज्ञानम्, उपरमो विषयेभ्यो बुद्धिनिवृत्तिः, त एते परस्परमन्योन्यं सहायास्सहकारिणः । एते प्रायेण सह वर्तन्ते । क्वचित् क्वचिद्वियुज्यन्ते प्रत्येकमप्यवतिष्ठन्तीत्यर्थः ॥ २७६ ॥

प्रत्येकमवस्थितिः कुत अवसीयत इत्यत आह, हेत्विति ।

**हेतुस्वरूपकार्याणि भिन्नान्येषामसङ्करः ।**
**यथावदवगन्तव्यः शास्त्रार्थं प्रविविच्यता ॥ २७७ ॥**

एषां वैराग्यबोधोपरमाणां हेतुस्वरूपकार्याणि भिन्नानि । एवं च तेषां हेतुभेदात्स्वरूपभेदात्कार्यभेदाच्च भेदसिद्धिः । अतः प्रत्येकमप्यवस्थितिस्सिद्धा । तदाह, एषामसङ्कर इति । शास्त्रार्थं शास्त्राणां भावं प्रविविच्यता पुरुषेण एषां वैराग्यादीनां असङ्करो भेदो यथावदवगन्तव्यः । प्रायेण सहावस्थानमादायाभेदभ्रमो न कार्य इति तात्पर्यम् ॥ २७७ ॥

वैराग्यभेदोपरतीनां हेतुकार्यस्वरूपविचारः ।

वैराग्यस्य हेतुस्वरूपकार्याण्याह, दोषेति ।

**दोषदृष्टिर्जिहासा च पुनर्भोगेष्वदीनता ।**
**असाधारणहेत्वाद्या वैराग्यस्य त्रयोऽप्यमी ॥ २७८ ॥**

विषयेषु दोषदृष्टिः अनित्यत्वादिदोषपरिशीलनं वैराग्यस्य हेतुः । विषयभोगानां जिहासा हातुमिच्छा वैराग्यस्य स्वरूपम् । पुनर्भोगेषु विषयेष्वदीनता

प्रवृत्त्यभावस्तस्य कार्यम् । एवममी त्रयो वैराग्यस्यासाधारणहेत्वाद्याः । आद्यशब्देन स्वरूपकार्ये गृह्येते ॥ २७८ ॥

अथ बोधस्य हेत्वादय उच्यन्ते, श्रवणेति ।

**श्रवणादित्रयं तद्वत्तत्त्वमिथ्याविवेचनम् ।**
**पुनर्ग्रन्थेरनुदयो बोधस्यैते त्रयो मताः ॥ २७९ ॥**

श्रवणादित्रयं श्रवणमनननिदिध्यासनानि तद्वत्तत्त्वमिथ्याविवेचनं तत्त्वतो मिथ्यायाः पृथक्करणम् ब्रह्म सत्यं जगन्मिथ्येत्याकारकं ज्ञानमित्यर्थः । पुनर्हृदयस्य ग्रन्थेरनुदयोऽनुत्पत्तिस्तस्य कार्यम् । एवमेते त्रयः क्रमेण बोधस्य हेतुस्वरूपकार्याणीति मताः ॥ २७९ ॥

अनन्तरमुपरतेर्हेत्वादय उच्यन्ते, यमेति ।

**यमादिर्धीनिरोधश्च व्यवहारस्य संक्षयः ।**
**स्युर्हेत्वाद्या उपरतेरित्यसंकर ईरितः ॥ २८० ॥**

यमादिः आदिशब्देन नियमासनप्राणायामप्रत्याहारध्यानधारणसमाधयो गृह्यन्ते । धीनिरोधश्चित्तवृत्तेर्नियमनं, व्यवहारस्य संक्षयो नाशः, नैष्कर्म्यमिति यावत्, एवमुपरतेरेते क्रमशो हेत्वाद्याः स्युः । एवं हेत्वादीन्निरूप्य प्रतिज्ञातमसंकरमुपसंहरति, इतीति । इत्येवं तेषामसंकरो भेद ईरित उक्तः ॥ २८० ॥

वैराग्यबोधोपरमानां मध्ये प्रधानत्वं तत्त्वबोधस्येतरयोस्तु तदुपकारित्वमभिहितमित्याह, तत्त्वबोध इति ।

**तत्त्वबोधः प्रधानं स्यात्साक्षान्मोक्षप्रदत्वतः ।**
**बोधोपकारिणावेतौ वैराग्योपरमावुभौ ॥ २८१ ॥**

सुलभा पदयोजना । साक्षादितरसहायमनपेक्ष्य । ब्रह्माहमस्मीति ज्ञानस्यैव ब्रह्मभावाप्तिकारणत्वम् । "तमेवं विदित्वातिमृत्युमेति नान्यः पंथा विद्यतेऽयनाये"ति श्रुतेः । (श्वे. ३. ८.) साक्षात्फलजनकत्वेन तस्य प्राधान्यम् । "ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन" (मुं. १. २. १२.) शान्तो दान्त उपरतस्तितिक्षुस्समाहितो

भूत्वाऽऽत्मन्येवात्मानं पश्येदि"ति (मुं. १. २. १३.) श्रुत्योरितरयोः मोक्षे साक्षात्कारणस्य बोधस्योपकारित्वम् ॥ २८१ ॥

प्रायेण सहभावे कचित्प्रत्येकावस्थाने च कारणमाह, त्रय इति ।

**त्रयोऽप्यत्यन्तपक्वाश्चेन्महतस्तपसः फलम् ।**
**दुरितेन क्वचित्किंचित्कदाचित्प्रतिबध्यते ॥ २८२ ॥**

पूर्वार्धः स्पष्टः । दुरितेन पूर्वजन्मार्जितेन कचिद्यस्मिन् कस्मिन् वा पुरुषे कदाचिद्यदा कदापि वा किंचित्त्रयाणां मध्ये यत्किंचित्प्रतिबध्यते । तेन यस्य प्रतिबंधकं दुरितं तत्र तत्परिहारेणेतरयोर्द्वयोः स्थितिः । यत्र द्वयोः प्रतिबंधकं दुरितं तत्रेतरस्यावस्थानमिति प्रत्येकावस्थानमपि सिद्धम् ॥ २८२ ॥

तेषां प्रत्येकमवस्थाने तारतम्येन फलविशेषमाह, वैराग्येति ।

**वैराग्योपरती पूर्णे बोधस्तु प्रतिबध्यते ।**
**यस्य तस्य न मोक्षोऽस्ति पुण्यलोकस्तपोबलात् ॥ २८३ ॥**

यस्य वैराग्योपरती पूर्णे किंतु तत्त्वस्य बोधः दुरितबलेन प्रतिबध्यते निरुध्यते चेत् तस्य मोक्षो नास्ति । किंतु तपोबलाद्ब्रह्मादिपुण्यलोकोऽस्ति । पापपुण्यकृतान् लोकानुषित्वे (गी. ६. ४१.) ति, स्मृतेः ॥ २८३ ॥

सतीतरयोः प्रतिबद्धयोः फलमाह, पूर्ण इति ।

**पूर्णे बोधे तदन्यौ द्वौ प्रतिबद्धौ यदा तदा ।**
**मोक्षो विनिश्चितः किन्तु दृष्टदुःखं न नश्यति ॥ २८४ ॥**

पूर्वार्धः स्पष्टः । तदा देहपातानन्तरं मोक्षो विनिश्चितः । किंतु दृष्टदुःखं प्रत्यक्षेणानुभूयमानं दुःखं व्यावहारिकं तापत्रयं न नश्यति नोपशाम्यति । जीवन्मुक्तिसुखं, तत्र नास्तीति भावः ॥ २८४ ॥

परिपाकावस्थां फलमुखेन सार्धश्लोकेन दर्शयति, ब्रह्मेति ।

ब्रह्मलोकतृणीकारो वैराग्यस्यावधिर्मतः ।
देहात्मवत्परात्मत्वदार्ढ्ये बोधस्समाप्यते ॥ २८५ ॥

ब्रह्मलोकतृणीकारः ब्रह्मलोके यत्सुखं तस्यापि तृणवन्निरसनं वैराग्यस्यावधिस्सीमेति मतः । देहात्मवत् यथाऽज्ञानदशायां देह एवात्मेति दृढं ज्ञानं तथैव परात्मत्वदार्ढ्ये ब्रह्माहमस्मीति दृढज्ञाने बोधः समाप्यते ॥ २८५ ॥

सुप्तिवद्विस्मृतिस्सीमा भवेदुपरमस्य हि ।
दिशाऽनया विनिश्चेयं तारतम्यमवान्तरम् ॥ २८६ ॥

सुप्तिवद्यथा सुप्तौ सर्वव्यवहारोपशमस्तद्वत्सर्वव्यवहारस्य विस्मृतिरुपरमस्य सीमा भवेत् । एवं परिपाकावस्थां प्रदर्श्य तत्तत्पूर्वावस्थातस्तेषां तारतम्यमेतन्मार्गेणैव स्वबुद्ध्या निश्चेयमित्याह, दिशेति । अनया दिशा एतन्मार्गेणावान्तर सम्यग्वैराग्यबोधोपरमाणां तारतम्यं न्यूनाधिकभावं विनिश्चेयं स्वबुद्ध्योहनीयम् ॥ २८६ ॥

ननु तत्त्वबोधवतामपि व्यवहारे वैषम्यदर्शनात् ज्ञानस्य मुक्तिहेतुत्वमसिद्धमित्याशंक्याह, आरब्धेति ।

आरब्धकर्मनानात्वाद्बुद्धानामन्यथाऽन्यथा ।
वर्तनं तेन शास्त्रार्थे भ्रमितव्यं न पंडितैः ॥ २८७ ॥

आरब्धकर्मनानात्वात् बुद्धानामपि वर्तनमन्यथाऽन्यथा नानाप्रकारम् । तत्तत्फलानुरोधेन बहुप्रकारमित्यर्थः । तेन फलभेदेन प्रवर्तनभेदस्योपपन्नत्वात्प्रवृत्तेः फलनाशपर्यन्तत्वात् सकलफलनाशे बंधकप्रवृत्तेस्सर्वात्मना नाशान्मुक्तिरिति क्रम इति ज्ञानात्कैवल्यमिति शास्त्रार्थे पंडितैर्न भ्रमितव्यं न विप्रतिपत्तव्यम् । बोधस्य मुक्तिहेतुत्वेऽप्यन्यस्य प्रतिबंधकस्य सद्भावे बोधफलीभूतं कैवल्यं न सिध्यति । यदा प्रतिबंधकनिवृत्तिस्तदा कैवल्यमिति नान्वयव्यभिचार इति भावः ॥ २८७ ॥

नन्वेवं सति विदेहमुक्तिरेव मुक्तिरित्यभ्युपेयम् । कथं जीवन्मुक्तिर्घटते ? तस्यादेहपातं प्रतिबंधककर्मफलस्य सत्वात् । प्रतिबंधकाभावविशिष्टस्य बोधस्य तदानीमभावेन मुक्तेरनुदयात् । तदानीं मुक्तित्वव्यवहारासंगतेरित्याशंकां परिहरति, स्वेति ।

स्वस्वकर्मानुसारेण वर्ततां ते यथा तथा ।
अवशिष्टस्सर्वबोधः समा मुक्तिरिति स्थितिः ॥ २८८ ॥

ते ज्ञानिनः स्वस्वकर्मानुसारेण यथा तथा येन केनापि प्रकारेण वर्ततां नाम । सर्वबोधस्सर्वेषां बोधोऽपरोक्षात्मज्ञानमविशिष्टो भेदशून्यः समान एवेत्यर्थः । तेषां मुक्तिर्ब्रह्मभावापत्तिस्समेति च स्थितिश्शास्त्रनिर्णयः । अतो मुक्तिरपि समेति भावः । एवं च मुक्तिर्विषयसंगविमोक एव न तु सर्वविषयनाश इत्याकूतम् ॥२८८॥

प्रकरणस्य तात्पर्यमादावुदाहृतदृष्टान्तस्मरणपूर्वकं संक्षेपत आह, जगदिति ।

जगच्चित्रं स्वचैतन्ये पटे चित्रमिवार्पितम् ।
मायया तदुपेक्ष्यैव चैतन्यं परिशेष्यताम् ॥ २८९ ॥

यथा धौते पटे चित्रकारेणार्पितं चित्रमिव स्वचैतन्ये स्वमेव चैतन्यं तस्मिन् जगच्चित्रं नानावर्णसंयुक्तचित्रसदृशं जगन्माययार्पितम् । तदुपेक्ष्यैव नेति नेतीति निरस्यैव न तु पृथक्कृत्य चैतन्यं शुद्धं परिशेष्यताम् । रागद्रव्याणां पृथक्कारेण शुद्धपट एव विवेचकेन यथा ज्ञायते तद्वच्चैतन्यं परिशेष्यतामित्यर्थः । पृथक्करणे च चित्रस्थविग्रहादीनां विविक्तपटज्ञातुरभानं केवलपटस्य च भानं यथा तद्वत् ज्ञानिनो विविक्तचैतन्यस्य भानं जगदभानमिति भावः ॥ २८९ ॥

प्रकरणाभ्यासफलकथनेनोपसंहरति, चित्रेति ।

चित्रदीपमिमं नित्यं येऽनुसंदधते बुधाः ।
पश्यन्तोऽपि जगच्चित्रं ते मुह्यन्ति न पूर्ववत् ॥ २९० ॥

यथा पटे चित्रकारेण रंजितं चित्रं दीपेन प्रकाशितं भवति तथा चैतन्ये माययाऽर्पितं जगच्चित्रं यस्मिन् प्रकरणे प्रकाशितं तदिमं चित्रदीपनामकं प्रकरणं ये बुधा नित्यमनुदिनं मनस्यनुसंदधते ते इदं जगच्चित्रं पश्यन्तोऽपि पूर्ववदज्ञान-दशायामिव न मुह्यन्ति न भ्रान्तिमाप्नुवन्ति ॥ ३९० ॥

इति

श्रीमत्परमहंसपरिव्राजकाचार्यशृंगेरीश्रीविरूपाक्षश्रीविद्याशङ्करपदमावेशप्रकाशित जगद्गुरु श्रीकल्याणानन्दभारतीमान्ताचार्यात्यन्तप्रियान्तेवासिनात्रि गोत्रसमुद्भूतेन **लिङ्गनसोमयाजिना** विरचितेयं चित्रदीप-प्रकरणस्य कल्याणपीयूषव्याख्या समाप्ता ॥

इति चित्रदीपप्रकरणम् ।

*

अथ

# कल्याणपीयूषव्याख्यासमेता पंचदशी

## तृप्तिदीप प्रकरणम् ॥ ७ ॥

प्रकरणविषयीभूतश्रुतिकथनम् ।

एवं शास्त्रार्थं सदृष्टान्तं संबोध्य तद्बोधफलं दर्शयितुमिदं प्रकरणमारभ्यते । तत्त्वज्ञानस्य फलं तृप्तिरेवेति बोधिकां श्रुति (बृ. ४. ४. १२.) मुदाहरति, आत्मानमिति ।

**आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।**
**किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् ॥ १ ॥**

पूरुषो वैदिको दीर्घः जीवोऽहमयं स्वयंप्रकाशं परब्रह्मास्मीत्यात्मानं स्वयमेव विजानीयाच्चेत् यदि जानाति तदाऽप्तकामत्वात् किं भोग्यजातमिच्छन् भोक्तभावात् कस्य कामाय शरीरं परितप्यमानं स्वयमनु अनुसृत्य संज्वरेत् तप्येत? जगतस्तदन्तःपातिनोः काम्यकामुकयोश्च मिथ्यात्वेन निरासे निःस्नेहदीपवत्संतापः शनैः शाम्यतीति १३६ श्लोके ग्रंथकर्ता व्याख्यातेयं श्रुतिः ।

अर्थाच्छ्रुतेः पूर्वार्धे, (१) पुरुषः, (२) अयमात्मा, (३) अस्मीति विज्ञानमिति, त्रयो विषया विचार्या भवन्ति । तत्र पुरुषशब्दो द्वितीयादिषष्ठान्तश्लोकेषु, अयमात्मेति, सप्तमादिद्वाविंशान्तेषु श्लोकेषु अस्मीति, एकोनसप्ततितमादिषण्णवतिश्लोकेषु च क्रमशो विचारिताः । उत्तरार्धे, (१) इच्छा, (२) भोक्ता, (३) तस्य संतापश्च, विचार्यं विषयत्रिकम् । तत्रेच्छाशब्दार्थः पंचत्रिंशदुत्तरशततमाद्येकनवत्युत्तरशततमान्तेषु (१३५–१९१) श्लोकेषु, भोक्तृशब्दार्थः द्विनवत्युत्तरशततमाद्ये-

कविंशत्युत्तरद्विशततमान्तेषु श्लोकेषु (१९२–२२१), शरीरस्य तापत्रयस्वरूपं द्वाविंशत्युत्तरद्विशततमादिपंचाशदुत्तरद्विशततमान्तेषु श्लोकेषु च । (२२२–२५०), विवृतः । एवं विचारेण कृतं कृत्यं प्राप्तं प्रापणीयमित्याकारिका प्रकरणविषयभूता तृप्तिरेकपंचाशदुत्तरद्विशततमाद्यष्टनवत्युत्तरद्विशततमान्तेषु (२५१–२९८) श्लोकेषु, प्रदर्श्यते ॥ १ ॥

श्रुतिबोधिता तृप्तिरुपदर्शितश्रुत्यभिप्रायनिश्चयमन्तरा न स्फुटीभवतीति तात्पर्येण श्रुतिव्याख्यामारभमाणस्तृप्तिभवनफलकं व्याख्यानं प्रतिजानीते, अस्या इति ।

**अस्याः श्रुतेरभिप्रायः सम्यगत्र विचार्यते ।**
**जीवन्मुक्तस्य या तृप्तिः सा तेन विशदायते ॥ २ ॥**

स्पष्टोऽर्थः । या शास्त्रानुभवप्रसिद्धा तृप्तिः ॥ २ ॥

तद्गतपुरुषशब्दार्थविचारः ।

श्रुतिगतपुरुषशब्दार्थविवक्षया संक्षेपतः सृष्टिप्रशंसां निक्षिपति, मायेति ।

**मायाभासेन जीवेशौ करोतीति श्रुतत्वतः ।**
**कल्पितावेव जीवेशौ ताभ्यां सर्वं प्रकल्पितम् ॥ ३ ॥**

सुलभा पदयोजना । गुणत्रयात्मकप्रकृतेर्मायाविद्याभ्यां द्वैविध्यमिति तत्र मायाप्रतिबिंबित ईश्वरोऽविद्यावशगो जीव इति जीवेशयोः कल्पितत्वं च तत्त्वविवेकप्रकरणे सुष्ठूक्तम्, पंचदशादि सप्तदशान्तेषु, श्लोकेषु, चित्रदीपे २१३–२३६ श्लोकेषु च ॥ ३ ॥

जीवेश्वरसृष्टिं विभागेन स्मारयति, ईक्षणेति ।

**ईक्षणादिप्रवेशान्ता सृष्टिरीशेन कल्पिता ।**
**जाग्रदादिविमोक्षान्तः संसारो जीवकल्पितः ॥ ४ ॥**

अयमेवश्लोकश्चित्रदीपे त्रयोदशोत्तरद्विशततमे (२१३) श्लोकरूपेण सविस्तरं व्याख्यात इति नात्राभ्यस्यते ॥ ४ ॥

अथ पूरुषशब्दो व्याख्यायते, भ्रमेति ।

**भ्रमाधिष्ठानभूतात्मा कूटस्थासंगचिद्वपुः ।**
**अन्योन्याध्यासतोऽसंगधीस्थजीवोऽत्र पूरुषः ॥ ५ ॥**

कूटस्थासंगचिद्वपुः कूटस्थो निर्विकारः असंगः चिद्वपुः ज्ञानस्वरूपश्च भ्रमाधिष्ठानभूतात्मा भ्रमस्य देहेन्द्रियादिधर्माध्यासेनान्यथाग्रहणस्याधिष्ठानभूतात्मा आधारभूतः आत्मा स्वयमसंगो निर्विकारश्च बुद्धौ चिदाभासरूपेण प्रतिबिंबितोऽन्योन्याध्यासत अन्यस्मिन्नन्यमन्यधर्माश्चारोप्येतरेतराविवेकतया तादात्म्याध्यासेन असंगधीस्थजीवः स्वेन संगरहितायां धियि यस्तिष्ठति स जीवशब्दाभिधानोऽत्रास्यां श्रुतौ पूरुष इत्युच्यते । पुरि देहे शेते इति पुरुषः । "पुरिशति शेते" (बृ. २. १. १९.) इति श्रुतेः । पुरुष एव पूरुषः । कूटस्थचैतन्यस्य बुद्धौ प्रतिबिंब एव जीव इत्युच्यते ॥ ५ ॥

ननु बुद्धिस्थचिदाभासस्यैव जीवत्वम् । किं तत्राधिष्ठानवैशिष्ट्येनेत्याशंकां परिहरति, सेति ।

**साधिष्ठानो विमोक्षादौ जीवो विक्रियते न तु ।**
**केवलो निरधिष्ठानविभ्रान्तेः क्वाप्यसिद्धितः ॥ ६ ॥**

साधिष्ठानः अधिष्ठानं कूटस्थो यस्मिन्नन्यधर्मा अध्यस्यन्ते तेन सहितस्तद्विशिष्टो जीवश्चिदाभासरूपो विमोक्षादौ विमोक्ष आत्यन्तिकनिःश्रेयसं, आदिशब्देन स्वर्गाद्युत्तमलोका गृह्यन्ते, तेषु तेषामवाप्तावधिक्रियते । ब्रह्मसाक्षात्कारे कर्मसंपादिताभ्युदयस्वरूपस्वर्गादिके वा कूटस्थविशिष्टस्यैव चिदाभासस्याधिकारः । न तु केवलो निरधिष्ठानोऽधिक्रियते । तत्र हेतुमाह, निरधिष्ठान इति । निरधिष्ठानविभ्रान्तेरधिष्ठानरहितस्यारोप्यमात्रस्य भ्रान्तेस्तन्मात्रगोचराया भ्रान्तेः क्वापि यत्र कुत्राप्यसिद्धितोऽविद्यमानत्वात् । लोकेऽपि रज्जुमनवगाह्य सर्पभ्रान्तिर्न दृश्यते । तद्वदिहापि कूटस्थमनवगाह्य चिदाभासमात्रविषयिणी भ्रान्तिर्नोदेति । एवं जीवभ्रान्तिरधिष्ठानाभासोभयावगाहिन्येव, न तु केवलाभासगोचरा । अतो भ्रान्तिविषयो जीवोऽधिष्ठानविशिष्टाभासरूप इत्यवश्यं वक्तव्यमिति भावः ॥ ६ ॥

एवं भ्रान्तिस्वरूपसामान्यनिरूपणेनाधिष्ठानाविशिष्टस्य जीवत्वमिति निरूप्य विशेषभ्रान्तावपि तत्साहित्यं दर्शयति श्लोकद्वयेन, अधिष्ठानेति ।

**अधिष्ठानांशसंयुक्तं भ्रमांशमवलंबते ।**
**यदा तदाहं संसारीत्येवं जीवोऽभिमन्यते ॥ ७ ॥**

यदा जीवोऽधिष्ठानांशसंयुक्तं अधिष्ठानांशः कूटस्थस्तेन संयुक्तं भ्रमांशमसत्यात्मकं चिदाभासोपेतमवलंबते देहद्वयं स्वीकरोति स्वस्वरूपत्वेनांगीकरोति तदा जीवः अहं संसारीत्यभिमन्यते अभिमानवान् भवति । जीवस्यावस्थाद्वयं वर्तते, अहं संसारीति ज्ञानमेकम्, असंगचिद्रूपमित्यन्यत् । यदि जीवस्वरूपं चिदाभासमात्रमेव न तु तत्र कूटस्थस्यान्तर्भावस्तदा चिदाभासांशस्य मिथ्यात्वात्परित्यागावस्थायां जीवस्य सर्वथा विलयादहमसंगश्चिद्रूप इति लोके ज्ञानिनां व्यवहाराभाव एवेति भावः ॥ ७ ॥

अस्मीति शब्दार्थविचारः ।

जीवस्याहं संसारीत्यभिमानः कदा नश्येदित्यत आह भ्रमेति ।

**भ्रमांशस्य तिरस्कारादधिष्ठानप्रधानता ।**
**यदा तदा चिदात्माऽहमसंगोऽस्मीति बुध्यते ॥ ८ ॥**

यदा कूटस्थचिदाभासांशयोर्मिथ्याभूतस्य भ्रमांशस्य तिरस्काराद्विवेचनापूर्वकनिरसनात् । अधिष्ठानप्रधानता अधिष्ठानस्य कूटस्थांशस्य स्वरूपत्वं जीवेन स्वीक्रियते तदाहं चिदात्मा असंगोऽस्मीति बुध्यते जानाति ॥ ८ ॥

अधिष्ठानस्यापि जीवस्वरूपान्तरगतत्वेऽहं संसार्यहमसंगोऽस्मीति प्रतीतिः प्रमाणत्वेन प्रदर्शिता । तत्राहमसंगोऽस्मीति प्रतीतिः प्रमैव भवितुं नार्हति, असंगेऽहंकारविशिष्टतायाः बाधितत्वादित्याशंक्य परिहरति, नेति ।

**नासंगेऽहंकृतिर्युक्ता कथमस्मीति चेच्छृणु ।**
**एको मुख्यो द्वावमुख्यावित्यर्थस्त्रिविधोऽहमः ॥ ९ ॥**

असंगे चिदात्मन्यहंकृतिरहंकारो न युक्ता । तथा सत्यस्मीति व्यवहारः कथं युज्यते? अहमस्मीति शब्दाभ्यामहंकारविशिष्टस्यैव प्रतीत्या तद्भिन्ते कथं तादृशशब्दप्रयोगः? इत्युच्यते चेत्, समाधत्ते, शृण्विति । अहमोऽस्मच्छब्दस्य एको मुख्योऽर्थः द्वावमुख्यावित्यर्थस्त्रिविधः त्रिप्रकारकः ॥ ९ ॥

अत्र त्रैविध्यस्य कोपयोग इत्याशंकां मनसि निधाय द्वाभ्यामुपयोगं दर्शयति, अन्योन्येति ।

**अन्योन्याध्यासरूपेण कूटस्थाभासयोर्वपुः ।**
**एकीभूय भवेन्मुख्यस्तत्र मूढैः प्रयुज्यते ॥ १० ॥**

कूटस्थाभासयोर्वपुः स्वरूपमन्योन्याध्यासरूपेणोभयोस्तादात्म्याध्यासरूपेणैकीभूय अविद्यया मुख्योऽर्थो भवेत् । कूटस्थचिदाभासयोर्विवेकज्ञानशून्यैर्मूढैः प्रयुज्यत इति तत्र प्रयुज्यते । ज्ञानिनोऽपि विवेकोदयात्पूर्वं मूढत्वाविशेषादत्रत्यमूढशब्देनावस्थाभेदेन तेऽपि संगृहीताः । अतोऽयमर्थः सार्वजनीनव्यवहारविषय इति मुख्य इत्युच्यते ॥ १० ॥

अनन्तरं मुख्यार्थमाह, पृथगिति ।

**पृथगाभासकूटस्थावमुख्यौ तत्र तत्त्ववित् ।**
**पर्यायेण प्रयुङ्क्तेऽहंशब्दं लोके च वैदिके ॥ ११ ॥**

आभासकूटस्थौ पृथक् प्रत्येकतोऽस्मच्छब्दार्थत्वेन विवेकतः तत्र तत्तदर्थे तत्त्वविदहंशब्दं लोके लोकव्यवहारे वैदिके च पर्यायेण कादाचित्कतया प्रयुङ्क्ते। भिन्नार्थप्रयोगस्य कादाचित्कत्वोक्तया एकीभूतार्थेऽपि स प्रयुङ्क्त इति सूचितम् । एतेनैतदर्थयोरसार्वजनीनत्वादमुख्यार्थत्वं लोके इति सार्वजनीनव्यवहारविषये प्रवाहरूपे गंगायां जलमिति व्यवहारो मुख्य इति प्रयोजनापेक्षया कतिपयजनव्यवहारविषये तीररूपार्थे गंगायां घोष इति व्यवहारोऽमुख्य इति च व्यवस्था दृश्यते । ज्ञानिनो ब्रह्माहमस्मीत्यादिव्यवहारेऽहंशब्देन कूटस्थमात्रं बुध्यते । अहं ब्रह्म जानामीत्यत्र तस्य ब्रह्माभिन्नतया भेदनिबंधनकर्तृकर्मव्यपदेशो बाधित एव

स्यात् । एकीभूतस्य भेदे तदानीं शुद्धब्रह्मणो ज्ञानाभावेन ब्रह्म जानामीति व्यवहारानुपपत्तेः । अतश्चिदाभासमात्रमेवाहमर्थ इत्यभ्युपेयम् ॥ ११ ॥

कूटस्थचिदाभासयोरर्थयोः प्रत्येकमहं शब्दप्रयोगं द्वाभ्यां दर्शयति, लौकिकेति ।

लौकिकव्यवहारेऽहं गच्छामीत्यादिके बुधः ।
विविच्यैव चिदाभासं कूटस्थात्तं विवक्षति ॥ १२ ॥

बुधः कूटस्थचिदाभासयोर्विवेकज्ञानवानहं गच्छामीत्यादिके लौकिकव्यवहारे कूटस्थाच्चिदाभासं विविच्यैव पृथक्कृत्यैव तं चिदाभासं विवक्षति ॥१२॥

तत्र प्रथमेन चिदाभासस्यामुख्यार्थत्वं विशदय्याद्य कूटस्थस्यामुख्यार्थत्वं विशदयति, असंग इति ।

असंगोऽहं चिदात्माऽहमिति शास्त्रीयदृष्टितः ।
अहंशब्दं प्रयुङ्क्तेऽयं कूटस्थे केवले बुधः ॥ १३ ॥

अयं बुधः शास्त्रीयदृष्टितः कूटस्थो नित्यः चिदाभासो मायाकल्पित इत्याकारकवेदान्तार्थजन्यज्ञानतः चिदाभासाद्विवेचिते केवले कूटस्थे "अहं कूटस्थोऽसंगोऽहं चिदात्मे"त्यादावहंशब्दं प्रयुङ्क्ते ॥ १३ ॥

नन्वहं ब्रह्मास्मीति ज्ञानं किमर्थं केनापेक्ष्यते ? अज्ञाननिवृत्त्यर्थं कूटस्थेनेति चेन्न । ज्ञानित्वाज्ञानित्वयोरुभयोरप्यभावेनाज्ञाननिवृत्तेरनपेक्षणात्, ज्ञानित्वस्यासंभवात् । आभासेनेति चेन्न । तस्य कूटस्थाभेदस्य सर्वथा बाधितत्वेनास्मीतिपदबोधितैक्यस्यासंभवादित्याशंकते, ज्ञानिताज्ञानितेति ।

ज्ञानिताज्ञानिते त्वात्माभासस्यैव न चात्मनः ।
तथा च कथमाभासः कूटस्थोऽस्मीति बुध्यताम् ॥१४॥

ज्ञानिताज्ञानिते विद्याविद्ये त्वात्माभासस्य चिदाभासस्य तु धर्मौ, न चात्मनः । तथा सति कूटस्थादन्य आभासश्चिदाभासोऽहं कूटस्थोऽस्मीति कथं बुध्यतां जानीताम् ॥ १४ ॥

चिदाभासस्य कूटस्थातिरेकेणावर्तनेनाभेद उपपद्यत इति समाधत्ते, नेति।

नायं दोषश्चिदाभासः कूटस्थैकस्वभाववान्।
आभासत्वस्य मिथ्यात्वात्कूटस्थत्वावशेषणात्॥ १५॥

अयं दोषो न। कुतः? चिदाभासः कूटस्थैकस्वभाववान् कूटस्थेनाभिन्नस्वभाववान्। ततो नातिरिक्तः। तर्हि कूटस्थवदयमपि नित्यः स्यादिति न वाच्यम्। आभासत्वस्य मिथ्यात्वात् कूटस्थत्वावशेषणाच्च आभासत्वस्य प्रतिबिंबभूतस्य चिदाभासस्य मिथ्यात्वात्, कूटस्थस्वरूपस्य सत्यतया परिशेषणाच्च। उपाधिसत्ताधीनसत्ताक उपाधिनाशे विनश्यति। यथा दर्पणाधीनः प्रतिबिंबः। तद्वदयमपि चिदाभास उपाधिनाशाधीननाशकत्वात्तन्नाशे विनश्यति। बिंबभूतः कूटस्थस्त्ववशिष्यत इति भाव.॥ १५॥

तर्हि कूटस्थोऽहमित्याकारकं चिदाभासस्य संसरापनोदकं ज्ञानमपि मिथ्यैव स्यादित्युक्तेऽस्माकमपीष्टापत्तिरेवेत्याह, कूटस्थोऽस्मीति।

कूटस्थोऽस्मीति बोधोपि मिथ्या चेन्नेति को वदेत्।
न हि सत्यतयाऽभीष्टं रज्जुसर्पविसर्पणम्॥ १६॥

कूटस्थोऽस्मीति चिदाभासनिष्ठो बोधः। स्पष्टमन्यत्। आरोपितस्य मिथ्यात्वे तदाश्रयभूतस्य क्रियाजातस्यापि तत्त्वमेवेति भावः॥ १६॥

ननु भ्रमांशस्य तिरस्काराच्चिदात्माहमसंगोस्मीति बुध्यत इत्युक्तमष्टमे श्लोके। कूटस्थोऽहमिति ज्ञानस्य मिथ्यात्वेन तेन कथं संसारस्य निवृत्तिरित्याशंक्याह, तादृशेति।

तादृशेनापि बोधेन संसारो हि निवर्तते।
यक्षानुरूपो हि बलिरित्याहुर्लौकिका जनाः॥ १७॥

सुगमा पूर्वार्धपदयोजना। यथा स्वप्नव्याघ्रदर्शनेन निद्रानिवृत्तिर्भवति। तत्र लौकिकाभाणकेनोपपत्तिमाह, यक्षेति। यक्षे यादृशं निकृष्टत्वं तादृश-

निकृष्टबलिदानेन तस्य तृप्तिरिति तस्याशयोऽवस्तुभूतस्यावस्तुनैव निवृत्तिरिति भावः ॥ १७ ॥

प्रतिपादितार्थे फलप्रदर्शनपूर्वकमुपसंहरति, तस्मादिति ।

तस्मादाभासपुरुषः स कूटस्थो विविच्य तम् ।
कूटस्थोऽस्मीति विज्ञातुमर्हतीत्यभ्यधाच्छ्रुतिः ॥ १८ ॥

तस्मात् यस्माच्चिदाभासस्य यथार्थं स्वरूपं कूटस्थ एव तस्मादाभासपुरुषश्चिदाभासः स कूटस्थः । तं कूटस्थं चिदाभासाद्विविच्य विभज्याऽहं कूटस्थोस्मीति विज्ञातुं अधिष्ठानभूतकूटस्थांशः सत्यः आरोपितो भ्रमांशोऽनृत इति च विज्ञातुमर्हतीत्यात्मानं चेद्विजानीयादयमस्मीतिपूरुष" इति श्रुतिरभ्यधादवोचत् ॥१८॥

श्रुतिगताऽयंशब्दार्थविचारः ।

एव "मस्मि पूरुष" इति शब्दद्वयस्यार्थं प्रतिपाद्य श्रुतिगतायंशब्दप्रयोगाभिप्रायमाह, असंदिग्धेति ।

असंदिग्धार्थविपर्यस्तबोधो देहात्मनीक्ष्यते ।
तद्वदत्रेति निर्णेतुमयमित्यभिधीयते ॥ १९ ॥

लौकिकजनस्य देहात्मनि देहात्मविषये यथा असंदिग्धार्थविपर्यस्तबोधः असंदिग्धः तत्तदभावद्वयकोटिद्वयावगाहि ज्ञानं, संशयः तदभावमात्रावगाहि ज्ञानं, विपर्ययः तद्भिन्नो बोधः ईक्ष्यतेऽनुभूयते, तद्वदत्र प्रत्यगात्मनि संदेहविपर्ययरहितो बोध इति निर्णेतुमयमिति शब्दोऽभिधीयते प्रयुज्यते । पामरस्य यथा देह एवात्मेति दृढतमं ज्ञानं तथैव कूटस्थे दृढतमं ज्ञानमत्र विवक्षितमिति प्रदर्शनायायंशब्दः प्रयुज्यत इत्यभिप्रायः ॥ १९ ॥

अस्मिन्नर्थे आचार्यपादानामुपदेशसाहस्रीवाक्यमुदाहरति, देहेति ।

देहात्मज्ञानवत् ज्ञानं देहात्मज्ञानबाधकम् ।
आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते ॥ २० ॥

देहात्मज्ञानबाधकं देह एवात्मेति ज्ञानस्य बाधकं प्रतिबंधकं देहात्मज्ञानवत् देह एवात्मेत्यसंदिग्धमविपर्यस्तं यत् ज्ञानं तदिवात्मन्येव शुद्धात्मन्येव दृढतमं ब्रह्माभिन्नत्वेन ज्ञानं यस्य जिज्ञासोर्भवेत् स नेच्छन्नपि मोक्षेच्छारहितोऽपि मुच्यते। देहात्मज्ञानवद्दृढतरेण ब्रह्मात्मज्ञानेन संसारहेतुदेहात्मज्ञानस्य बाधितत्वाद्वश्यं मुक्तो भवतीति भावः ॥ २० ॥

इदमस्तु सन्निकृष्टमित्यनेनेदमापरोक्षस्यैव परामर्शादेतावत्पर्यन्तं कूटस्थस्यापरोक्षज्ञानाभावात्कथमयमित्यनेन परामर्श इत्याशंक्य समाधत्ते, अयमिति।

**अयमित्यपरोक्षत्वमुच्यते चेत्तदुच्यताम्।**
**स्वयंप्रकाशचैतन्यमपरोक्षं सदा यतः ॥ २१ ॥**

अयमस्मीतिपूरुष इत्यत्रायमिति शब्देन यथाऽयं घट इति स्थले घटस्य प्रत्यक्षत्वं तथैवात्मनोऽप्यपरोक्षत्वमुच्यते चेत् प्रसज्यत इति चेत् तदपरोक्षत्वमुच्यताम् प्रसज्यतां नाम, इष्टापत्तेः। इष्टापत्तिं दर्शयति, स्वयमिति। यतः स्वयंप्रकाशचैतन्यं साधनानन्तरमनपेक्षं स्वयं भानरूपं तत्कूटस्थचैतन्यं सदाऽपरोक्षमेव। एतावत्पर्यन्तं कूटस्थः परोक्ष इति तव ज्ञानं भ्रमः स्वयंप्रकाशे पारोक्ष्यासंभवात् ॥ २१ ॥

आत्मनः स्वप्रकाशचिद्रूपत्वेन तद्ज्ञानस्य नित्यापरोक्षत्वं सिध्यति। अयमितीदंशब्दस्वारस्यप्रतिपादनेनाऽत्रात्मज्ञानस्य शाब्दत्वलाभात्परोक्षत्वमिति च सिध्यति। अपरोक्षस्यैवात्मज्ञानत्वेन तद्भिन्नस्य परोक्षज्ञानस्याज्ञानत्वमित्यप्यायाति। एवं च विरुद्धद्विकं कथं घटत इत्याशंक्य समाधत्ते, परोक्षमिति।

**परोक्षमपरोक्षं च ज्ञानमज्ञानमित्यदः।**
**नित्यापरोक्षरूपेऽपि द्वयं स्याद्दशमे यथा ॥ २२ ॥**

परोक्षमपरोक्षं ज्ञानमज्ञानमित्येतद्द्विकद्वयं नित्यापरोक्षरूपेऽपि स्यात्। अतः एतद्द्विके विरुद्धे इति भावः। एतयोर्द्विकयोरविरोधं दृष्टान्तेन दर्शयति, दशमे यथेति। दशमे दशमस्त्वमसीति वाक्यस्थले यथा परोक्षत्वापरोक्षत्वयोर्ज्ञानाज्ञानयोश्च दर्शनात् स्वरूपतो विरोधेऽपि रूपान्तरेणाविरोधोऽभ्युपेय एवेति भावः ॥ २२ ॥

दृष्टान्तं विवृणोति, नवेति ।

नवसंख्याहृतज्ञानो दशमो विभ्रमात्तदा ।
न वेत्ति दशमोऽस्मीति वीक्षमाणोऽपि तान्नव ॥ २३ ॥

गणनायां नवसंख्याहृतज्ञानः नवसंख्ययाऽपहृतं ज्ञानं यस्य सः नवैव विपुलजलनदीं तीर्णः दशमः क्वापि निमग्न इति भ्रान्त्यपहृतचेता दशमो गणनकर्ता अपरान् तान्नव स्वं च प्रत्यक्षेण वीक्षमाणोऽपि विभ्रमात् अहमेव दशमोऽस्मीति न वेत्ति । अपरोक्षत्वेन प्रतीयमानेऽपि स्वस्मिन् भ्रान्तिकृतमज्ञानं पुरतः प्रतिभाति ॥ २३ ॥

अज्ञानकृतावरणविक्षेपयोरावरणस्वरूपं निरूपयति, नेति ।

न भाति नास्ति दशम इति स्वं दशमं तथा
मत्वा वक्ति तदज्ञानकृतमावरणं विदुः ॥ २४ ॥

तदा गणनसमये दशमं स्वं मत्वाऽपि दशमो न भाति नास्तीति वक्ति । तदज्ञानकृतमावरणं विदुः ॥ २४ ॥

विक्षेपस्वरूपं दर्शयति, नद्यामिति ।

नद्यां ममार दशम इति शोचन् प्ररोदिति ।
अज्ञानकृतविक्षेपं रोदनादिं विदुर्बुधाः ॥ २५ ॥

अज्ञानकृतावरणेन दशमो नद्यां ममारेति शोचन् प्ररोदिति बहु रोदिति । तं रोदनादिमज्ञानकृतविक्षेपं अज्ञानेन दशमत्वाज्ञानेन कृतः कार्यरूपो यो विक्षेपस्तं बुधा विदुः । अत्र चित्रदीपगतषड्विंशसप्तविंशश्लोकावधस्तात्षट्त्रिंशसप्तत्रिंशश्लोकावालोक्याः । विद्यमानयथार्थवस्तुस्वरूपभानं प्रतिबध्नात्यावरणशक्तिः । यथार्थस्वरूपाभाने तत्प्रयुक्तकार्यजातमज्ञानकृतं विक्षेप इति भावः ॥ २५ ॥

दशमो नास्तीत्याकारकासत्त्वांशनिवर्तकेनाप्तवाक्येनास्तीति परोक्षज्ञानमुदेतीत्याह, नेति ।

न मृतो दशमोऽस्तीति श्रुत्वाऽऽप्तवचनं तदा
परोक्षत्वेन दशमं वेत्ति स्वर्गादिलोकवत् ॥ २६ ॥

दशमो न मृतः किं त्वस्त्येवेत्याप्तवचनमाप्तस्य यथार्थवक्तुर्वचनं श्रुत्वा तदा तद्वाक्यश्रवणानन्तरं परोक्षत्वेन दशमं वेत्ति । स्वगतदशमत्वसंख्यां परोक्षत्वेन वेत्ति । आप्तवाक्याद्दशमो न मृत इत्येतावन्मात्रं मन्यते । अत्रोदाहरणमाह, स्वर्गेति । आप्तवचनं श्रुत्वेति तन्त्रेणान्वयः । यथाप्तस्यापौरुषेयत्वात्सकलदोषाशंकानिवारकस्य वेदस्य वचनं श्रुत्वा स्वर्गादिलोकमस्तीति मात्रं वेत्ति तद्वदित्यर्थः ॥२६॥

**एवमाप्तवाक्यनिमित्तपरोक्षज्ञाने क्वास्ति दशम ? इति पृष्टेन सुहृदा त्वमेव दशम इति प्रदर्शितः सुहृद्वाक्यतः सामानाधिकरण्यबलात्स्वस्मिन् दशमत्वज्ञानेनापास्ताज्ञानमूलकावरणो दशमत्वेन स्वमपरोक्षतया ज्ञात्वा हृष्यतीत्याह, त्वमिति ।**

त्वमेव दशमोऽसीति गणयित्वा प्रदर्शितः ।
अपरोक्षतया ज्ञात्वा हृष्यत्येव न रोदिति ॥ २७ ॥

स्वेन परिगणितैर्नवभिस्सहाप्तेन गणयित्वा अपरोक्षतया दशमोऽहमिति । स्पष्टमन्यत् । अज्ञाननाशे तत्त्वतो विक्षेपोऽपि नश्यतीत्याह, न रोदितीति ॥ २७ ॥

चिदाभासस्य सप्तावस्थाविवरणम् ।

**दृष्टान्तं दार्ष्टान्तिके योजयति, अज्ञानेति ।**

अज्ञानावृतिविक्षेपद्विविधज्ञानतृप्तयः ।
शोकापगम इत्येते योजनीयाश्चिदात्मनि ॥ २८ ॥

अज्ञानिनि दशम इव चिदात्मन्यात्मविषयेऽज्ञानावृतिविक्षेपद्विविधज्ञानतृप्तयो याथार्थ्यस्याज्ञानं, तत्कृतावृतिर्मोहः, तन्निमित्तः, कार्यरूपो, विक्षेपः आप्तवाक्यादिजन्यं परोक्षमपरोक्षमिति ि विधं ज्ञानं, तत्फलं तृप्तिः, तद्द्वारा शोकापगमो दुःखनिवृत्तिरित्येते, सप्तावस्थाविशेषा योजनीयाः ॥२८॥

उक्तावस्थासप्तकस्य चिदात्मनि दिदर्शयिषया प्रथमामज्ञानावस्थां प्रदर्शयति, संसारेति ।

संसारासक्तचित्तः संश्चिदाभासः कदाचन ।
स्वयंप्रकाशकूटस्थं स्वतत्त्वं नैव वेत्त्ययम् ॥ २९ ॥

स्पष्टोऽर्थः ॥ २९ ॥

आवरणविक्षेपौ योजयति, नेति ।

न भाति नास्ति कूटस्थ इति वक्ति प्रसंगतः ।
कर्ता भोक्ताऽहमस्मीति विक्षेपं प्रतिपद्यते ॥ ३० ॥

प्रसंगतः कूटस्थविषयकचर्चाप्रसंगे कूटस्थो न भाति न प्रकाशते, नास्तीत्यज्ञानकृतावरणाद्यदार्थस्वरूपग्रहणासमर्थोऽज्ञानी वदति । अनेनावरणमुक्तम् । अहं कर्ता कर्मण्यधिकृतः अहं भोक्ता तत्फलस्यानुभवितेति कार्यात्मकं विक्षेपं प्रतिपद्यते प्राप्नोति । एवं विक्षेपरूपं प्रदर्शितम् ॥ ३० ॥

परोक्षापरोक्षज्ञाने योजयति, अस्तीति ।

अस्ति कूटस्थ इत्यादौ परोक्षं वेत्ति वार्तया ।
पश्चात्कूटस्थ एवास्मीत्येवं वेत्ति विचारतः ॥ ३१ ॥

वार्तया "अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुरि" (तै. २. ६.) त्याद्यासश्रौतवाक्यश्रवणेन कूटस्थोऽस्तीत्यादौ कूटस्थं परोक्षं वेत्ति । पश्चादनन्तरं श्रुतश्रौतवाक्यस्य मननिदिध्यासाभ्यां विचारतोऽहं कूटस्थ एवास्मीत्यपरोक्षतयापि वेत्ति ॥ ३१ ॥

एवं विदस्तृप्तिशोकापगमौ प्रदर्शयति, कर्तेति ।

कर्ता भोक्तेत्येवमादिशोकजातं प्रमुंचति ।
कृतं कृत्यं प्रापणीयं प्राप्तमित्येव तुष्यति ॥ ३२ ॥

कूटस्थोऽहमिति ज्ञानानन्तरमहं कर्ताऽहं भोक्तेत्यादि शोकजातं प्रमुञ्चति त्यजति । दुःखस्य निवृत्तौ कृत्यं यन्मया कर्तव्यं तत्सर्वं कृतम् । यन्मया प्रापणीय

निरतिशयसुखं तत् प्राप्तमिति, तुष्यति । अत्रोद्देश्यक्रमव्यत्ययेन प्रदर्शनस्याय-माशयः । सति विवेके, स्वरूपं सम्यक् भासते, विवेकाधीनत्वात्स्वरूपभानस्य । विवेकेनैव भोक्तृत्वादेर्निरासः, स्वरूपज्ञानेन कृतकृत्यतेति वस्तुक्रम इति बोधयितु-मिति ॥ ३२ ॥

प्रदर्शितक्रमो न्याय एवेति दर्शयितुं तत्क्रमेणोपसंहरति, अज्ञानमिति ।

**अज्ञानमावृतिस्तद्वद्विक्षेपश्च परोक्षधीः ।**
**अपरोक्षमतिः शोकमोक्षस्तृप्तिर्निरंकुशा ॥ ३३ ॥**

शोकमोक्षः शोकस्य मोक्षः अपगमनम्, निरंकुशा तृप्तिः कूटस्थात्मैक्य-ज्ञानस्याद्वितीयत्वात्तज्जन्यतृप्तेरपि निरंकुशत्वम् । स्पष्टमन्यत् ॥ ३३ ॥

एताः सप्तावस्थाश्चिदाभासस्य न तु कूटस्थस्येत्युक्त्वा ता विभजति, सप्तेति ।

**सप्तावस्था इमाः सन्ति चिदाभासस्य तास्विमौ ।**
**बंधमोक्षौ स्थितौ तत्र तिस्रो बंधकृताः स्मृताः ॥ ३४ ॥**

सुगमा पदयोजना । नैता अवस्थाः कूटस्थस्य । तस्यासंगचिद्रूपत्वात् । तासु बंधमोक्षौ कार्यत्वेन स्थितौ । तिस्रोऽज्ञानावरणविक्षेपा बंधकृताः ॥ ३४ ॥

अज्ञानादीनां बन्धकारणत्वविचारः ।

तिसृणां बंधकारित्वप्रदर्शनाय तद्रूपविवक्षयाऽऽदावज्ञानस्वरूपं निरूपयति, नेति

**न जानामीत्युदासीनव्यवहारस्य कारणम् ।**
**विचारप्रागभावेन युक्तमज्ञानमीरितम् ॥ ३५ ॥**

विचारप्रागभावेन युक्तं विचारस्यात्मतत्त्वसंबंधिविचारस्य यः प्रागभावस्तेन युक्तं तत्त्वविचारप्रागभावकालिकमित्यर्थः, उदासीनव्यवहारस्य कारणं न जानामी-त्यनुभूयमानमज्ञानमितीरितम् ॥ ३५ ॥

आवृतिस्वरूपमाह, अमार्गेणेति ।

अमार्गेण विचार्याथ नास्ति नो भाति चेत्यसौ ।
विपरीतव्यवहृतिरावृतेः कार्यमिष्यते ॥ ३६ ॥

अमार्गेण "नैषा तर्केण मतिरापनेये"ति (कठ. १. २. ९.) मानुषबुद्ध्यतीतविषयं प्रति केवलबुद्धिसहायेन विचार्य अथ असौ कूटस्थो नास्ति नो भातीति विपरीतव्यवहृतिः विपरीता वस्तुस्थितिविरुद्धा या व्यवहृतिः व्यवहारः साऽज्ञानकृताया आवृतेः कार्यमिष्यते । एतादृशव्यवहारकारणमावृतिरिति यावत् ॥ ३६ ॥

विक्षेपबंधकावाह देहेति ।

देहद्वयचिदाभासरूपो विक्षेप ईरितः ।
कर्तृत्वाद्यखिलः शोकः संसाराख्योऽस्य बंधकः ॥ ३७ ॥

देहद्वयचिदाभासरूपः स्थूलसूक्ष्मशरीरद्वयसहितश्चिदाभासो विक्षेप इतीरितः । कर्तृत्वाद्यखिलः, आदिशब्देन भोक्तृत्वप्रमातृत्वादयो गृह्यन्ते । संसाराख्यः शोकः अस्य चिदाभासस्य बंधकः । बंधहेतुः । कर्तृत्वाद्यखिलः संसारः देहद्वयोपाधिकस्य जीवस्य कार्यमिति भावः ॥ ३७ ॥

ननु सप्तावस्था इमास्सन्ति चिदाभासस्येति यदुक्तं तदसंगतम् । बुद्धिप्रतिबिंबितस्य विक्षेपान्तःपतितस्य चिदाभासस्योत्पत्तेः प्रागेवाज्ञानावरणयोर्विद्यमानत्वादित्याशंक्य असंगस्यात्मनोऽवस्थानुपपत्तेश्चिदाभासस्यैव ते इत्याह, अज्ञानमिति ।

अज्ञानमावृतिश्चैते विक्षेपात्प्राक्प्रसिध्यतः ।
यद्यप्यथाप्यवस्थे ते विक्षेपस्यैव नात्मनः ॥ ३८ ॥

यद्यपि विचार्यमाणे अज्ञानमावृतिश्चैते विक्षेपात्प्रागेव प्रसिध्यतः प्रकृतेरेकदेशत्वात्, अथापि तेअवस्थे विक्षेपस्यैव चिदाभासस्यैव न आत्मनः । चिदाभासस्याप्यज्ञानकल्पितत्वात्तस्य विक्षेपशब्दभाक्त्वम् ॥ ३८ ॥

नन्ववस्थावतश्चिदाभासस्योत्पत्तेः प्रागेव विद्यमानयोरज्ञानावृत्योस्तस्यापादनमसमंजसमेव स्यादित्याशंक्याह, विक्षेपेति ।

विक्षेपोत्पत्तितः पूर्वमपि विक्षेपसंस्कृतिः ।
अस्त्येव तदवस्थात्वमविरुद्धं ततस्तयोः ॥ ३९ ॥

विक्षेपसंस्कृतिः विक्षेपस्य संस्कारः । स्पष्टमन्यत् । अवस्थावतः पूर्वमवस्थोत्पत्तिरिति नात्र किमपि चोद्यं तत्र तदंकुरस्य विद्यमानत्वादिति भावः ॥ ३९ ॥

नन्ववस्थावतश्चिदाभासस्योत्पत्तेः प्रागेव तदवस्थासंस्कृतेः कल्पनागौरवादधिष्ठानभूतस्य सुप्रसिद्धस्य कूटस्थस्यैवैतेअवस्थे इति कल्पना वरम् । असंगस्य त्वनयोरवस्थयोरारोपणात्तदवस्थात्वमेव युक्तमित्याशंकां परिहरति, ब्रह्मणीति ।

ब्रह्मण्यारोपितत्वेन ब्रह्मावस्थे इमे इति ।
न शंकनीयं सर्वासां ब्रह्मण्येवाधिरोपणात् ॥ ४० ॥

इमे अज्ञानावृती ब्रह्मणि कूटस्थे तादात्म्याध्यासेनारोपितत्वेन ब्रह्मावस्थे इति न शंकनीयम् । कुतः? सर्वासामवस्थानां ब्रह्मण्येवाधिरोपणादध्यस्तत्वात् । यद्यारोपमात्रेणानयोर्ब्रह्मावस्थात्वमंगीक्रियते सर्वारोपाधिष्ठानतया सर्वा अप्यवस्था ब्रह्मण एवेति वक्तुं शक्यत्वात् ॥ ४० ॥

सप्तावस्थानां ब्रह्मण्यारोपितत्वेऽन्यनिष्ठास्तत्रारोप्यन्त इत्यवश्यमभ्युपेयम् । वस्तुतस्तु तदवस्थाविशिष्टस्यान्वेषणे विक्षेपादीनामनुभवेन जीवनिष्ठत्वमवगम्यते । अतस्तदवस्था जीवनिष्ठत्वेनंगीक्रियते । ततश्च वास्तविकव्यवहारसंभवे आरोपितव्यवहारस्यायुक्तत्वात्ता अवस्था ब्रह्मगो भवन्ति । आद्यावस्थाद्वयस्याश्रयो न ज्ञायत इति तद्विषये आरोपेण ब्रह्मावस्थात्वमेवाभ्युपेयम् । अतस्ते अपि जीवस्येति कथं निश्चीयत इत्याशंक्य परिहरति द्वाभ्याम्, संसारीति ।

संसार्यहं विबुद्धोहं निःशोकस्तुष्ट इत्यपि ।
जीवगा उत्तरावस्था भान्ति न ब्रह्मगा यदि ॥ ४१ ॥

तर्ह्यज्ञोऽहं ब्रह्मसत्वभाने मद्दृष्टितो न हि ।
इति पूर्वे अवस्थे च भासेते जीवगे खलु ॥ ४२ ॥

अहं संसारी अहं विबुद्धः निःशोकः तुष्ट इत्युत्तरावस्था विक्षेपादयो जीवगा जीवंगताः सत्यः भान्ति। अतोऽनुभवबलाज्जीवगत्वं निश्चित्य तासां ब्रह्मगत्वं नाभ्युपेयम्। तदेतदाह, न ब्रह्मगा इति। इति यदि शंक्यते तर्ह्यहमज्ञो मदृष्टितो ब्रह्मसत्वभाने ब्रह्मणो विद्यमानत्वं स्वप्रकाशमानत्वं च न हि न विद्यते। न भाति नास्तीत्यनुभवसिद्धे पूर्वेऽवस्थेऽज्ञानावृत्यवस्थे जीवगे भासेते प्रतीयेते खलु। तयोरवस्थयोरपि जीवगत्वेनानुभूयमानत्वात्। अतो जीवस्यैते इति वक्तव्यम्। एवं च तयोरपि मुख्याश्रयमादाय व्यवहारोपपत्त्यारोपितत्वमात्रेण ब्रह्मावस्थात्वं न शंकनीयमितरावस्थावदिति भावः ॥ ४२ ॥

यथानुभवबलादज्ञानं जीवावस्थेत्यंगीकृतं तथाऽज्ञानस्याश्रयो ब्रह्मेति पूर्वाचार्याणां व्यवहारबलादज्ञानं ब्रह्मणोऽवस्थेत्यंगीकर्तव्यमिति चोद्यं पूर्वाचार्यव्यवहारस्यान्यथोपपत्तिप्रदर्शनेन परिहरति, अज्ञानेति।

**अज्ञानस्याश्रयो ब्रह्मेत्यधिष्ठानतया जगुः।**
**जीवावस्थात्वमज्ञानाभिमानित्वादवादिषम् ॥ ४३ ॥**

ब्रह्म अज्ञानस्याश्रय इत्यधिष्ठानतया जगुः। अज्ञानस्याश्रय इति व्यवहारो ब्रह्मणोऽधिष्ठानत्वमादाय ब्रह्मणोऽज्ञानत्वबुबोधयिषया कृतः। न तु तदवस्थात्वमंगीकृत्य। अद्य तु जीवस्याज्ञानाभिमानित्वादज्ञानाभिमानित्वविवक्षया तस्य जीवावस्थात्वमवादिषमवोचम् ॥ ४३ ॥

तन्निवृत्तेर्मोक्षहेतुकथनम्।

अज्ञानाद्यवस्थासप्तके बंधहेतुभूतावस्थात्रयं प्रदर्श्य तन्निवृत्तेर्मोक्षहेतुविवक्षया तन्निवृत्युपायमवस्थाद्वयमाह, ज्ञानद्वयेति।

**ज्ञानद्वयेन नष्टेऽस्मिन्नज्ञाने तत्कृतावृतिः।**
**न भाति नास्ति चेत्येषा द्विविधाऽपि विनश्यति ॥ ४४ ॥**

जीवेनानुभूयमानेऽस्मिन्नज्ञाने ज्ञानद्वयेन परोक्षापरोक्षरूपेण नष्टे सति "कूटस्थो न भाति नास्ती"त्याकारकद्विविधा तत्कृता तदज्ञानकृता आवृतिरपि विनश्यति। कारणनाशेकार्यनाशः ॥ ४४ ॥

ननु ज्ञानद्वयेन न भाति नास्तीत्याकारकद्विविधावृतेर्नाश इत्युक्तम् । तत्र केन कस्य नाश इत्याशंकायामाह, परोक्ष इति ।

**परोक्षज्ञानतो नश्येदसत्त्वावृतिहेतुता ।**
**अपरोक्षज्ञाननाश्याह्याभानावृतिहेतुता ॥ ४५ ॥**

असत्त्वावृतिहेतुता नास्ति कूटस्थ इत्याकारका या आवृतिस्तस्या अज्ञाननिष्ठा कारणता । अभानावृतिहेतुता न भाति कूटस्थ इत्याकारकाभानावृतेर्हेतुता । स्पष्टमन्यत् ॥ ४५ ॥

एवंरूपज्ञानस्य प्रथमं फलं संसारनिवृत्तिरित्याह, आभानेति ।

**अभानावरणे नष्टे जीवत्वारोपसंक्षयात् ।**
**कर्तृत्वाद्यखिलः शोकः संसाराख्यो निवर्तते ॥ ४६ ॥**

जीवत्वारोपसंक्षयात् कूटस्थे तादात्म्येन जीवभावस्य भ्रान्तिकृतो योऽध्यासस्तस्य सम्यङ्नाशात् । स्पष्टमन्यत् । आभानावरणनाशोक्तेरर्थादसत्त्वावरणनाशोप्युक्तो भवति । तन्नाशाभावेऽभानावरणनाशस्यासंभवात् ॥ ४६ ॥

शोकनिवृत्त्यनन्तरं तृप्तिरूपं द्वितीयं फलं प्रदर्शयति, निवृत्त इति ।

**निवृत्ते सर्वसंसारे नित्यमुक्तित्वभासनात् ।**
**निरंकुशा भवेत्तृप्तिः पुनः शोकासमुद्भवात् ॥ ४७ ॥**

नित्यमुक्तित्वभासनात् असंगचिद्रूपत्वस्य प्रतीयमानत्वात् । निरंकुशा निरवधिः । निरंकुशत्वे कारणमाह, पुनरिति ॥ ४७ ॥

नन्वात्मानं चेद्विजानीयादिति प्रकरणारंभे प्रतिज्ञाते श्रुत्यर्थव्याख्यानप्रकरणे जीवस्य सप्तावस्थाविवरणमप्रसक्तमित्याशंक्य तस्य तत्तात्पर्यनिरूपणोपयोगितया प्रसक्तत्वमित्याह, अपरोक्षेति ।

**अपरोक्षज्ञानशोकनिवृत्त्याख्ये उभे इमे ।**
**अवस्थे जीवगे ब्रूत आत्मानं चेदिति श्रुतिः ॥ ४८ ॥**

जीवगे जीवगतेऽपरोक्षज्ञानशोकनिवृत्त्याख्ये अपरोक्षज्ञानं ब्रह्माहमस्मीति साक्षात्कारः शोकस्य कर्तृत्वादिलक्षणस्य संसारस्य निवृत्तिश्चेत्याख्ये इमे उभे अवस्थे आत्मानं चेदितिश्रुतिर्ब्रूते । जीवनिष्ठावस्थापञ्चके प्रधानफलभूते ब्रह्मपरोक्षज्ञान-शोकावगमे जीवगतेऽवस्थे श्रुतिर्ब्रूते । वाच्यवृत्त्या वक्ति । एवं च श्रुतिप्रतिपादि-तावस्थाद्वयपरिज्ञानाय तद्धेतुभूता अन्याप्यवस्था अपेक्षिता इति तन्निरूपणं नाप्रसक्तमिति भावः ॥ ४८ ॥

परोक्षज्ञानस्य प्रमात्वनिश्चयः ।

नन्वयमस्मीति पूरुष इत्यत्रोपरिष्टादयमित्यपरोक्षत्वमुच्यते चेत्तदु-च्यता मित्ययंशब्देन बोधितमात्मनोऽपरोक्षत्वमिष्टापत्त्याऽङ्गीकृतम् । तथा सत्यपरोक्षज्ञानविषयत्वमेव स्यान्न परोक्षज्ञानविषयत्वमित्याशंक्याह, अयमिति ।

**अयमत्यपरोक्षत्वमुक्तं तद्विविधं भवेत् ।**
**विषयस्वप्रकाशत्वाद्धियाप्येवं तदीक्षणात् ॥ ४९ ॥**

"अयमसीति पूरुष" इत्यत्रायमिति शब्दस्य यदपरोक्षत्वमपरोक्षार्थबोध कत्वमुक्तं तत् ज्ञानस्य परोक्षत्वापरोक्षत्वभेदेन द्विविधं भवेत् । एकं विषयस्वप्रका-शत्वाद्विषयस्यात्मनः स्वप्रकाशत्वात् स्वस्य भाने प्रकाशकान्तरानपेक्षत्वात् । द्वितीयमाह । धियेति । एवं स्वप्रकाशत्वेन धिया तदीक्षणात् तस्यात्मनो दर्शनात् । प्रकाशान्तरानपेक्षप्रकाशत्वमपरोक्षत्वं । प्रकाशान्तरापेक्षप्रकाशत्वं परोक्षत्वं । आत्मा स्वप्रकाशत्वेन स्फुरन्नपरोक्षज्ञानविषयो भवति । धिया स्वप्रकाशत्वेन ज्ञायत इति परोक्षज्ञानविषयोऽपीति द्वैविध्यमपरोक्षत्वस्येति भावः ॥ ४९ ॥

स्वप्रकाशत्वपरोक्षज्ञानविषयत्वयोर्विरोधादेकत्रानवस्थानादुक्तं द्वैविध्यं कथं घटत इत्याशंक्य तयोरविरोधं दर्शयति, परोक्षेति ।

**परोक्षज्ञानकालेऽपि विषयस्वप्रकाशता ।**
**समा ब्रह्म स्वप्रकाशमस्तीत्येवं विबोधनात् ॥ ५० ॥**

यथा अपरोक्षज्ञानकाले तथा परोक्षज्ञानकालेऽपि विषयस्वप्रकाशता विषयस्य ब्रह्मणः स्वप्रकाशता समा । अतो न विरोधः । अस्तीतिनिर्णायकमनुभवं

हेतुमुखेन प्रदर्शयति, ब्रह्मेति। स्वप्रकाशं ब्रह्मास्तीत्येवं विबोधनात् इत्येवं परोक्षज्ञानस्यानुभवसिद्धत्वात् ॥ ५०॥

अहं ब्रह्मास्मीति ज्ञानस्य परोक्षत्वं व्यवहारतो न युज्यते। यदि परोक्षज्ञानं स्यात् घटोऽस्तीत्यादिपरोक्षज्ञानोल्लेखवत् ब्रह्मास्मीत्येवोल्लेखः कार्यः। न त्वहं ब्रह्मास्मीतीति शंकते, अहमिति।

अहं ब्रह्मेत्यनुल्लिख्य ब्रह्मास्तीत्येवमुल्लिखेत्।
परोक्षज्ञानमेतन्न भ्रान्तं बाधानिरूपणात् ॥ ५१ ॥

यद्ययमस्मीति ज्ञानं परोक्षं स्यात् तदाहंब्रह्मेत्यनुल्लिख्य ब्रह्मास्तीत्येवोल्लिखेत्। तथानुल्लेखात् नेदं परोक्षं ज्ञानम्। समाधत्ते, परोक्षेति। एतत् "ब्रह्मास्ती"ति ज्ञानं तथोल्लेखाभावेऽपि न भ्रान्तम्। कुतः? बाधाऽनिरूपणात् बाधाया निरूपणस्याशक्यत्वात्। यदीदं ज्ञानं बाध्यं स्यात् बाधो निरूपणीयः। स तु निरूपितुमशक्यः। भ्रान्तत्वं हि बाध्यत्वेन व्यक्त्यनुल्लेखेनापरोक्ष्येण ग्रहणयोग्यस्य पारोक्ष्येण ग्रहणेन अंशाग्रहणेन वा वक्तव्यम्। तत्रैवमपि न घटत इति वक्तुं प्रथमस्याघटनमाह बाधानिरूपणादिति ॥ ५१॥

बाधानिरूप्यत्वं विवृणोति, ब्रह्मेति।

ब्रह्म नास्तीति मानं चेत् स्याद्बाध्येत तदा ध्रुवम्।
न चैवं प्रबलं मानं पश्यामोऽतो न बाध्यते ॥ ५२ ॥

ब्रह्म नास्तीति मानं प्रबलं प्रमाणं स्याच्चेत् तदा ब्रह्मास्तीति परोक्षज्ञानं ध्रुवं बाध्येत। चेदित्युक्तया तन्न मानमिति सूचितम्। तदाहनेति। एवमभावबोधकं प्रबलं मानान्तराबाध्यं मानं "नास्ति ब्रह्मेति" प्रमाणं न पश्यामः अतोऽस्ति ब्रह्मेति साधकप्रबलमानस्य श्रुत्यादेः सत्वेन तेनेदं मानं बाध्यते। अतस्तस्य मानान्तराबाध्यमानत्वाभावेन तेनाहं ब्रह्मास्मीति ज्ञानं न बाध्यते। एवं चाबाध्यत्वादभ्रान्तत्वं तस्य सिध्यति ॥ ५२॥

व्यक्त्यनुल्लेखरूपं द्वितीयमतिप्रसंगेन दूषयति व्यक्तीति।

व्यक्त्यनुल्लेखमात्रेण भ्रमत्वे स्वर्गधीरपि ।
भ्रान्तिः स्याद्व्यक्त्यनुल्लेखात्सामान्योल्लेखदर्शनात् ॥ ५३ ॥

यदि व्यक्त्यनुल्लेखमात्रेण भ्रमत्वे यदि व्यक्त्यनुल्लेखात् स्वर्गोऽस्तीति सामान्योल्लेखदर्शनात् स्वर्ग इत्येवमाकारेणैव तस्य प्रतीतेरयं स्वर्ग इति विशेषाकारेण ग्रहणाभावात्स्वर्गधीरपि भ्रान्तिः स्यात् ॥ ५३ ॥

तृतीयं निराकरोति, अपरोक्षत्वेति ।

अपरोक्षत्वयोग्यस्य न परोक्षमतिभ्रमः ।
परोक्षमित्यनुल्लेखादर्थात्पारोक्ष्यसंभवात् ॥ ५४ ॥

अपरोक्षत्वयोग्यस्य अपरोक्षत्वेन ग्रहणयोग्यस्यापरोक्षज्ञानस्य तद्विषयिकपरोक्षमतिः परोक्षमित्याकारकं ज्ञानं न भ्रमः । आत्माभिन्नब्रह्मविषयकपरोक्षज्ञानस्य भ्रान्तित्वं न संभवतीत्यर्थः । तत्र हेतुमाह, परोक्षमिति । ब्रह्म परोक्षमित्यनुल्लेखादवचनात् । यद्यात्माभिन्नं ब्रह्म परोक्षमित्युच्येत तर्हि तदुक्तहेतोः परोक्षत्वेन ग्रहणसंभवादहंब्रह्मास्मीति ज्ञानं बाध्येत । तत्ज्ञानं परोक्षमिति केनाऽपि न गृह्यते । अतस्त्वदुक्तहेतुरसिद्ध इति तात्पर्यम् । तर्ह्यहं ब्रह्मास्मीति ज्ञानस्य कथं परोक्षत्वं समर्थ्यत इत्याशंक्याह, अर्थादिति । अयं घट इतिवदिदं ब्रह्मेति व्यक्त्युल्लेखस्यादर्शनादर्थात् पारोक्ष्यसंभवात् पारोक्ष्यसिद्धिरिति भावः । न प्रतीतिमात्रमेव वस्तुसाधकम् । किंतुयुक्तिरपीति भावः ॥ ५४ ॥

चतुर्थमाशंक्य परिहरति, अंशेति ।

अंशागृहीतेर्भ्रान्तिश्चेद्घटज्ञानं भ्रमो भवेत् ।
निरंशस्यापि सांशत्वं व्यावर्त्यांशविभेदतः ॥ ५५ ॥

अंशागृहीतेर्निरंशे ब्रह्मण्यंशानामसंभवादंशग्रहणासंभवात्तत्र तद्ग्रहणाभावेन भ्रान्तिर्भ्रमत्वमिति चेत्तर्हि घटज्ञानं भ्रमो भवेत् भ्रम इति भवताभ्युपेयम् । अन्तरावयावाणामग्रहदृश्ण तत्रापि तुल्यत्वात् । ननु घटज्ञानं भ्रमो न, घटस्यावयवत्वेन तेषामंशत्वेनाग्रहणेऽपि वस्तुतोऽंशानामपि गृहीतत्वात् , अत्र तु ब्रह्मणो निरंशत्वेन

स्वरूपेणाप्यंशानां ग्रहणं न संभवतीति वैषम्यम्, इति शंकां परिहरति, निरंश-स्येति। वस्तुतो निरंशस्याप्यारोपितं सांशत्वमस्ति। तथारोपितांशमात्रस्यैवांश-ग्रहणं सूपपादितमिति तात्पर्यम्। तत्रारोपितांशकल्पना किमर्थेत्याशंकां परिहरति, व्यावर्त्यांशविभेदत इति। तत्र परोक्षापरोक्षज्ञानाभ्यां व्यावर्त्यांशविभेदतः। व्यावर्त्यौ यावंशौ तद्विभेदतः। तद्भेदात् सांशत्वमारोपितमंगीकार्यमित्यर्थः ॥ ५५ ॥

ब्रह्मणस्तावंशौ व्यावर्त्यप्रदर्शनव्याजेनाह, असत्वेति।

**असत्त्वांशो निवर्तेत परोक्षज्ञानतस्तदा।**
**अभानांशनिवृत्तिः स्यादपरोक्षधिया कृता ॥ ५६ ॥**

असत्त्वांशो न भाति नास्तीत्यत्र नास्तीत्यनेन निर्दिष्टोऽसत्त्वांशः परोक्ष-ज्ञानतो निवर्तेत। तथा अभानांशनिवृत्तिर्नभातीति निर्दिष्टांशस्य निवृत्तिरपरोक्ष-धिया कृता स्यात्। एवं चाहंब्रह्मास्मीति ज्ञानेनासत्त्वांशाभानांशयोरुभयोरपि निवृत्तिदर्शनात्तन्निवर्तकतावच्छेदकपरोक्षत्वापरोक्षत्वज्ञानयोरुभयोरपि तत्र दर्शनात तदेव ज्ञानं परोक्षमपरोक्षमित्युच्यते ॥ ५६ ॥

उक्तहेतुं दृष्टान्तमुखेन विशदयन् परोक्षज्ञानस्यासत्त्वांशनिवर्तकत्वं प्रद-र्शयन् तस्य भ्रमत्वासाधकत्वं विशदयति, दशम इति।

**दशमोऽस्तीत्यविभ्रान्तं परोक्षज्ञानमीक्ष्यते।**
**ब्रह्मास्तीत्यपि तद्वत्स्यादज्ञानावरणं समम् ॥ ५७ ॥**

दशमः पथिकोऽस्तीत्याप्तवाक्यजन्यं परोक्षज्ञानमभ्रान्तमीक्ष्यते लोके दृश्यते। ब्रह्मास्तीत्यपि श्रुतिवाक्यजन्यं परोक्षज्ञानं तद्वदभ्रान्तम्। तस्मादपरोक्षत्वेन ग्रहणयोग्यस्य परोक्षज्ञानं न भ्रान्तिः। उभयत्रापि तन्निवर्त्यमज्ञानावरणमज्ञानकृत-मसत्त्वावरणं समम् ॥ ५७ ॥

विचारसहकृतज्ञानं न भ्रमः।

ननु वाक्येन जायमानज्ञानस्य शाब्दत्वेन परोक्षत्वमेव सिद्धम्। शाब्द-त्वस्य परोक्षत्वनियतत्वात्। अतः शब्दजन्यं ज्ञानं कथमपरोक्षमित्युच्यते?

इत्याशंक्य सामान्यतः शब्दजन्यं ज्ञानं यद्यपि परोक्षं विचारसहकृतं तु तदप-रोक्षमपीति दृष्टान्तप्रदर्शनेन बोधयति, आत्मेति ।

आत्मा ब्रह्मेति वाक्यार्थे निःशेषेण विचारिते ।
व्यक्तिरुल्लिख्यते यद्वद्दशमस्त्वमसीत्यतः ॥ ५८ ॥

स्पष्टोऽर्थः । "अयमात्मा ब्रह्मे"ति महावाक्यार्थविचारे पूर्वं परोक्षतया ज्ञातं परं ब्रह्म अपरोक्षतया साक्षात्क्रियते । तत्र प्रत्यगात्मैव ब्रह्मेति विवक्षितत्वादि त्यर्थः ॥ ५८ ॥

दशमस्त्वमसीति वाक्यार्थं विचारयति, दशम इति ।

दशमः क इति प्रश्ने त्वमेवेति निराकृते ।
गणयित्वा स्वेन सह स्वमेव दशमं स्मरेत् ॥ ५९ ॥

दशमस्त्वमसीत्याप्तवाक्यजन्येन परोक्षज्ञानेन किंचित्समाहितस्य दशमस्य "दशमः कः ?" इति प्रश्ने त्वमेव दशम इत्याप्तेन निराकृते परिहृते सति स्वेन सहेतरान्नव गणयित्वा स्वमेवात्मानमेव दशमं स्मरेत् । अहमेव दशम इत्यपरोक्षतो-जानाति ॥ ५९ ॥

एवं जातस्य ज्ञानस्य विचारसहकृतवाक्यजन्यत्वात्कदापि न भ्रमत्व-मित्याह, दशम इति ।

दशमोऽस्मीति वाक्योत्था न धीरस्य विहन्यते ।
आदिमध्यावसानेषु न नवत्वस्य संशयः ॥ ६० ॥

स्पष्टः पूर्वार्धः । नवानां पुरुषाणामादिमध्यावसानेषु गणनायां नवत्वस्य संशयो नास्ति । सर्वेष्वपि दशमत्वग्रहेऽपि स्वस्मिन् जातं दशमत्वज्ञानं न निवर्तते । अत एवैतद्वाक्यजन्यज्ञानस्य कदाचिदपि बाधायोगात्सर्वथाऽभ्रमत्वं स्पष्टमिति भावः ॥ ६० ॥

एवं रूपां विचारणां दार्ष्टान्तिके योजयति, सदिति ।

सदेवेत्यादिवाक्येन ब्रह्मसत्त्वं परोक्षतः ।
गृहीत्वा तत्त्वमस्यादिवाक्याद्व्यक्तिं समुल्लिखेत् ॥ ६१ ॥

"सदेवसोम्येदमग्र आसीदि" (छां. ६. २. १.) त्यादिवाक्येन ब्रह्मसत्त्वं ब्रह्मणोऽस्तित्वं परोक्षतो गृहीत्वा ज्ञात्वा "तदैक्षत बहुस्यां प्रजायेय", (छां. ६. २. २.) "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी" (छां. ६.३.३.) त्यादिवाक्यार्थपर्यालोचनया प्रत्यगात्मस्वरूपं संभाव्य "तत्त्वमस्यादि" (छां.६.८.८.) वाक्यात् "नेति नेतो"ति (बृ. ३. ९. २६.) वाक्यार्थसहकृतात् व्यक्तिं समुल्लिखेत् व्यक्तिसमुल्लेखपूर्वकमहंब्रह्मास्मीति ब्रह्मापरोक्षतया साक्षात्कुर्यात् ॥ ६१॥

अस्य ज्ञानस्याभ्रमत्वं दर्शयति, आदीति ।

आदिमध्यावसानेषु स्वस्य ब्रह्मत्वधीरियम् ।
नैव व्यभिचरेत्तस्मादापरोक्ष्यं प्रतिष्ठितम् ॥ ६२ ॥

इयं विचारणसहिता स्वस्य ब्रह्मत्वधीः ब्रह्माहमस्मीति ज्ञानमादिमध्यावसानेषु न व्यभिचरत्येव । पंचानां कोशानामादिमध्यावसानेष्वात्मनो व्यवहारेऽपि न व्यभिचरेन्न बाध्यते। दशमस्त्वमसीति वाक्येनादिमं मध्यममंतिमं वारभ्य गणनायामप्यहं दशमोऽस्मीत्यपरोक्षज्ञानं निराबाधं गणयितुः सिध्यति । एवमन्नमयादिकोशेष्वादिमं मध्यममंतिमं वा विचारणेऽपि ब्रह्मत्वबुद्धिरपरोक्षा न विहन्यते। तस्मादापरोक्ष्यमपरोक्षत्वज्ञानं प्रतिष्टितं सुस्थितम् । अबाध्यत्वतो न भ्रमः ॥ ६२ ॥

परोक्षज्ञानपूर्वकमेव विचारसहकारेणापरोक्षज्ञानं जायत इति तैत्तरीयश्रुतिप्रतिपादितभृग्वाद्यनुभवबलादपि ज्ञायते इत्याह, जन्मेति ।

जन्मादिकारणत्वाख्यलक्षणेन भृगुः पुरा ।
पारोक्ष्येण गृहीत्वाथ विचाराद्व्यक्तिमैक्षत ॥ ६३ ॥

पुरा भृगुर्वरुणपुत्रो जन्मादिकारणत्वाख्यलक्षणेन "यतो वा इमानि भूतानि जायन्ते" (तै. ३. १.) इत्यादिना पित्रोपदिष्टेन वाक्येन ब्रह्मणो जगतः सृष्टिस्थितिलयकारणत्वप्रतिपादकेन तटस्थलक्षणवाक्येन ब्रह्मणोऽस्तित्वं पारोक्ष्येण

गृहीत्वा ज्ञात्वा अथान्नमयादिकोशपंचकविचारात् व्यक्तिं प्रत्यगात्माभिन्नं ब्रह्मैक्षत अपरोक्षेण साक्षात्कृतवान् ॥ ६३ ॥

ननु दशमदृष्टान्ते दशमस्त्वमसीत्याप्तवाक्येनाहमेव दशम इत्यपरोक्षज्ञानं सिध्यति । तथा त्वं ब्रह्मासीति भृगुर्नोपदिष्टः । एवं सति ब्रह्मणो जगज्जन्मादिकारणत्वज्ञानेन कथमपरोक्षसाक्षात्कार इत्यत आह, यदीति ।

यद्यपि त्वमसीत्यत्र वाक्यं नो चेद् भृगोः पिता ।
तथाप्यन्नं प्राणमिति विचार्यस्थलमुक्तवान् ॥ ६४ ॥

यद्यपि अत्रोपदेशस्थले त्वं ब्रह्मासीति वाक्यं पिता वरुणो भृगोर्नो चे । तथाप्यन्नं प्राणमिति अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति जगज्जन्मादिकारणस्य ब्रह्मणो विचार्यस्थलमुक्तवान् । ब्रह्मसाक्षात्काराय विचारस्यावश्यकत्वादन्नमयादिपंचकोशान् विचारस्थलमुपदिदेश । विचारे कृते सति ब्रह्म साक्षात्क्रियत इति भावः ॥ ६४ ॥

ननु पंचकोशविचारणेन प्रत्यगात्मसाक्षात्कारोऽस्तु नाम । कथं ब्रह्मसाक्षात्कारः संपद्यते ? इत्याशंक्याह, अन्नेति ।

अन्नप्राणादिकोशेषु सुविचार्य पुनः पुनः ।
आनंदव्यक्तिमीक्षित्वा ब्रह्मलक्ष्माप्ययूयुजत् ॥ ६५ ॥

अन्नप्राणादिकोशेषु पुनः पुनः सुविचार्य जडत्वलयत्वादिदोषपरिज्ञानेन तेष्वनात्मत्वं विनिर्श्चित्य आनंदव्यक्तिमीक्षित्वा आनंदो ब्रह्मेति ज्ञानेन तत्साक्षात्कृत्य "आनंदाद्ध्येव खल्विमानि भूतानि जायन्ते" (तै. ३. ६.) इत्यादि ब्रह्मलक्ष्मापि प्रत्यगात्मन्ययूयुजत् संयोजितवान् ॥ ६५ ॥

नन्वानंदात्मरूपेण ब्रह्माणं प्रतीचि योजयितुं न शक्यम्, ब्रह्मणस्तटस्थत्वेन प्रतीचो भिन्नत्वादित्यत आह, सत्यमिति ।

सत्यं ज्ञानमनन्तं चेत्येवं ब्रह्मस्वलक्षणम् ।
उक्त्वा गुहाहितत्वेन कोशेष्वेतत्प्रदर्शितम् ॥ ६६ ॥

सत्यं ज्ञानमनन्तं ब्रह्मेति ब्रह्मस्वलक्षणमुक्त्वा गुहाहितत्वेन प्रत्यग्रूपेणावस्थितत्वेन "यो वेद निहितं गुहाया" (तै. २. ११.) मिति कोशेषु पंचस्वेतद्ब्रह्म श्रुत्या प्रदर्शितम् । एवं च गुहाहितेनैव प्रत्यग्रूपत्वमभिहितमिति तदभेदोऽभिहितप्राय एवेति भावः ॥ ६६ ॥

परोक्षेणावगतस्य ब्रह्मणोऽपरोक्षतया साक्षात्कारसाध्यतां भृगूदाहरणेन प्रदर्श्य तामेव छांदोग्येनापि निदर्शयति, पारोक्ष्येणेति ।

पारोक्ष्येण विबुध्येन्द्रो य आत्मेत्यादिलक्षणात् ।
अपरोक्षीकर्तुमिच्छंश्चतुर्वारं गुरुं ययौ ॥ ६७ ॥

इन्द्रो "य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोक" (छां. ८. ७. १.) इति श्रुतिप्रतिपादितादात्मलक्षणादात्मानं पारोक्ष्येण प्रजापतेर्विबुध्य ज्ञात्वा अपरोक्षीकर्तुमपरोक्षत्वेन ज्ञातुमिच्छन् तद्विज्ञानार्थं समित्पाणिः प्रजापतिसकाशं चतुर्वारं ययौ । छांदोग्यगतेन्द्रवैरोचनिगाथात्रानुसंधेया (छां. ८. १२. ३.) ॥ ६७ ॥

एवमेव परोक्षज्ञानस्यापरोक्षज्ञानोपकारकत्वमैतरेयगतमहावाक्येन द्रढयति, आत्मेति ।

आत्मा वा इदमित्यादौ परोक्षं ब्रह्म लक्षितम् ।
अध्यारोपापवादाभ्यां प्रज्ञानं ब्रह्म दर्शितम् ॥ ६८ ॥

ऐतरेयोपनिषद्यात्मा वा इदमित्यादौ "आत्मा वा इदमेकमेवाग्र आसीन्नान्यत् किं च न मिषत्" (ऐत. १. १. १.) इति परोक्षं ब्रह्म लाक्षितं ज्ञापितम् । अध्यारोपापवादाभ्यां अध्यारोपो यस्मिन् यो धर्मो न विद्यते तस्मिन् तद्धर्मस्यारोपणम्, अपवादोऽपोद्यतेऽपन्हूयते मिथ्यात्वेनानेनेत्यपवादः, मिथ्यात्वेन निरासः, ताभ्यां, "स ईक्षत लोकान्नु सृजै" इत्युपक्रम्य, "तत्रावसथास्त्रय" इति (ऐ. १. ३. १२.) परमात्मनि जगदध्यारोपणप्रकारमभिधाय "स जातो, भूतान्यभिव्यैख्यत्, किमिहान्यं वावदिषत्" (१. ३. १३.) इत्यनेनारोपितस्य जगतोऽपवादमभिधाय "स एतमेव पुरुषं ब्रह्म ततमपश्यदितीदमदर्शमिती" ति, प्रत्यगात्मनो ब्रह्मस्वरूपत्वमभिदधौ । "पुरुषे ह वा" इत्यादिना ज्ञानजनकवैराग्यसंपादनाय गर्भवासादिदुःखं प्रदर्श्य

"कोऽयमात्मेति वयमुपास्महे" इत्यादिविचारेण तत्त्वंपदार्थशोधनपुरस्सरं "प्रज्ञानं ब्रह्मेति" (ऐ. १. ५. ३.) प्रज्ञानरूपस्यात्मनो ब्रह्मत्वं दर्शितम्। अस्मिन् संदर्भे पंचमप्रकरणे आदिमपद्यद्वयमवलोकनीयम् ॥ ६८ ॥

एतदर्थमेवेतरश्रुतिष्वप्यतिदिशति, अवान्तरेति।

**अवान्तरेण वाक्येन परोक्षा ब्रह्मधीर्भवेत्।**
**सर्वत्रैव महावाक्यविचारादपरोक्षधीः ॥ ६९ ॥**

अवान्तरेण वाक्येनोपनिषदुपलब्धेनेतरवाक्येन। परोक्षा ब्रह्मधीर्भवेत्। सर्वत्र सर्वासु श्रुतिषु महावाक्यविचारादेव अपरोक्षधीर्भवेदिति योजना ॥ ६९ ॥

महावाक्यानां ब्रह्मापरोक्षज्ञानजनकत्वं भगवत्पादैरपि प्रतिपादितमित्याह, ब्रह्मेति।

**ब्रह्मापरोक्ष्यसिध्यर्थं महावाक्यमितीरितम्।**
**वाक्यवृत्तावतो ब्रह्मापरोक्ष्ये विमतिर्न हि ॥ ७० ॥**

विमतिर्विसंवादो न। स्पष्टमन्यत् ॥ ७० ॥

वाक्यवृत्तिरीत्या त्वंपदवाच्यार्थमाह, आलंबनेति।

**आलंबनतया भाति योऽस्मत्प्रत्ययशब्दयोः।**
**अन्तःकरणसंभिन्नबोधः स त्वंपदाभिधः ॥ ७१ ॥**

योऽन्तःकरणसंभिन्नबोधः अन्तःकरणेन संभिन्नः संकीर्णस्तदुपाधिको यो बोधश्चिद्रूपः सः अस्मत्प्रत्ययशब्दयोरहमित्याकारकं ज्ञानमहमितिशब्दश्च तयोरालंबनतया विषयत्वतो भाति स्फुरति स बोधस्त्वंपदाभिधः त्वमितिशब्द-वाच्यः। तत्त्वमसीति महावाक्यगतत्वंपदवाच्यः। अस्मत्प्रत्ययशब्दयोर्विषयत्वेन भासमानोऽन्तःकरणोपाधिकश्चिदात्मा त्वंशब्दवाच्य इति भावः ॥ ७१ ॥

तत्पदवाच्यार्थमाह, मायेति।

**मायोपाधिर्जगद्योनिः सर्वज्ञत्वादिलक्षणः।**
**पारोक्ष्यशबलः सत्याद्यात्मकस्तत्पदाभिधः ॥ ७२ ॥**

मायोपाधिर्जगद्योनिः जगतः सृष्टिस्थितिलयानां कारणभूतः सर्वज्ञत्वादि-लक्षणः, आदिशब्देन सर्वशक्तित्वादि गृह्यते, पारोक्ष्यशबलः परोक्षत्वधर्मविशिष्टः, वस्तुतः सत्याद्यात्मकः सच्चिदानंदस्वरूपः परं ब्रह्म तत्त्वमसीति महावाक्ये तत्पदाभिधः तत्पदवाच्यो भवति । अत्र मायोपाधित्वजगद्योनित्वसर्वज्ञत्वपारोक्ष्यशबलत्वादिर्ब्रह्मणस्तटस्थलक्षणमुच्यते । सत्याध्यात्मकत्वेन स्वरूपलक्षणमभिधीयते । स्वतो निर्गुणं परं ब्रह्म । मायोपाधित्वाज्जगद्योनित्वसर्वज्ञत्वादिधर्मास्तस्मिन्नारोपिताः ॥ ७२॥

लक्षणावृत्त्या महावाक्यार्थविचारः ।

एवं तत्त्वमोर्वाक्यार्थमभिधाय वाक्यार्थसिद्धये लक्षणावृत्तिरंगीकार्येत्याह, प्रत्यगिति ।

**प्रत्यक्परोक्षतैकस्य सद्वितीयत्वपूर्णता ।**
**विरुध्येते यतस्तस्माल्लक्षणा संप्रवर्तते ॥ ७३ ॥**

यत एकस्यैव परब्रह्मणः प्रत्यक्परोक्षता अस्मत्प्रत्ययशब्दालंबनतयाऽपरोक्षत्वं तत्पदाभिधेयतया अपरोक्षत्वं सद्वितीयत्वपूर्णता सद्वितीयत्वेन सहिता या पूर्णता सद्वितीयत्वपूर्णत्वे इत्यर्थः । अन्तःकरणसंभिन्नत्वात्सद्वितीयत्वं, अनन्तमित्यद्वितीयत्वम्, एवं विरुध्येते अनुपपन्ने भवतः । एतेन विरुद्धधर्मविशिष्टयोरसिपदबोधितमेकत्वमनुपपन्नमिति लक्षणाबीजभूतमुख्यार्थानुपपत्तिर्दर्शिता । तस्मादनुपपत्तेः सत्वादर्थकल्पनायां लक्षणा लक्षणावृत्तिः संप्रवर्तते परिगृह्यते । श्रीभगवत्पादैर्वाक्यवृत्तावेवं लक्षणा निरुक्ता, "मानान्तरविरोधे तु मुख्यार्थस्यापरिग्रहे । मुख्यार्थेनाविनाभूते प्रतीतिर्लक्षणोच्यते" इति ॥ ७३ ॥

सा जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणेति त्रिधा लोके प्रसिद्धा । अत्र ग्राह्या केत्यत आह, तदिति ।

**तत्त्वमस्यादिवाक्येषु लक्षणा भागलक्षणा ।**
**सोऽयमित्यादिवाक्यस्थपदयोरिव नापरा ॥ ७४ ॥**

तत्त्वमस्यादिवाक्येषु परिग्राह्या लक्षणा भागलक्षणा यस्यां वाच्यार्थस्यांशतस्त्यागोऽशतं उपादानम् । एष एव जहदजहल्लक्षणेत्यप्युच्यते । जहदजहल्लक्षणांगीकारे

आवश्यकतां दृष्टान्तेन दर्शयति, स इति । सोऽयमित्यादिवाक्यस्थपदयोरिव सोऽयं देवदत्त इत्यादि वाक्येषु स्थितयोः सः अयमित्यादिपदयोर्भागत्यागेन भागपरिग्रहणेन च यथा जहदजहल्लक्षणांगीकृता तद्वदित्यर्थः । एवं च श्रुतिबोधितसामानाधिकरण्योपपादनाय तत्पदस्य तत्सदृशपरत्वं तदीयपरत्वं एवं प्रकारेणाजहल्लक्षणा नांगीकार्या । तथा सति सोऽयमित्यादावपि सामानाधिकरण्योपपादनाय तादृशलक्षणांगीकारे व्यवहारानानुगुण्यमनुभवविरोधश्चापद्येत । एतेन तादृशलक्षणया वाक्यार्थं समर्थयन्तः परास्ताः । तत्त्वविवेकप्रकरणे ४३-४७ श्लोकाववलोक्यताम् ॥ ७४ ॥

नन्वस्तु लक्षणा । तथापि पदादुपस्थितार्थस्याकांक्षादिगम्यः संसर्गो वाक्यार्थ इत्यभिहितान्वयवादिनो मन्यन्ते । अन्वयविशिष्टः पदार्थ एव वाक्यार्थ इत्यन्विताभिधानवादिनो मन्यन्ते । उभयथापि पदार्थद्वयसंसर्गस्य वाक्यार्थघटकतया कथमसंगब्रह्मबोधोऽस्माद्वाक्याज्जायते ? इत्याशंक्योभयमपि नास्माकमभिमतमित्याह, अभिहितानां वृत्त्या तत्तत्पदबोधितानामर्थानामन्वय आकांक्षादिगम्य इति वदन्त्यभिहितान्वयवादिनः । अन्वयविशिष्टमेव वृत्त्या शब्दबोध्यमित्यन्विताभिधानवादिनः । गामानयेत्यादौ गोपदस्य गोरूपोऽर्थः । द्वितीयैकवचनस्य कर्मत्वमर्थः । आङ्पूर्वकनयधातोरानयनमर्थः । गामानयेतिवाक्यबोध्यो गोकर्मकमानयनमित्येषोऽर्थः वाक्यघटकपदेषु न केनापि बोध्यते । आकांक्षादिवशात् संसर्गरूपो वाक्यार्थो भासत इत्यभिहितान्वयवादिनः । अन्विताभिधानवादिनां मते तु गोपदेनान्वितगोव्यक्त्यादेर्बोधनात् पदार्थो वाक्यार्थश्चैकरूप एव, अन्वितविशेषस्तु पदान्तरसमभिव्याहारादेव तैरप्येष्टव्यम् ।

**संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र संमतः ।**
**अखंडैकरसत्वेन वाक्यार्थो विदुषां मतः ॥ ७५ ॥**

अत्र महावाक्यानामर्थकल्पनायां संसर्गः शब्दशक्तिमनुसृत्याकांक्षादिगम्यः संसर्गो वाक्यार्थः । विशिष्टोऽन्वयविशिष्टः यत्र पदप्रतिपाद्योऽर्थः स एव वाक्यार्थो न संमतो नाभिमतः । एवं महावाक्यार्थविचारणे कर्तृक्रियाकारकविशेषणादिभिः परिच्छिन्नार्थकल्पना किं निषिध्यत इत्यत आह । अखंडेति । अखंडैकरसत्वेन न विद्यन्ते खंडा भागा यस्मिन् सोऽखंडः परब्रह्मणः स्वगतादिभेदत्रयशून्यत्वात् ।

तादृगेको रसस्तस्य भावः तेन वाक्यार्थो विदुषां मतः । पूर्वाभिमतस्य वाक्यार्थत्वेऽन्यानुमतस्य संसर्गस्य संसर्गतया प्रकारतया वा भानं स्यात् । अस्माकं तु संसर्गस्य येन केनाऽपि रूपेण भानं नेष्टम्, असंगत्वविरुद्धत्वात् संसर्गस्य ॥ ७५ ॥

वाक्यजन्यबोधस्य येन केनापि रूपेण संसर्गानवगाहित्वं स्पष्टयति, प्रत्यगिति ।

**प्रत्यग्बोधो य आभाति सोऽद्वयानन्दलक्षणः ।**
**अद्वयानन्दरूपश्च प्रत्यग्बोधैकलक्षणः ॥ ७६ ॥**

यः प्रत्यग्बोधः प्रत्यगात्मा बुद्ध्यादिसाक्षित्वेन स्फुरति सोऽद्वयानंदलक्षणः । "आनंदं ब्रह्मणो विद्वान्" (तै. २.४.) "आनंदो ब्रह्मेति व्यजानात्" (तै. ३.६.) एषो ह्येव आनंदयाति (तै. २.७.) "एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवन्ती" (बृ. ४.३.३२) त्यादि श्रुतिप्रतिपादितोऽखंडैकानंदस्वरूपः । अद्वयानंदरूपश्च परमात्माऽपि प्रत्यग्बोधैकलक्षणः प्रत्यग्बोधस्वरूपः । एवं च तत्र संसर्गस्य सुतरां भानं नास्तीति नासंगब्रह्मसाक्षात्कारविरोधः ॥ ७६ ॥

एवमखंडबोधफलमाह, इत्थमिति ।

**इत्थमन्योन्यतादात्म्यप्रतिपत्तिर्यथा भवेत् ।**
**अब्रह्मत्वं त्वमर्थस्य व्यावर्तेत तथैव हि ॥ ७७ ॥**

**तदर्थस्य च पारोक्ष्यम् ।**

इत्थमेवं प्रकारेण तत्त्वमस्यादिमहावाक्यादन्योन्यतादात्म्यप्रतिपत्तिः तत्त्वमोरर्थभूतयोः परमात्मप्रत्यगात्मनोरन्योन्यस्य तादात्म्यस्याभेदस्य प्रतिपत्तिरखंडार्थबोधो यथा भवेत् तथैव बोधसमकालमेव त्वमर्थस्य त्वंशब्दबोधितस्य प्रत्यगात्मनोऽब्रह्मत्वं तदर्थस्य च पारोक्ष्यं व्यावर्तेतावश्यं निवर्तेत ॥ ७७ ॥

ततः किमित्याशंक्याह, यदिति ।

**यद्येवं किं ततः शृणु ।**
**पूर्णानंदैकरूपेण प्रत्यग्बोधोऽवतिष्ठते ॥ ७८ ॥**

एवं प्रत्यगात्मनोऽब्रह्मत्वस्य तदर्थस्य पारोक्ष्यस्य च निवृत्तेर्यदि ततः किं फलं इतिप्रश्नः । उत्तरं शृणु । प्रत्यग्बोधः सर्वान्तर्यामिबोधश्चित्स्वरूपः प्रत्यगात्मा पूर्णानंदैकरूपेणावतिष्ठते ॥ ७८ ॥

समयबलेन सम्यक्परोक्षानुभवसाधनमागम इति लक्षणलक्षितागमान्तर्गतं वाक्यं कथमपरोक्षज्ञानजनकं भवेदित्याशंक्योपालंभनपूर्वकं परिहरति, एवमिति ।

एवं सति महावाक्यात्परोक्षज्ञानमीर्यते ।
यैस्तेषां शास्त्रसिद्धान्तविज्ञानं शोभतेतराम् ॥ ७९ ॥

एवं सति वाक्यस्यापरोक्षज्ञानजनकत्वे निश्चिते सति महावाक्यात् परोक्षज्ञानं यैरीर्यते कथ्यते तेषां शास्त्रसिद्धान्तविज्ञानमुपनिषच्छास्त्रस्य निश्चितार्थस्य विशेषज्ञानं शोभतेतरामिति परिहासः । ते सिद्धान्तरहस्यं न जानन्ति । एवं च तदीयागमलक्षणमपि सिद्धान्तरहस्यापरिज्ञानमूलकमेवेति तात्पर्यम् ॥ ७९ ॥

शास्त्रसिद्धान्तस्तावदास्ताम्, अनुमानेन वाक्यस्य परोक्षज्ञानजनकत्वसिद्धिरिति, चेन्नेत्याह, आस्तामिति ।

आस्तां शास्त्रस्य सिद्धान्तो युक्त्या वाक्यात्परोक्षधीः ।
स्वर्गादिवाक्यवन्नैवं दशमे व्यभिचारतः ॥ ८० ॥

शास्त्रस्य सिद्धान्त स्तत्रास्ताम् । महावाक्यानामपरोक्षज्ञानबोधकत्वरूपः सिद्धान्तो युक्त्या न घटत इत्याकूतं भवति । युक्त्या अनुमानेन वाक्यात् परोक्षधीरेव सिध्यति । अनुमानरचनां प्रदर्शयति, महावाक्यानि परोक्षज्ञानजनकानि वाक्यत्वात् स्वर्गकामो यजेतेत्यादिवाक्यवत्, इत्युच्यते चेन्नैवम्, हेतोर्दुष्टत्वादित्याह, दशमेति । दशमे दशमस्त्वमसीति स्थले व्यभिचारतः । तत्र वाक्यस्यापरोक्षज्ञानजनकत्वात् ॥ ८० ॥

किं च वाक्यं परोक्षज्ञानजनकमेवेत्यभ्युपगमे तवानर्थोप्यापततीत्याह, स्वत इति ।

स्वतोऽपरोक्षजीवस्य ब्रह्मत्वमभिवांछतः ।
नश्येत्सिद्धापरोक्षत्वमिति युक्तिर्महत्यहो ॥ ८१ ॥

ब्रह्मत्वमभिवांछतो महावाक्याद्ब्रह्मत्वं कांक्षमाणस्य स्वतः स्वभावतो ऽपरोक्षजीवस्यापि प्रत्यगात्मनः सिद्धं यदपरोक्षत्वं तदपि नश्येदिति हेतोस्तव युक्तिर्महतीत्यहो स्वस्यानर्थदायिनी। ब्रह्मत्वरूपेच्छया श्रुतिं विमृशतस्तव स्वभावसिद्धमपरोक्षत्वमात्मनो नश्येदिति तव वादोऽत्यन्तमनर्थकारणम्। अतो यथा जीवस्यापरोक्षत्वं ब्रह्मत्वप्रतिपित्सया नश्यतीति तव वादो न विश्वसनीयस्तथैव महावाक्यानां परोक्षार्थकल्पनापि भवदुक्ता न परिग्राह्येत्यर्थः॥ ८१॥

युक्तेः परिहाससूचितमनर्थदायित्वं विवृणोति, वृद्धिमिति।

**वृद्धिमिष्टवतो मूलमपि नष्टमितीदृशम्।**
**लौकिकं वचनं सार्थं संपन्नं त्वत्प्रसादतः॥ ८२॥**

त्वत्प्रसादतस्तवापूर्वयुक्तेः प्रभावतो वृद्धिं ऋणस्य सरळचक्रादिवृद्धिमिष्टवत इच्छत ऋणदातुर्मूलमपि नष्टमितीदृशं लौकिकं वचनं सार्थमन्वर्थं भवतीत्यर्थः॥ ८२॥

ब्रह्मणःसोपाधिकत्वविचारः।

ननु जीवस्य सोपाधिकत्वादपरोक्षत्वं युज्यते। तत्त्वमस्यादिमहावाक्यजन्यबोधविषयस्य ब्रह्मणस्तु निरुपाधिकत्वादपरोक्षत्वं कथं युज्यत इति शंकते। अन्तःकरणेति।

**अन्तःकरणसंभिन्नबोधो जीवोऽपरोक्षताम्।**
**अर्हत्युपाधिसद्भावान्न तु ब्रह्मानुपाधितः॥ ८३॥**

अन्तःकरणसंभिन्नबोधः अन्तःकरणेन संकीर्णश्चिद्रूपो जीव उपाधिसद्भावादुपाधेर्विद्यमानत्वादपरोक्षतामर्हति। अन्तःकरणोपाधिगतस्य जीवस्यापरोक्षत्वं युज्यते। अनुपाधित उपाधेरभावात् ब्रह्म अपरोक्षतां नार्हति, किंतु परोक्षतामेव। एवं च परोक्षब्रह्मबोधकत्वं वाक्यस्य नापैतीति मदुक्तमागमलक्षणं सम्यगेवेति शंकितुराशयः॥ ८३॥

ब्रह्मणः परोक्षत्वे उक्तहेतुर्निरुपाधिकत्वरूपोऽसिद्ध इति परिहरति, नेति।

**नैवं ब्रह्मत्वबोधस्य सोपाधिविषयत्वतः।**
**यावद्विदेहकैवल्यमुपाधेरनिवारणात्॥ ८४॥**

एवं ब्रह्म निरुपाधिकमिति न वक्तव्यम्, तस्यापि ब्रह्मत्वबोधस्यापि "अहं ब्रह्मास्मी"ति जीवस्य ब्रह्मरूपताज्ञानस्य सोपाधिविषयत्वतः उपाधिविशिष्ट-विषयकत्वात्। ज्ञानस्य सोपाधिविषयताकत्वं ज्ञेयस्य सोपाधिकत्वमन्तरा असंभवात् वाक्यजन्यबोधकाले ब्रह्मणः सोपाधिकत्वमवश्यमभ्युपेयम्। तथा च ब्रह्मणः परोक्षत्वे उदाहृतो निरुपाधिकत्वरूपहेतुरसिद्ध इति तात्पर्यम्। अत्र हेतुमाह, यावदिति। विदेहकैवल्यं शरीरपातानन्तरं मुक्तिर्यावत्संभवति तावत्पर्यन्तं शरीर-पातावधेरित्यर्थः। जीवस्योपाधेरनिवारणाद्ब्रह्मापि सोपाधिकमेव भवति ॥ ८४ ॥

एवं सति जीवब्रह्मणोरुपाधेर्द्वैविध्यं कीदृशमित्याशंक्याह, अन्तःकरणेति।

**अन्तःकरणसाहित्यराहित्याभ्यां विशिष्यते।**
**उपाधिर्जीवभावस्य ब्रह्मतायाश्च नान्यथा ॥ ८५ ॥**

जीवभावस्य ब्रह्मतायाश्चोपाधिरन्तःकरणसाहित्यराहित्याभ्यां विशिष्यते भिन्नो भवति। अन्तःकरणसाहित्यं जीवोपाधिः, तद्राहित्यं ब्रह्मोपाधिरिति, यावत् ॥ ८५ ॥

नन्वन्तःकरणसाहित्यस्य भावरूपत्वाद्युज्यते तस्योपाधित्वम्, कथ-मभावरूपस्य तद्राहित्यस्योपाधित्वमित्याशंक्याभावस्याप्युपाधित्वमंगीक्रियतामि-त्याह, यथेति।

**यथाविधिरुपाधिः स्यात्प्रतिषेधस्तथा न किम्।**
**सुवर्णलोहभेदेन श्रृंखलात्वं न भिद्यते ॥ ८६ ॥**

विधिर्भावरूपः, प्रतिषेधोऽभावरूपः, स्पष्टमन्यत्। भावस्यैवोपाधित्वं नाभावस्येति कोऽसौ निर्बंधः? उपाधेः स्वरूपं तावत् सतोऽसतो वा कस्यचिदंशस्य संपादकत्वम्। तदन्तःकरणविनिर्मुक्तविक्षेपशक्त्यात्मना स्थिताया मायाया अस्त्येव। अतो विक्षेपशक्तिनाशपर्यन्तं तस्यास्तच्छक्तिरूपेण सत्ताभ्युपगमात्। तावत्पर्यन्तं देहरूपपदार्थस्य संपादकत्वादुपाधिकत्वम्। अत्र दृष्टान्तमाह, सुवर्णेति। शृंखलात्वं निगळाबंधस्य पुरुषसंचारनिरोधकत्वं सुवर्णलोहभेदेन न भिद्यते। सुवर्णस्य भावा-भावाभ्यां न भिद्यते ॥ ८६ ॥

एवं भावाभावयोरप्युपाधिप्रयोजकत्वं विजातीयभावयोरुपाधित्वप्रदर्शनमुखेन संसाध्य तयोरेककार्यकारित्वेनाप्युपाधित्वं साधयितुमाह, अतदिति ।

अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन च ।
वेदान्तानां प्रवृत्तिः स्याद्द्विधेत्याचार्यभाषणम् ॥८७॥

अतद्व्यावृत्तिरूपेण तत् ब्रह्म न भवति अतत् जगत्, तस्य नेति नेतीति व्यावृत्तिरूपेण निषेधेन साक्षाद्विधिमुखेन विधेरुपदेशस्य मुखेन "सत्यं ज्ञानमनन्तं ब्रह्मेत्या"दि भावरूपेण ब्रह्मावबोधने वेदान्तानां प्रवृत्तिः व्यापारो द्विधा स्यादित्याचार्यभाषणम् । वाक्यवृत्तौ "त्वमर्थमेवं निश्चित्य तदर्थं चिन्तयेत्पुनः, अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन चेति" भाषितम् । एवं च तद्बोधोपायस्यापि तदुपाधित्वावश्यंभावाद्विधेरिव व्यावृत्तेरपि बोधोपायतया भावाभावयोरुभयोरपि तदुपाधित्वमवगन्तव्यमिति भावः ॥ ८७ ॥

नन्वतद्व्यावृत्त्या वेदान्तानां ब्रह्मबोधकत्वं नो घटते, अहं ब्रह्मास्मीति वाक्येऽहंपदार्थस्य कूटस्थस्यापि वृत्तिप्रसंगादिति शंकते, अहमिति ।

अहमर्थपरित्यागादहं ब्रह्मेति धीः कुतः ?
नैवमंशस्य हि त्यागो भागलक्षणयोदितः ॥ ८८ ॥

अतद्व्यावृत्तिरूपेण वेदान्तानां प्रवृत्ते "रहंब्रह्मास्मी"ति महावाक्येऽहमर्थपरित्यागा "दहं"शब्दस्य योऽर्थः कूटस्थस्तस्य परित्यागादहं ब्रह्मेति धीः कुतः सिध्यति? अहंशब्दार्थपरित्यागेऽर्थादस्मीति शब्दार्थस्यापि परित्याज्यत्वात् "तत्त्वमसी"ति वाक्यार्थजन्यानुभववदर्थानुभवो नात्रोदेतीति पूर्वपक्षः । समाधत्ते, नेति । नैवं पूर्वोक्तरीत्या वक्तव्यम्, कुतः? भागलक्षणया जहदजहल्लक्षणया अहंशब्दार्थस्य योंशः एकदेशभूतो जाड्यादिः तस्य त्याग उदितः । एवं च तत्र कूटस्थस्य सर्वात्मना त्यागो नास्ति किन्तु तद्गतं जाड्यादिकमेव निवर्तते । तदेवातद्व्यावृत्तिरूपेणोच्यते ॥ ८८ ॥

तदेवाह, अन्तःकरणेति ।

अन्तःकरणसंत्यागादवशिष्टे चिदात्मनि ।

अहं ब्रह्मेति वाक्येन ब्रह्मत्वं साक्षिणीक्ष्यते ॥ ८९ ॥

स्पष्टोऽर्थः ॥ ८९ ॥

ब्रह्मणःफलव्याप्यत्वाभावः ।

स्वयंप्रकाशस्य साक्षिणो बुद्धिविषयत्वस्यांगीकारे सिद्धान्तभंगापातमाशंक्य परिहरति, स्वेति ।

स्वप्रकाशोऽपि साक्ष्येष धीवृत्त्या व्याप्यतेऽन्यवत् ।
फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम् ॥ ९० ॥

साक्षी स्वप्रकाशः तस्य ज्ञातुरन्यस्याभावेऽप्यन्यवत् घटपटादिवद्धीवृत्त्या व्याप्यते बुद्धिविषयो भवतीत्यर्थः । एवं ज्ञात्रन्तराभावतस्साक्षिणो बुद्धिविषयत्वस्यांगीकारेऽपसिद्धान्तापात एव स्यादिति चेन्न, अस्य साक्षिणः फलव्याप्यत्वमेव चिदाभासव्याप्यत्वमेव निवारितम् , न तु बुद्धिव्याप्यत्वमिति तद्व्याप्यत्वमस्यास्त्येवेत्यर्थः । अत्रायं भावः । बुद्धिवृत्तिप्रतिबिंबितचिदाभासेन सर्ववस्तुप्रकाशो भवति । स्वयंप्रकाशमाने साक्षिणि विषये तु स्वस्यैव प्रकाशरूपत्वाच्चिदाभासप्रकाश्यत्वं नापेक्ष्यत इति चिदाभासव्याप्यत्वं निराकृतम् । बुद्धिवृत्तिव्याप्यत्वं त्वावरणनिवर्तकतयोपयोगान्न निवार्यते । अतो नानुपपत्तिः ॥ ९० ॥

आत्मनि फलव्याप्तिर्नास्तीति द्रढयितुमनात्मन्युभयव्याप्तिं दर्शयति, बुद्धीति ।

बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम् ।
तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत् ॥ ९१ ॥

बुद्धितत्स्थचिदाभासौ बुद्धिश्च तस्यां स्थितो यश्चिदाभासः प्रतिबिंबरूपः तौ द्वावपि घटं व्याप्नुतः । तत्र धिया धीवृत्त्या घटविषयकमज्ञानं नश्येत् । स्फुरणविरोध्यज्ञाननाशे सति आभासेन घटः कंबुग्रीवादिमान् स्फुरेत् । घटो विषयीक्रियते ॥ ९१ ॥

साक्षिणः स्वयंप्रकाशत्वेन प्रकाशकान्तरानपेक्षणादावरणभंगाय बुद्धिवृत्तिमात्रमेवापेक्ष्यते इत्याह, ब्रह्मणीति ।

ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता ।
स्वयंस्फुरणरूपत्वान्नाभास उपयुज्यते ॥ ९२ ॥

ब्रह्मणि तद्विषयेऽज्ञाननाशाय बुद्धेर्वृत्तिव्याप्तिरपेक्षिता । तदावरकाज्ञानापनोदनाय बुद्धिवृत्तिरपेक्ष्यते । स्वयं स्फुरणरूपत्वात् स्वयंप्रकाशरूपत्वादाभासो नोपयुज्यते । दीपप्रभाभासनायाच्छादनापनोदनमात्रमेवापेक्ष्यते न तु दीपान्तरमिति भावः ॥ ९२ ॥

अस्मिन्नर्थे निदर्शनमाह, चक्षुरिति ।

चक्षुर्दीपावपेक्ष्येते घटादेर्दर्शने यथा ।
न दीपदर्शने किं तु चक्षुरेकमपेक्ष्यते ॥ ९३ ॥

चक्षुर्दीपावुभावपेक्ष्येते इति योजना । स्पष्टमन्यत् । जडस्य घटादेर्दर्शने दीपोऽपेक्ष्यते, दीपदर्शने तु चक्षुर्मात्रमेवापेक्ष्यते न तु दीपान्तरम् । तद्वत्प्रकृतेऽपीत्यर्थः ॥ ९३ ॥

ननु यथा साक्षिणो बुद्धिव्याप्यत्वं तथैव चिदाभासव्याप्यत्वमपि सिद्धमेव । चिदाभासबुद्धिविशिष्टबुद्धिवृत्तेश्चिदाभासवैशिष्ट्यानपायादित्यत आह, स्थित इति ।

स्थितोऽप्यसौ चिदाभासो ब्रह्मण्येकीभवेत्परम् ।
न तु ब्रह्मण्यतिशयं फलं कुर्याद्घटादिवत् ॥ ९४ ॥

असौ चिदाभासो बुद्धिव्याप्तौ बुद्धिविशेषणतया स्थितोऽपि ब्रह्मणि परमत्यन्तमेकीभवेत् । यथा सुविशाले सागरे पतितो वर्षबिंदुर्न समुद्रजलमार्द्रं करोति किं तु तेन सहैकीभवति तथैवात्रापि । "यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाये" (मुं. ३.२.८.) ति श्रुतिः । किंतु घटादिवद्ब्रह्मण्यतिशयं फलं न कुर्यात् । यथा चिदाभासो घटादिकं व्याप्य तत्स्वरूपं स्फोरयति न तथा ब्रह्मेति भावः ॥ ९४ ॥

ब्रह्मणि फलव्याप्त्यभावे बुद्धिवृत्तिव्याप्तौ च प्रमाणमुदाहरति, अप्रमेयेति ।

**अप्रमेयमनादिंचेत्यत्र श्रुत्येदमीरितम् ।**
**मनसैवेदमाप्तव्यमिति धीव्याप्यता श्रुता ॥ ९५ ॥**

अप्रमेयमनादिं चेत्यत्र "निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितं । अप्रमेयमनादिं च यत् ज्ञात्वा मुच्यते बुधः" (अमृ. ९.) इति वाक्ये श्रुत्येदं फलव्याप्तिराहित्यमीरितम् । अप्रमेयमित्युक्तत्वात् "मनसैवेदमाप्तव्यं नेह नानास्ति किंचने"ति (कठ. २. ४. ११.) धीव्याप्यता श्रुता । तत्रैवेत्यवधारणेन फलव्याप्तिर्नास्तीत्यपि सूचितम् । तथैव "एषोऽणुरात्मा चेतसा वेदितव्य" (मुंड. ३. १. ९.) इत्यत्रापि फलव्याप्तिविरहितधीव्याप्यत्वमात्रमेव ज्ञेयम् ॥ ९५ ॥

"अपरोक्षज्ञानशोकनिवृत्त्याख्ये उभे" इति श्लोकेनात्मानं चेदिति मन्त्रोऽवस्थाद्वयं ब्रूत इति वक्ष्यति । तत्र केनांशेनापरोक्षज्ञानं ब्रूत इति शंकां परिहरति, आत्मानमिति ।

**आत्मानं चेद्विजानीयादयमस्मीति वाक्यतः ।**
**ब्रह्मात्मव्यक्तिमुल्लिख्य यो बोधः सोऽभिधीयते ॥ ९६ ॥**

स्पष्टः पूर्वार्धः । तेन वाक्येन श्रुत्यंशभूतेन ब्रह्मात्मव्यक्तिं ब्रह्माभिन्नात्मव्यक्तिं प्रत्यगात्मस्वरूपं तमुल्लिख्य विषयीकृत्य यो बोधोऽपरोक्षरूपो ज्ञायते सोऽभिधीयते । तेन वाक्येन ब्रह्मभिन्नप्रत्यगात्मापरोक्षज्ञानमुपदिश्यते ॥ ९६ ॥

अपरोक्षबोधस्य दृढीकरणोपायाः ।

"नाऽयमात्मा प्रवचनेन लभ्यः" इति (मुंड. ३. २. २.) श्रुतिबोधितात्मज्ञानस्य कष्टसाध्यतां मनसि कृत्वा एवं महावाक्यश्रवणजन्यं ब्रह्मात्मनोरभेदज्ञानमभ्यासेन दृढीकर्तव्य इत्याह, अस्त्विति ।

**अस्तु बोधोऽपरोक्षोऽत्र महावाक्यात्तथाप्यसौ ।**
**न दृढः श्रवणादीनामाचार्यैः पुनरीरणात् ॥ ९७ ॥**

अत्र ब्रह्मात्मैक्यस्थले महावाक्यात् तच्छ्रवणादपरोक्षः साक्षात्काररूपो बोधो ज्ञानमस्तु । तथापि न दृढः । तस्य दृढीकरणाय आचार्यैः श्रवणादीनां

श्रवणमनननिदिध्यासादीनां पुनः पौनःपुन्येन कर्तव्यतया इरणात् । "आवृत्तिरसकृदुपदेशा", (ब्र. सू. ४. १. १.) दित्यत्र ॥ ९७ ॥

आचार्याणामीरणं कुत्रेत्याशंक्य तदुदीरितवाक्यवृत्तिश्लोकमुदाहरति, अहमिति ।

अहं ब्रह्मेति वाक्यार्थबोधो यावद्दृढीभवेत् ।
शमादिसहितस्तावदभ्यसेच्छ्रवणादिकम् ॥ ९८ ॥

स्पष्टा पदयोजना । दृढज्ञानावाप्तिरेवावृत्तेरवधिरित्यर्थः ॥ ९८ ॥

तत्प्रतिबन्धप्रतीकारविचारः ।

दृढज्ञानपरिपंथिनः सन्ति बहवो यतोऽभ्यासावसर इति तानाह, बाढमिति ।

बाढं सन्ति ह्यदार्ढ्यस्य हेतवः श्रुत्यनेकता ।
असंभाव्यत्वमर्थस्य विपरीता च भावना ॥ ९९ ॥

श्रुत्यनेकता श्रुतीनां नानात्वं, तत्र तत्र श्रुतीनां विरुद्धार्थबोधकत्वाभाससंभवात् अर्थस्याखंडैकरसस्याद्वितीयब्रह्मरूपस्यालौकिकत्वेनासंभाव्यत्वम्, विपरीता च भावना कर्तृत्वाभिमानरूपः, च शब्देन तद्बुद्ध्युत्प्रेक्षिता अन्येऽपि संगृहीताः । इत्येवंविधा बोधा या अदार्ढ्यस्य हेतवो बाढं सन्ति ॥ ९९ ॥

श्रुत्यनेकताप्रयुक्तदार्ढ्यस्य प्रतीकारमाह, शाखेति ।

शाखाभेदात्कामभेदाच्छ्रुतं कर्मान्यथान्यथा ।
एवमत्रापि माशंकीत्यतः श्रवणमाचरेत् ॥ १०० ॥

शाखाभेदात् ऋग्वेदादिशाखानां भेदात् कामभेदात् कामानामाशिषां भेदाच्च कर्मान्यथान्यथा वैविध्येन श्रुतम् । अत्राऽपि निःश्रेयसविषयेऽप्येवं भेदं माशंकि माशंक्यताम् । इत्यतो वेदान्तानां संप्रदायसिद्धं गुरुमुखतः श्रवणमाचरेत् ॥ १०० ॥

श्रवणलक्षणमाह, वेदान्तेति ।

**वेदान्तानामशेषाणामादिमध्यावसानतः ।**
**ब्रह्मात्मन्येव तात्पर्यमिति धीः श्रवणं भवेत् ॥ १०१ ॥**

अशेषाणां सर्वेषां वेदान्तानामादिमध्यावसानत उपक्रमोपसंहारादिलिंगेभ्यः एकवाक्यतया पर्यालोचनया ब्रह्मात्मन्येव परात्मप्रत्यगात्मनोरभेदबोध एव तात्पर्यमिति धीः श्रवणं भवेत् ॥ १०१ ॥

अत्र श्रीचरणाचारं प्रमाणमाह, समन्वयेति ।

**समन्वयाध्याय एतत्सूक्तं धीस्वास्थ्यकारिभिः ।**
**तर्कैः संभावनाऽर्थस्य द्वितीयाध्याय ईरितः ॥ १०२ ॥**

श्रुतीनामापाततो नानार्थत्वेन भानेऽपि सर्वासां तासामद्वितीये ब्रह्मण्येव समन्वय इति "तत्तु समन्वयादि"ति (१. १. ४.) सूत्रेणोपक्रम्याविशेषेण बोधकत्वमिति समन्वयाध्याये एतत्सूक्तं सुष्ठु समन्वितम् । इदानीं तु द्वितीयं हेतुं निराकरोति, धीति । धीस्वास्थ्यकारिभिः बुद्धेः स्वभावस्थित्यापादकैर्ज्ञेयविषयिकानुपपत्तिपरिहारपूर्वकासंदिग्धार्थावबोधोपयोगिभिः शास्त्रानुरूपैस्तर्कैर्युक्तिभिरर्थस्य संभावना असंभाव्यत्वनिवृत्तिफलका समन्वितार्थस्य संभावना द्वितीयाध्याये ईरिता साङ्ख्यादिवेदान्तविरोधिमतनिरसनपूर्वकमशेषश्रुतीनामेकवाक्यताप्रदर्शनेन द्वितीयाध्यायेऽविरोधाध्याय इतीर्यते । तत्र प्रथमे पादे साङ्ख्ययोगकणादादिस्मृतिभिः साङ्ख्यादिप्रयुक्ततर्कैश्च वेदान्तसमन्वयविरोधपरिहारः कृतः । द्वितीये साङ्ख्यादिमतानां दुष्टत्वं प्रदर्शितम् । तृतीये पादे पञ्चमहाभूतजीवादिश्रुतीनां विरोधः परिहृतः । चतुर्थे लिङ्गशरीरश्रुतीनां विरोधोऽपसारितः ॥ १०२ ॥

विपरीतभावनाप्रदर्शनपूर्वकं तन्निवृत्त्युपायमाह, बह्विति ।

**बहुजन्मदृढाभ्यासाद्देहादिष्वात्मधीः क्षणात् ।**
**पुनः पुनरुदेत्येवं जगत्सत्यत्वधीरपि ॥ १०३ ॥**
**विपरीतभावनेयं ।**

आदिशब्देन प्राणमयादीतरकोशा गृह्यन्ते । आत्मधीः ते एवात्मेत्याकारका

बुद्धिः । क्षणात् प्रतिक्षणम् । स्पष्टमन्यत् ॥ १०३ ॥

तन्निवारणोपायमाह, ऐकाग्र्यादिति ।

ऐकाग्र्यात्सा निवर्तते ।

तत्त्वोपदेशात्प्रागेव भवत्येतदुपासनात् ॥ १०४ ॥

सा विपरीतभावना चित्तस्यैकाग्र्यान्निवर्तते । एतत् चित्तैकाग्र्यं च तत्त्वोपदेशात् प्राक् उपासनात्, उप समीपे आसनं मनसो न्यासः लक्ष्यवस्तुनि स्थिरीकरणं, सगुणब्रह्मणि मनसः स्थिरीकरणाद्भवति । उपासनाफलं चित्तैकाग्र्यम् । ततो विपरीतभावनानाश इति भावः ॥ १०४ ॥

उपासनानां चित्तैकाग्र्यसंपादनेन विपरीतभावनानिवर्तकतया वाक्यार्थबोधदृढीभावसाधनत्वमुक्तम् । तदेतन्न स्वकपोलकल्पितं किंत्वाचार्याभिप्रेतमेवेत्याह, उपास्तय इति ।

उपास्तयोऽत एवाऽत्र ब्रह्मशास्त्रेऽपि चिन्तिताः ।

प्रागनभ्यासिनः पश्चाद्ब्रह्माभ्यासेन तद्भवेत् ॥ १०५ ॥

अत एवोपासनानां परंपरया दार्ढ्योपायत्वादेव अत्र ब्रह्मशास्त्रेपि ब्रह्मप्रतिपादकशारीरकमीमांसाशास्त्रेप्युपास्तयश्चिन्तितास्तृतीये अध्याये । दृढबोधानुपायत्वे तासामुपासनानां ब्रह्मविचारशास्त्रे चिंतनमनुपपन्नमेव स्यात् । अतस्तेषां वेदान्तशास्त्रसंबंध उक्तप्रणाल्योपपादनीय इति तात्पर्यम् । एवं च मदुक्तप्रणाल्याचार्यसम्मतैव । न स्वकपोलकल्पितेति तात्पर्यम् । ननु कृतोपासनानामुक्तरीत्या वाक्यार्थबोधो दृढो भवति । अकृतोपासनानां कागतिरित्याशंक्याह, प्रागिति । प्रागनभ्यासिनः उपदेशात्प्रागकृतोपासनस्य पश्चात् उपदेशानन्तरं ब्रह्माभ्यासेन तच्चित्तैकाग्र्यं भवेत् । तेषां ब्रह्माभ्यासजनितचित्तैकाग्र्येण विपरीतभावनानिवृत्तौ वाक्यार्थबोधदार्ढ्यतेति भावः ॥ १०५ ॥

ब्रह्माभ्यासप्रकारविचारः ।

ब्रह्माभ्यासप्रकारं विवृणोति, तदिति ।

तच्चिंतनं तत्कथनमन्योन्यं तत्प्रबोधनम् ।

एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ॥ १०६ ॥

तच्चिंतनं मनसि तस्य परब्रह्मणस्तदुपपादकवाक्यसहायेन चिंतनं पौनःपुन्येन मननम्, स्वन्यूनेभ्यस्तत्कथनं तत्स्वरूपव्याख्यानम्, गुरुजनैर्वा सतीर्थ्यैर्वाऽन्योन्यं तत्प्रबोधनं संवादनपूर्वकं तस्य प्रकर्षेणावगमनम्, एतदेकपरत्वं एतस्मिन्नेवाभिमुख्ये नासक्तिः। इदं ब्रह्माभ्यासमिति बुधा विदुः ॥ १०६ ॥

एकपरत्वं काण्वश्रुत्या विशदयति, (बृ. ४. ४. २१.) तमिति।

तमेवधीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः।
नानुध्येयेद्बहून् शब्दान् वाचो विग्लापनं हि तत् ॥ १०७ ॥

धीरः ब्रह्मचर्यादिसाधनसंपन्नः ब्राह्मणः ब्रह्मणि प्रभविष्णुः तमेवाप्रमेयं ध्रुवं विरजं परमाकाशवदजमात्मानं महाध्रुवमेवं गुरूपदेशशास्त्राभ्यां विज्ञाय शमदमादि साधनैर्निस्संशयं ज्ञात्वा प्रज्ञां ब्रह्मात्मैक्यज्ञानसंततिं कुर्वीत समुपार्जयेत्। बहून् प्रभूताननात्मविषयान् शब्दान् नानुध्यायेन्नानुस्मरेत्। इदमुपलक्षणमनात्मशब्दाना-मुच्चारणस्य। हि यस्मात् कारणात् तत् बहुशब्दानुध्यानं तदुच्चारणं च वाच उपलक्षणान्मनसश्च विग्लापनं क्लेशकारणं भवति ॥ १०७ ॥

तत्र गीतावाक्यमनुसंदधाति, अनन्येति।

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ १०८ ॥

ये जना अनन्याः येषामन्यो न विद्यते ते "अहं ब्रह्मासी"ति ज्ञानेन मदभिन्नाः संतः मां चिन्तयन्तः तथैव मन्वानाः पर्युपासते परितः सर्वकालावस्थासु मद्रूपा एव भवन्ति। एवं नित्याभियुक्तानामविच्छन्नतया मय्येव संलग्नधियां योगक्षेमं योगोऽप्राप्तस्य विपरीतभावनानिरासादिकस्य प्राप्तिः, क्षेमः प्राप्तस्य स्थिरीकरणादिना संरक्षणमित्याद्यहं वहामि संपादयामि ॥ १०८ ॥

अहं मामित्युपदेशशास्त्रदृष्ट्या वामदेववदुक्तपद्यद्वयाशयमाह, इतीति।

इति श्रुतिस्मृती नित्यमात्मन्येकाग्रतां धियः।

विधत्त विपरीताया भावनायाः क्षयाय हि ॥ १०९ ॥

इत्युक्तिरीत्या श्रुतिस्मृती नित्यं धियो बुद्धेरात्मनि एकाग्रतां अविच्छिन्नज्ञानधाराकत्वं विधत्ते हि। किमर्थम्? विपरीताया भावनायाः क्षयाय नाशनाय। एवमेते श्रुतिस्मृती विपरीतभावनापनयनायानवरतमात्मन्यविच्छिन्नज्ञानसंततिमापादयत इत्यर्थः ॥ १०९ ॥

देहात्मधियो जगत्सत्यत्वधियश्च विपरीतभावनात्वं समर्थयति, यदिति ।

यद्यथा वर्तते तस्य तत्त्वं हित्वान्यथात्वधीः ।
विपरीता भावना स्यात्पित्रादावरिधीर्यथा ॥ ११० ॥

यद्वस्तु यथा येन रूपेण वर्तते तस्य वस्तुनस्तत्त्वं तद्रूपं हित्वा परित्यज्य अन्यथात्वधीः विपरीतधर्मरूपेण ज्ञानं विपरीता भावना स्यात् अतस्मिन् तद्बुद्धिरिति यावत्। तत्रोदाहरणमाह शत्रुत्वाभाववति पित्रादौ आदिशब्देनान्ये हितैषिणो गृह्यन्ते। अरिधीः शत्रुत्वेन बुद्धिर्यथा ॥ ११० ॥

उक्तलक्षणं प्रकृते योजयति, आत्मेति ।

आत्मा देहादिभिन्नोऽयं मिथ्याभेदं जगत्तयोः ।
देहाद्यात्मत्वसत्यत्वधीर्विपर्ययभावना ॥ १११ ॥

अयमात्मा देहादिभिन्नः देहादिपंचकोशेभ्यो भिन्नः। इदं जगच्च मिथ्या, तथाऽपि तयोरात्मजगतोर्देहाद्यात्मत्वसत्यत्वधीर्देहादावात्मत्वस्य जगति सत्यत्वस्य च धीः विपर्ययभावनेत्युच्यते। आत्मत्वाभाववति देहादावात्मत्वबुद्धिः, सत्यत्वाभाववति जगति सत्यत्वबुद्धिश्च विपरीतभावना। तस्या अप्यतस्मिन् तद्बुद्धित्वात् ॥ १११ ॥

विपरीतभावनेयमैकाग्र्यान्निवर्तत इति सामान्यत उक्तमर्थं विशेषेणाह, तत्त्वेति ।

तत्त्वभावनया नश्येत् साऽतो देहातिरिक्तताम् ।
आत्मनो भावयेत्तद्वन्मिथ्यात्वं जगतोऽनिशम् ॥ ११२ ॥

सा विपरीतभावना तत्त्वभावनया तत्त्वचिन्तनेन नश्येत् । अतो आनिश्चयात्मनो देहातिरिक्ततां पंचकोशेभ्यो भिन्नतां तद्वत् जगतो मिथ्यात्वं च भावयेत् । एवं कृते विपरीतभावना परेतभावना भवतीति भावः ॥ ११२ ।

ब्रह्माभ्यासस्य नियमाभावविचारः ।

उपासनावत्तत्त्वभावना नियममपेक्षते न वेति शंकते, किमिति ।

**किं मंत्रजपवन्मूर्तिध्यानवद्वाऽऽत्मभेदधीः ।**
**जगन्मिथ्यात्वधीश्चात्र व्यावर्त्या स्यादुतान्यथा ॥ ११३ ॥**

आत्मभेदधीः जगन्मिथ्यात्वधीश्च मंत्रजपवन्नियमितसंख्याविधानेन गायत्र्यादिमंत्रस्य जपवदावृत्तिवत्, अत मूर्तिध्यानवन्मूर्तेः शंखचक्रगदाधरत्वादिविशेषाकारविशिष्टस्य यस्य कस्यचिद्देवताविग्रहस्य ध्यानवद्व्यावर्त्या किम् ? अन्यथा लौकिकव्यवहारवन्नियममनवलंब्यैव निष्पाद्या ? ॥ ११३ ॥

दृष्टफलकतया नात्र कश्चिन्नियम अपेक्ष्यत इति सदृष्टान्तमाह, अन्यथेति ।

**अन्यथेति विजानीहि दृष्टार्थत्वेन भुक्तिवत् ।**
**बुभुक्षुर्जपवद्भुङ्क्ते न कश्चिन्नियमः क्वचित् ॥ ११४ ॥**

दृष्टार्थत्वेन प्रत्यक्षतोऽनुभूयमानफलकत्वेन भुक्तिवत् सद्यः फलकारि भोजनमिव अन्यथा नियमं विनानुष्ठेयमिति विजानीहि । तदेव विवृणोति । बुभुक्षुः भोजने तीव्रेच्छावान् कश्चिदपि नियतस्सन् क्वचिदपि जपवत् नियमेन न भुङ्क्ते ।

क्षुदुपशमभोजने नियमाभावं प्रपंचयति, अश्नातीति ।

**अश्नाति न वाश्नाति भुङ्क्ते वा स्वेच्छयाऽन्यथा ।**
**येन केन प्रकारेण क्षुधामपनिनीषति ॥ ११५ ॥**

क्षुद्बाधानिवर्तयेऽश्नाति, नाश्नाति द्यूतादिना विस्मृतबाधो नाश्नाति, अन्यथा तिष्ठन् गच्छन् शयानो वा स्वेच्छया भुङ्क्ते । स्पष्टमन्यत् । क्षुन्निवृत्तिमात्रफलकं भोजनम् । तत्र नियमविधयस्तु नियमापूर्वसंपत्तये इति भावः ॥ ११५ ॥

जपविधौ तु भोजनवैलक्षण्यं दर्शयति, नियमेनेति ।

**नियमेन जपं कुर्यादकृतौ प्रत्यवायतः ।**

अन्यथा करणेऽनर्थः स्वरवर्णविपर्ययात् ॥ ११६ ॥

जपं नियमेनैव कुर्यात्। तत्र कारणमाह, अकृताविति। अकृतौ नियमेनाकरणे प्रत्यवायतः पापप्राप्तेः, अन्यथाकरणे विधिमतिरिच्य करणे स्वरवर्णविपर्ययात् स्वरस्य वर्णस्य च व्यत्यासात्। "इंद्रशत्रुर्वर्धस्व" त्यादिष्विव स्वरतोऽपराधादिंद्रशत्रोर्यथानर्थोऽभूत्तथानर्थो निधनमेव स्यात् ॥ ११६ ॥

ननु क्षुद्बाधायां दृष्टानर्थत्वात्तन्निवारणे नियमाभावो युज्यते। विपरीतभावनाया अतथात्वान्मैवमित्यत आह, क्षुधेति।

क्षुधेव दृष्टबाधाकृद्विपरीता च भावना।
ज्ञेया केनाप्युपायेन नास्त्यत्रानुष्टितेः क्रमः ॥ ११७ ॥

स्पष्टोऽर्थः। क्षुद्बाधायाः प्रत्यक्षत्वाद्यथाकथं निवर्तनीया। तथैव विपरीतभावनायाः दुःखहेतुत्वस्यानुभवसिद्धत्वात् यथाकथं सापि निवर्तनीयेति भावः॥११७॥

तदुपायं पूर्वोक्तं स्मारयति, उपाय इति।

उपायः पूर्वमेवोक्तस्तच्चिन्ताकथनादिकः।
एतदेकपरत्वेऽपि निर्बंधो ध्यानवन्न हि ॥ ११८ ॥

पूर्वमेव षडुत्तरशततमे श्लोके। स्पष्टमन्यत्। एकपरत्वेऽपि भाव्यैकपरत्वे सत्यपि मूर्तिध्याने ध्येयैकपरत्ववदत्र भाव्यैकपरत्वमित्येकपरत्वेन भावनाया ध्यानसाम्येवेति भावः ॥ ११८ ॥

ब्रह्माभ्यासरूप एतदेकपरत्वे इव ध्यानरूपेऽपि तस्मिन्निर्बंधो माभूत्, अविशेषात्। इत्याशंक्य तस्मिन् निर्बंधावश्यकतां तत्स्वरूपप्रदर्शनेन विशदयति, मूर्तीति।

मूर्तिप्रत्ययसांतत्यमन्यानन्तरितं धियः।
ध्यानं तत्रातिनिर्बंधो मनसश्चंचलात्मनः ॥ ११९ ॥

अन्यानन्तरितं अन्यैर्विजातीयप्रत्ययैरनन्तरितम व्यवहितं धियो मूर्तिप्रत्ययसांतत्यं मूर्तेः ध्येयदेवतायाः प्रत्यया ज्ञानानि तेषां सांतत्यं संततत्वाविच्छिन्नत्व

भावः तत् ध्यानमित्यभिधीयते। मनसः चंचलात्मनश्चपलस्वरूपस्य तत्वध्यानेऽति-निर्बंधोऽत्यतं निरोधः कर्तव्यः। अनिरोधे प्रत्ययान्तरैर्विच्छेदाद्ध्यानस्वरूपमेव भज्येत ॥ ११९ ॥

मनसश्चंचलात्मत्वे गीतावाक्य (६-३४) मुदाहरति, चंचलमिति।

चंचलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ १२० ॥

हे कृष्ण ! पापानि कर्षतीति कृष्णः। प्रमाथि शरीरमिंद्रियाणि च व्याकुलीकरोति। बलवन्नियमनाशक्यम्। दृढं च्छेदनाशक्यम्। स्पष्टमन्यत् ॥१२०॥

चित्तनिग्रहदुःसाध्यतां वासिष्ठभाषणेन द्रढयति, अपीति।

अप्यब्धिपानान्महतः सुमेरून्मूलनादपि।
अपि वह्न्यशनात्साधो विषमश्चित्तनिग्रहः ॥ १२१ ॥

अब्धिपानादगस्त्यकृतात्, सुमेरून्मूलनात् तत्कार्मुकीचिकर्षयेश्वरकृतात्। वह्न्यशनाद्गोपरक्षणार्थं श्रीकृष्णकृतात्। स्पष्टमन्यत् ॥ १२१ ॥

परब्रह्मचिन्तनास्वेच्छाप्रतिघातो नास्ति। यतो निरोधापेक्षेत्याह, कथनेति।

कथनादौ न निर्बंधः शृंखलाबद्धदेहवत्।
किंत्वनन्तेतिहासाद्यैर्विनोदो नाट्यवद्धियः ॥ १२२ ॥

कथनादौ, आदिशब्देन चिन्तनान्योन्यतद्बोधनौ गृह्येते। स्पष्टमन्यत्। परब्रह्मकथासुधास्थलीषु क्रीडने मनसो विषयान्तरचलनाप्रसक्त्या न तत्र निरोधावसर इति भावः ॥ १२२ ॥

अभ्यासघटकतदेकपरत्वमितिहासादिगोष्ठ्या विहन्यते। अतस्तेषां चतुर्णामभ्यासांशत्वं न युज्यत इत्याह, चिदिति।

चिदेवात्मा जगन्मिथ्येत्यत्र पर्यवसानतः।
निदिध्यासनविक्षेपो नेतिहासादिभिर्भवेत् ॥ १२३ ॥

पर्यवसानतः तात्पर्यविश्रान्तेः। स्पष्टमन्यत्। एवं च तदेकपरत्वमितिहासादयो न बाधन्ते। किंतु तदनुकूला एव भवन्तीति भावः॥ १२३॥

तत्त्वानुसन्धाने कृष्यादीनां विक्षेपत्वविचारः।

चित्तैकाग्र्यस्येतिहासादिभिरबाधेऽभ्युपगते कृष्यादिभिरप्यबाधः किं नस्यादित्याशंक्याह, कृषीति।

**कृषिवाणिज्यसेवादौ काव्यतर्कादिकेषु च।**
**विक्षिप्यते प्रवृत्त्या धीस्तैस्तत्त्वस्मृत्यसंभवात्॥ १२४॥**

सेवा पराधीनवृत्तिः, काव्यं नगनगरार्णवाद्यष्टादशवर्णनाविशिष्टा कवेः कृतिः, तर्कः केवलयुक्तिवादः, विक्षिप्यते विषयान्तरेषु प्रवर्तते। विक्षेपे कारणमाह, तैरिति। तैर्वाणिज्यादिभिस्तत्त्वस्मृत्यसंभवात्। स्पष्टमन्यत्॥ १२४॥

ननु विक्षेपविस्मृतिकारकत्वात् कृष्यादेस्त्याज्यत्वे भोजनादेरपि तथात्वात्तस्यापि त्याज्यत्वापत्तिरेवेत्याशंक्याह, अन्विति।

**अनुसंदधतैवात्र भोजनादौ प्रवर्तितुम्।**
**शक्यतेऽत्यंतविक्षेपाभावादाशु पुनः स्मृतेः॥ १२५॥**

आत्मानमनुसंदधता भोजनादौ प्रवर्तितुं शक्यते। कुतः? अत्यन्तविक्षेपाभावात् कृष्यादाविव भोजनादावतीव चित्तभ्रमस्याभावात्। तत्र कारणमाह, आश्विति। आशु द्रुततरं पूर्वाभ्यस्तविषयिकायाः स्मृतेस्संस्कारजन्यज्ञानस्यागमनात्। भोजनादीनां ब्रह्मज्ञानविरोधिप्रयत्नानपेक्षत्वादिति भावः॥ १२५॥

तदानीं विक्षेपाभावेऽप्याशु पुनः स्मृतेरिति भवदुक्त्या तदानीं तात्कालिकविस्मृतिः स्यादित्युक्तम्। तथा च तत एव पुरुषार्थहानिः स्यादित्यत आह, तत्त्वेति।

**तत्त्वविस्मृतिमात्रान्नानर्थः किं तु विपर्ययात्।**
**विपर्येतुं न कालोऽस्ति झटिति स्मरतः क्वचित्॥१२६॥**

भोजनादौ तत्त्वविस्मृतिमात्रादनर्थः पुरुषार्थहानिर्नभवति, किं तु विपर्ययात्

तत्त्वेतरचिन्तनादनर्थः स्यादिति भावः। विस्मरणे सत्यनर्थदायी विपर्ययो भवत्येवे-त्याशंक्याह, झटितीति। झटिति शिघ्रमेव पदे पदे तत्त्वस्य स्मरतो विपर्येतुं क्वचिदपि कालोऽवकाशो नास्ति ॥ १२६ ॥

कृष्यादिषु भोजनादिवैलक्षण्यमाह, तत्त्वेति।

**तत्त्वस्मृतेरवसरो नास्त्यन्याभ्यासशालिनः।**
**प्रत्युताभ्यासघातित्वाद्बलात्तत्त्वमुपेक्षते ॥ १२७ ॥**

अन्याभ्यासशालिनोऽन्यस्यात्मविचारेतरस्य कृष्यादेरभ्यासस्वभावस्य तत्त्व-स्मृतेरवसरो नास्ति, प्रत्युताभ्यासघातित्वात् स्वभावसिद्धतर्काद्यभ्यासविरोधित्वात्त-त्त्वाभ्यासस्य पूर्वजन्मसुकृतविशेषेण तदानीं स्मृतमपि तत्त्वं बलादुपेक्षते उपेक्षया नाद्रियते ॥ १२७ ॥

तत्त्वानुसंधानविरोधिव्यवहारस्य त्याज्यत्वे प्रमाणभूतां श्रुतिमर्थतः पठति, तमिति।

**तमेवैकं विजानीथ ह्यन्या वाचो विमुंचथ।**
**इति श्रुतं तथान्यत्र वाचो विग्लापनं त्विति ॥ १२८ ॥**

"तमेवैकं जानीथ आत्मानमन्या वाचो विमुंचथ। अमृतस्यैषसेतु" रिति, मुंडकश्रुतौ, (२–५) श्रुतम्। "नानुध्यायात् बहून् शब्दान् वाचो विग्लापनं हि तत्। (बृ. ४. ४. २१.) इत्यन्यत्र श्रुत्या बोधितम्। प्रथमाया अयमर्थः। तमेक-मद्वितीयं सत्यज्ञानानंतात्मकं चैतन्यस्वरूपमात्मानमेवावेहि। अन्यावाचस्तत्त्वबोधा-ननुकूलाः काव्यतर्कादयो विक्षेपकारका विशेषेण परित्याज्याः। द्वितीया तु सप्तोत्तरशततमश्लोके (१०७) सुविस्तरं व्याख्याता ॥ १२८ ॥

तत्त्वबोधोपयिकव्यवहारेतरत्सर्वं त्याज्यमिति श्रुत्या बोध्यते। भोजनादे-रपीतराभ्यासवद्बोधानुपयिकत्वात्त्याज्यमेवेति श्रुत्या बोधितप्रायम्। तथा च त्याज्यत्वे न श्रुतिसम्मतं भोजनादिकं किमित्यंगीकरोषीत्याशंक्य भोजनादेः परंपरया बोधोपयोगित्वं दर्शयति, आहारेति।

**आहारादि त्यजन्नैव जीवेच्छास्त्रान्तरं त्यजन्।**

किं न जीवसि येनैवं करोष्यत्र दुराग्रहम् ॥ १२९ ॥

आहारादि त्यजन्न जीवेत् । सत्येव जीवने तत्त्वानुसंधानं कर्तुं क्षमते नान्यथा । तथा च तत्त्वानुसंधानाय जीवनस्यावश्यकतया तत्संपादकतया भोजनादेः परंपरयानुसंधानोपयोगित्वेन तत्त्याज्यत्वं श्रुत्या न बोधितमिति तात्पर्यम् । नैवं विधं शास्त्रान्तराभ्यासादिकमित्याह, शास्त्रान्तरमिति । शास्त्रान्तरं त्यजन् न जीवसि किम् । तथा च शास्त्रान्तराभ्यासस्य तत्त्वज्ञानोपायपरंपराघटकत्वं न सिध्यति । तस्मात्तस्यैव त्याज्यत्वं श्रुतिर्बोधयति । येनैवमनयोर्व्यवहारयोर्वैलक्षण्याग्रहणहेतुना दुराग्रहं करोषि दुरभिमानं करोषि । अनयोर्वैलक्षण्यसद्भावात् तव तुल्यत्वाभिमानो दुष्ट एवेति भावः ॥ १२९ ॥

ननु भवदुक्तकृष्यादेस्त्याज्यत्वं विद्वदाचारविरुद्धमित्याशंक्याह, जनकेति ।

जनकादेः कथं राज्यमिति चेद्दृढबोधतः ।
तथा तवापि चेत्तर्कं पठ यद्वा कृषिं कुरु ॥ १३० ॥

श्रुत्या त्याज्यत्वेन प्रतिपादितं राज्यं जनकादेर्विदुषः कथं घटते । शास्त्रविरुद्धं नाचरन्ति हि विद्वांसः । परिहरति, दृढबोध इति । श्रुतिर्बोधसंपादनकाले इतरव्यवहाराणां त्याज्यत्वं ब्रूते, न दृढबोधोत्तरम् । तथा च जनकादीनां दृढबोधसंपत्तेस्तेषां त्याज्यत्वं न ब्रूते । अतस्तेषामाचारो न श्रुतिविरुद्ध एवेति तात्पर्यम् । अतस्तवापि दृढबोधानन्तरं सर्वव्यवहारमंगीकुर्म इत्याह, तथेति । तवापि तथा दृढबोधश्चेत् तदुत्तरं तर्कं पठ यद्वा कृषिं कुरु । तादृशस्य तन्निवारणे नास्माकं निर्बंध इत्याशयः ॥ १३० ॥

जीवन्मुक्तसंसारिणां प्रवृत्तौ विशेषविचारः ।

ननु संसारासारताकोविदानां तत्त्वविदां संसारिणां च तत्र प्रवृत्तेरविशेषाज्जीवन्मुक्तसंसारिणोः को विशेष इत्याशंक्याह, मिथ्येति ।

मिथ्यात्ववासनादार्ढ्ये प्रारब्धक्षयकांक्षया ।
अक्लिश्यन्तः प्रवर्तन्ते स्वस्वकर्मानुसारतः ॥ १३१ ॥

जगतो मिथ्यात्ववासनादार्ढ्ये सति प्रारब्धक्षयकांक्षया प्रकर्षेणारब्धं, यद्वा प्रचुरमारब्धं, यद्वा प्रगल्भमारब्धं, प्रारब्धं तस्यावश्यमुपभोगेनैव नाशेच्छया स्वस्वकर्मानुसारतः स्वस्य स्वस्य पूर्वजन्मोपार्जितं देहधारणकारणं कर्म तदनुरूपमक्लिश्यन्तः प्रवर्तन्ते। तत्प्रवृत्त्या तेषां क्लेशो न भवति। संसारिणां तु स भवति। अयमेवोभयोर्विशेष इति ॥ १३१ ॥

ननु तेषामपि यदि कर्मानुसारेण प्रवृत्तिः तदा संसारिणामिव निषिद्धाचरणमपि प्रसज्ज्येतेत्याशंकामिष्टापत्त्या परिहरति, अतीति।

**अतिप्रसंगो माशंक्यः स्वकर्मवशवर्तिनाम्।**
**अस्तु वा केन शक्येत कर्म वारयितुं वद ॥ १३२ ॥**

स्वकर्मवशवर्तिनां पूर्वकर्मणोऽनिच्छयापि वशे प्रवर्तमानानामनाचारविषये अतिप्रसंगः क्रममतिरिच्य प्रसंगो निषिद्धाचरणप्रसंगो माशंक्यो न शंकनीयः। अनेकजन्माचरितसुकृतपरिपाकसमुपार्जितसत्संप्रदायानुशिष्टशिष्टाचारविरचिताचाराणां न तेषामनाचारप्रसंग इत्यर्थः। यदा कदापि दुष्कृतप्रारब्धकर्मावशिष्यते तदा नाचारप्रसंगोऽप्यस्तुनाम। तादृक्कर्म वारयितुं केन शक्येत वद। फलदानाय प्रवृत्तस्य प्रारब्धकर्मणः फलदानमन्तरा मुक्तेषुवन्निवारयितुं न कोपीश इत्यर्थः॥१३२॥

पूर्वोक्तं विशेषं स्पष्टयति ज्ञानीति।

**ज्ञानिनोऽज्ञानिनश्चात्र समे प्रारब्धकर्मणि।**
**न क्लेशो ज्ञानिनो धैर्यान्मूढः क्लिश्यत्यधैर्यतः ॥ १३३ ॥**

स्पष्टः पूर्वार्धः। उभयोर्विशेषमाह, नेति। धैर्यात् मनसो निर्विकारत्वं धैर्यम् सत्स्वपि हेतुषु। तस्मात् ज्ञानिनो प्रारब्धकर्महेतुकः क्लेशो न। तेन न संबध्यते। मूढोऽधैर्यतोऽविवेकतः क्लिश्यति खिद्यते। दुःखसंबंधवान् भवति ॥ १३३ ॥

तत्र दृष्टान्तमाह, मार्ग इति।

**मार्गे गन्त्रोर्द्वयोः श्रान्तौ समायामप्यदूरतः।**

जानन् धैर्याद्द्रुतं गच्छेदन्यस्तिष्ठति दीनधीः ॥१३४॥

स्पष्टोऽर्थः ॥ १३४ ॥

आत्मानंचेदिति श्रुतेरुत्तरार्थविचारारंभः ।

एतावत्पर्यन्तं प्रकरणादौ व्याख्येयत्वेन प्रतिज्ञातायाः काण्वश्रुतेः पूर्वार्धप्रतिपाद्यमर्थं सुविशदमुपपाद्योत्तरार्थमर्थतः पठति, साक्षादिति ।

साक्षात्कृतात्मधीः सम्यगविपर्ययबाधितः ।
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् ॥ १३५॥

सम्यक् श्रुत्यनेकतार्थसंभाव्यताविपरीतभावनादिबहुविधार्थपरित्यागेन दृढतरं साक्षात्कृतात्मधीः फलव्याप्तिं विना साक्षात्कृतात्मब्रह्मैक्यः अविपर्ययबाधितो विपर्ययेण देहाद्यात्मत्वबुद्ध्याऽबाधितः पुमान् किं प्रयोजनमिच्छन् कस्य कामाय परितप्यमानं शरीरमनुसंज्वरेत् अनुसृत्य परितपेत् ॥ १३५ ॥

काम्यकामुकयोरभावे सन्तापाभावः ।

श्रुतिवाक्यतात्पर्यं विवृणोति, जगदिति ।

जगन्मिथ्यात्वधीभावादाक्षिप्तौ काम्यकामुकौ ।
तयोरभावे संतापः शाम्येन्निःस्नेहदीपवत् ॥ १३६ ॥

काम्यकामुकौ काम्यः कामनाविषयः कामुकः कामी उभावपि जगन्मिथ्यात्वधीभावात् जगतः कर्तृभोक्तृक्रियाकारकफलसंकुलस्य द्वैतस्य मिथ्यात्वज्ञानादाक्षिप्तौ निरस्तौ । तयोः काम्यकामुकयोरभावे संतापः संसर्गजन्योऽनुतापः निःस्नेहदीपवत् तैलाभावे दीपवत् शाम्येत् । स्वयमेव नश्येत् । न तत्र शामकान्तरापेक्षा । सर्वद्वैतस्यासत्वात् काम्यकामुकयोरभावे सन्तापस्यात्यन्ताभाव इत्यर्थः ॥१३६

ननु जगन्मिथ्यात्वज्ञानात् काम्यस्य निवृत्तावपि कामुकनिवृत्तिः कथं सिध्यति ? काम्यस्य निवृत्तौ कामनाया निवृत्तत्वात् कामनाविशिष्टकामुकनिवृत्तिरर्थात्सिध्यतीति चेत् कामनानिवृत्तौ सत्यामेवं स्यात् । काम्यनिवृत्तौ कामनानिवृत्तिः क दृष्टा ? इत्याशंक्य दृष्टान्तं दर्शयति, गंधर्वेति ।

गंधर्वपत्तने किं चिन्नैंद्रजालिकनिर्मितं ।
जानन् कामयते किं तु जिहासति हसन्निदम् ॥ १३७॥

जिहासति परित्यक्तुमिच्छति । सुगमा पदयोजना । एवं चैंद्रजालिकवस्तुनः काम्यस्य मिथ्यात्वेन निरसने कामना नोदेतीति दृष्टम् । तथा च काम्यनिवृत्तौ कामनानिवृत्तिरित्यत्र कामनाया अनुत्पत्तिर्विवक्षिता ॥ १३७ ॥

दृष्टान्तं दार्ष्टान्तिके जगति समन्वेति, आपातेति ।

आपातरमणीयेषु भोगेष्वेवं विचारवान् ।
नानुरज्यति किंत्वेतान् दोषदृष्ट्या जिहासति ॥ १३८ ॥

आपातरमणीयेषु आपातः ईषद्दृष्टेः पाताद्रमणीयेषु न तु क्षोदक्षमेषु । स्पष्टमन्यत् ॥ १३८ ॥

भोग्येषु जुगुप्सोत्पादनाय विषयसुखदोषविवक्षयाऽत्यन्तमोहजनकत्वादखिलभोगजातस्य मुख्यस्थानमास्थितयोः कनककामिन्योर्मध्ये आदौ दोषनिरूपणं करोति, अर्थेति ।

अर्थानामार्जने क्लेशस्तथैव परिपालने ।
नाशे दुःखं व्यये दुःखं धिगर्थान् क्लेशकारिणः ॥१३९॥

नाशे चोरादिमूलकेन, व्यये भोगादिना, धिगित्यर्थविषयिणि निंदा स्पष्टमन्यत् ॥ १३९ ॥

कामिनीविषयदोषं निरूपयति, मांसेति ।

मांसपांचालिकायास्तु यंत्रलोलेंऽगपंजरे ।
स्नाय्वस्थिग्रंधिशालिन्याः स्त्रियाः किमिव शोभनम् ॥१४०॥

स्नाय्वस्थिग्रंधिशालिन्याः स्नायवः शिराः अस्थीनि ग्रंथयश्च तैः शालिनी तस्याः मांसपांचालिकायाः मांसमयी पांचालिका क्रीडायोग्या पुत्तलिका तस्याः स्त्रियः यंत्रलोले यंत्रवच्चलेंऽगपंजरे अंग शरीरमेव पंजरं बंधनस्थानं यथा कीरस्य पंजरस्तथा तरुणीकायो मनसो बंधनं भवतीत्यर्थः । तस्मिन् किं शोभनं

शुभावहमिव दृश्यते न किमपीत्यर्थः। उत्कटानुरागजनकत्वेन प्रतीयमानाऽपि कामिनी मांसवसामेदोमयत्वेन विचार्य निश्चिता न रागाय कल्पते। प्रत्युत जुगुप्सामेव जनयतीति भावः ॥ १४० ॥

एवं दिङ्मात्रेण कुत्रचिद्दोषप्रदर्शनेनान्यत्रापि दोषाः शास्त्रत इतिहास-पुराणादिभ्योऽवगन्तव्या इत्याह, एवमिति।

**एवमादिषु शास्त्रेषु दोषाः सम्यक् प्रपंचिताः।**
**विमृशन्ननिशं तानि कथं दुःखेषु मज्जति ॥ १४१ ॥**

एवमादिषु एवं वनितावित्तादिषु दोषाः शास्त्रेषु सम्यगनुभवपूर्वकं प्रपंचिता विपुलतया प्रतिपादिताः। "भगवन्नस्थिचर्मस्नायुमज्जामांसशुक्रशोणितश्लेष्माश्रुदूषिते विण्मूत्रवातपित्तकफसंघाते दुर्गंधे निःसारेऽस्मिन् शरीरे किं कामोपभोगैः" (मैत्रा-यणी १–२) "न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येताः" (शत. ब्रा. ११–५, १–९) "तज्जायाऽजाया भवति यदस्यां जायते पुनः" (ऐत. ब्रा. ७. ३. १०.) इत्यादिभिरित्यर्थः। तानि दोषजालान्यनिशं न विद्यते निशा चेष्टाविरामसमयो यस्य तत् अविरतमित्यर्थः। विमृशन् दुःखेषु कथं मज्जति निमग्नो भवति ॥ १४१ ॥

भोगानामनिष्टहेतुत्वे स्पष्टे सति तृष्णानुत्पत्तिरिष्टा सिध्यतीति सदृष्टान्त-माचष्टे, क्षुधेति।

**क्षुधया पीड्यमानोऽपि न विषं ह्यत्तुमिच्छति।**
**मिष्टान्नध्वस्ततृट जानन्नमूढस्तज्जिघत्सति ॥ १४२ ॥**

क्षुधया पीड्यमानोऽपि प्राणहरणकारणं विषमिति जानन्नत्तुं नेच्छति। हि निश्चयार्थे। किमुत निवारितक्षुधित्याह, मिष्टेति। मिष्टान्नध्वस्ततृट् मिष्टं मधुररससंयुतं यदन्नं तेन ध्वस्ता निवारिता तृट् अशनाया यस्य सः अमूढो जीवितान्मरणमेव वरमित्येवंविधं मोहमनापन्नो जानन् विषेऽनर्थकारित्वं जानन् न जिघत्सति अत्तुं नेच्छतीति किं वक्तव्यम् ॥ १४२ ॥

ज्ञानिनः प्रारब्धानुभवविचारः ।

ननु ज्ञानिनामपि प्रारब्धकर्मानुसारेण प्रवृत्तिरपरिहार्येत्युक्तम् । तथा सति तदनुकूलेच्छाप्यपरिहार्या स्यात् । इच्छा राग इत्यनर्थान्तरम् । एवं च तदीयभोगोऽपि रागपूर्वक एवेति कुतो न तस्य बंधकत्वमित्याशंक्याह, प्रारब्धेति ।

प्रारब्धकर्मप्राबल्याद्भोगेष्विच्छा भवेद्यदि ।
क्लिश्यन्नेव तदाप्येष भुङ्क्ते विष्टिगृहीतवत् ॥ १४३ ॥

क्लिश्यन्नेव दुःखितः सन्नेव न तु प्रीतिपुरस्सरं । विष्टिगृहीतवत् वेतनेनाकृष्टो भृत्य इव । स्पष्टमन्यत् ॥ १४३ ॥

उक्तार्थं विवृणोति, भुंजानेति ।

भुंजाना वा अपि बुधाः श्रद्धावंतः कुटुंबिनः ।
नाद्यापि कर्म नश्छिन्नमिति क्लिश्यन्ति संततं ॥ १४४ ॥

बुधा विद्वांसः कुटुंबिनो दारैः सह निवसन्तः श्रद्धावन्तः कृत्येष्वासक्ताः प्रारब्धं भुंजाना अपि अनुभवन्तोऽद्यापि ज्ञानोत्पादनानन्तरमपि नोऽस्माकं प्रारब्धं कर्मबंधनं न छिन्नमित्यहो महद्विषादस्थानमस्माकमिति संततं क्लिश्यन्त्युद्विग्नमनसो भवन्ति । इच्छया भोगोऽपि तेषां क्लेशपूर्वक एव भवति । आरब्धकर्मप्रभवोऽयमस्माकं संसारोऽनिवार्यः, तमननुभूय विदेहकैवल्यमुक्त्यानंदो नास्माकं घटत इति तत्फलप्राप्तये प्रारब्धमात्रक्लेशमनुभवन्तीत्याशयः ॥ १४४ ॥

तर्हि जीवन्मुक्तिर्न घटते देहपातपर्यन्तं तस्य क्लेशप्रसक्तेरित्याशंक्य परिहरति, नेति ।

नायं क्लेशोऽत्र संसारतापः किंतु विरक्तता ।
भ्रान्तिज्ञाननिदानो हि तापः सांसरिकः स्मृतः ॥ १४५ ॥

अयं नाद्यापि कर्म नश्छिन्नमित्याकारकः क्लेशोऽत्र विद्वद्विषये संसारतापो न; किंतु विरक्तता संसारे वीतरागत्वमेव । तत्र हेतुमाह, भ्रान्तीति । भ्रान्तिज्ञाननिदानः भ्रान्तिज्ञानमेव निदानं कारणं यस्य सः मिथ्याज्ञानप्रभवस्तापः सांसारिक इति स्मृतः । विदुषां भ्रान्त्यभावेन भ्रान्तमूलकतापस्यैव सांसारिकत्वेन

तेषां "नाद्यापि कर्म नश्छिन्नमि"त्याकारकस्तापः न सांसारिकः, तल्लक्षणानाक्रान्तत्वात् । किंतु विरक्तैव । एवं च तस्य संसारतापाभावाज्जीवन्मुक्तित्वं घटते । संसारतापशून्यत्वमेव जीवन्मुक्तित्वमिति भावः ॥ १४५ ॥

क्लेशाविशेषदर्शनाद्विवेकमूलकत्वमविवेकमूलकत्वं चेत्येवं विशेषतः कथं ज्ञायत इत्यत आह, विवेकेनेति ।

**विवेकेन परिक्लिश्यन्नल्पभोगेन तृप्यति ।**
**अन्यथाऽनन्तभोगेऽपि नैव तृप्यति कर्हिचित् ॥ १४६॥**

विवेकेन परिक्लिश्यन् विवेकमूलकपरिक्लेशवान् जनोऽल्पभोगेन तृप्यति । अन्यथाऽविवेकेन क्लेशवाननन्तभोगेऽपि कर्हिचित् कदाचिदपि न तृप्यत्येव । भोगेन तृप्तितदभावाभ्यां क्लेशस्य विवेकमूलकत्वमविवेकमूलकत्वमिति विशेषो निश्चेतुं शक्य इति भावः ॥ १४६ ॥

उत्तरार्धं दृष्टान्तमुखेन प्रपंचयति, नेति ।

**न जातु कामः कामानामुपभोगेन शाम्यति ।**
**हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ १४७ ॥**

कृष्णवर्त्मा वह्निः । स्पष्टमन्यत् ॥ १४७ ॥

विवेकमूलस्य भोगस्य तृप्तिहेतुत्वमाह, परिज्ञायेति ।

**परिज्ञायोपभुक्तो हि भोगो भवति तुष्टये ।**
**विज्ञाय सेवितश्चोरो मैत्रीमेति न चोरताम् ॥ १४८ ॥**

अयं प्रारब्धप्रभवोऽनिवार्यो भोग उपभोगेन प्रारब्धः प्रक्षीणो भवतीत्येवं परिज्ञायोपभुक्तो भोगस्तुष्टये प्रारब्धनाशननिमित्तसंतुष्टये भवति । तत्रोदाहरणमाह, विज्ञायेति । "अयं चोर" इति विज्ञाय, सेवितश्चोरो मैत्रीं मित्रतामेति न तु चोरताम् । परिगतसहवासश्चोरोऽपि मित्रमेव भवतीत्यर्थः ॥ १४८ ॥

ननु कामनापरतन्त्रत्वान्मनसः कथमल्पभोगेन तृप्तिरित्यत आह, मनस इति ।

मनसो निगृहीतस्य लीलाभोगोऽल्पकोपि यः ।
तमेवालब्धविस्तारं क्लिष्टत्वाद्बहु मन्यते ॥ १४९ ॥

निगृहीतस्याभ्यासेन वशीकृतस्य मनसः योऽल्पकोऽल्पतरो लीलाभोगो लीलार्थमिव भोगः यथा लीलासु फलानभिसंधिस्तथैवा निवार्यप्रारब्धानुभवेऽनभिसंधियस्य सः अलब्धविस्तारं स्वल्पं भोगं क्लिष्टत्वात् दुःखदिग्धत्वात् बहु मन्यते। भोगविस्तृतेः क्लेशजनकत्वात्तादृशक्लेशपरिहाराय तस्याल्पत्वं बहूकरोतीति भावः॥१४९

अत्र दृष्टान्तमाह, बद्ध इति ।

बद्धमुक्तो महीपालो ग्राममात्रेण तुष्यति ।
परैर्नबद्धो नाऽक्रान्तो न राष्ट्रं बहु मन्यते ॥ १५० ॥

बद्धमुक्तो बद्धश्च मुक्तश्च युद्धे पराजितः स्वेच्छाप्रदानेनानुगृहीतो महीपालो ग्राममात्रेण तुष्यति । अन्यः परैर्नबद्धो नाऽक्रान्त इति हेतोः राष्ट्रं बहु न मन्यते । तत्र परकर्तृकाक्रमणबंधरूपदोषयोरसंभावनयेति भावः ॥ १५० ॥

विवेकिनः प्रारब्धवशाद्भोगेच्छा जायत इति किमित्यभ्युपेयम् ? तस्य प्रारब्धमिच्छां न जनयत्येव किमिति नोच्यत इत्याशंकते, विवेक इति ।

विवेके जाग्रति सति दोषदर्शनलक्षणे ।
कथमारब्धकर्मापि भोगेच्छां जनयिष्यति ॥ १५१ ॥

सुगमा पदयोजना । इच्छां जनयिष्यतीत्यनेन प्रारब्धसदृशीच्छोद्देतीति भावः न तु तस्येच्छाजनकत्वोक्तौ तात्पर्यम् । इच्छाविनाशनसमर्थे ज्ञाने सति कथं भोगेच्छा भवेदिति शंका ॥ १५१ ॥

त्रिविधेच्छाविचारः ।

समाधातुं प्रारब्धस्य त्रैविध्यं दर्शयति, नेति ।

नैष दोषो यतोऽनेकविधं प्रारब्धमीक्ष्यते ।
इच्छाऽनिच्छा परेच्छा च प्रारब्धं त्रिविधं स्मृतम् ॥ १५२ ॥

स्पष्टोऽर्थः । प्रारब्धमनुरूपं फलं नियच्छति । तत्र प्रवृत्तेः कारणं स्वेच्छा अनिच्छा परेच्छाचेति त्रिविधम् ॥ १५२ ॥

इच्छाप्रारब्धं दर्शयति, अपथ्येति ।

अपथ्यसेविनश्चोरा राजदाररता अपि ।
जानन्त एव स्वानर्थमिच्छन्त्यारब्धकर्मतः ॥ १५३ ॥

स्पष्टोऽर्थः । प्रारब्धप्राबल्यादनर्थमपि जानन्निच्छति ॥ १५३ ॥

एवं चैतादृशप्रारब्धानुरूपेच्छा सत्यपि ज्ञाने कथमुदेतीति न शंकनीयः। अपरिहार्यत्वादित्याह, नेति ।

न चात्रैतद्वारयितुमीश्वरेणापि शक्यते ।
यत ईश्वर एवाऽह गीतायामर्जुनं प्रति ॥ १५४ ॥

स्पष्टोऽर्थः ॥ १५४ ॥

गीतावाक्यं पठति, सदृशमिति ।

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ १५५॥

ज्ञानवानपि स्वस्याः प्रकृतेः, "प्रकृतिर्नाम पूर्वकृतधर्माधर्मादिसंस्कारजन्यं वर्तमानजन्मन्युपभोगक्षममदृष्टम्", तस्यास्सदृशमनुरूपं चेष्टते प्रवर्तते । किमुताज्ञानी । तस्मात् भूतानि भवनशीलानि प्राणिकोटयः प्रकृतिं यान्त्यनुगच्छन्ति। तत्र निग्रहः प्रवृत्तेर्निरोधो मयाऽन्येन वा कृतः किं करिष्यति ? निरर्थक इति भावः ॥ १५५॥

प्रारब्धप्रवाहनिरोधनासाध्यतां प्रदर्शितुं पौराणिकं वचनमाह, अवश्यमिति ।

अवश्यं भावि भावानां प्रतीकारो भवेद्यदि ।
तदा दुःखैर्नलिप्येरन्नलरामयुधिष्ठिराः ॥ १५६ ॥

अवश्यं भाविभावनामनिवार्यतया भवनशीलानां भावानां प्रतीकारः प्रतिक्रिया यदि साध्यो भवेत् तदा नलरामयुधिष्ठिराः दुःखैरद्वितीयैः राज्यभ्रंश-

नद्वितीयावियोगविपिनावासादिभिरसाधारणैर्नेलिप्येरन् । यदि प्रतीकार्याः ईश्वरपरमानुग्रहपात्राणां स्वोचितधर्मानुष्ठानधुरीणानां नलरामादीनां तत्प्रतीकारः सुलभ एव स्यात् । अतो विवेकिनामपि निषिद्धक्रियाप्रवृत्तिरनिवार्यप्रारब्धलब्धेति भावः॥१५६॥

ननु प्रारब्धानामनिवार्यत्वे सर्वशक्तेरीश्वरस्येशता परिहीयत एवेत्याशंक्याह, नेति ।

न चेश्वरत्वमीशस्य हीयते तावता यतः ।
अवश्यंभाविताप्येषामीश्वरेणैव निर्मिता ॥ १५७ ॥

यतः एषां दुःखादीनामवश्यं भाविभाविता पूर्वकर्मगुणानुसारतयाऽनिवार्यताऽपीश्वरेणैव निर्मिता । तावता प्रारब्धस्यानिवार्यत्वमात्रेणेशस्य सर्वसमर्थस्येश्वरत्वं प्रभुता न हीयते निजमर्यादापरिपालनमेव राज्ञां स्वभावो न तु तत्प्रतीकारः ॥ १५७ ॥

अनिच्छाप्रारब्धं विवृणोति, प्रश्नेति ।

प्रश्नोत्तराभ्यामेवैतद्गम्यतेऽर्जुनकृष्णयोः ।
अनिच्छापूर्वकं चास्ति प्रारब्धमिति तच्छृणु ॥ १५८ ॥

स्पष्टोऽर्थः ॥ १५८ ॥

अर्जुनप्रश्नमाह, अथेति । (गी. ३. ३६)

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ १५९ ॥

हे वार्ष्णेय ! वृष्णेर्यादववंशीयनृपतेरपत्यं पुमान् तत्कुलप्रसूतः । बलान्नियोजित इव राजाज्ञया नियोजितो भृत्य इव । स्पष्टमन्यत् ॥ १५९ ॥

श्रीकृष्णस्योत्तरमाह, काम इति ।

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ १६० ॥

येन प्रयुक्तः पुरुषः पापमाचरति स एषः सुप्रसिद्धः कामा विषयतृष्णा। स च रजोगुणसमुद्भवः। आशाभंगेन प्रतिहत एष कामः क्रोधो भवति। एष कामो महाशनः। अशनमाहारो विषयग्रामः। अत एव महापाप्मा। क्रोधोद्रेके महापापमाचरतीति भावः। एवमिह संसारे नं कामं वैरिणं शत्रुं विद्धि जानीहि ॥ १६० ॥

ननु पुरुषप्रवृत्तेः कामक्रोधयोरेव कारणत्वं प्रतीयते न त्वनिच्छाप्रारब्धस्येत्याशंक्य गीतावाक्येन (१८. ६०) समाधत्ते, स्वभावजेनेति।

**स्वभावजेन कौंतेय निबद्धः स्वेन कर्मणा।**
**कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥१६१॥**

हे कौंतेय! स्वेनाचरितेन स्वभावजेन सहजेन प्रारब्धेन कर्मणा निबद्धः सन् यत्कर्म कर्तुं नेच्छसि तत्रेच्छाभावेऽपि तदेव कर्म मोहादविवेकतोऽवशः परवशस्सन् करिष्यसि। एतत्प्रवृत्तिप्रयोजकं प्रारब्धमिच्छाविरहविशिष्टत्वादनिच्छाप्रारब्धमित्युच्यते ॥ १६१ ॥

अथ परेच्छाप्रारब्धं विवृणोति, नेति।

**नानिच्छन्तो नचेच्छन्तो परदाक्षिण्यसंयुताः।**
**सुखदुःखे भजन्त्येतत्परेच्छा पूर्वकर्म हि ॥ १६२ ॥**

केचित्सुखदुःखे अनिच्छन्तो न भजन्ति। इच्छन्तोऽपि न भजन्ति। किन्तु परदाक्षिण्यसंयुताः अन्येषु दाक्षिण्यं अनुकूलस्य भावः, तेन संयुताः सुखदुःखे भजन्ति। लोकानुग्रहार्थमेव स्वयं सुखदुःखभाजो भवन्तीत्यर्थः। अत्रानिच्छाप्रारब्धव्यावृत्तये नानिच्छन्त इति इच्छाप्रारब्धव्यावृत्तये न चेच्छन्त इति चोक्तम्। एतत्परेच्छापूर्वकर्मेहि ॥ १६२ ॥

किमिच्छन्नित्यत्रेच्छाबाधो निषिध्यते।

एवं ज्ञानिनोऽपीच्छाया अङ्गीकारे किमिच्छन्निति श्रुत्यभिहितेच्छानिषेधो विरुध्येतेत्याशंक्य परिहरति, कथमिति।

कथं तर्हि किमिच्छन्नित्येवमिच्छा निषिध्यते ।
नेच्छानिषेधः किंत्विच्छाबाधो भर्जितबीजवत् ॥१६३॥

तर्हि " किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेदि "ति स्थले किमिच्छन्नित्यात्मज्ञानिनः कथमिच्छा निषिध्यते ? इच्छानिषेधश्रवणात्तदङ्गीकारः श्रुतिविरोध इति तात्पर्यम् । समाधत्ते, नेति । तत्रेच्छानिषेध इच्छाया अभावो न श्रुत्यभिप्रेतः, किन्तु भर्जितबीजवत् अग्निसंतप्तं बीजं यथा रजननासमर्थं तद्वदिच्छाबाधः इच्छायाः कामक्रोधादिमूलकानिष्टप्रवृत्तिजनकत्वमेव निषिध्यते ॥१६३॥

दृष्टान्तं विवृणोति, भर्जितानीति ।

भर्जितानि तु बीजानि सन्त्यकार्यकराणि च ।
विद्वदिच्छा तदेष्टव्याऽसत्त्वबोधान्नकार्यकृत् ॥ १६४ ॥

अकार्यकराणि अङ्कुरोत्पादनेऽसमर्थानि । असत्वबोधात् काम्यानां मिथ्यात्वज्ञानात् । कार्यकृत् कामक्रोधादिशरीरानुतापकारिणी । स्पष्टमन्यत् ॥ १६४ ॥

विद्वदिच्छाविचारः ।

एतावतेच्छायाः कार्यजननसामर्थ्यं निषिध्यत इति प्रतिपादितम् । एवं सति फलाभावादिच्छैव नाङ्गीकार्येत्याशंक्याह, दग्धेति ।

दग्धबीजमरोहेऽपि भक्षणायोपयुज्यते ।
विद्वदिच्छाप्यल्पभोगं कुर्यान्नव्यसनं बहु ॥ १६५ ॥

दग्धबीजमरोहेऽपि अङ्कुरोत्पादनाभावेऽपि भक्षणायोपयुज्यते तात्कालिकक्षुन्निवारणे उपयुज्यते । तथैव विद्वदिच्छाल्पं भोगं कुर्यात् । किंतु बहुव्यसनं न कुर्यात् कामादिषु प्रवृत्तिं न कल्पयेत् । एवं प्रारब्धक्षयरूपस्य यत्किंचित्फलस्य सत्वात् फलाभावान्नाङ्गीकार्येति हेतुरसिद्ध इति भावः ॥ १६५ ॥

कर्मैव भोगद्वारा व्यसनं जनयेदित्याशंक्य परिहरति, भोगेति ।

भोगेन चरितार्थत्वात्प्रारब्धं कर्म हीयते ।
भोक्तव्यसत्यताभ्रान्त्या व्यसनं तत्र जायते ॥ १६६ ॥

अनिवार्यं प्रारब्धं कर्म भोगेन चरितार्थत्वात् हीयते नश्यति। प्रारब्धं कर्मानुरूपं फलं नियच्छत्स्वयं नश्यतीत्यर्थः। तत्र भोग्ये भोक्तव्यसत्यताभ्रान्त्या भोक्तव्यस्य सुखदुःखादेः सत्यत्वे भ्रान्त्या व्यसनं विक्षेपो जायते। शीतोष्णसुखदुःखयोर्मिथ्याभूतयोः सत्यत्वभ्रान्तिरेव विक्षेपकारणम्। विदुषस्तादृशविक्षेपजनकत्वभ्रान्तेरसंभवाद्भोगमात्रजननेन कृतार्थत्वात् तद्व्यतिरिक्तं फलं न जनयतीति तात्पर्यम्। एवं च व्यसने भोगद्वारा कर्मणः कारणत्वमन्यथासिद्धम्। कुलालपितुर्घटकारणत्वमिव ॥ १६६ ॥

व्यसनहेतुं भ्रमं विवृणोति, मेति।

**मा विनश्यत्वयं भोगो वर्धतामुत्तरोत्तरम्।**
**मा विघ्नाः प्रतिबध्नन्तु धन्योस्म्यस्मादिति भ्रमः ॥ १६७ ॥**

अयमद्यानुभूयमानो भोगो मा विनश्यतु। परंतूत्तरोत्तरं भाविकाले वर्धताम्। तं भोगं विघ्ना मा प्रतिबध्नन्तु। भोगस्यान्तरायो मा भवतु। अस्माद्भोगात् धन्यः कृतकृत्योऽस्मीति ज्ञानं भ्रमः। मिथ्यारूपे वैषयिके सुखे दुःखे वा सत्यत्वज्ञानं भ्रम इत्यर्थः ॥ १६७ ॥

तन्निवारणोपायमाह, यदिति।

**यदभावि न तद्भावि भाविचेन्न तदन्यथा।**
**इति चिन्ताविषघ्नोऽयं बोधो भ्रमनिवर्तकः ॥ १६८ ॥**

यदभावि यद्भवितुमयोग्यं तन्नभावि न भवति; भावि चेत् भवितुं योग्यं चेत् तदन्यथा अभावि न भवति। भवत्येवेत्यर्थः। इत्येवंरूपश्चिन्ताविषघ्नः चिन्ता एव विषः तन्नाशकोऽयं बोधो भ्रमनिवर्तकः भ्रमनिवारकः। प्रारब्धेन यद्विहितं तदवश्यं भवति, तदविहितं न भवतीति ज्ञानं भ्रममपनुद्य तत्साधनचिन्तां निवर्तयतीति भावः ॥ १६८ ॥

ज्ञान्यज्ञानिनोर्भोगस्य समानत्वेऽपि विक्षेपकारित्वं ज्ञानिनो नेति वैलक्षण्यं कुत इत्यत आह, सम इति।

समेऽपि भोगे व्यसनं भ्रान्तो गच्छेन्न बुद्धवान् ।
अशक्यार्थस्य संकल्पाद्भ्रान्तस्य व्यसनं बहु ॥ १६९ ॥

ज्ञान्यज्ञानिनोः प्रारब्धकर्मफलस्य भोगे समेऽप्यज्ञानी भ्रान्तो व्यसनं गच्छेत् । बुद्धवान् ज्ञानवान् न व्यसनं गच्छेत् । भ्रान्तस्य व्यसनस्य सत्त्वे कारणमाह, अशक्येति । अशक्यार्थस्य शक्यत्वेन ज्ञानरूपभ्रान्तिविषयस्य संकल्पात् तद्वशात् भ्रान्तस्य व्यसनं विक्षेपो बहु भवति ॥ १६९ ॥

ज्ञानिनो विक्षेपाभावं दर्शयति, मायेति ।

मायामयत्वं भोगस्य बुद्ध्वाऽऽस्थामुपसंहरन् ।
भुंजानोऽपि न संकल्पं कुरुते व्यसनं कुतः ॥ १७० ॥

आस्थामपेक्षाम् । अनिवार्यत्वाद्भुंजानोऽपि । मा विघ्नाः प्रतिबध्नन्त्विति संकल्पम् चिन्ता । व्यसनं तत्साधनानुकूलो विक्षेपः । स्पष्टमन्यत् ॥ १७० ॥

ननु भोग्यो मायामय इति ज्ञानकालेऽपि तच्चमत्कारानुभवरूपसुखस्य सत्वात् तत्रास्थोपसंहारः कथं घटत इत्याशंकां दृष्टान्तमुखेन परिहरति, स्वप्नेति ।

स्वप्नेन्द्रजालसदृशमचिन्त्यरचनात्मकम् ।
दृष्टनष्टं जगत्पश्यन् कथं तत्रानुरज्यति ॥ १७१ ॥

स्वप्नेन्द्रजालसदृशं यत्र जगद्व्यापारं निद्रायां सूक्ष्मशरीरसद्भावात् पश्यति स स्वप्नः, तथैव जागरे अक्ष्णोः पुरस्तादेव मन्त्रादिवशादद्भुतं लोकव्यवहारं पश्यति तदिन्द्रजालम्, ताभ्यां सदृशमचिन्त्यरचनात्मकं सत्यत्वेन वाऽसत्यत्वेन वा अनिर्वचनीयकल्पनात्मकं दृष्टनष्टं व्यवहारे सत्यतया दृष्टं परमार्थतया विचार्यमाणे नष्टं मायामात्रमसत् जगत् पश्यन् तत्र तद्विषयिकभोगेऽनुरज्यति आस्थां करोति । यथैन्द्रजालिकनिर्मिते वस्तुनि तदानीन्तनचमत्कारस्य सत्त्वेऽपि नाऽस्थां करोति तथा जगतोऽपि तथाविधत्वेन न तत्राऽस्थां करोतीति भावः ॥ १७१ ॥

तादृक्ज्ञानं कथ जायत इत्याशंक्य तदुत्पत्त्युपायमाह, स्वेति ।

स्वस्वप्नमापरोक्ष्येण दृष्ट्वा पश्यन् स्वजागरम् ।
चिन्तयेदप्रमत्तः सन्नुभावनुदिनं मुहुः ॥ १७२ ॥

स्वस्वप्नमापरोक्ष्येण दृष्ट्वा स्वजागरं पश्यन्ननुभवन्नुभावप्रमत्तः सन् सावधानस्सन्ननुदिनं मुहुर्बहुवारं चिन्तयेत् । "स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति । महान्तं विभुमात्मानं मत्वा धीरो न शोचती" (कठ. २.४.४.) ति श्रुतेः ॥ १७२ ॥

विचारब्धयोरविरोधित्वविचारः ।

एवं कृते किंस्यादित्यत आह, चिरमिति ।

चिरन्तयोः सर्वसाम्यमनुसंधाय जागरे ।
सत्यत्वबुद्धिं सन्त्यज्य नानुरज्यति पूर्ववत् ॥ १७३ ॥

एवमनुदिनमनुभवेन तयोः स्वप्नजागरितयोः सर्वसाम्यमनुभवसमये सत्यत्वप्रतीतिः परिणामे दुःखकारणत्वं नश्वरत्वं चेत्यादि सर्वविषयेषु तौल्यं मनसि चिरं जागरेऽनुसन्धायाविच्छिन्नज्ञानसन्ततौ विषयीकृत्य जगति सत्यत्वबुद्धिं सन्त्यज्य पूर्ववत् जगत्सत्यत्वज्ञानदशायां यथासक्तो भवति तथा तस्मिन्नानुरज्यति ॥ १७३ ॥

ननु विषयसत्यत्त्वबुद्धिनिमित्तस्य भोगस्य जगन्मिथ्यात्वज्ञानस्य विरोधात् भोगसिद्धिरेव न स्यादित्याशंक्य, परिहरति, इन्द्रेति ।

इन्द्रजालमिदं द्वैतमचिन्त्यरचनात्वतः ।
इत्यविस्मरतो हानिः का वा प्रारब्धभोगतः ॥ १७४ ॥

इदं द्वैतं भोग्यजातमचिन्त्यरचनात्वतः इन्द्रजालं तद्वन्मिथ्येत्यविस्मरतो विदुषः प्रारब्धभोगतः पूर्वकर्मनिमित्तसुखदुःखानुभवतः का वा हानिः ? द्वैतमिथ्यात्वज्ञानप्रारब्धोपभोगयोर्भिन्नविषयत्वाद्भोगस्य विषयसत्यत्वानपेक्षत्वाच्च न तयोर्विरोध इति वाशब्दस्वारस्यम् ॥ १७४ ॥

तयोर्भिन्नकारणत्वं विशदयति, निर्बन्ध इति ।

निर्बन्धस्तत्त्वविद्याया इन्द्रजालत्वसंस्मृतौ ।
प्रारब्धस्याऽऽग्रहो भोगे जीवस्य सुखदुःखयोः ॥ १७५॥

इन्द्रजालत्वसंस्मृतौ इन्द्रजालस्येव जगतो मिथ्यात्वस्य स्मृताविव तत्त्वविद्याया निर्बन्धोऽभिनिवेशः । जीवस्य सुखदुःखयोर्भोगे प्रारब्धस्याग्रहः आसमन्तात् ग्रहः ग्रहणमभिनिवेश इत्यर्थः । जगन्मिथ्यात्वस्मरणे तत्त्वविद्यायाः कारणत्वम् । सुखदुःखानुभवे प्रारब्धस्य कारणत्वम् । एवं च तयोः कारणयोरविरोधेन युगपत्समवधानसंभवाद्युगपत्तत्कार्यभूते भोगसंस्मृती संभवत एवेति तात्पर्यम् ॥ १७५ ॥

कारणयोरविरोधमनुभवेन दर्शयति, विद्येति ।

विद्यारब्धे विरुध्येते न भिन्नविषयत्वतः ।
जानद्भिरप्यैन्द्रजालविनोदो दृश्यते ॥ १७६ ॥

सुलभा पदयोजना । मिथ्येति जानद्भिर्विनोदकाङ्क्षिभिः प्रेक्षकैर्ज्ञानकाले इन्द्रजालचमत्काररूपो भोगोऽनुभूयत एवेति भावः ॥ १७६ ॥

एवं विद्यारब्धे अविरुद्धे, यदि विद्यते विरोध, आरब्धं कर्म विद्याबाधकं आहोस्वित् विद्या आरब्धबाधिका ? नाद्य इत्याह, जगदिति ।

जगत्सत्यत्वमापाद्य प्रारब्धं भोजयेद्यदि ।
तदा विरोधि विद्याया भोगमात्रान्न सत्यता ॥ १७७ ॥

प्रारब्धं कर्म जगत्सत्यत्वमापाद्य जगत्सत्यत्वज्ञानं जनयित्वा जीवं सुखदुःखे भोजयेद्यदि अनुभावयेच्चेत् तदा प्रारब्धः विद्यायाः विरोधि बाधकं स्यात् । भोगस्य सत्यत्वज्ञानानुपेक्षणात्सत्यत्वापादकत्वं न सिध्यति । एवं च सत्यत्वापादकत्वनियमाभावाद्भोगस्सत्यत्वानुमापको न भवतीत्याह, भोगमात्रादिति । भोगमात्रात् भोगविषयो भवतीत्येतन्मात्रहेतुना तस्य भोगजातस्य सत्यता नापद्यत इत्यर्थः । जगत्सत्यं, भोग्यत्वादित्यनुमानं जगतः सत्यत्वं स्थापयितुं न समर्थम्, तत्र हेतोरैन्द्रजालिकादौ व्यभिचारात् ॥ १७७ ॥

तदाह अनून इति ।

**अनूनो जायते भोगः कल्पितैः स्वप्नवस्तुभिः ।**
**जाग्रद्वस्तुभिरप्येवमसत्यैर्भोग इष्यताम् ॥ १७८ ॥**

कल्पितैर्मिथ्याभूतैः स्वप्नवस्तुभिः स्वप्नेऽनुभूयमानैर्वस्तुभिरनूनः संपूर्णो भोगो जायते । एवमेवासत्यैर्जाग्रद्वस्तुभिरपि भोग इष्यताम् । सत्यत्वाभाववति स्वप्नवस्तुनि भोगदर्शनात् भोगस्य सत्यत्वाभाववद्वृत्तित्वेन व्यभिचरितत्वात् एव मसत्यवस्तुभिरपि भोगस्य स्वप्ने दर्शनात् तद्दृष्टान्तेनासत्यैरपि जगद्वस्तुभिरपि जायमानस्य भोगस्याऽपि न सत्यत्वम् ॥ १७८ ॥

न द्वितीय, इत्याह ।

**यदि विद्यापह्नुवीत जगत्प्रारब्धघातिनी ।**
**तदा स्यान्नतु मायात्वबोधेन तदपह्नवः ॥ १७९ ॥**

यदि विद्या जगदपह्नुवीत जगत्स्वरूपं नाशयति तदा प्रारब्धघातिनी स्यात् । प्रारब्धकर्मणो बाधिका स्यात् । जगतो मायात्वबोधेन तदपह्नवः तस्य जगतो नाशो न सिध्यति । जगन्नाशो नास्माभिरभ्युपेयते ॥ १७९ ॥

एतदर्थमेव प्रपञ्चयति, अनपह्नुत्येति ।

**अनपह्नुत्य लोकास्तदिन्द्रजालमिदं त्विति ।**
**जानन्त्येवानपह्नुत्य भोगं मायात्वधीस्तथा ॥ १८० ॥**

लोका जनास्तदिन्द्रजालस्वरूपमनपह्नुत्य निरसनमकृत्वा इदमिन्द्रजालमिति तु ज्ञानन्त्येव । तथा मायात्वधीः सर्वं भोगं मायामयमिति ज्ञानं भोगं भोग्यं अनपह्नुत्यैव अविनाश्यैव भवति ॥ १८० ॥

ननु विद्यया भोग्ये मिथ्यात्वज्ञानमेव जायते, न तन्नश्यतीति भवदुक्तिः श्रुतिविरुद्धेति शंकितुं तां श्रुतिमर्थतः पठति, यत्रेति ।

**यत्र त्वस्य जगत्स्वात्मा पश्येत्कस्तत्र केन किम् ।**

किं जिघ्रेत् किं वदेद्वेति श्रुतौ तु बहु घोषितम् ॥ १८१ ॥

यत्र तु निरस्तसमस्तद्वैतभावस्य साक्षात्कृतब्रह्माद्वैतभावेऽस्य ज्ञानिनो जगत्सर्वं स्वात्म. ।भूत्, तत्र कः प्रमातृत्वविशिष्टः केन साधनेन किं विषयजातं पश्येत्, केन िक ।जघ्रेत्, केन किं वदेत्, वेति रसनश्रवणमननत्वगादीतरेन्द्रियाणां व्यापाराभावः कथ्यते । इत्येवंप्रकारेण "यत्र हि द्वैतमिव भवती" (बृ.४.५.१५.)ति श्रुतौ तु बहुप्रकारं घोषितं दृढतरमुक्तम् । ज्ञानसामान्ये प्रमातापेक्षितः, विद्वत्ता-दशायां प्रमातुरभावान्न किमपि ज्ञानं भवति । एवं ज्ञाने विषयस्साधनं चापेक्ष्यते, तदानीं सर्वस्याप्यात्मरूपत्वेनावस्थानात् साधनमपि नास्ति, विषयोऽपि नास्ति, अतश्चक्षुषोऽभावाच्चाक्षुषप्रत्यक्षगोचरविषयस्य चाभावाच्चाक्षुषज्ञानं न सिध्यति । एव-मेव सर्वत्राप्यनुसंधेयं । एतेन तत्तद्विषयाणामिन्द्रियाणां प्रमातृविशिष्टस्य चाभावमेव बोधयति श्रुतिः, न तु मिथ्यात्वम् ॥ १८१ ॥

एवं श्रुत्यर्थमुक्त्वा तद्विरोधं शंकते, तेनेति ।

तेन द्वतमपह्नुत्य विद्योदेति नान्यथा ।
तथा च विदुषो भोगः कथं स्यादिति चेच्छृणु ॥ १८२ ॥

तेनैवं श्रुत्या कथनेन द्वैतं सर्वमपह्नुत्य विनाश्य अनन्तरमेव विद्या ज्ञान-मुदेति । अन्यथा द्वैतनाशमन्तरेण तन्मिथ्यात्वज्ञानमात्रेण विद्या नोदेति । तथा च विदुषो भोगः कथं स्यादित्युच्यते चेत्तत्र समाधानं शृणु ॥ १८२ ॥

अस्याः श्रुतेर्भवदभिमतार्थे न तात्पर्यमिति बादरायणेनैवोक्तत्वान्नात्र समाधातुमस्माभिर्यतितव्यमित्याह, सुषुप्तीति ।

सुषुप्तिविषया मुक्तिविषया वा श्रुतिस्त्विति ।
उक्तं स्वाप्ययसंपत्त्योरिति सूत्रेऽह्यतिस्फुटम् ॥ १८३ ॥

एषा श्रुतिः सुषुप्तिविषया उत मुक्तिविषयेति "स्वाप्ययसंपत्त्योरि"ति ब्रह्मसूत्रे अतिस्फुटमुक्तम् । "स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं ही" (ब्र.सू. ४. ४. १६.) ति । सूत्रस्यायमर्थः । स्वाप्ययः स्वस्मिन्नप्ययो लयः सुषुप्तिर्गाढनिद्रा

यस्यां सर्वेन्द्रियाणि मनसा सह लयं गतानि, "स्वमपीतो भवती" ति (छा. ६. ८. १.) श्रुतेः । संपत्तिर्मोक्षः साक्षात्कारावस्था, तयोरन्यतरापेक्षमन्यतरत् एकतरमपेक्षत इत्याविष्कृतं प्रकाशितम् । आविष्कारप्रकारश्च भाष्यादितोऽवसेयः । "यत्र सुप्तो न कंचन कामं कामयते न कंच न स्वप्नं पश्यती (बृ. ४.३.१९.) ति, श्रुत्या सुषुप्त्यपेक्षता "यत्र त्वस्य सर्वमात्मैवाभूत्" इति श्रुत्या (बृ. ४. ५. १५.), मोक्षापेक्षता च प्रदर्शितेति भावः ॥ १८३ ॥

तन्मात्रविषयत्वानङ्गीकारे लोकव्यवहार एव न घटत इति बाधकं दर्शयति, अन्यथेति ।

**अन्यथा याज्ञवल्क्यादेराचार्यत्वं न संभवेत् ।**
**द्वैतदृष्टावविद्वत्ता द्वैतादृष्टौ न वाग्वदेत् ॥ १८४ ॥**

अन्यथा निरुक्तश्रुतेस्तन्मात्रविषयकत्वानङ्गीकारे इतरव्यवहारविषयेऽप्यङ्गीकारे इति यावत् याज्ञवल्क्यादेराचार्यत्वं न संभवेत् । सर्वस्य परित्यागेन स्वयमाचरन् जनकादेरुपदेशेनाचारे स्थापयन् याज्ञवल्क्योऽन्वर्थ आचार्यो भवति । तत्रोपपत्तिमाह, द्वैतेति । द्वैतदृष्टौ द्वैतस्योपदेशक उपदेश्यो ज्ञाता ज्ञेयमित्यादिद्वन्द्वस्य दृष्टौ बुद्धौ भासमानायां सत्यां अविद्वत्ता द्वैतादृष्टौ द्वैतस्याभाने उपदेशकस्य वाङ्न वदेत् । न प्रसरेत् । द्वैतस्थितिमाश्रित्य तन्मिथ्यात्वं जानत एवाचार्यत्वमुपपद्यते, न तु द्वैतनाशाभ्युपगमे; तन्नाशे उपदेष्टृत्वादेरसंभवादिति भावः ॥ १८४ ॥

विद्यास्वरूपनिरूपणम् ।

विद्याऽपरोक्षेति न सिध्यति, द्वैतप्रतीतिसद्भावात् । यदा द्वैतप्रतीतिर्नास्ति तदानींतनविद्यैवापरोक्षविद्या, सा निर्विकल्पकसमाधौ वर्तमानेत्याशंक्याह, निर्विकल्पेति ।

**निर्विकल्पसमाधौ तु द्वैतादर्शनहेतुतः ।**
**सैवापरोक्षविद्येति चेत् सुषुप्तिस्तथा न किम् ॥ १८५॥**

निर्विकल्पसमाधौ निर्गतो विकल्पो ज्ञातृज्ञेयादिविभागो यस्मात् स समाधिरेकाग्रतया ध्येयवस्तुनि मनसः स्थापनम्, तदवस्थायां द्वैतादर्शनहेतुतः

जगतोऽप्रतीतिहेतोः सैव द्वैतविस्मृतिरेवापरोक्षविद्येत्युच्यते चेत्, द्वैतस्याप्रतीतिरेवापरोक्षज्ञाननिदानमिति चेत् सुषुप्तिरपि तथा समाधिसदृशा किं न स्यात्? तत्रापि द्वैतादर्शनात् ॥ १८५ ॥

सुषुप्तिसमाध्योर्द्वैतदर्शनाभावस्य समत्वात् द्वैतदर्शनाप्रतीतिरेवापरोक्षविद्येत्युक्तप्रायम्। तत्तु न घटते, जडादावतिप्रसक्तत्वात्। अतो द्वैताप्रतीतिसमकालिकात्मतत्वज्ञानं विद्येत्यभ्युपेयम्। तथा च विशेषांशस्यानतिप्रसक्तत्वात्तन्मात्रमेव विद्यालक्षणमस्तु, न तु विशेषणांशोपयोगः। एवं सुषुप्तावात्मतत्त्वज्ञानरूपापरोक्षविद्याभाव इति न समाधिसाम्यमित्याशंक्य परिहरति, आत्मेति।

आत्मतत्त्वं न जानाति सुप्तौ यदि तदा त्वया।
आत्मधीरेव विद्येति वाच्यं न द्वैतविस्मृतिः ॥ १८६ ॥

सुप्तावात्मतत्त्वं आत्मनो यथार्थस्वरूपं यदि न जानात्यतो विशेष्याभावान्न तदानींतनज्ञानस्य मिथ्यात्वमिति चेदुच्यते, तदेति। तदा त्वयाऽत्मधीरेव आत्मतत्त्वज्ञानमेव विद्येति वाच्यं अवश्यं वक्तव्यम्। द्वैतविस्मृतिस्तु जगतोऽभानं तु न विद्या ॥ १८६ ॥

एवं च द्वैतविस्मृत्यात्मज्ञानयोस्सम्मेलनं विद्यात्वमिति विवदन्तमुपहसति, उभयामात

उभयं मिलितं विद्या यदि तर्हि घटादयः।
अर्धविद्याभाजिनः स्युः सकलद्वैतविस्मृतेः ॥ १८७ ॥

उभयं द्वैतविस्मृतिरात्मज्ञानमिति द्वयं मिलितं सम्मिश्रितं सत् यदि विद्या स्यात्तर्हि घटादयोऽचेतना अपि सकलद्वैतविस्मृतेः विस्मृतिरूपविद्यांशस्य तत्र विद्यमानत्वादर्धविद्याभाजिनः स्युः ॥ १८७ ॥

केवलद्वैतविस्मृतिरेव विद्येति वादस्यासामंजस्यं सोपहासं परिहरति, मशकेति।

मशकध्वनिमुख्यानां विक्षेपाणां बहुत्वतः।
तव विद्या तथा न स्याद्घटादीनां यथा दृढा ॥ १८८ ॥

मशकध्वनिमुख्यानां चित्तैकाग्र्यस्य विक्षेपाणां बहुत्वतो विद्यमानत्वाद्रूढादीनां विद्या यथा दृढा तव द्वैतविस्मृतिरूपा विद्या निर्विकल्पसमाधावपि न दृढा स्यात्। समाधावपि मशकादिध्वनिभिः कदाचिद्विक्षेपसंभवात्। तत्र द्वैतप्रतीत्यभावो न दृढ इति घटाद्यपेक्षयैवेत्यादिना त्वया योगिषु न्यूनत्वमभ्युपेयं स्यादिति परिहासः ॥ १८८ ॥

तर्ह्यात्मतत्त्वज्ञानमेव विद्या, तथापि चित्तस्य दुष्टत्वात्तेन प्रतिबन्धो माभूदिति तन्निरोधार्थं योग आवश्यकश्चेदिष्टापत्तिरेवास्माकं तदित्याहि, आत्मेति।

**आत्मधीरेव विद्येति यदि तर्हि सुखीभव।**
**दुष्टचित्तं निरुन्ध्याश्चेन्निरुन्धि त्वं यथासुखम् ॥१८९॥**

उपहासभयादात्मधीरेव विद्येति यदि त्वयाऽभ्युपगम्यते तर्हि एतावन्मात्रं ज्ञानं त्वय्युदगादिति सुखीभव। किंत्वात्मज्ञानसिद्धये दुष्टचित्तं विषयासक्ततया दुष्टमयोग्यं यत्तव चित्तं तन्निरुन्ध्याः। इत्यपि वदसि चेत् त्वं यथासुखं निरुन्धि नियच्छ। आत्मनो यथार्थज्ञानमेव विद्या। सा च चित्तनिरोधेन सिध्यतीति, भावः ॥ १८९ ॥

तत्रेष्टापात्तिं दर्शयति, तदिति।

**तदिष्टमेष्टव्यमायामयत्वस्य समीक्षणात्।**
**इच्छन्नप्यज्ञवन्नेच्छेत्किमिच्छन्निति हि श्रुतम् ॥ १९० ॥**

एष्टव्यमायामयत्वस्य अद्वितीयात्मज्ञानसिद्धये एष्टव्यमपेक्षितव्यं यन्मायामयत्वं जगतो मायापरिकल्पितत्वं तस्य समीक्षणात्तच्चित्तनिरोधनमस्माकमपीष्टमेव। ज्ञानी विषयान् प्रारब्धकर्मवशादिच्छन्नप्यज्ञवन्नेच्छेत्। एवं किमिच्छन्निति मन्त्रांशेनाभिप्रेतमर्थं निगमयति। अयं भावः। प्रारब्धकर्मणामुपभोगेन क्षय इति तत्क्षयाय ज्ञानी विषयानिच्छति, तत्र नानुरज्यति, प्रत्युत क्लिश्यति। अज्ञानी तूत्तरोत्तराभिवृद्धिर्भवतु मे कामोपभोगस्येति विषयानिच्छतीत्यनुरज्यति। इदमेव वैलक्षण्यं श्रुत्या प्रतिपादितमित्याह, किमिच्छन्निति। किमिच्छन्निति श्रुतौ श्रुतं प्रतिपादितम् ॥ १९० ॥

एवंज्ञानिनो विषयेच्छायाः सुखसाधनत्वज्ञानपूर्वकेच्छाभावस्य च श्रुतितात्पर्यविषयतया वर्णने प्रमाणं फलविधया प्रदर्शयति, राग इति ।

**रागो लिंगमबोधस्य सन्तु रागादयो बुधे ।**
**इति शास्त्रद्वयं सार्थमेव सत्यविरोधतः ॥ १९१ ॥**

"रागो लिंगमबोधस्य चित्तव्यायामभूमिषु। कुतः शाद्वलता तस्य यस्याग्निः कोटरे तरोः" इति, ज्ञानिनो रागनिषेधपरं शास्त्रम् । "शास्त्रार्थस्य समाप्तत्वान्मुक्तिः स्यात्तावतामितेः रागादयः सन्तु कामं न तद्भावोऽपराध्यती" ति तस्यैव रागाभ्युपगमपरं शास्त्रम् । एवं सति शास्त्रद्वयमविरोधतः परस्परविरोधाभावात् बुधे दृढरागाभावे सार्थमेव । अबाधितार्थबोधकमेव । अन्यथा परस्परविरोधाद्बाधितार्थबोधकतया सत्प्रतिपक्षन्यायेनाबोधकमेव स्यात् । तयोरबाधितार्थबोधकत्वरूपप्रामाण्य संपादनमेवमाशयवर्णनस्य फलं भवति । एतेनैवमाशयवर्णने प्रमिततद्वाक्यद्वयमेवात्र प्रमाणमिति पर्यवस्यति । एवं च रागनिषेधपरस्य शास्त्रस्य दृढरागविषयत्वं तदङ्गीकारपरस्य रागाभासविषयत्वं चेति ज्ञेयम् ॥ १९१ ॥

"कस्येति"शब्दार्थविचारः ।

किमिच्छन्नित्यत्राशयं निरूप्य कस्य कामायेत्यस्याशयमाह, जगदिति ।

**जगन्मिथ्यात्ववत् स्वात्मासंगत्वस्य समीक्षणात् ।**
**कस्य कामायेति वचो भोक्त्रभावविवक्षया ॥ १९२ ॥**

जगन्मिथ्यात्वव यथा जगतो मिथ्यात्वस्य ज्ञानात् काम्यकामनयोर्बाध इति बोधयितुं किमिच्छन्निति श्रुतिः प्रवृत्ता । तथैव स्वात्मासंगत्वस्य स्वात्मनः संगराहित्यस्य समीक्षणात् कामाभावेऽर्थात् कामिनोऽप्यभावे भोक्त्रभावविवक्षया भोक्तुर्भोक्तृत्वविशिष्टत्वनियमाद्विशेषणीभूतभोक्तृत्वाभावे विशेषणाभावात् विशिष्टाभाव इति न्यायेन भोक्त्रभावस्य विवक्षया बोधनेच्छया कस्य कामायेति वचः श्रुतावीरितम् । असंगस्य पुरुषस्य कामाभावे तत्फलभोक्तृत्वस्याप्यभाव इति फलितम् ॥ १९२ ॥

श्रुत्युक्तो भोक्तृत्वप्रतिषेधस्तत्प्रसक्तिपूर्वकः। आत्मनोऽसंगत्वात् प्रसक्तिरेव नास्ति। तथा च कथं प्रतिषेध उच्यतेत्याशंक्य प्रसक्तिं दर्शयति, पतीति।

पतिजायादिकं सर्वं तत्तद्भोगाय नेच्छति।
किन्त्वात्मभोगार्थमिति श्रुतावुद्घोषितं बहु॥ १९३॥

पतिजायादिकं सर्वं सर्वात्मना पातीति पतिः, जाया जायतेऽस्यामिति जाया, पतिः शुक्ररूपेण भार्यां संप्रविश्य गर्भतामापद्य तस्यां पुत्ररूपेण जायते। "आत्मा वै पुत्रनामासी"ति (कौ. २-११) श्रुतेः, तस्माज्जायाया जायात्वम्, आदिशब्देन पुत्रवित्तपश्वादयोऽभिहिताः, सर्वं तत्तद्भोगाय तेषां पत्यादीनां भोगाय पुरुषस्तान्नेच्छति, किं त्वात्मभोगार्थमात्मनस्तु कामाय तानिच्छति, "न वा अरे पत्युः कामाय पतिः प्रियो भवतो"त्यारभ्य, "न वा अरे सर्वस्य कामाय सर्वं प्रियं भवती"त्यन्तं बृहदारण्यकश्रुतौ (४. ५. ६.) बहु अनेकोदाहरणपूर्वकमुद्घोषितं सुदृढमुक्तम्॥ १९३॥

नन्वेवं श्रुतिसिद्धं भोक्तृत्वं श्रुत्यन्तरं निवारयितुं न प्रभवति, अन्यथा भोक्तृत्वप्रतिपादिकायाः अप्रामाण्यं प्रसज्येत, तत्प्रामण्यं यदि लक्ष्यते तन्निषेधबोधिकाया अप्रामाण्यप्रसंगः, सेयमुभयतः पाशारज्जुरित्याशंक्य श्रुतिबोधितं भोक्तृत्वमारोपितम्, आरोपितभोक्तृत्वस्य प्रसक्तिमादाय निषेधप्रसक्तिरिति समर्थयितुं भोक्तृत्वं किमाश्रयकमिति विकल्पयति, किमिति।

किं कूटस्थश्चिदाभासोऽथ वा किं वोभयात्मकः।
भोक्ता तत्र न कूटस्थोऽसंगत्वाद्भोक्तृतां व्रजेत्॥ १९४॥

भोक्तृत्वाश्रयः किं कूटस्थः आहोस्वित् चिदाभासोऽथवोभयात्मकः स्यादिति विकल्पः। नाद्य इत्याह, भोक्तेति। तत्र त्रिषु कूटस्थोऽसंगत्वादधिष्ठानतया देहद्वयावच्छिन्नचेतनः कूटवन्निर्विकारत्वात् भोक्तृतां न व्रजेत्॥ १९४॥

एकत्रैव भोक्तृत्वासंगत्वयोरभ्युपगमे को दोष इत्यत आह, सुखेति।

सुखदुःखाभिमानाख्यो विकारो भोग उच्यते।
कूटस्थश्च विकारी चेत्येतन्न व्याहतं कथम्॥ १९५॥

स्पष्टा पदयोजना । भोक्तृत्वं नाम विकारित्वम्, कूटस्थत्वं नाम निर्विकारित्वं, तथा च कूटस्थो विकारी विकारशून्य इति च मम माता वन्ध्येतिवद्विरुध्यते । नाऽतो भोक्तृत्वं कूटस्थाश्रयकम् ॥ १९५ ॥

द्वितीयं परिहरति, विकारीति ।

**विकारिबुद्ध्यधीनत्वादाभासे विकृतावपि ।**
**निरधिष्ठानविभ्रान्तिः केवला न हि तिष्ठति ॥ १९६ ॥**

- विकारिबुद्ध्यधीनत्वात् विकारिणी या बुद्धिस्तस्या अधीनत्वाच्चदाभासे विकृतावप्यन्तःकरणप्रतिबिम्बफलभूतस्य चिदाभासस्य तद्गुणविशिष्टत्वेऽपि चिदाभासस्यारोपितत्वेन आरोपितज्ञानस्याधिष्ठानमन्तराऽसंभवेन केवला आरोपितमात्रविषयिणी निरधिष्ठानभ्रान्तिः अधिष्ठानानवगाहि भ्रमात्मकं ज्ञानं न हि तिष्ठति । केवलचिदाभासस्य विकारित्वेऽपि कूटस्थरूपाधिष्ठानं विना स न संभवतीति न केवलचिदाभासस्यापि भोक्तृत्वं संभवतीति भावः ॥ १९६॥

पारिशेष्यादुभयात्मको भोक्तृत्वाश्रय इति सिद्धमित्याह उभयात्मक, इति ।

**उभयात्मक इत्येवाऽतो लोके भोक्ता निगद्यते ।**
**तादृगात्मानमारभ्य कूटस्थः शेषितः श्रुतौ ॥ १९७ ॥**

अतः कूटस्थचिदाभासयोः प्रत्येकं भोक्तृत्वासंभवाल्लोके उभयात्मकः कूटस्थसहितचिदाभासो भोक्तेति निगद्यते कथ्यते । लोके इत्युक्त्या वस्तुतः उभयात्मको नास्तीति प्रतीयते, ननूभयात्मकः श्रुतिसिद्ध एव । "योऽयं विज्ञानमयः प्राणेषु" "असंगोह्ययं पुरुषः" (बृ. ४. ३. १५.) इत्यादिषूभयात्मकत्वमुक्तमित्याशंक्य तच्छ्रुतेस्तस्य पारमार्थिकत्वे न तात्पर्यमित्याह, तादृगिति । तादृगात्मानं बुद्ध्युपाधिकृतभोक्तृत्वाद्युपेतमात्मानमारभ्य अनूद्य "नायमात्मेति" सर्वभोक्तृत्वमपास्य कूटस्थो निर्विकारश्चिदात्मा "स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यते" इति, (बृ. ३. ९. २६.) श्रुतौ कूटस्थः शेषितः परिशिष्टतयोक्तः । अत उभयात्मको न पारमार्थिकः, अत उक्तं लोके इति भावः ॥ १९७॥

परिशेषितत्वमेवाह, आत्मेति ।

आत्मा कतम इत्युक्ते याज्ञवल्क्यो विबोधयन् ।
विज्ञानमयमारभ्यासंगं तं पर्यशेषयत् ॥ १९८ ॥

"कतम आत्मेति" (बृ. ४. ३. ७.) जनकेनोक्ते पृष्टे सति याज्ञवल्क्यः आत्मतत्त्वं विबोधयन् "योऽयं विज्ञानमयः प्राणेष्वि"ति विज्ञानमयमारभ्य "तेन भवत्यसंगोह्ययं पुरुषः" (बृ. ४. ३. १५.) इति तमसंगमात्मानं पर्यशेषयत् ॥१९८॥

एतदर्थमेवैतरेयवाक्येनोदाहरति, क इति ।

कोऽयमात्मेत्येवमादौ सर्वत्राऽऽत्मविचारतः ।
उभयात्मकमारभ्य कूटस्थः शेष्यते श्रुतौ ॥ १९९ ॥

"कोऽयमात्मेति वयमुपास्महे" (ऐत. ३–१) इत्येवमादावात्मविचारत आत्मविचारप्रसंगेन संज्ञानाज्ञानाद्युभयात्मकमारभ्यैतरेयश्रुतावन्ते "प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्मेति", (ऐत. ३. ३.) कूटस्थ एव शेष्यते । पञ्चमप्रकरणे आदिमश्लोकयोः सम्यग्विचारितमिदं वाक्यम् । एवं चोभयात्मकस्य व्यवहारमात्रसिद्धतया भोक्तुस्तद्गतत्वेन भोक्तृत्वस्यापि व्यवहारमात्रसिद्धत्वमेव । अतस्तस्यापि मिथ्यात्वमिति फलितम् ॥१९९॥

एवं भोक्तृत्वस्यासत्वे सति कुतः सर्वो लोको भोक्तृत्वसत्यत्वधिया तदर्थं यतत इत्याशंक्याह, कूटस्थेति ।

कूटस्थसत्यतां स्वस्मिन्नध्यस्यात्माविवेकतः ।
तात्त्विकीं भोक्तृतां मत्वा न कदाचिज्जिहासति ॥२००॥

आत्मा, अत्रात्मशब्दो जीवपरः, स्वरूपे यत्ने देहे मनसि निजे बुद्धौ वह्नौ वायौ जीवे ब्रह्मणि च तस्य प्रयोगात्, अविवेकतः कूटस्थजीवभेदस्य विवेचनाशून्यत्वतः कूटस्थसत्यतां स्वस्मिन्न पारमार्थिकेऽध्यस्य स्वं सत्यं बुद्ध्वा भोक्तृतां स्वनिष्ठां तात्त्विकीं सत्यनिष्ठतया सत्यभूतां मत्वा कदाचिदपि तां भोक्तृतां न जिहासति ॥ २०० ॥

एवमध्यासमूलकतया सिद्धं लौकिकवृत्तान्तमेव "आत्मनस्तु कामाये"ति श्रुतिरनुवदति न पारमार्थिकमित्याह, भोक्तेति ।

भोक्ता स्वस्यैव भोगाय पतिजायादिमिच्छति ।
एष लौकिकवृत्तांतः श्रुत्या सम्यगनूदितिः ॥ २०१ ॥

स्पष्टोऽर्थः । "आत्मनस्तु कामाय सर्वं प्रियं भवती" ति (बृ. ४. ५. ७.) श्रुत्या ॥ २०१ ॥

आत्मनस्तु कामाय सर्वस्य प्रेयस्त्वादात्मैव प्रेष्ठ इत्यनूद्य तत्फलमाह, भोग्येति ।

भोग्यानां भोक्तृशेषत्वान्मा भोग्येष्वनुरज्यताम् ।
भोक्तर्येव प्रधानेऽतोऽनुरागं तं विधित्सति ॥ २०२ ॥

भोग्यानां पतिजायादिप्रेमभाजां भोक्तृशेषत्वात् भोक्तुरङ्गभूतत्वाद्भोग्येषु मानुरज्यताम्, अत एव प्रधाने भोक्तर्यनुरज्यताम् । एवमाशयकत्वाच्छ्रुतेस्तमनुरागं भोक्तृनिष्ठां प्रीतिं श्रुतिर्विधित्सति । भोक्तर्यनुरागः कर्तव्यो न तु भोग्येष्विति श्रुतेस्तात्पर्यम् ॥ २०२ ॥

अत्र पांडवगीतासु प्रह्लादवचनमुदाहरति, येति ।

या प्रीतिरविवेकानां विषयेष्वनपायिनी ।
त्वामनुसरतः सा मे हृदयान्मापसर्पतु ॥ २०३ ॥

हे माप मां लक्ष्मीं पातीति मापः, लक्ष्मीपते । सत्यासत्ययोरविवेकानां विवेचनाशून्यानां विषयेषु जायापुत्रादिभोग्येषु या अनपायिनी विच्छेदरहिता प्रीतिरासक्तिर्दृश्यते सा प्रीतिस्त्वामनुसरतो मे हृदयात् सर्पतु अपगच्छतु । तव भक्तस्य मे हृदयेऽन्यविषयानुरागो मा प्रविशत्वितिभावः । यद्वा अविवेकानां विषयेष्वनपायिनी यादृशी दृढतरा प्रीतिर्दृश्यते तादृश्यनपायिनी त्वद्विषयिका प्रीतिस्त्वामनुसरतो मम हृदयान्मापसर्पतु मापगच्छतु । इदं वचनं भोग्येऽनुरागं प्रतिषिद्ध्य प्रधाने भोक्तरि निधत्त इति पूर्वोक्तश्रुतिसमानाकारकमेव ॥ २०३ ॥

एवं दृष्टान्तार्थं दार्ष्टान्तिके योजयति, इतीति ।

इति न्यायेन सर्वस्माद्भोग्यजाताद्विरक्तधीः ।
उपसंहृत्य तां प्रीतिं भोक्तर्येनं बुभुत्सते ॥ २०४ ॥

न्यायेन पुराणोक्तमार्गेण । भोक्तरि आत्मनि । एनमात्मानं बुभुत्सते बोद्धुमिच्छति । स्पष्टमन्यत् ॥ २०४ ॥

फलमाह, स्रगिति ।

स्रक्चंदनवधूवस्त्रसुवर्णादिषु पामरः ।
अप्रमत्तो यथा तद्वन्न प्रमाद्यति भोक्तरि ॥ २०५ ॥

स्पष्टं पूर्वार्धम् । तद्वद्विद्वान् भोक्तरि आत्मनि न प्रमाद्यति प्रमादं नोपैति । किंतु स्वस्वरूपं चिन्तयत्येव ॥ २०५ ॥

एवमात्मविचारे श्रद्धा कर्तव्येत्याह, काव्येति ।

काव्यनाटकतर्कादिमभ्यस्यति निरन्तरम् ।
विजिगीषुर्यथा तद्वन्मुमुक्षुः स्वं विचारयेत् ॥ २०६ ॥

सुलभा पदयोजना ॥ २०६ ॥

एवमैहिकप्रतिष्ठकामनया प्रवृत्तिं दृष्टान्ततयोक्त्वाऽऽमुष्मिककामनया प्रवृत्तिमपि दृष्टान्तयति, जपेति ।

जपयागोपासनादि कुरुते श्रद्धया यथा ।
स्वर्गादिवाञ्छया तद्वच्छ्रद्धध्यात्स्वे मुमुक्षया ॥ २०७ ॥

जपयागोपासनादि जपो गायत्र्यादेः, यागः सोमादिः । उपासना प्रज्ञाग्निविद्यादेः, स्वर्गादिवाञ्छया, आदिशब्देन ब्रह्मलोकादि भवति । निर्गुणोपासनायास्तत्फलकत्वात् । स्पष्टमन्यत् ॥ २०७ ॥

अणिमाद्यैश्वर्यकामनया प्रवृत्तिमपि दृष्टान्तयति, चित्तेति ।

चित्तैकाग्र्यं यथा योगी महायासेन साधयेत् ।

अणिमादिप्रेप्सयैवं विविच्यात् स्वं मुमुक्षया ॥ २०८ ॥

अणिमादिप्रेप्सया अणिमाद्यष्टैश्वर्यस्य प्राप्तीच्छया । स्वमात्मानं देहादिभ्यो विविच्यात् विविच्य जानीयात् । स्पष्टमन्यत् ॥ २०८ ॥

एवमभ्यासफलमाह, कौशलानीति ।

कौशलानि विवर्धन्ते तेषामभ्यासपाटवात् ।
यथा तद्वद्विवेकोऽस्याप्यभ्यासाद्विशदायते ॥ २०९ ॥

यथा तेषां कौशलान्यनायासेन फलप्राप्तिसाधननैपुण्यान्यभ्यासपाटवात् पौनःपुन्येनाचरणस्य पाटवात् विवर्धन्ते विशेषेणाभिवर्धन्ते । तद्वदस्याऽपि मुमुक्षोर्विवेको देहाद्यात्मविवेचनाशक्तिरभ्यासाद्विशदायते विस्पष्टं मनोगोचरतामेति॥२०९

विवेकवैशद्यफलमाह, विविञ्चतेति ।

विविञ्चता भोक्तृतत्त्वं जाग्रदादिष्वसंगता ।
अन्वयव्यतिरेकाभ्यां साक्षिण्यध्यवसीयते ॥ २१० ॥

एवं विवेचनवैशद्ये सत्यन्वयव्यतिरेकाभ्यां भोक्तृतत्त्वं आत्मनःपारमार्थिकस्वरूपं विविञ्चता विषयेभ्यः पृथक्करणेन जानता मुमुक्षुणा जाग्रदादिषु आदिशब्देन स्वप्नसुप्तिमूर्छामरणसमाधयो गृह्यन्ते, तेष्वसङ्गताऽध्यवसीयते निश्चीयते ॥ २१० ॥

उक्तनिश्चयप्रयोजकावन्वयव्यतिरेकौ सामान्यमुखेन प्रदर्शयति, यत्रेति ।

यत्र यद्दृश्यते द्रष्ट्रा जाग्रत्स्वप्नसुषुप्तिषु ।
तत्रैव तन्नेतरत्रेत्यनुभूतिर्हि सम्मता ॥ २११ ॥

जाग्रत्स्वप्नसुषुप्तिषु यत्र यस्यामवस्थायां यद्वस्तु चिद्रूपेण द्रष्ट्रा दृश्यते तत्तत्रैव तस्यामवस्थायामेव नेतरत्रेत्यनुभूतिरनुभवः सर्वेषां सम्मता अभिमतेति हि सुप्रसिद्धमेव । अयं भावः । जाग्रदवस्थायाः सत्त्वे बाह्यप्रपञ्चभोगः, तदभावे तदभाव इत्यन्वयव्यतिरेकाभ्यां बाह्यप्रपञ्चभोगजाग्रदवस्थयोर्व्याप्यव्यापकभावे सिद्धे

जाग्रदवस्थाशून्यत्वे बाह्यप्रपञ्चभोगाभावो, व्यापकाभावात् व्याप्याभाव इति नयेन साक्षिणि सिध्यति। भोग एव संगः। तेन बाह्यप्रपञ्चसंगाभाववान् साक्षीति निश्चेतुं शक्यम्। एवं तत्तद्विषयभोगतत्तदवस्थयोर्व्याप्यव्यापकभावबलादवस्थात्रय-शून्ये सर्वविषयभोगरूपसंगराहित्यं साक्षिणि निश्चीयते ॥ २११ ॥

न केवलानुभवसिद्धोऽयं किंतु शास्त्रसम्मतोऽपीत्यभिप्रायेण तद्बोधिकां श्रुतिमर्थतः पठति, स इति।

**स यत्तत्रेक्षते किञ्चित्तेनानन्वागतो भवेत्।**
**दृष्ट्वैव पुण्यं पापं चेत्येवं श्रुतिषु डिंडिमः ॥ २१२ ॥**

स आत्मा तत्र जाग्रति स्वप्ने वा यत्किञ्चिद्भोग्यं सुखं दुःखं वेक्षते। तेन सुखेन दुःखेन वा अनन्वागतोऽनुसृत्य गतो न भवेत्। तद्विशिष्टो नागच्छति। अगृहीतपूर्वावस्थानुभवोऽवस्थान्तरं याति। दृष्ट्वैव पुण्यं च पापं च पुण्यपापफले दृष्ट्वैव न तु तदादायावस्थान्तरंप्रति गच्छतीति श्रुतिषु डिंडिम उद्घोषः श्रूयते। "स एतस्मिन् संप्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्यां द्रवती" ति (बृ. ४. ३. १५.) श्रुतेः। एवं च भोगदर्शनमात्रमेवात्र न तु भोगवैशिष्ट्यं। भोगः संग इत्युक्तमेव। एवं चासंग इति सिद्धम् ॥ २१२ ॥

भोक्तृतत्त्वविवेचनाप्रतिपादकं कैवल्योपनिषद्वाक्यं (१–१७), पठति, जाग्रदिति।

**जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत्प्रकाशते।**
**तद्ब्रह्माहमिति ज्ञात्वा सर्वबंधैः प्रमुच्यते ॥ २१३ ॥**

यत्सच्चिदानन्दस्वरूपं परं ब्रह्म जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं आदिशब्देन समाधिर्गृह्यते प्रकाशते स्वेन भासा भासयते तत् ब्रह्माहमस्मीति ज्ञात्वा पारोक्ष्या-पारोक्ष्याभ्यां निश्चित्य सर्वबन्धैः प्रमुच्यते। तथा च तस्य तद्भासकत्वमेव न तु तेन संग इति भावः ॥ २१३ ॥

सर्वावस्थास्वप्यसंगात्मकत्वमिति प्रतिपादिकां ब्रह्मबिंदूपनिषदमक्षरतः पठति, एकइति।

एक एवात्मा मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु ।
स्थानत्रयव्यतीतस्य पुनर्जन्म न विद्यते ॥ २१४ ॥

जाग्रत्स्वप्नसुषुप्तिष्वेक एवासंग आत्मेति मन्तव्यो भावनीयः। एवं विवेकी ज्ञानेन स्थानत्रयव्यतीतस्य जाग्रदादेरतीतस्य अत एव मुक्तस्य शरीरपातानन्तरं पुनर्जन्म न विद्यते ॥ २१४ ॥

अस्मिन्नर्थेऽन्यामपि कैवल्यश्रुतिं (१–१८), पठति, त्रिष्विति ।

त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् ।
तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः ॥२१५॥

त्रिषु धामसु जाग्रदादिषु यद्भोग्यं विषयजातं यो भोक्ता विश्वतैजसप्राज्ञरूपः यो भोगश्च भवेत्तेभ्यो विलक्षणो यः साक्षी चिन्मात्रः सदाशिवः सततं मंगलकरः परमात्माऽस्ति सोऽहमस्मीत्यर्थः ॥ २१५ ॥

तत्त्वस्यासंगत्वे निश्चिते सति भोक्तृत्वमाभासेऽवशिष्यत इत्याह, एवमिति ।

एवं विवेचिते तत्त्वे विज्ञानमयशब्दतः ।
चिदाभासो विकारी यो भोक्तृत्वं तस्य शिष्यते ॥२१६॥

आत्मतत्त्वे एवमसंगत्वेन विवेचिते सति विज्ञानमयशब्दतो विज्ञानमयशब्देन व्यवह्रियमाणो जीवैकदेशभूतो विकारी यश्चिदाभासो विद्यते तस्य भोक्तृत्वं शिष्यते । तस्य भोगसंबंधोऽवशिष्यते ॥ २१६ ॥

नन्वेतावता प्रबंधेन विविक्तचिदाभासस्य भोक्तृत्वं निरूपितम् । एवं च भोक्त्रभावप्रतिपादिका "कस्य कामायेति" श्रुतिर्विरुद्ध्येतेत्याशंक्य तस्याः पारमार्थिकभोक्त्रभावपरत्वान्न विरोध इति समाधत्ते, मायिक इति ।

मायिकोऽयं चिदाभासः श्रुतेरनुभवादपि ।
इन्द्रजालं जगत्प्रोक्तं तदन्तःपात्ययं यतः ॥ २१७॥

अयं चिदाभासो "जीवेशावाभासेन करोती"ति श्रुतेर्ब्रह्मविदामनुभवादपि

च मायिको मायाकल्पितः। मिथ्यास्वरूपः। विदुषामनुभवस्य मायिकानुभवत्वं स्फोरयितुं पूर्वोक्तं जगतो मायिकत्वं स्मारयति, इन्द्रजालमिति। स्पष्टमुत्तरार्धम्। चिदाभासस्य जगदन्तःपातित्वात्तस्याऽपि मायिकत्वमनुभूतमेव ॥२१७॥

एवं चिदाभासस्य मायिकत्वमनुमानेन प्रदर्श्य साक्षादपि प्रदर्शयति, विलय इति।

विलयोऽप्यस्य सुप्तादौ साक्षिणाह्यनुभूयते।
एतादृशं स्वस्वभावं विविनक्ति पुनः पुनः ॥ २१८ ॥

सुप्त्यादौ सुषुप्तिमूर्छयोरस्य चिदाभासस्य विलयो नाशः साक्षिणाऽनुभूयते हि। एतादृशं मिथ्याभूतं स्वस्वभावं स्वस्य मिथ्यात्मकत्वं पुनः पुनर्विविनक्ति कूटस्थाद्विविच्य जानाति ॥२१८॥

स्वविलयस्य निश्चये सति भोगेच्छा नोदेतीत्याह, विविच्येति।

विविच्य नाशं निश्चित्य पुनर्भोगं न वाञ्छति।
मुमूर्षुः शायितो भूमौ विवाहं कोऽभिवाञ्छति ॥ २१९॥

स्पष्टोऽर्थः ॥२१९॥

एवं ज्ञानोत्पत्त्यनन्तरं भोगान् प्रति विलज्जत इत्याह, जिह्रेति।

जिह्रेति व्यवहर्तुं च भोक्ताऽहमिति पूर्ववत्।
छिन्ननास इव ह्रीतः क्लिश्यन्नारब्धमश्नुते ॥ २२० ॥

पूर्ववत् प्राक् ज्ञानोदयाद्यद्वद्यथाऽहं भोक्तेति व्यवहरति तथा ज्ञानानन्तरं। स्पष्टमन्यत् ॥ २२०॥

चिदाभासे वस्तुतो भोक्तृत्वाभावज्ञाने साक्षिणो भोक्तृत्वारोपस्याप्यनवकाश इतीत्याह, यदेति।

यदा स्वस्यापि भोक्तृत्वं मन्तुं जिह्रेत्ययं तदा।
साक्षिण्यारोपयेदेतदिति कैव कथा वृथा ॥ २२१ ॥

वृथा कथा व्यर्था कथा कैव न कापीत्यर्थः । स्पष्टमन्यत् ॥ २२१ ॥

संज्वरेदितिशब्दार्थविचारः ।

सर्वथा भोक्तृत्वं न संभवतीत्यपि बोधने श्रुतितात्पर्यमित्याह, इतीति ।

इत्यभिप्रेत्य भोक्तारमाक्षिपत्यविशंकया ।
कस्य कामायेति ततः शरीरानुज्वरो न हि ॥ २२२ ॥

इति कूटस्थचिदाभासयोर्वस्तुतो भोक्तृत्वस्य सर्वथाऽसिद्धिमभिप्रेत्य । तन्निरसनफलमाह, तत इति । एवंदर्शनस्य फलं सन्तापाभाव एवेति भावः ॥२२२॥

आत्मज्ञानिनश्शरीरसन्तापसामान्याभावं बोधयितुं प्रतियोगिभूतानुताप त्रैविध्यं तदाश्रयत्रैविध्यप्रदर्शनपूर्वकं प्रदर्शयति, स्थूलमिति ।

स्थूलं सूक्ष्मं कारणं च शरीरं त्रिविधं स्मृतम् ।
अवश्यं त्रिविधोऽस्त्येव तत्र तत्रोचितो ज्वरः ॥ २२३ ॥

तत्र तत्रोचितज्वरः शरीरत्रयानुरूपो ज्वरः । स्पष्टमन्यत् ॥ २२३ ॥

स्थूलशरीरसन्तापानाह, वातेति ।

वातपित्तश्लेष्मजन्यव्याधयः कोटिशस्तनौ ।
दुर्गन्धित्वकुरूपत्वदाहभङ्गादयस्तथा ॥ २२४ ॥

स्पष्टोऽर्थः । भङ्गोऽवयवादीनां वैकल्यम् ॥ २२४ ॥

सूक्ष्मशरीरज्वरानाह, कामेति ।

कामक्रोधादयः शान्तिदान्त्याद्या लिङ्गदेहगाः ।
ज्वरा द्वयेऽपि बाधन्ते प्राप्त्याप्राप्त्या नरं क्रमात् ॥ २२५ ॥

कामक्रोधादयः, आदिशब्देन मात्सर्यादयो भवन्ति । शान्तिदान्त्यादयः, शान्तिरन्तरिन्द्रियनिग्रहः, दान्तिर्बाह्येन्द्रियनिग्रहः, एते द्विविधा अपि लिङ्गदेहगा ज्वराः । द्वयेऽपि उक्ता ये द्विविधा ज्वरास्तेषां मध्ये कामादयः प्राप्त्या शान्त्यादयोऽप्राप्त्या च क्रमान्नरं बाधन्ते ॥ २२५ ॥

श्रुत्युक्तं कारणशरीरसंतापमाह, स्वमिति ।

**स्वं परं च न वेत्त्यात्मा विनष्ट इव कारणे ।**
**आगामि दुःखबीजं चेत्येतदिन्द्रेण दर्शितम् ॥ २२६ ॥**

कारणे शरीरे आत्मा विनष्ट इव विनष्टसदृशः विनष्ट इतियावत् स्वं स्वरूपं च परं च स्वस्मिन्नध्यस्तं जगच्च न वेत्ति । स्वपरज्ञानशून्यो भवति । तदेव विनष्टसादृश्यम् । आगामिदुःखबीजं च भाव्यनुभवयोग्यस्य दुःखस्य बीजमेतद्द्वयं, "न हि खल्वत्रायमेवमि"ति (छां. ८. ११. १.) छान्दोग्यवाक्ये इन्द्रेण दर्शितम् । विनष्टप्रायमागामिदुःखबीजमिति कारणशरीरस्य ज्वरौ ॥ २२६ ॥

एवं शरीरत्रयं तत्तदुचितज्वरत्रितयं चाभिधाय तेषामपरिहार्यत्वमाह, एते इति ।

**एते ज्वराः शरीरेषु त्रिषु स्वाभाविका मताः ।**
**वियोगे तु ज्वरैस्तानि शरीराण्येव नासते ॥ २२७ ॥**

त्रिषु त्रिविधेषु शरीरेष्वेते ज्वराः स्वाभाविकाः सहजा इति मताः । अतोऽपरिहार्या इति भावः । स्वाभाविकत्वं व्यतिरेकमुखेन दर्शयति, वियोग इति । शरीराणां ज्वरैर्वियोगे सति तु तानि शरीराण्येव नासते न विद्यन्ते ॥ २२७ ॥

ज्वरवियोगे शरीरासत्वं दृष्टान्तमुखेनाह, तन्तोरिति ।

**तन्तोर्वियुज्येत पटो वालेभ्यः कंबलो यथा ।**
**मृदो घटस्तथा देहो ज्वरेभ्योऽपीति दृश्यताम् ॥ २२८ ॥**

सुलभा पदयोजना । तन्तुवालमृदादिवियोगे पटकम्बलघटाद्यभावः, तद्वज्ज्वरवियोगे देहाभावः ॥ २२८ ॥

शरीरस्यैव ज्वरसन्तापः ।

कूटस्थे ज्वराभावदिदर्शयिषया चिदाभासे तदभावं दर्शयति, चिदिति ।

**चिदाभासे स्वतः कोऽपि ज्वरो नाऽस्ति यतश्चितः ।**
**प्रकाशैकस्वभावत्वमेव दृष्टं न चेतरत् ॥ २२९ ॥**

सुलभा पदयोजना । स्वतः शरीरत्रयगतज्वरमन्तरा प्रतिबिम्बभूतचिदाभासे न स्वतो ज्वरः । बिम्बेऽविद्यमानस्य धर्मस्य तदन्यूनातिरिक्तेनातिरिक्ते प्रतिबिम्बेऽसंभवात् ॥ २२९ ॥

कैमुतिकन्यायेन कूटस्थे तदभावं दर्शयति, चिदिति ।

चिदाभासेऽप्यसंभाव्या ज्वरा साक्षिणि का कथा ।
एवमप्येकतां मेने चिदाभासो ह्यविद्यया ॥ २३० ॥

स्पष्टं पूर्वार्धम् । तर्हि अहं सुखी अहं दुःखीत्याकारकानुतापानुभवस्य का गतिरित्याशंक्याह, एवमिति । एवमपि चिदाभासे ज्वरविरहेऽप्यविद्यया शरीरेण सहैकतां चिदाभासो मेने ॥ २३० ॥

अविद्याकृतैकताज्ञानमेव विवृणोति, साक्षीति ।

साक्षिसत्यत्वमध्यस्य स्वेनोपेते वपुस्त्रये ।
तत्सर्वं वास्तवं स्वस्य स्वरूपमिति मन्यते ॥ २३१ ॥

चिदाभासः स्वेनोपेते वपुस्त्रये स्थूलादौ साक्षिसत्यत्वं कूटस्थस्य सत्यत्व मध्यस्य तत्सर्वं ज्वरपीडितं शरीरत्रयं स्वस्य वास्तवं स्वरूपमिति मन्यते ॥ २३१ ॥

एवमेकताज्ञानफलमाह, एतस्मिन्निति ।

एतस्मिन् भ्रान्तिकालेऽयं शरीरेषु ज्वरत्स्वथ ।
स्वयमेव ज्वरामीति मन्यते हि कुटुंबिवत् ॥ २३२ ॥

एतस्मिन् शरीरतज्ज्वरत्रयसत्यत्वभ्रान्तिकाले शरीरेषु ज्वरत्सु सत्सु अयं चिदाभासः स्वस्मिन्नेवारोप्य अथ अनन्तरं स्वयमेव ज्वरामीति मन्यते हि । तत्रोदाहरणमाह, कुटुम्बिवदिति । "भार्यापुत्रादिषु विकलेषु सकलेषु वाऽहमेव विकलः सकलो वेति". यथा कुटुंबी मन्यते तथात्राप्यन्यधर्मान् स्वस्मिन्नध्यस्य क्लिश्नातीति भावः ॥ १३२ ॥

दृष्टान्तं विवृणोति, पुत्रेति ।

पुत्रदारेषु तप्यत्सु तपामीति वृथा यथा ।
मन्यते पुरुषस्तद्वदाभासोऽप्यभिमन्यते ॥ २३३ ॥

स्पष्टोऽर्थः ॥ २३३ ॥

भ्रान्त्यपनये चिदाभासस्य ज्वरपीडाभाव इत्याह, विविच्येति ।

विविच्य भ्रान्तिमुज्झित्वा स्वमप्यगणयन् सदा ।
चिन्तयन् साक्षिणं कस्माच्छरीरमनुसंज्वरेत् ॥ २३४ ॥

चिदाभासो विविच्य कूटस्थेन शरीरत्रयेण च स्वात्मानं पृथक्कृत्य तत्सर्वं स्वस्वरूपमिति भ्रान्तिमुज्झित्वा त्यक्त्वा स्वमपि प्रतिबिम्बमात्रत्वादसत्यत्वेन स्वस्वरूपमगणयन्ननादरं कुर्वन् सदा साक्षिणं स्वस्य निजरूपं चिन्तयन्, कस्माद्धेतोः शरीरमनुसंज्वरेत् अनुसृत्य परितपेत्? न संज्वरेदिति भावः ॥ २३४ ॥

भ्रान्तेरनुतापकारणत्वं तत्त्वज्ञानस्यानुतापाभावस्य कारणत्वं च प्रदर्शयितुं रज्जुसर्पभ्रान्तिं विवृणोति, अयथेति ।

अयथावस्तुसर्पादिज्ञानं हेतुः पलायने ।
रज्जुज्ञानेऽहिधीध्वस्तौ कृतमप्यनुशोचति ॥ २३५ ॥

रज्ज्वादावयथावस्तुसर्पादिज्ञानं पलायने हेतुः । रज्जुज्ञाने इयं रज्जुरिति यथार्थज्ञाने सति भ्रमवेलायां यत्कृतं पलायनादिकमहिधीध्वस्तौ सर्पबुद्धेर्विनाशे सत्यनुशोचति । धिङ्मे भ्रान्त्याऽज्ञानेन वृथा प्रयासो मया कृत इति दुःखाक्रान्तो भवति ॥ २३५ ॥

क्रमशो ज्ञानेन चिदाभासधीध्वंसकथनम् ।

ननु निवृत्तभ्रान्तिकस्य साक्षिचिन्तनं किमर्थम्? भ्रान्तिनिवृत्त्यनन्तरप्राप्यफलान्तराभावादित्याशंक्य, भ्रान्तिनिवर्तकज्ञानाविच्छेदसिद्धये तत्स्वरूपानुसन्धानमावश्यकम्, अन्यथा पुनः पुनर्भ्रान्त्युत्पादप्रसंगात्, एवं च पुनर्भ्रान्त्यनुत्पत्तिरेवानुचिन्तनफलमिति विशदयति, मिथ्येति ।

मिथ्याभियोगदोषस्य प्रायश्चित्तप्रसिद्धये ।

क्षमापयन्निवात्मानं साक्षिणं शरणं गतः ॥ २३६ ॥

निर्दोषिणं प्रति मिथ्याभियोगदोषस्य प्रायश्चित्तप्रसिद्धये, "प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते। तपोनिश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम्", इति लक्षणस्य प्रायश्चित्तस्य प्रसिद्धये दोषपरिहारदार्ढ्यसंपत्तये क्षमापयन्निव क्षमार्पणं कुर्वन्नभियोगकर्तेव चिदाभासो मिथ्याभूतं साक्षिण्यारोपितदोषपरिहारार्थमात्मानं साक्षिणं शरणं गतः तदेकाश्रयोऽभूत्। नित्यशुद्धबुद्धस्वरूपे आत्मनि जगत आत्मनश्चाध्यासरूपाभियोगेनानादिरिह दुःखमयः संसारः प्रवृत्त इत्यवगत्य तदध्यासोपरमं विनात्मनो नित्यसुखरूपता न सिध्यति। साक्षिणं शरणतया शुद्धात्मानुसन्दधौ। तादृशसन्धानमेव प्रायश्चित्तफलकक्षमार्पणमित्युत्प्रेक्षते ॥ २३६ ॥

ध्यानरूपानुचिन्तनमेव सर्वथाध्यासारोपानिवारकमिति लौकिकदोषापहारकप्रायश्चित्तदृष्टान्तेन विशदयति, आवृत्तेति।

आवृत्तपापनुत्यर्थं स्नानाद्यावर्त्यते यथा।
आवर्तयन्निव ध्यानं सदा साक्षिपरायणः ॥ २३७ ॥

आवृत्तपापनुत्त्यर्थं असकृत्कृतपापापनोदनाय यथा स्नानादि प्रायश्चित्तकर्माण्यावर्त्यन्ते तथा संसारित्वारोपणाद्यनादिदोषस्यात्यन्तिकपरिहाराय ध्यानमावर्तयन्निव अविच्छेदेन कुर्वन्निव सदा साक्षिपरायणः साक्षी एव परं उत्तमं अयनं आश्रयो यस्य तथाविधो भवति। नैवं कल्पना चिदाभाससाक्षिणोर्भेदप्रदर्शनप्रयोजिका, किंतु मन्दबुद्ध्यारोहणमात्रविषयिकेति ग्राह्या ॥ २३७ ॥

ज्ञानानन्तरं चिदाभासः स्वधर्मप्रख्यापने विलज्जित इत्यर्थं दृष्टान्तेन विवृणोति, उपस्थेति।

उपस्थकुष्ठिनी वेश्या विलासेषु विलज्जते।
जानतोऽग्रे तथाभासः स्वप्रख्यातौ विलज्जते ॥ २३८ ॥

स्पष्टं पूर्वार्धम्। वेशाय प्रवेशाय योग्या वेश्या। तथा आभासः जानत ऽग्रे स्वप्रख्यातौ स्वस्याहंकर्ता अहं भोक्तेत्याकारकस्वधर्माणां प्रख्यातौ

प्रकटने विलज्जते ॥ २३८ ॥

शरीरत्रयविवेकज्ञानसंयुतस्य चिदाभासस्य न पुनस्तैस्सह तादात्म्यभ्रान्तिरिति दृष्टान्तपूर्वकमाह, गृहीत इति ।

गृहीतो ब्राह्मणो म्लेच्छैः प्रायश्चित्तं चरन् पुनः ।
म्लेच्छैः संकीर्यते नैव तथाभासः शरीरकैः ॥ २३९ ॥

म्लेच्छैः "गोमांसखादको यस्तु विरुद्धं बहु भाषते । सर्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते" इति बोधायनः । तथाभासः शरीरकैः कुत्सितार्थे कप्रत्ययः, त्रिभिः शरीरैः तादात्म्याध्यासं न करोतीत्यर्थः । स्पष्टमन्यत् । शरीरकैरिति कुत्सितार्थकेन तेषां सर्वथा हेयत्वं सूचितम् ॥ २३९ ॥

साक्षिणोऽनुध्यानस्य नित्यसुखसंपादकतां दृष्टान्तमुखेन दर्शयति, यौवराज्येति ।

यौवराज्ये स्थितो राजपुत्रः साम्राज्यवाञ्छया ।
राजानुकारी भवति तथा साक्ष्यनुकार्ययम् ॥ २४० ॥

यौवराज्ये युवैव राजा राजपुत्रः तस्य भावो यौवराज्यं तस्मिन् स्थितो राजपुत्रः साम्राज्यवाञ्छया राजानुकारी भवति । तथाऽयं चिदाभासः साक्ष्यनुकारी तमनुकरोति । युवराजकृतराजानुकारो यावत् साम्राज्यसंपादकत्वेन यथा दुःखजनको न भवति, एवं साक्षिणि चिदाभासाध्यासो यावदात्मरूपताप्राप्तिदुःखाजनकत्वेन हेयो न भवति । वस्तुतोऽयमप्यध्यासो हेय एव । अध्यासमात्रस्य मिथ्यात्ववदिति भावः ॥ २४० ॥

राजानुकारिणो राजपुत्रस्य साम्राज्यप्राप्तिरूपं फलं लोकेऽवगम्यते, चिदाभासस्य साक्ष्यनुकरणफलं तु तद्रूपेणावस्थानमिति केनावगम्यत इत्याशंक्य तद्बोधकश्रुतिमुदाहरति, य इति ।

यो ब्रह्म वेद ब्रह्मैव भवत्येष इति श्रुतिम् ।
श्रुत्वा तदेकचित्तः सन् ब्रह्म वेत्ति न चेतरत् ॥ २४१ ॥

स्पष्टा पदयोजना । ब्रह्म वेद ब्रह्मैव भवती (मुं. ३. २. ९.) ति श्रुतिः ।

परे ब्रह्मणि प्रणहितमना भूत्वा ब्रह्म वेति। नेतरत्। एवं तदेकचित्ततया साक्षिणमनुसृत्य स एव भवतीति भावः ॥ २४१ ॥

एवं ब्रह्मभवनेन चिदाभासत्वहानिः प्राप्ता। कथं स्वनाशाय तत्प्रवृत्ति-रित्याशंक्याधिकफलप्राप्तौ स्वनाशाय प्रवर्तन्ते इत्यत्र दृष्टान्तमाह, देवत्वेति।

देवत्वकामा ह्यग्न्यादौ प्रविशन्ति यथा तथा।
साक्षित्वेनावशेषाय स्वविनाशं स वाञ्छति ॥ २४२ ॥

स्पष्टा पदयोजना। अग्न्यादौ, आदिशब्देन भृगुजलसंपातमहाप्रस्थानानि गृह्यन्ते। कुमारिलभट्टस्याग्निप्रवेशः पांडवानां महाप्रस्थानगमनं च सुविदिते एव। तथैव साक्षित्वेनावशेषाय स्वविनाशं चिदाभासे वाञ्छति ॥ २४२ ॥

ननु ब्रह्मभावापत्त्या चिदाभासत्वेऽपगतेऽपि कथं ज्ञानिनामपि जीवत्व-व्यवहारो दृश्यत इत्याशंक्याह, यावदिति।

यावत्स्वदेहदाहं स नरत्वं नैव मुञ्चति।
यावदारब्धदेहं स्यान्नाभासत्वविमोचनं ॥ २४३ ॥

सोऽग्निप्रविष्टो जनः। तस्य स्वदेहदाहावधि नरत्वव्यवहारः। तथैव शिष्ट-कर्मबलेनारब्धदेहपातावधि चिदाभासत्वव्यवहार इति भावः। सुगमा पदयो-जना ॥ २४३ ॥

नन्वाज्ञाननिवृत्तौ तत्कृतभ्रान्तिमूलकभोक्तृत्वादीनामपि निवृत्तिरित्युक्तं। किंतु न तथा दृश्यते। ज्ञानिष्वप्यहं कर्ता अहं भोक्तेत्यादिव्यवहारस्य प्रतीय-मानत्वादित्याशंक्य समाधातुं रज्जुसर्पदृष्टान्तं विवृणोति, रज्ज्विति।

रज्जुज्ञानेऽपि कम्पादिः शनैरेवोपशाम्यति।
पुनर्मन्दान्धकारे सा रज्जुः क्षिप्तोरगी भवेत् ॥ २४४ ॥

रज्जुज्ञाने सर्पभ्रमापगमेऽपि सर्पभ्रान्तिकृतः कंपादिः कंपस्वेदादिः [शनै]रेवोपशाम्यति। न तु भ्रमनाशोत्तरक्षणे। तस्मिन् कंपादौ विद्यमाने सति मन्दान्धकारे मन्दो नातितीव्रो योऽन्धकारस्तस्मिन् सा रज्जुः क्षिप्ता पुनरुरगी

भवेत् उरग इवाचरति । उरग इव प्रतीयते । भ्रान्तिकार्ये कंपादौ विद्यमाने सति पुनः सर्पप्रतीतिर्भवतीति भावः ॥ २४४ ॥

एवमेवावाप्तब्रह्मज्ञानानन्तरमपि प्रारब्धानुभवसमये विपरीतज्ञानं कदाचित् ज्ञायत इत्याह, एवमिति ।

**एवमारब्धभोगोऽपि शनैः शाम्यति नो हठात् ।**
**भोगकाले कदाचित्तु मर्त्योऽहमिति भासते ॥ २४५ ॥**

स्पष्टोऽर्थः । अहं ब्रह्मास्मीति ज्ञानस्य दार्ढ्याभाव एव तथा भासने कारणमित्यर्थः ॥ २४५ ॥

नन्वेवं कादाचित्कानुभूतेन मर्त्योऽहमित्यज्ञानेन तत्त्वज्ञानं बाध्येतेत्याशंकां परिहरति, नेति ।

**नैतावतापराधेन तत्त्वज्ञानं विनश्यति ।**
**जीवन्मुक्तिव्रतं नेदं किंतु वस्तुस्थितिः खलु ॥ २४६ ॥**

एतावतापराधेन कादाचित्कानुभवरूपेण "ब्रह्माऽहमस्मी" ति तत्त्वज्ञानं न विनश्यति । इदं भ्रान्तिनिराकरणं तु जीवन्मुक्तिव्रतं न जीवन्मुक्तिनियमो न किंतु सम्यक्ज्ञानेन भ्रान्तिज्ञाननिवृत्तिर्वस्तुस्थितिः खलु । वस्तुस्वभाव इत्यर्थः । व्रते नियमेनानुष्ठेयं आचरणकलापं, तद्भंगे व्रतभंगश्च । न तथा मर्त्यत्वबुद्ध्यात्मकभ्रान्तिविषये । सम्यग्ज्ञानेन भ्रान्तिनिवृत्तिः । ज्ञानस्य दार्ढ्याभावे मर्त्यत्वबुद्ध्युदयः पुनरात्मनो विवेचनेन तद्बुद्धेर्नाश इति यथार्थविषयः, "श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि यं न विद्युः" (कठ. १. २. ७.) रित्यात्मज्ञानस्य दुर्विज्ञेयत्वात्तस्यासकृदभ्यासे नो हानिरिति भावः ॥ २४६ ॥

रज्जुसर्पादिस्थले भ्रमज्ञानस्य निवृत्युनन्तरमपि तत्कार्यं किंचित्काल मनुवर्तत इत्याह, दशमोऽपीति ।

**दशमोऽपि शिरस्ताडं रुदन् बुद्ध्वा न रोदिति ।**
**शिरोव्रणस्तु मासेन शनैश्शाम्यति नो तदा ॥ २४७ ॥**

स्पष्टा पदयोजना । दशमो नद्यां क्षालितः इति भ्रमज्ञानेन रुदत आप्त-वाक्येन अहमेव दशम इति ज्ञाने सति भ्रमनिवृत्तिरेव न तु तन्निमित्तकशिरस्ताडन-पीडा ॥ २४७ ॥

ज्ञानोत्पत्तेरनन्तरमपि भ्रान्तिकार्यस्य कादाचित्कानुभवं दशमोऽहमिति स्थले विवृणोति, दशमेति ।

दशमामृतिलाभेन जातो हर्षो व्रणव्यथाम् ।
तिरोधत्ते मुक्तिलाभस्तथा प्रारब्धदुःखिताम् ॥ २४८ ॥

दशमामृतिलाभेन दशमो न मृत इति ज्ञानेन जातो हर्षो व्रणव्यथां पूर्वं मरणज्ञानकाले जातेन दुःखेन कृतशिरस्ताडनादिसंजनितव्रणव्यथां यथा तिरोधत्ते अनुभवागोचरतां नयति तथा मुक्तिलाभो ब्रह्माहमस्मीति ज्ञानलाभः प्रारब्धदुःखितां तिरोधत्ते । जीवन्मुक्तिकाले सत्यपि दुःखे तस्य तिरोभावान्न ज्ञान्यनुभवगोचरतेति भावः ॥ २४८ ॥

तत्त्वज्ञानेन भ्रान्तिनिवृत्तिरिति वस्तुस्थितिर्नैतु नियम इत्युक्तम् । तथा सति कदाचिदध्यासः प्रसज्येत । तस्मिंश्च सति दुःखानुभवो दुर्निवार एव स्यादित्याशंक्याह, व्रतेति ।

व्रताभावाद्यथाऽध्यासस्तथा भूयो विविच्यताम् ।
रससेवी दिने भुङ्क्ते भूयो भूयो यथा तथा ॥ २४९ ॥

सुलभा पदयोजना । ब्रह्माहमस्मीतिज्ञानस्य दार्ढ्याभावात् अहं सुखी अहं दुःखीत्याकारकभ्रान्तेरुदये तदपाकरणाय दृढज्ञानोदयावधि देहेन्द्रियादीनात्मनो विविच्यतामित्यर्थः ॥ २४९ ॥

अनिवार्यस्यारब्धस्यानुभव एव प्रतीकार इति दशमदृष्टान्तपूर्वकमाह, शमयतीति ।

शमयत्यौषधेनायं दशमः स्वं व्रणं यथा ।
भोगेन शमयित्वैतत्प्रारब्धं मुच्यते तथा ॥ २५० ॥

स्पष्टोऽर्थः । उपायान्तरेणानिवार्यस्य प्रारब्धस्योपभोगमात्रेण जीवन्मुक्तित्वं न बाध्यत इत्यर्थः ।। २५० ॥

तृप्तिस्वरूपविचारः ।

त्रयस्त्रिंशश्लोकोक्तासु सप्तावस्थास्वेवं षष्ठीमवस्थां निरूप्य सप्तमीनिरूपणं प्रतिजानीते, किमिति ।

**किमिच्छन्नितिवाक्योक्तः शोकमोक्ष उदीरितः ।**
**आभासस्य ह्यवस्थैषा षष्ठी तृप्तिस्तु सप्तमी ॥ २५१ ॥**

एतावत्पर्यन्तं प्रचलितेन शास्त्रार्थेन "किमिच्छन्निति" वाक्योक्तिः तद्वाक्यतात्पर्यभूतः शोकमोक्षः शोकस्य नाश उदीरितः । एषा शोकमोक्षावस्था त्रयस्त्रिंशश्लोकोक्तासु षष्ठी । सप्तमी चावस्था तृप्तिः ॥ २५१ ॥

ब्रह्मज्ञानजन्यायास्तृप्तेर्विषयतृप्तेर्वैलक्षण्यं दर्शयति, सेति ।

**सांकुशा विषयैस्तृप्तिरियं तृप्तिर्निरंकुशा ।**
**कृतं कृत्यं प्रापणीयं प्राप्तमित्येव तृप्यति ॥ २५२ ॥**

शब्दादिभिर्विषयैर्जायमाना या तृप्तिः सा सांकुशा परिमितत्वेनाधिकतृप्तिफलकविषयकामनया नश्वरत्वेन च प्रतिबद्धा । इयं ब्रह्मज्ञानजन्या तृप्तिर्निरंकुशा अप्रतिबद्धा ततोऽपि प्रियतरवस्त्वभावात्, अनश्वरत्वाच्च । तत्स्वरूपमाह, कृतमिति। यन्मयाकृत्यं कर्तव्यं तत्सर्वं कृतम्, अतः कृतकृत्योऽस्मि । यन्मया प्रापणीयमप्रतिबद्धनिरतिशयानन्दरूपं तन्मया शोकमोक्षणे प्राप्तम्, प्रापणीयं न किंचिदप्यवशिष्यत इति ब्रह्मज्ञानी तृप्यति ॥ २५२ ॥

कृतकृत्यतां विवृणोति, ऐहिकेति ।

**ऐहिकामुष्मिकव्रातसिद्ध्यै मुक्तेश्च सिद्धये ।**
**बहु कृत्यं पुराऽस्याभूत्तत्सर्वमधुना कृतम् ॥ २५३ ॥**

अस्य ज्ञानिनः पुरा प्राक् ज्ञानोत्पत्तेरैहिकामुष्मिकव्रातसिद्धये ऐहिकं दारादिलभ्यं सुखं, आमुष्मिकं अमुत्र भवं स्वर्गादिसुखं, यजनोपासनादिलभ्यं

तयोर्व्रातः समूहः तस्य सिद्ध्यै मुक्तेश्च सिद्धये श्रवणादिकं च कृत्यं कर्तव्यं बहुप्रकारकमभूत् अधुना तु तत्त्वज्ञानसमये संसारसुखेच्छालोपे ब्रह्मज्ञानसिद्धेश्च तत्सर्वं कृतं कृतप्रायमेवासीत्। ब्रह्मज्ञानानन्तरमनुष्ठेयं न किंचिद्विशिष्यत इति तात्पर्यम् ॥ २५३ ॥

एवमवाप्तायाः कृतकृत्यतायाः फलमाह, तदिति।

तदेतत्कृतकृत्यत्वं प्रतियोगिपुरस्सरम्।
अनुसन्दधदेवायमेवं तृप्यति नित्यशः ॥ २५४ ॥

अयं विद्वान् प्रतियोगिपुरस्सरं निर्वर्त्यस्यानुसन्धानपूर्वकं तदेतत्कृतकृत्यत्वमनुसन्दधन्नित्यश एवं वक्ष्यमाणरीत्या तृप्यति ॥ २५४ ॥

अनुसन्धानप्रकारं प्रपञ्चयति, दुःखिन इति।

दुःखिनोऽज्ञाः संसरन्तु कामं पुत्राद्यपेक्षया।
परमानन्दपूर्णोऽहं संसरामि किमिच्छया ॥ २५५ ॥

अज्ञा अत एव दुःखिनः पुत्राद्यपेक्षया काममत्यन्तं संसारे संसरन्तु। परमानन्दपूर्णः कृतकृत्यतया प्राप्तप्राप्तव्यतया च निरतिशयानन्दसंपूर्णोऽहं किमिच्छया संसरामि संसारे प्रवर्तिष्ये। पुत्राद्यपेक्षाभावान्न मे संसारेच्छेत्यर्थः। अत्र पुत्राद्यपेक्षाभावोक्तेर्गौणात्मदृष्टिर्ज्ञानिनो निरस्यते ॥ २५५ ॥

ज्ञानिनः प्रवृत्तेः सर्वनियमाभावविचारः।

तस्य यागोपासनादिकर्माचरणाभावोऽपीत्याह, अन्विति।

अनुतिष्ठन्तु कर्माणि परलोकयियासवः।
सर्वलोकात्मकः कस्मादनुतिष्ठामि किं कथं ॥ २५६ ॥

परलोकयियासवः स्वर्गलोकादिजिगमिषवो यागादिकर्माण्यनुतिष्ठन्तु। अहं तु सर्वलोकात्मकः सर्वलोकस्वरूपः। कस्माद्धेतोः मदतिरिक्तस्येप्स्यमाणस्य वस्तुनोऽभावेन तत्र प्रवृत्तेः कारणाभावात् कथं केन साधनेन किमनुतिष्ठामि? उपमर्दितसर्वद्वैतज्ञानत्वात्कर्तृक्रियाकारकफलभेदाभावादित्यर्थः। अनेन जीवे आत्म-

दृष्टिरपसारिता ॥ २५६ ॥

स्वार्थप्रवृत्त्यभावेऽपि परार्थप्रवृत्तिः स्यादित्याशंक्याह, व्याचक्षतामिति।

व्याचक्षतां ते शास्त्राणि वेदानध्यापयन्तु वा ।
येऽत्राधिकारिणो मे तु नाधिकारोऽक्रियत्वतः ॥ २५७ ॥

येऽत्राधिकारिणो यान् गृहस्थानधिकृत्य कर्मकाण्डः प्रवर्तते तत्र तेऽधिकारिणः, इह परलोके चासक्ताः शास्त्राणि व्याचक्षतां व्याख्यायन्ताम्, वेदानध्यापयन्तु वा परेषां प्रयोजनाय। याजनाध्यापनादिविहितकृत्यं कुर्वन्तु। मे तु तत्राक्रियत्वतः फलाभियुक्तक्रियारहितत्वात् नाधिकारः। विदलितद्वैतभावस्य विदुषो मिथ्याभूतेन तेन शास्त्रेण न किमपि प्रयोजनमिति भावः ॥२५७॥

नन्वक्रियत्वमसिद्धम्, आहारादिक्रियादर्शनादित्यत आह, निद्रेति।

निद्राभिक्षे स्नानशौचे नेच्छामि न करोमि च ।
द्रष्टारश्चेत्कल्पयन्ति किं मे स्यादन्यकल्पनात् ॥ २५८ ॥

निजपोषणार्थके निद्राभिक्षे, बाह्यशुद्धिप्रयोजनके स्नानशौचे नेच्छामि न करोमि, तस्य पोषितव्यस्य देहादेरभावात्। तत्सर्वं कुर्वन् दृश्यत इत्याशंक्याह, द्रष्टार इति। वस्तुतो नाहं करोमि। किंतु द्रष्टार इतरे जना मयि तत्सर्वं कल्पयन्ति चेदन्यकल्पनान्मेऽवाप्तब्रह्मभावस्य किं स्यात्? न कापि क्षतिरित्यर्थः। "न पुण्यं न पापं न सौख्यं न दुःखं न मंत्रं न तीर्थं न वेदा न यज्ञाः। अहं भोजनं नैव भोज्यं न भोक्ता चिदानन्दरूपः शिवोऽहं शिवोऽहं" इत्यभियुक्तोक्तेः। परदृष्ट्या लोकव्यवहारोऽस्तु नाम। स्वदृष्ट्या नास्त्येवेति तात्पर्यम् ॥ २५८ ॥

अन्यकल्पनायां बाधाभावे दृष्टान्तमाह, गुञ्जेति।

गुञ्जापुञ्जादि दह्येत नान्यारोपितवह्निना ।
नान्यारोपितसंसारधर्मानेवमहं भजे ॥ २५९ ॥

स्पष्टोऽर्थः ॥ २५९ ॥

ननु तवापि श्रवणमननादेरावश्यकतैव स्यादित्याशंक्याज्ञानिविषयं तत्प्रतिपादकं वाक्यमिति समाधत्ते, शृण्वति ।

**शृण्वन्त्वज्ञाततत्त्वास्ते जानन् कस्माच्छृणोम्यहम् ।**
**मन्यन्तां संशयापन्ना न मन्येऽहमसंशयः ॥ २६० ॥**

ते अज्ञाततत्त्वाः असाक्षात्कृतब्रह्मभावा गुरुभ्यः शास्त्राणि शृण्वन्तु । अहं तु जानन् ब्रह्मभावमापन्नः सन् कस्माद्धेतोः शृणोमि । तथैव तत्त्वविषये ये संशयमापन्नास्ते श्रुतार्थं मन्यन्तां संशयोच्छेदनायेत्यर्थः । संशयोऽहं न मन्ये । "श्रोतव्यो मन्तव्यो निदिध्यासितव्य" (बृ. ४. ५. ६.) इति वाक्यं जिज्ञासुपरं न तु ज्ञानिपरमिति भावः ॥ २६० ॥

तथैव ज्ञानिनो निधिध्यासावश्यकताऽपि नास्तीत्याह, विपर्यस्त इति ।

**विपर्यस्तो निधिध्यासेत्किं ध्यानमविपर्ययात् ।**
**देहात्मत्वविपर्यासं न कदाचिद्भजाम्यहम् ॥ २६१ ॥**

आत्मज्ञानस्य दार्ढ्याभावाद्विपर्यस्तः आत्मन्यतत्ज्ञानरूपो विपर्यासः तद्वान् निदिध्यासेत् पौनःपुन्येनैकाग्र्येण सम्यक्ज्ञानावाप्तिपर्यन्तं चिन्तयेत् । मे ध्यानं किमर्थम् ? कुतोऽयं प्रश्न इत्यत आह, अविपर्ययादिति । आत्मज्ञानस्य अविपर्ययात् । कदाचिदप्यहं देहात्मत्वविपर्यासं देह एवात्मेति विपरीतज्ञानं न भजामि ॥ २६१ ॥

ननु विपर्ययाभावेऽहं मनुष्य इत्यादिव्यवहारः कथं घटत इत्याशंक्य चिरकालवासनावशाद्घटत इत्याह, अहमिति ।

**अहं मनुष्य इत्यादिव्यवहारो विनाऽप्यमुम् ।**
**विपर्यासं चिराभ्यस्तवासनातोऽवकल्पते ॥ २६२ ॥**

स्पष्टोऽर्थः ॥ २६२ ॥

तस्य व्यवहारस्यावधिमाह, प्रारब्धेति ।

**प्रारब्धकर्मणि क्षीणे व्यवहारो निवर्तते ।**

कर्मक्षये त्वसौ नैव शाम्येद्ध्यानसहस्रतः ॥ २६३ ॥

देहस्य प्रारब्धनिमित्तत्वात्तस्मिन् प्रारब्धकर्मणि क्षीणे सत्यहं मनुष्य इति व्यवहारो निवर्तते। कर्माक्षये तु प्रारब्धस्याक्षये त्वसा व्यवहारो ध्यानसहस्रतोऽसंख्येयध्यानेभ्यो न शाम्येदेव। जीवन्मुक्तस्याप्यवश्यमुपभोगेनैव प्रारब्धस्य नाशादिति भावः ॥ २६३ ॥

ननु प्रारब्धकृतव्यवहारस्य वैकल्याय ध्यानमवश्यकर्तव्यमेवेत्याशंक्याह, विरलत्वमिति।

विरलत्वं व्यवहृतेरिष्टं चेद्ध्यानमस्तुते।
अबाधिकां व्यवहृतिं पश्यन् ध्यायाम्यहं कुतः ॥ २६४ ॥

अहं मनुष्य इति व्यवहृतेः व्यवहारस्य विरलत्वं कादाचित्कत्वमिष्टं चेत्ते ध्यानमस्तु। अहं तु व्यवहृतिमबाधिकां असन्तापकारिणीं पश्यन् कुतो ध्यायामि। सम्यक् ज्ञानवतो मे व्यवहारस्याबाधकत्वाद्ध्यानमनावश्यकमिति भावः ॥ २६४ ॥

विक्षेपनिवारणाय ज्ञानिनोऽपि समाधिरावश्यकीत्यत आह, विक्षेप इति।

विक्षेपो नास्ति यस्मान्मे न समाधिस्ततो मम।
विक्षेपो वा समाधिर्वा मनसः स्याद्विकारिणः ॥ २६५ ॥

सुलभा पदयोजना। विक्षेपस्तत्प्रतीकारः समाधिश्च विकारशीलस्य मनसो धर्मः। तदभावान्न ज्ञानिनः समाध्यपेक्षेति भावः ॥ २६५ ॥

ननु समाध्यभावे तत्फलीभूतात्मानुभवः कथं सिध्यतीत्याशंक्याह, नित्येति।

नित्यानुभवरूपस्य को वा मेऽनुभवः पृथक्।
कृतं कृत्यं प्रापणीयं प्राप्तमित्येव निश्चयः ॥ २६६ ॥

स्वस्वरूपस्य नित्यानुभवरूपस्य ब्रह्मसाक्षात्कारादित्यर्थः। मे पृथक् समाधिफलरूपः प्रत्येकानुभवः कः? उत्तरार्धस्तु व्याख्यातपूर्वः ॥ २६६ ॥

स्वस्य सर्वव्यवहारेषु कर्तृत्वनिरासे व्यवहारनियमो न स्यादित्याशंक्या-

नियममङ्गीकरोति, व्यवहार इति ।

व्यवहारो लौकिको वा शास्त्रीयो वान्यथापि वा ।
ममाकर्तुरलेपस्य यथारब्धं प्रवर्तताम् ॥ २६७ ॥

अकर्तुरहं कर्तेत्यभिमानविधुरस्य अलेपस्य क्रियाफलेष्वपेतभोक्तृत्वाद्यभिमानस्य मम लौकिको निद्राहारादिः शास्त्रीयो जपादिः अन्यथा प्रतिषिद्धरूपो वा व्यवहारः प्रवृत्तिनिवृत्तिरूपः यथारब्ध प्रारब्धानुसारं प्रवर्तताम् ॥ २६७ ॥

निस्त्रैगुण्ये पथि विचरतो विधिनिषेधाभावेऽपि लोकानुग्रहकांक्षया शास्त्रीया प्रवृत्तिः स्यादित्याह, अथेति ।

अथवा कृतकृत्योऽपि लोकानुग्रहकाम्यया ।
शास्त्रीयेणैव मार्गेण वर्तेऽहं मम का क्षतिः ॥ २६८ ॥

लोकानुग्रहकांक्षया प्राणिलोकस्य सन्मार्गप्रवर्तनोपदेशकाम्यया । स्पष्टमन्यत् । "महाजनो येन गतः स पंथाः" इत्युक्तत्वात् महतामाचारस्यानुकरणीयत्वेन लोके शिष्टाचारप्रवर्तकतया ज्ञानिनां शास्त्रचोदितप्रचार इति भावः ॥ २६८ ॥

लोकानुग्रहहेतोः शास्त्रीयाचारमाचरन्नपि ज्ञानी न तेन लिप्यत इति द्वाभ्यामाह, देवेति ।

देवार्चनस्नानशौचभिक्षादौ वर्ततां वपुः ।
तारं जपतु वाक्तद्वत्पठत्वाम्नायमस्तकम् ॥ २६९ ॥

विष्णुं ध्यायतु धीर्यद्वा ब्रह्मानन्दे विलीयताम् ।
साक्ष्यहं किंचिदप्यत्र न कुर्वे नापि कारये ॥ २७० ॥

देवार्चनस्ना शौचभिक्षादौ देवानां हरिहरादीनां पञ्चायतनस्य वा अर्चनं सालग्रामादिप्रतीकेषु पूजनं स्नानं शौचं भिक्षा चेत्यादिषु वपुरेव वर्तताम् । तद्वत् वाक् तारं प्रणवं जप , यद्वा आम्नायमस्तकं अध्ययनविधिना पठितस्य धारणार्थं पुनः पुनरभ्यासः आम्नायं, तद्विषयः आम्नायो वेदः तस्य मस्तकं शिर इव मुख्यत्वाच्छिरःस्थानमापन्नमुपनिषदं पठतु, धीर्विष्णुं ध्यायतु । अथवा ब्रह्मानन्दे

विलीयताम्, लयं गच्छतु। अतैवंरूपप्रवृत्तावहं साक्षी किंचिदपि न कुर्वे नाऽपि करये। नाहं कर्ता न चाहं कारयितेति भावः ॥ २६९, २७० ॥

एवं च ज्ञानकाण्डाश्रयिणो मम कर्मकाण्डाश्रयिणोऽन्यस्य च विभिन्न-विषयत्वेन न विवाद इत्याह, एवमिति।

एवं च कलहः कुत्र संभवेत्कर्मिणो मम।
विभिन्नविषयत्वेन पूर्वापरसमुद्रवत् ॥ २७१ ॥

एवं सति कृतकृत्यतामाप्नुवतो मम ज्ञानिनोऽभ्युदयेच्छाचोदितस्य कर्मिणः कर्मप्रधानस्य च पूर्वापरसमुद्रवत् विभिन्नविषयत्वेन कलहो विवादः कुत्र? नेत्यर्थः। उपमाने विभिन्नविषयत्वं विभिन्नदेशाश्रितत्वम्। उपमेये भिन्नप्रस्थानाश्रितत्वमिति बोध्यम्। निर्धूताखिलद्वैतभावनिःश्रेयसावाप्तिफलकः सिद्धवस्तुसाक्षात्कारबोधको ज्ञानकाण्डः। कर्तृत्वादिकारकफलभेदसंकुलो द्वैतभावभूयिष्ठोऽभ्युदयावाप्तिफलकः कर्मकाण्ड इति स्वरूपतः फलतश्चात्यन्तविभिन्नार्थकप्रस्थानाश्रयिणोरावयोर्न विवादावकाश इति तात्पर्यम् ॥ २७१ ॥

विभिन्नविषयत्वं विशदयति, वपुरिति।

वपुर्वाग्धीषु निर्बन्धः कर्मिणो न तु साक्षिणि।
ज्ञानिनः साक्ष्यलेपत्वे निर्बन्धो नेतरत्र हि ॥ २७२ ॥

स्पष्टं पूर्वार्धम्। निर्बन्धः विधिनिषेधरूपः। साक्ष्यलेपत्वे साक्षिणोऽलेपत्वेऽसंगत्वमात्रे एव ज्ञानिनो निर्बन्धः। इतरत्र वपुरादिषु न निर्बन्धः॥२७२॥

एवं सति कर्मज्ञानिनोर्विवादो हास्यास्पद एवेत्याह, एवमिति।

एवं चान्योन्यवृत्तान्तानभिज्ञौ बधिराविव।
विवदेतां बुद्धिमन्तो हसन्त्येव विलोक्य तौ ॥ २७३ ॥

स्पष्टोऽर्थः ॥ २७३ ॥

विशदयति, यमिति।

यं कर्मी न विजानाति साक्षिणं तस्य तत्ववित् ।
ब्रह्मत्वं बुद्ध्यतां तत्र कर्मिणः किं विहीयते ॥ २७४ ॥

य साक्षिण प्रत्यगात्मानं कर्मी न विजानाति तस्य प्रत्यगात्मनो ब्रह्मत्वं प्रत्यगात्मपरब्रह्मणोरभेदं तत्त्ववित् ज्ञानी बुध्यतां । तत्र तथा सति कर्मिणः किं विहीयते ॥ २७४ ॥

ज्ञानस्य भिन्नविषयत्वान्न तयोर्विवादावकाश इत्याह, देहेति ।

देहवाग्बुद्धयस्त्यक्ता ज्ञानिनाऽनृतबुद्धितः ।
कर्मी प्रवर्तयत्वाभिर्ज्ञानिनो हीयतेऽत्र किम् ॥ २७५ ॥

स्पष्टा पदयोजना । मिथ्यात्वबुद्ध्या यद्देहादि त्यज्यते ज्ञानिना तेन कर्मी कर्मसु प्रवर्तेत इति न ज्ञानिनो हानिरिति भाव; ॥ २७५ ॥

अस्मदभिमता प्रवृत्तिः फलवत्त्वात्प्रयोजनाभावधिया ज्ञानिनोऽनङ्गीकारोऽयुक्त इति कलहायते कर्मीति कलहहेतुरस्तीति कुतः परिहास इति शंकते, प्रवृत्तिरिति ।

प्रवृत्तिर्नोपयुक्ता चेन्निवृत्तिः क्वोपयुज्यते ।
बोधहेतुर्निवृत्तिश्चेद्बुभुत्सायां तथेतरा ॥ २७६ ॥

ज्ञानिनः प्रवृत्तिः कर्मनिष्ठा नोपयुक्ता प्रयोजनकारिणी न भवतीत्युच्यते चेन्निवृत्तेरपि निष्फलत्वस्य ज्ञानिनाङ्गीकृतत्वात् तद्वत्प्रवृत्तिरप्यङ्गीक्रियतामिति प्रतिबंद्या समाधत्ते, निवृत्तिः क्वोपयुज्यते ? तस्या अपि फलाभावात् । तदङ्गीकारवत् प्रवृत्तिरप्यङ्गीकार्येति तात्पर्यम् । निवृत्तेर्निष्फलत्वमसिद्धमिति तदङ्गीकारः युक्त एवेति शंकते, निवृत्तिर्बोधहेतुः बोधरूपं फलं निवृत्तेरिति निवृत्तिरङ्गीक्रियत इति शंकितुराशयः । तादृशं फलं प्रवृत्तेरप्यस्तीत्यङ्गीकारबीजमुभयत्र समानमिति परिहरति, तथेतरा प्रवृत्तिर्बुभुत्सायां हेतुः । एवं चोभयोरपि सफलत्वादुभे अप्यङ्गीकार्ये । एवं च न तत्र कलहो युक्तः ॥ २७६ ॥

फलतदभावौ न बुभुत्स्वपेक्षयोच्येते । अपि तु बुद्धापक्षयेत्याशंकते,

बुद्ध इति ।

बुद्धश्चेन्न बुभुत्सेत नाप्यसौ बुध्यते पुनः ।
अबाधादनुवर्तेत बोधो नत्वन्यसाधनम् ॥ २७७ ॥

बुद्धो ज्ञानी न बुभुत्सेत बोद्धुं नेच्छति । बुद्धस्य प्रवृत्तेर्बुभुत्सारूपफलस्याभावात्तत्प्रवृत्तेर्निष्फलत्वम् । निवृत्तिस्तु बोधरूपफलसंपादकतया सफलेति शङ्कतुराशयः बुद्धस्यापि पुनर्बुभुत्साभावात्तत्कारणीभूता निवृत्तिरपि निरर्थिकैवेति शंकते नेति । असौ ज्ञानी पुनर्नबुध्यते बोद्धुं नेच्छति । सकृज्ज्ञातस्य बोधस्य दृढीकरणाय निवृत्तिरावश्यकीत्याशंक्य तत्र बाधकाभावमेवेष्टव्यं नत्वन्यत् साधनमित्याह, अबाधादिति । सकृत्संपादितो बोधोऽबाधात् । "प्रमाणोत्पादिता विद्या प्रबलं प्रमाणं विना न नश्यती"ति हेतोः वेदान्तात्प्रबलप्रमाणात्मकप्रतिबन्धकाभावादनुवर्तेत स्थिरीभवेत् । अनुवृत्तौ अन्यसाधनम् निवृत्तिरूपं नापेक्षितम् ॥२७७॥

अनुवृत्तावितरस्याबाधत्वेऽप्यविद्यया तत्कार्येण च बाधः स्यादित्याशंक्याह, नेति ।

नाविद्या नापि तत्कार्यं बोधं बाधितुमर्हति ।
पुरैव तत्त्वबोधेन बाधिते ते उभे यतः ॥ २७८ ॥

स्पष्टं पूर्वार्धम् । अविद्यातत्कार्ययोः प्रत्येकं बाधकत्वं मिलित्वापि बाधकत्वं नेति बोधयितुं नञो द्विप्रयोगः । तत्र कारणमाह, पुरेति यतस्ते उभेऽविद्यातत्कार्ये पुरा तत्त्वबोधेन बाधिते नष्टे । बाधितो बाधको भवितुं नार्हतीति भावः ॥ २७८ ॥

नन्वविद्यायास्तत्कार्यस्य च बाधे सत्यपि कार्यस्य देहादेः प्रत्यक्षेण प्रतीयमानत्वात्प्रतीतिसिद्धेन कार्येण बोधो बाध्येतेत्याशंकां परिहरति, बाधितमिति ।

बाधितं दृश्यतामक्षैस्तेन बाधो न शक्यते ।
जीवन्नाखुर्न मार्जारं हन्ति हन्यात्कथं मृतः ॥ २७९ ॥

बाधितं उपादानकारणस्य मिथ्यात्वनिश्चियरूपबाधे सति तदुपादानकत्वेन मिथ्यात्वेन निश्चितं जगत् आक्षैरिन्द्रियैः तदुपलक्षितप्रमाणान्तरैश्च दृश्यतां प्रती-

यतां नाम। तेन प्रतीतिमात्रशरीरकेण स्वतोऽसत्येन जगता बोधस्य बाधो न शक्यते। उक्तमर्थं दृष्टान्तेन विशदयति, जीवन्निति। यथा लोके आखुर्मूषकः जीवन् मार्जारं न हन्ति। मृतो मरणानन्तरं तं कथं हन्यात्? स्वसत्ताकालेऽपि मार्जालं हन्तुमसमर्थो मूषकः स्वरूपतो नष्टो भूत्वा कथं तं हन्यात्? तद्वत्प्रकृते जगतस्सत्यत्वेन ज्ञानदशायामपि शुद्धचित्तस्य श्रवणादिना जायमानं बोधं प्रतिहन्तुमक्षमं जगन्मिथ्यात्वेन ज्ञानावस्थायां कथं बोधं बाधितुमीष्टे इति तात्पर्यम् ॥२७९

इदमेवार्थं प्रमाणान्तरेण प्रपञ्चयति, अपीति।

अपि पाशुपतास्त्रेण विद्धश्चेन्न ममार यः।
निष्फलेषुविनुन्नांगो नङ्क्ष्यतीत्यत्र का प्रमा॥ २८०॥

पाशुपतास्त्रेणापि पशुपतिदेवताकेनास्त्रेणामोघेनापि विद्धश्चेदाहतोऽपि यो न ममार स निष्फलेषुविनुन्नाङ्गः न विद्यते फलं पुंखं शल्यं यस्य तेन धाराशून्यकुंठितेनेषुणा विदारितशरीरः नङ्क्ष्यतीति नाशमुपैतीत्यत्रास्मिन् स्थले का प्रमा किं प्रमाणं विश्वासयोग्यमित्यर्थः॥ २८०॥

दृष्टान्तार्थं दार्ष्टान्तिके समन्वेति, आदाविति।

आदावविद्यया चित्रैः स्वकार्यैर्जृम्भमाणया।
युद्ध्वा बोधोऽजयत्सोऽद्य सुदृढो बाध्यतां कथम्॥ २८१॥

आदौ विद्योदयात् प्राक् चित्रैः स्वकार्यैः प्रमातृत्वभोक्तृत्वादिविविधरूपैर्जृम्भमाणया विवर्धमानयाऽविद्यया बोधो युद्ध्वाऽजयत्। स एव बोधोऽद्याभ्यासपाटवेन सुदृढो निस्सपत्नं स्थितो मायाकार्येण देहाद्यध्यासेन कथं बाध्यताम्॥ २८१॥

एतदर्थमेव रूपकेण प्रपञ्चयति, तिष्ठन्त्विति।

तिष्ठन्त्वज्ञानतत्कार्यशवा बोधेन मारिताः।
न भीतिर्बोधसम्राजः कीर्तिः प्रत्युत तस्य तैः॥ २८२॥

बोधेन युद्धे मारिता अज्ञानतत्कार्यशवाः तिष्ठन्तु। अनेनाविद्यायास्तदा

स्वकार्यजननासामर्थ्यं सूचितम् । बोधसम्राजो बोध एव सम्राट् तस्य ततो न भीतिः भयकारणम् । प्रत्युत तैः शत्रैः बोधसम्राजः कीर्तिरेव भवति । यथा लोके शत्रवो युद्धेन स्वाभियोगसामर्थ्यशून्याः कृतास्तादृशानां सत्वेऽपि न राज्ञो भीतिः । प्रत्युत मृताः किंतु जेतुः सर्वथा यशसे एव कल्पयन्ति ॥ २८२ ॥

एवमुक्तरूपकाशयं निर्वहति, य इति ।

**य एवमतिशूरेण बोधेन वियुज्यते ।**
**प्रवृत्त्या वा निवृत्त्या वा देहादिगतयाऽस्य किम् ॥ २८३ ॥**

यो ज्ञान्येवं मायातत्कार्यनिवहानाहवे आहतवताऽतिशूरेण बोधेन न वियुज्यते न पृथग्भवति । तादृशोऽस्य जनस्य देहादिगतया प्रवृत्त्या वा निवृत्त्या वा किं फलम् ? अनवरतावहितबोधैकशूरपरिरक्षिते महासाम्राज्ये पट्टाभिषिक्तस्यास्य ज्ञानिसार्वभौमस्य न कापि प्रवृत्तिनिवृत्त्यादिबहिरन्तःपरिपंथिभीतिरिति भावः ॥२८३

तर्हि ज्ञानिवदज्ञानिनोऽपि प्रवृत्तिरनुपयोगिनी स्यादित्यत आह, प्रवृत्तेति ।

**प्रवृत्तावाग्रहो न्याय्यो बोधहीनस्य सर्वथा ।**
**स्वर्गाय वापवर्गाय यतितव्यं यतो नृभिः ॥ २८४ ॥**

बोधहीनस्य ज्ञानविहीनस्य सर्वथा प्रवृत्तौ कर्मनिष्ठायामाग्रहोऽभिनिवेशो न्याय्यः न्यायादनपेतो भवति । यतो नृभिः कर्मफलभूताय स्वर्गाय ज्ञानफलभूतायापवर्गाय मोक्षाय वा यतितव्यं प्रयत्नः कार्यः । फलकांक्षिभिः सर्वैरपि तत्साधनमवश्यमाश्रयणीयं भवति । अस्तु नाम तस्मिन् फले तारतम्यम् । यद्युत्तमफलसंपादनशक्तिस्तदा तदर्थं प्रयतितव्यम् । यदि तादृशे शक्तिर्न स्यात्ततो निकृष्टफलाय प्रयतितव्यम् । ये तु तदाऽप्रयतमानास्तूष्णीं भवन्ति तदा मनुष्यप्रयोजनासंपादकतया जडप्राया एव भवेयुरिति तात्पर्यम् ॥ २८४ ॥

लोकानुग्रहधियाऽज्ञानिनां शिक्षणाय तन्मध्ये तिष्ठन् ज्ञान्यपि प्रवृत्तिमनुवर्तते स्वस्य तु कृतार्थत्वान्न किमपि कर्तव्यमित्याह, विद्वानिति ।

**विद्वांश्चेत्तादृशां मध्ये तिष्ठेत्तदनुरोधतः ।**

कायेन मनसा वाचा करोत्येवाखिलाः क्रियाः ॥ २८५ ॥

विद्वान् तादृशां स्वर्गादिफलकामनया प्रवर्तमानानां कर्मिणां मध्ये तिष्ठे-च्चेत्तेषामयमेव संतरणोपाय इति ज्ञापनाय अखिलाः शास्त्रमात्रविहिताः क्रियाः स्वस्ववर्णाश्रमाद्युचिताः कायेन मनसा वाचा करोत्येव । तदनुरोधतः तान् कर्मिणोऽनुसृत्य करोतीति लडन्तस्यान्वर्थता । अयमेवार्थः, "लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसी" ति भगवताप्युपदिष्टम् । (गी. ३–२०) ॥ २८५ ॥

बुभुत्सूनां मध्ये वर्तमानस्य तस्य स्थितिमाह, एष इति ।

एष मध्ये बुभुत्सूनां यदा तिष्ठेत्तदा पुनः ।
बोधायैषां क्रियाः सर्वा दूषयंस्त्यजतु स्वयम् ॥ २८६ ॥

एष ज्ञानी बुभुत्सूनां कर्मणा शुद्धचित्ततया संजातबोधेच्छानां मध्ये यदा तिष्ठेत्तदा पुनः एषां बोधाय तत्त्वज्ञानोत्पादनाय सर्वाः क्रियाः आत्यन्तिकफलराहित्येन दूषयन् ताः स्वयं त्यजतु । न तावता कापि हानिरिति भावः ॥ २८६ ॥

बुद्धस्यैवंरूपाचरणे उपपत्तिमाह, अविद्वदिति ।

अविद्वदनुसारेण वृत्तिर्बुद्धस्य युज्यते ।
स्तनंधयानुसारेण वर्तते तत्पिता यतः ॥ २८७ ॥

सुगमा पदयोजना । स्तनं धयति पिबतीति धेट् पाने इति धातोः खशि मुमागमे स्तनंधयः । तुष्यतु दुर्जन इति मूर्खं स्वमार्गानयनायादौ तन्मार्गमेवानुसरत्युपदेशिक इति तात्पर्यम् । "मय्येव सकलं जातमिति तस्य पुत्रादयमुपयन्ति सुहृद" इति श्रुतत्वाज्जीवन्मुक्तस्य जगत्पितृत्वसारकोऽयं दृष्टान्तः ॥ २८७ ॥

अनुसरणप्रकारमाह, अधीति ।

अधिक्षिप्तस्ताडितो वा बालेन स्वपिता तदा ।
न क्लिश्नाति न कुप्येत बालं प्रत्युत लालयेत् ॥ २८८ ॥

स्पष्टोऽर्थः । न क्लिश्नाति न क्लेशमाप्नोति ॥ २८८ ॥

दृष्टान्तार्थं दार्ष्टान्तिके योजयति, निन्दित इति ।

निन्दितः स्तूयमानो वा विद्वानज्ञैर्न निन्दति ।
न स्तौति किंतु तेषां स्याद्यथा बोधस्तथाचरेत् ॥२८९॥

स्पष्टं पूर्वार्धम् । न स्तौति न निन्दति, तस्य निन्दास्तुत्योः समबुद्धित्वात्, किंतु तेषां यथा बोधो ज्ञानोदयः स्यात्तथा तन्मध्ये तिष्ठन् चरेत् ॥ २८९ ॥

अज्ञानिजनप्रबोधैकाभिनिवेशः खलु लोककल्याणहेतोः प्रवृत्तानां तत्त्वविदामाचार इत्याह, येनेति ।

येनायं नटनेनात्र बुध्यते कार्यमेव तत् ।
अज्ञप्रबोधान्नैवान्यत्कार्यमस्त्यत्र तद्विदः ॥ २९० ॥

अयमज्ञान्यत्र विदुषो येन नटनेनाचरणेन बुध्यते तत्त्वमवगच्छति तत् विदुषा कार्यमेव आचरितव्यमेव । अत्र नटनशब्देन विद्वत्क्रियायाः स्वस्मिन्नारोपितत्वं ध्वन्यते । तत्रोपपत्तिमाह, अज्ञेति । तद्विदा ज्ञानिनोऽज्ञप्रबोधनात् ज्ञानोन्मीलनादन्यत्कार्यं नास्त्येव । यथा नटः परेषां रसास्वादजननाय स्वस्मिन्नविद्यमानमपि रत्यादिकं तदभिव्यंजकानि विभावादीन्यभिनयति तद्वदेवायं ज्ञानी परेषां परानन्दास्वादनायाभिनयतीति तात्पर्यम् ॥२९०॥

जीवन्मुक्तस्य निरतिशयानन्दवर्णनम् ।

प्रारीप्सितप्रकरणमुपसंहरन् तद्विषयभूताया जीवन्मुक्तस्यान्तस्तृप्तेः प्रकारं दर्शयति, कृतेति ।

कृतकृत्यतया तृप्तः प्राप्तप्राप्यतया पुनः ।
तृप्यन्नेवं स्वमनसा मन्यतेऽसौ निरन्तरम् ॥ २९१ ॥

अज्ञप्रबोधैकफलकप्रवृत्तिनटननिपुणोऽसौ विद्वान् कृतकृत्यतया तृप्तः पुनः प्राप्तप्राप्यतया च तृप्यन् स्वमनसा निरन्तरं एवं वक्ष्यमाणप्रकारेण मन्यते॥२९१॥

मननप्रकारं चतुर्भिराह, धन्य इति ।

धन्योऽहं धन्योऽहं नित्यं स्वात्मानमञ्जसा वेद्मि ।

धन्योऽहं धन्योऽहं ब्रह्मानन्दो विभाति मे स्पष्टम् ॥ २९२ ॥

अहं धन्यः कृतार्थः । आदरातिशयद्योतनाय द्विरुक्तिः । धन्यत्वे कारणमाह, नित्यमिति । नित्यं स्वात्मानं प्रत्यगात्मानमञ्जसा अपरोक्षतया वेद्मि साक्षात्करोमि । यद्वा नित्यं त्रिकालाबाधितं स्वात्मानं स्वश्चासावात्मा च स्वात्मा, स्वशब्देन त्वंपदार्थ उच्यते, आत्मशब्देन "आत्मा वा इदमेक एवाग्र आसी" (ऐ. १. १.१.) दित्युक्ततच्छब्दार्थः परं ब्रह्मोच्यते । स्वात्मेत्युक्तेस्तयोस्सामानाधिकरण्येनाभेदः सूचितः । समानमन्यत् । साक्षात्कारफलमाह, ब्रह्मेति । ब्रह्मानन्दः ब्रह्माभिन्नो य आनन्दः "आनन्दं ब्रह्मणो विद्वा"निति (तै. २-४) श्रुतेः मे स्पष्टं विभाति ॥२९२॥

एवंरूपा तुष्टिर्नकेवलेष्टप्राप्तिनिमित्ता किंत्वनिष्टप्रहाणप्रभवापीत्याह, धन्य इति ।

धन्योऽहं धन्योऽहं दुःखं सांसारिकं न वीक्षेऽद्य ।
धन्योऽहं धन्योऽहं स्वस्याज्ञानं पलायितं क्वापि ॥ २९३ ॥

धन्योऽहं यथा व्याख्यातपूर्वं । सांसारिकं दुःखमद्य विद्यया तस्योपमर्दनेन न वीक्षे । तत्र कारणमाह, स्वस्येति । स्वस्याज्ञानमनाद्यपि क्वाऽपि पलायितं नष्टम् ॥ २९३ ॥

एवंरूपां धन्यतां स्तौति, धन्येति ।

धन्योऽहं धन्योऽहं कर्तव्यं न विद्यते किंचित् ।
धन्योऽहं धन्योऽहं प्राप्तव्यं सर्वमद्य संपन्नम् ॥ २९४ ॥

धन्यतायाः कारणान्तरमाह, कर्तव्येति । कृतकृत्यत्वादितः परं मे कर्तव्यं किंचिदपि न विद्यते । कृतकृत्यत्वादद्य यत् प्राप्तव्यं तत्सर्वं मे संपन्नं पुष्कलतया प्राप्तम् । अतोऽहं धन्य इति भावः ॥ २९४ ॥

किं तत् प्राप्तव्यमद्य सर्वं संपन्नमित्यत, आह, धन्य इति ।

धन्योऽहं धन्योऽहं तृप्तेर्मे कोपमा भवेल्लोके ।
धन्योऽहं धन्योऽहं धन्यो धन्यः पुनः पुनर्धन्यः ॥२९५॥

मे तृप्तेः एवमज्ञानावृत्यपगमपूर्वकं बहुवाराभ्यस्तापरोक्षीकृतशोकमोक्ष-साक्षात्कारजन्या या तृप्तिः तस्याः लोके उपमा साम्यं का भवेत् ?" निरुपमा मे तृप्ति"रिति हर्षोत्पुलकितगात्रस्य निर्भरमानन्दभरं तारस्वरेणाविष्करोति, "धन्योऽह" मिति चतुर्वारमुद्घोषेण। तावताविष्करणेनासंतृप्तिराविष्करणस्य नैरन्तर्यस्फोरणाय च पुनः पुनर्धन्य इत्युक्तिः ॥ २९५॥

एवं फलप्राप्त्या तृप्तिमाविष्कृत्य परंपरया तत्साधनीभूतकर्मणो महोप-कारकत्वमाश्चर्यप्रदर्शनेन स्फोरयति, अहो इति ।

**अहो पुण्यमहो पुण्यं फलितं फलितं दृढम् ।**
**अस्य पुण्यस्य संपत्तेरहो वयमहो वयम् ॥ २९६ ॥**

अहो इत्याश्चर्यद्योतकमव्ययम्। अस्माकं पुण्यमहो निरुपमित्याश्चर्यम्। तत् पुण्यं दृढं शास्त्रीयकर्मणोऽव्यभिचारेण फलजनकमित्यर्थः। फलितं तृप्तिस्वरू-पेण फलवद्बभूव। अस्य पुण्यस्य संपत्तेः संपादनात् वयं साक्षात्कृताद्वैतब्रह्म स्वरूपा अहो आश्चर्यभूताः। ब्रह्मसाक्षात्कारानुकूलकर्मसंपादनमप्याश्चर्यकरमित्यर्थः। अहो वयमित्यादरातिशयाद्द्विरुक्तिः। वयं वयं साक्षात्कृतात्मस्वरूपा अभवमित्यहो आश्चर्यभूताः यद्वा साक्षात्कृतात्मस्वरूपत्वात् वयं वयं निरुपमाः मादृशा नान्ये विद्यन्त इत्यहो। एतेन भवन्तोऽपि परमपुरुषार्थानुकूलतया कर्म संपाद्य वयमिव कृतकृत्या भवन्त्विति कर्मिणामुपदेशः क्रियते ॥ २९६॥

एवं ब्रह्मसाक्षात्कारानुकूलतया शास्त्रादीनामप्यत्यन्तावश्यकतां स्वाश्चर्य-द्योतनेन तत्तदधिकारिणमुपदिशति, अहो इति ।

**अहो शास्त्रमहो शास्त्रमहो गुरुरहो गुरुः ।**
**अहो ज्ञानमहो ज्ञानमहो सुखमहो सुखम् ॥ २९७ ॥**

स्पष्टोऽर्थः। समित्पाणिः सद्गुरुमुपेत्य तत्तः श्रवणं कृत्वा श्रुतस्य मननादे-रापादितज्ञानसंपत्तेर्जीवन्नेव मुच्यते। तस्य चानिर्वचनोयं विलक्षणं सुखमहो महदाश्चर्यमित्यर्थः। तथा च। "आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव-चान्यः। आश्चर्यवच्चैनमन्यः शृणोती" (गी. २-२९) त्यादि स्मृतम् ॥ २९७॥

फलश्रुतिकथनपूर्वकं प्रतिज्ञातं प्रकरणमुपसंहरति, तृप्तीति ।

तृप्तिदीपमिमं नित्यं येऽनुसन्दधते बुधाः ।
ब्रह्मानन्दे निमज्जन्तस्ते तृप्यन्ति निरन्तरम् ॥ २९८ ॥

य बुधास्तृप्तिदीपं तृप्तेर्दीपायितत्वात्तन्नामकमिमं प्रकरणं नित्यमनिशं अनुसन्दधते बुद्धावनुसन्धानं कुर्वन्ति ते ब्रह्मानन्दे निमज्जन्तो निरन्तरं तृप्यन्ति। इतरकाले व्यासक्तचित्तत्वेऽप्येतदनुसन्धानकाले ब्रह्मानन्दावाप्तिरिति तात्पर्यम्॥२९८॥

इति
श्रीमत्परमहंसपरिव्राजकाचार्यशृंगेरीश्रीविरूपाक्षश्रीविद्याशङ्करपदमावेशप्रकाशित
जगद्गुरु श्रीकल्याणानन्दभारतीमान्ताचार्यात्यन्तप्रियान्तेवासिनात्रि
गोत्रसमुद्भूतेन **लिङ्गनसोमयाजिना** विरचितेयं तृप्तिदीप-
प्रकरणस्य कल्याणपीयूषव्याख्या समाप्ता ॥
इति तृप्तिदीपप्रकरणम् ।

*

अथ

# कल्याणपीयूषव्याख्यासमेता पंचदशी

## कूटस्थदीप प्रकरणम् ॥ ८ ॥

ब्रह्मसाक्षात्कारोपायं चित्रदीपे प्रदर्श्य, उपाये प्ररोचनार्थं तृप्तिदीपमुक्तवान्। अयं च साक्षात्कारो न प्रयत्नसाध्यः किंत्वनुदिनमनुभूयमान एव। परंत्वनुभूतेऽर्थे पूर्वोक्तविवेचनारीत्या विवेके प्रतिदिनमनुभूयमानस्य जीवस्यैव कूटस्थत्वमिति तदेव ब्रह्मरूपमिति च बोधयितुमिदं प्रकरणमारभ्यते, खादित्येति।

देहस्य कूटस्थचिदाभासोभयभास्यत्वनिरूपणम्।

**खादित्यदीपिते कुड्ये दर्पणादित्यदीप्तिवत्।**
**कूटस्थभासितो देहो धीस्थजीवेन भास्यते ॥ १ ॥**

यथा खादित्यदीपिते आकाशे य आदित्यस्तेन प्रकाशितं यत्कुड्यं तस्मिन् दर्पणादित्यदीप्तिवद्दर्पणे प्रतिबिंबितो य आदित्यस्तस्य दीप्तिवत्कूटस्थभासितः प्रत्यगात्मना प्रकाशितो देहो धीस्थजीवेन धियि बुद्धौ तिष्ठता जीवेन बुद्धौ चिदाभासाकारेण प्रतिबिंबितेन कूटस्थेनैव भास्यते ॥ १ ॥

दृष्टान्ते कुड्ये खादित्यदर्पणादित्यदीप्तिद्वयप्रकाशनप्रकारं विवृणोति, अनेकेति।

**अनेकदर्पणादित्यदीप्तीनां बहुसन्धिषु।**
**इतरा व्यज्यते तासामभावेऽपि प्रकाशते ॥ २ ॥**

अनेकदर्पणादित्यदीप्तीनां बिंबाकारेण वर्तमानानां प्रकाशानां बहुसंधिष्वन्तरालप्रदेशेष्वितरा सामान्या सूर्यकान्तिर्व्यज्यते। तासां प्रतिबिंबदीप्तीनां कुड्येऽभावेऽपि बिंबग्राहकदर्पणाद्यभावादितरा सूर्यकान्तिः प्रकाशते। विशेषप्रतिबिंबप्रभाभावेऽपि सामान्या सूर्यप्रभा भासत इति भावः ॥ २ ॥

दृष्टान्तार्थं दार्ष्टान्तिके समन्वेति, चिदाभासेति ।

**चिदाभासविशिष्टानां तथानेकधियामसौ ।**
**सन्धिं धियामभावं च भासयन् प्रविविच्यताम् ॥ ३ ॥**

तथा चिदाभासविशिष्टानामनेकाधियां घटपटादिज्ञेयवस्त्वाकाराकारितानेकान्तःकरणवृत्तीनां सन्धिं वृत्तिशून्यावस्थां जाग्रति धियां तादृग्बुद्धिवृत्तीनां सुषुप्तावभानं च भासयन् असौ कूटस्थश्चिदाभासात्प्रविविच्यताम् प्रविभज्यताम् । कूटस्थो बुद्धौ चिदाभासस्वरूपेण प्रतिबिंबितो बुद्धिवृत्तीनां मध्ये उदासीनावस्थां जाग्रति प्रकाशयति, सुषुप्तौ बुद्धिवृत्तीनामभावं च प्रकाशयतीति भावः ॥ ३ ॥

दृष्टान्तमुखेन चिदाभासब्रह्मणोर्भेदप्रदर्शनम् ।

देहस्यान्तर्भासमानयोः कूटस्थचिदाभासयोर्विवेचनासौकर्याय बाह्यप्रपंचे चिदाभासब्रह्मणोर्विभिन्नतां दृष्टान्तमुखेन दर्शयति, घटेति ।

**घटैकाकारधीस्था चिद्घटमेवावभासयेत् ।**
**घटस्य ज्ञातता ब्रह्मचैतन्येनावभासते ॥ ४ ॥**

घटैकाकारधीस्था घटैकाकारमापन्ना या धीस्तस्यां स्थिता या चिच्चिदाभासः सा घटमेवावभासयेत् । घटस्य ज्ञातता ज्ञातो घट इति व्यवहारहेतुः ज्ञातता ब्रह्मचैतन्येन घटकल्पनाधिष्ठानेनावभासते । अयं घट इत्यत्र घटो ज्ञानविषयः । स च चिदाभासावभासितः । ज्ञातो घट इत्यत्र घटनिष्ठा ज्ञातता विषयः । स च ब्रह्मचैतन्यभासित इति भावः । अत्रेदं बोध्यम् । अज्ञातो घटः, अयं घटः, ज्ञातो घट इति ज्ञानानि घटविषये क्रमशो जायन्ते । तत्र घटाज्ञानदशायां ब्रह्मचैतन्येनैव 'अज्ञातो घट' इति ज्ञानमुत्पद्यते । अज्ञानस्यापि ज्ञानविशेषात्मकत्वेन सर्वस्य ज्ञानस्य साक्ष्यधीनत्वात् । ततः प्रतिफलितचिदाभासविशिष्टबुद्धिवृत्त्या घटाकाराकारितया 'अयं घट' इति ज्ञानमुत्पद्यते । न च केवलया धीवृत्त्यैव तदिति वाच्यम् । धियो जडत्वेन ज्ञानजनकत्वासंभवात् । न वा केवलचैतन्येनेति वाच्यम् । तस्याविकारिणो बुद्धिप्रतिफलनं विना विषयाकाराकारितत्वेन ज्ञानजननासंभवात् । अतश्चिदाभासभास्यं तत् । अयं घट इति ज्ञानं विषयधर्मः । न

चिदाभासरूपं नापि ब्रह्मात्मकम्। चिदाभासस्य भासकत्वात् ब्रह्मणः पूर्वसिद्धत्वात्। ज्ञातो घट इति ज्ञानं ब्रह्मभास्यम्। न चैतच्चिदाभासभास्यमिति वक्तुं शक्यम्। तस्य 'अयं घट' इति ज्ञानजननेनैव चरितार्थत्वात्। अयं घट इति ज्ञानस्य अनियत्या सर्वसाक्षिणा ब्रह्मणाऽनिर्वाहाच्चिदाभासभास्यत्वमभ्युपगतम्। तावन्मात्रेण चरितार्थश्चिदाभासः नान्यद् ज्ञातो घट इत्यादि ज्ञानं जनयितुं शक्नोति। साक्षिणस्तु सर्वकारणत्वेन तदुपपद्यते। घटाकाराकारितधीवृत्तिः, घटज्ञानं, ज्ञानविषयो घटश्चेत्येतत्त्रितयं साक्षिणा भास्यते। घटमात्रं चिदाभासभास्यम्। एवं च घटादेर्विषयस्य ज्ञातो घट इत्यादौ समुदायान्तर्गतत्वेन चिद्भास्यत्वं, अयं घट इत्यादावाभासभास्यत्वमित्युभयभास्यत्वं सिद्धमिति दिक् ॥ ४॥

ननु ज्ञातो घट इत्यत्र घटानिष्ठज्ञाततावभासकब्रह्मचैतन्यस्यैव घटावभासकत्वेनोपपत्तौ बुद्धिर्निरर्थिकास्यादित्याशंक्य तत्सार्थक्यं दर्शयति, अज्ञातत्वेनेति॥

**अज्ञातत्वेन ज्ञातोऽयं घटो बुद्ध्युदयात्पुरा।**
**ब्रह्मणैवोपरिष्टात्तु ज्ञातत्वेनेत्यसौ भिदा ॥ ५ ॥**

'अयं घट' इति बुद्ध्युदयात्पुरा "न घटो मया ज्ञात" इति बुद्धेस्सत्त्वात् घटोऽज्ञातत्वेन रूपेण ब्रह्मणा ब्रह्मचैतन्येन ज्ञातः। 'अयं घट' इति बुद्धेरुपरिष्टादुत्पत्त्यनन्तरं ज्ञातत्वेन 'ज्ञातो घट' इति ज्ञाततया घटो ब्रह्मणैव भासते। 'अज्ञातो घट' इति स्थले घटनिष्ठाज्ञातता भासते। 'ज्ञातो घट' इति स्थले तन्निष्ठज्ञातता भासते। ज्ञातत्वाज्ञातत्वयोरुभयोरपि भाने ब्रह्मचैतन्यमेव कारणम्। तदज्ञातत्वं तु 'अयं घट' इति बुद्धेः पूर्ववर्ति। ज्ञातत्वं तु तदनन्तरवर्तीत्यसौ भेदः ज्ञातत्वाज्ञातत्वयोः परस्परविरुद्धयोरेकस्मिन् धर्मिणि युगपदवस्थानासंभवात्क्रमेणोत्पन्नयोस्तयोः क्रमेण भानमित्यवश्यमभ्युपेयम्। तत्र ज्ञाततायाः उत्पादकं ज्ञानम्। अज्ञातताया श्चाज्ञानम्। तथा च ज्ञातत्वोत्पादकं ज्ञानं बुद्ध्यधीनमिति तदभावे ज्ञानस्यैवाभावेन ज्ञातताया अनुदयात्तदवभासनं संभवतीति तत्सार्थक्यमिति भावः ॥ ५॥

एकस्यैव घटस्य, ज्ञातत्वाज्ञातत्वे इति द्वैरूप्योपपादनाय तन्निमित्तयोः ज्ञानाज्ञानयोः स्वरूपं विवृणोति, चिदाभासेति ॥

चिदाभासान्तधीवृत्तिर्ज्ञानं लोहान्तकुन्तवत् ।
जाड्यमज्ञानमेताभ्यां व्याप्तः कुंभो द्विधोच्यते ॥ ६ ॥

चिदाभासान्तधीवृत्तिश्चिदाभाससहितबुद्धिवृत्तिः ज्ञानं भवति। तत्र दृष्टान्तमाह, लोहान्तकुन्तवदिति। यस्यान्तभागे विनिवेशितो लोहोऽयःखण्डः दण्डाकारेण स्थित आयुधविशेषः कुन्तशब्देनोच्यते। कुन्तस्य लोहान्तत्वाभावे छेदनाशक्तत्वमिव धीवृत्तेश्चिदाभासान्तत्वाभावे विषयावभासनाशक्तत्वमिति भावः। अज्ञानं विवृणोति, जाड्यमिति। जाड्यं स्फूर्तिराहित्यमज्ञानमित्युच्यते। एताभ्यां ज्ञानाज्ञानाभ्यां व्याप्तः क्रमेण संबद्धः कुंभः द्विधा ज्ञात इत्यज्ञात इति च पर्यायेणोच्यते। ज्ञानव्याप्तो घटो ज्ञात इति, अज्ञानव्याप्तो घटोऽज्ञात इति चोच्यते। उभयत्र घट एव विषय इति भावः ॥ ६ ॥

नन्वज्ञातस्य घटस्याज्ञानव्याप्तत्वादज्ञातताया: ब्रह्मचैतन्यभास्यत्वं युक्तमेव स्यात्। ज्ञातस्य कुंभस्य चिदाभासावभास्यत्वात्कुतो ज्ञातताया ब्रह्मचैतन्यमुच्यत इत्याशंक्याह, अज्ञात इति ॥

अज्ञातो ब्रह्मणा भास्यो ज्ञातः कुंभस्तथा न किम् ।
ज्ञातत्वजननेनैव चिदाभासपरिक्षयः ॥ ७ ॥

यथा अज्ञातो घट इत्यत्र अज्ञाततविशिष्टो घटो ब्रह्मणा भास्यः। तथा ज्ञातो घट इत्यत्र ज्ञातताविशिष्टः कुंभो ब्रह्मणा भास्यो न भवति किम्? भवत्येवेति भावः। ननु तत्र ज्ञानमन्तरा ज्ञातताया अनुदयेन तस्याः ब्रह्मभास्यत्वासंभवात्तदुत्पादकज्ञानार्थमावश्यकेन चिदाभासेनैव ज्ञातताविशिष्टो घटो भास्यताम्, का तद्भाने कूटस्थापेक्षेत्यत आह, ज्ञातत्वेति। ज्ञातत्वजननेनैव अयं घट इति ज्ञानोत्पादनेनैव चिदाभासपरिक्षयः चिदाभासस्योपशान्तिः। अज्ञातकुंभवत् ज्ञातकुंभस्यापि ब्रह्मणैवावभाससंभवात्तद्भानपर्यन्तं परिक्षीणस्य चिदाभासस्य व्यापारकल्पनं गौरवपराहतमिति भावः। बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम्। "तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरे"दिति (७–९१) पूर्वमुक्तम् ॥ ७ ॥

नन्वयं घट इति ज्ञानमपि बुद्धिरेवजनयतु, किं चिदाभासेनेत्याशंक्य

चिदाभाससाहित्यमन्तरेण न केवलबुद्धेर्जडात्मिकायास्तत्सामर्थ्यमित्याह, आभासेति ।

आभासहीनया बुद्ध्या ज्ञातत्वं नैव जन्यते ।
तादृग्बुद्धेर्विशेषः को मृदादेः स्याद्विकारिणः ॥ ८ ॥

आभासहीनया चिदाभासविवर्जितया केवलबुद्ध्या घटस्य ज्ञातत्वं 'ज्ञातो घट' इति व्यवहारहेतुभूतं ज्ञानं नैव जन्यते । तत्र कारणमाह, तादृगिति । तादृग्बुद्धेराभासहीनाया बुद्धेर्विकारिणः प्रकाशरहितस्य मृदादेः को विशेषः स्यात् ? न कोऽपि भेद इत्यर्थः । चिदाभासविनिर्मुक्ता बुद्धिर्मृद्वज्जडा । यदि केवलजडस्य ज्ञाततजनकत्वमभ्युपेयते तदा जडेन घटेनैव ज्ञातताजनने ब्रह्मणैव ज्ञातो घट इति भानसंभवाद्बुद्धेः सर्वथा नैरर्थक्यमेव स्यात् । न हि घटसत्तामात्रेण बुद्धिव्यापाराभावे ज्ञातो घट इति ज्ञानं केनाप्यनुभूयते । अतो जडात् घटाद्बुद्धेर्विशेषलाभाय तस्य चिदाभाससाहित्यमवश्यमभ्युपेयमिति भावः ॥ ८ ॥

उक्तमर्थं प्रपञ्चयति, ज्ञात इति ।

ज्ञात इत्युच्यते कुंभो मृदा लिप्तो न कुत्रचित् ।
धीमात्रव्याप्तकुंभस्य ज्ञातत्वं नेष्यते तथा ॥ ९ ॥

कुत्रचित्कुत्रापि मृदा लिप्तः कुंभो ज्ञात इति नोच्यते । तथा धीमात्रव्याप्तकुंभस्य चिदाभासरहितेन जडेन धीमात्रेण व्याप्तो यः कुंभस्तस्य ज्ञातत्वं नेष्यते नोत्पद्यते । तदजननेन धीमात्रव्याप्तावपि ज्ञात इति नोच्यत इति भावः॥९॥

उक्तार्थं निगमयति, ज्ञातत्वमिति ।

ज्ञातत्वं नाम कुंभेऽतश्चिदाभासफलोदयः ।
न फलं ब्रह्मचैतन्यं मानात्प्रागपि सत्त्वतः ॥ १० ॥

अत आभासहीनाया बुद्ध्या ज्ञातत्वजनकत्वाभावात् कुंभे ज्ञातत्वं नाम चिदाभासफलोदयः चिदाभासव्याप्तिरूपस्य फलस्योदय उत्पत्तिः । चिदाभासव्याप्त्या घटादिज्ञानमुदेतीति भावः । ननु चिदाभासेनायं घट इति ज्ञानरूपफलो-

दये तद्घटकज्ञानात्मकं फलं ब्रह्मचैतन्यात्मकमेवेति चेन्नेत्याह, नेति । ब्रह्मचैतन्यं फलं न; कुतः ? मानाद्बुद्धिवृत्तेः प्रागपि तस्य ब्रह्मचैतन्यस्य सत्वतो विद्यमानत्वात् । फलस्य तदुत्तरकालिकत्वनियमादित्यर्थः ॥ १० ॥

"ज्ञातत्वं चिदाभासफलोदय" इति वचने श्रीसुरेश्वराचार्यचरणोक्तिविरोधं शंकते, परागिति ।

**परागर्थप्रमेयेषु या फलत्वेन सम्मता ।**
**संवित्सैवेह मेयोऽर्थो वेदान्तोक्तिप्रमाणतः ॥ ११ ॥**

परागर्थप्रमेयेषु परांचश्च ते अर्थाश्च प्रत्यग्भिन्नभूता बाह्या घटादयः, त एव प्रमेयाः प्रमाणविषयाः, तेषु सत्सु या संवित् प्रमाणानां फलत्वेन सम्मता सैवेहाद्वैतशास्त्रे वेदान्तोक्तिप्रमाणतः "अयमात्माब्रह्म" (बृ.४.४.५.) त्यादि वेदान्तवाक्योक्तिरूपात्प्रमाणान्मेयो ज्ञेयोऽर्थः प्रमितेर्विषयो भवति । आत्मचैतन्यस्यैव श्रुतिप्रतिपादिततया तस्यैवात्र वचने फलत्वोक्त्याऽऽत्मचैतन्यस्य फलत्वाभावोक्तिरसंगतेति भावः ॥ ११ ॥

तदाशयवर्णनेन विरोधं परिहरति, इतीति ।

**इति वार्तिककारेण चित्सादृश्यं विवक्षितम् ।**
**ब्रह्मचित्फलयोर्भेदः सहस्र्यां विश्रुतो यतः ॥ १२ ॥**

इत्यत्र वचने वार्तिककारेण चित्सादृश्यं चिदाभासफलस्य चिता ब्रह्मचैतन्येन सादृश्यं विवक्षितम् । न तु चिद्रूपत्वम् । अन्यथा वार्तिककारस्य भगवत्पादवचनविरोधः स्यादित्याशयेनाह, ब्रह्मेति । ब्रह्मचित्फलयोः ब्रह्मचितः फलस्य च भेदः सहस्र्यां विश्रुतः । तदीयं वचनं चेदम् :—" चिन्मात्रज्योतिषा सर्वाः सर्वदेहेषु बुद्धयः । मया यस्मात्प्रकाश्यन्ते सर्वस्यात्मा ततो ह्यहं । करणं कर्म कर्ता च क्रिया स्वप्ने फलं च धीः । जाग्रत्येवं यतो दृष्टा द्रष्टा तस्मात्ततोऽन्यथा ॥" अत्र फलादीनां ब्रह्मचैतन्यभास्यत्वोक्तेः फलीभूतस्य चिदाभासस्य ब्रह्मचैतन्याद्भेदः स्पष्टमेवोक्तः । तथा च वार्तिककारेण संविदः फलत्वोक्तिः भगवत्पादवचनाविरोधाय संवित्सादृश्याभिप्रायेणैवेत्यभ्युपेयमिति भावः ॥ १२ ॥

एवं सति किमायातमित्याशंक्याह, आभास इति ।

**आभास उदितस्तस्मात् ज्ञातत्वं जनयेद्घटे ।**
**तत्पुनर्ब्रह्मणा भास्यमज्ञातत्ववदेव हि ॥ १३ ॥**

तस्मात् ब्रह्मचितः फलत्वाभावस्य सिद्धत्वात् घटे उदितो व्यास आभासश्चिदाभासः "अयं घट" इति ज्ञातत्वं जनयेत् । तद्ज्ञातत्वं त्वज्ञातत्ववदेव । यथा बुद्ध्युदयात्पुराऽज्ञातत्वं ब्रह्मणा भास्यते तद्वदेव ब्रह्मणैव भास्यं भवति ॥१३॥

एवं ब्रह्मचिदाभासयोः स्वरूपतो भेदं प्रदर्श्य विषयभेदेनापि तत् दर्शयति, धीरिति ।

**धीवृत्त्याभासकुंभानां समूहो भास्यते चिता ।**
**कुंभमात्रफलत्वात्स एक आभासतः स्फुरेत् ॥ १४ ॥**

धीवृत्त्याभासकुंभानां विषयाकाराकारिता धीवृत्तिः तदवभासकश्चिदाभासः तद्विषयः कुंभस्तेषां समूहाश्चिता ब्रह्मचैतन्येन भास्यते । चिदाभासस्य कुंभमात्रफलत्वात् कुंभमात्रवृत्तिज्ञाततारूपफलरूपत्वात् । आभासतश्चिदाभासतः स एको घट एव स्फुरेत् । चिदाभासः कुंभमात्रमेव ज्ञापयति । एवं च चितो धीवृत्त्याभासकुंभास्त्रयो विषयाः, आभासस्य तु कुंभमात्रमेव विषय इति विषयतोऽपि भेदः स्पष्ट एव ॥ १४ ॥

एवं घटस्य चिदाभासब्रह्मोभयभास्यत्वे लिङ्गमाह, चैतन्येति ।

**चैतन्यं द्विगुणं कुंभे ज्ञातत्वेन स्फुरत्यतः ।**
**अन्येऽनुव्यवसायाख्यमाहुरेतद्यथोदितम् ॥ १५ ॥**

अतो घटस्य चिदाभासब्रह्मचैतन्योभयभास्यत्वात् कुंभे चैतन्यं ज्ञातत्वेन द्विगुणं स्फुरति । यथोदितमेवंप्रकारेणोदितं - घटज्ञातताावभासकं ब्रह्मचैतन्यमन्ये नैयायिकादयोऽनुव्यवसायाख्यं ज्ञानान्तरमाहुः । व्यवसायो ज्ञानं तदनुसारि तद्विषयिकं ज्ञानं अनुव्यवसायीत्युच्यते ॥ १५ ॥

उक्तमर्थं संक्षिपति, घट इति ।

घटोऽयमित्यसावुक्तिराभासस्य प्रसादतः ।
विज्ञातो घट इत्युक्तिर्ब्रह्मानुग्रहतो भवेत् ॥ १६ ॥

अयं घट इत्यसावुक्तिराभासस्य चिदाभासस्य प्रसादतो भवेत् । घटो विज्ञात इत्युक्तिर्ब्रह्मानुग्रहतो घटाधिष्ठानीभूतब्रह्मचैतन्यस्यानुग्रहतो भवेत् ॥ १६ ॥

कूटस्थचिदाभासयोर्विवेचनाप्रकारः ।

एवं यथा बाह्यप्रपंचे चिदाभासब्रह्मचैतन्ययोर्विवेचना क्रियते तथैव देहेऽपि कूटस्थचिदाभासयोर्विवेचना कर्तव्येत्याह, आभासेति ।

आभासब्रह्मणी देहाद्बहिर्यद्वद्विवेचिते ।
तद्वदाभासकूटस्थे विविच्येतां वपुष्यपि ॥ १७ ॥

स्पष्टोऽर्थः ॥ १७ ॥

बाह्ये घटादिवृत्तिवत् देहे विषयगोचरवृत्त्यभावेऽपि चिदाभासव्याप्ताहमादिवृत्तिसद्भावात् तद्व्यापकश्चिदाभासोऽप्यवगन्तुं शक्यत इति दृष्टान्तमुखेनाह, अहमिति ।

अहंवृत्तौ चिदाभासः कामक्रोधादिकासु च ।
संव्याप्य वर्तते तप्ते लोहे वह्निर्यथा तथा ॥ १८ ॥

यथा वह्निस्तप्ते लोहेऽविशेषतया संव्याप्य वर्तते तथा चिदाभासः अहंवृत्तौ कर्तृत्वाद्यभिमानवत्बुद्धिवृत्तौ कामक्रोधादिकासु च संव्याप्याविशेषेण वर्तते ॥१८॥

अहमादिधीवृत्तीनां चिदाभासभास्यत्वमेव सदृष्टान्तं प्रपंचयति, स्वमात्रमिति ।

स्वमात्रं भासयेत्तप्तं लोहं नान्यत्कदाचन ।
एवमाभाससहिता वृत्तयः स्वस्वभासिकाः ॥ १९ ॥

अग्निना तप्तं लोहं स्वमात्रमेव भासयेत्; अन्यद्वस्तु कदाचन न भासयेत् । एवमाभाससहिता धियोऽहमादिवृत्तयः स्वस्वभासिकाः स्वस्वरूपमेव भासयन्ति ॥ १९ ॥

एवं चिदाभासस्वरूपं निरूप्य कूटस्थस्वरूपोपपादयिषया आदौवृत्त्यभावावस्थानं दर्शयति, क्रमादिति ।

क्रमाद्विच्छिद्य विच्छिद्य जायन्ते वृत्तयोऽखिलाः ।
सर्वा अपि विलीयन्ते सुप्तिमूर्छासमाधिषु ॥ २० ॥

अखिला बुद्धिवृत्तयः क्रमात् विच्छिद्य विच्छिद्य एकवृत्तेर्नाशोत्तरमपराया उत्पत्तेरित्येवंक्रमेण जायन्ते । अनेन चिदाभासविशिष्टानां धियां सन्धिसमये तासामभावः सूच्यते । सर्वा अपि वृत्तयः सुप्तिमूर्छासमाधिषु विलीयन्ते ॥ २० ॥

समस्तवृत्तिविलये तत्साक्षी निर्विकारस्वरूपः कूटस्थ इत्युच्यत इत्याह, संधय इति ।

संधयोऽखिलवृत्तीनामभावाश्चावभासिताः ।
निर्विकारेण येनासौ कूटस्थ इति चोच्यते ॥ २१ ॥

जाग्रति चिदाभासविशिष्टानां अखिलवृत्तीनां सन्धयः उत्पत्तिविनाशयोर्मध्ये वृत्त्यभावविशिष्टकालरूपाः, सुप्त्यादिषु तासामभावश्च कूटवन्निर्विकारेण तिष्ठता येन अवभासिताः, स कूटस्थ इत्युच्यते । चोऽवधारणे ॥ २१ ॥

कुंभे इव अहमाद्यान्तरवृत्तिष्वपि चैतन्यद्वैगुण्यं प्रदर्शयति, घट इति ।

घटे द्विगुणचैतन्यं यथा बाह्ये तथान्तरे ।
वृत्तिष्वपि ततस्तत्र वैशद्यं संधितोऽधिकम् ॥ २२ ॥

यथा बाह्ये घटेऽयं घट इति केवलघटस्फोरकं चिदाभासचैतन्यं ज्ञातो मया घट इति घटज्ञाततास्फोरकं ब्रह्मचैतन्यमिति द्विगुणचैतन्यं भासते तथा आन्तरे अन्तर्वृत्तिषु चैतन्यद्वैगुण्यं भासते । ततो द्वैगुण्यसद्भावादेव तत्र संध्यपेक्षया वृत्तिषु संधितोऽधिकं वैशद्यं दृश्यते । वृत्तिशून्यतादशायां अज्ञानसद्भावात् कूटस्थस्य स्वप्रकाशस्वभावतया सत्यपि भानेऽज्ञानावरणवशात् अभात इव भातीति तदानींतनभानमविशदम् । वृत्तिसद्भावे वृत्तिप्रतिफलितचिदाभासवशात् तद्भानं विशदं भवति । तदेव संधितो वैशद्यस्याधिक्यम् ॥ २२ ॥

घटादिष्विव अहमादिवृत्तिष्वपि ज्ञातताज्ञाततावभासकत्वमेव कूटस्थस्य कुतो नोच्यते इत्याशंक्य तत्र ज्ञातत्वाज्ञातत्वाभावान्नोच्यत इत्याह, ज्ञाततेति ।

**ज्ञातताज्ञातता न स्तो घटवद्वृत्तिषु क्वचित् ।**
**स्वस्य स्वेनागृहीतत्वात्ताभिश्चाज्ञाननाशनम् ॥ २३ ॥**

यथा घटस्य ज्ञानव्याप्तत्वे ज्ञातता, तदभावेऽज्ञातता च संभवतः, तथा वृत्तिषु धीवृत्तिषु क्वचित् कदापि ज्ञातता अज्ञातता न स्तः तत्र कारणमाह,— स्वस्येति । स्वस्य धीवृत्तेः स्वेन धीवृत्त्या अगृहीतत्वात् धीवृत्तिरन्यद्वस्तु विषयत्वेन गृह्णाति, न तु स्वं विषयम् । अनेन ज्ञानव्याप्त्यभावो दर्शितः । ताभिः धीवृत्तिभिः अज्ञाननाशनात् निवर्तनात्, अनेनाज्ञानव्याप्त्यभावो दर्शितः । अज्ञाततापि न संभवतीत्यर्थः । अत्रायं भावः । वृत्तीनां स्वतःप्रकाशत्वेन ज्ञानान्तरव्याप्तिर्नास्तीति ज्ञातता न संभवति । तथैव ज्ञानरूपाणां तासामुत्पत्तिमात्रेणाज्ञानं निवर्तत इत्यज्ञातता च न संभवति । अतो घटादाविव आसु ज्ञातत्वाज्ञातत्वे न संभवत इति भावः ॥ २३ ॥

ननु चिदाभासकूटस्थयोश्चेतनत्वाविशेषेऽपि एकस्य कूटस्थत्वमन्यस्याकूटस्थत्वं कुत इत्याशंक्याह, द्विगुणीकृतेति ।

**द्विगुणीकृतचैतन्ये जन्मनाशानुभूतितः ।**
**अकूटस्थं तदन्यत्तु कूटस्थमविकारतः ॥ २४ ॥**

द्विगुणीकृतचैतन्ये चैतन्यद्वैगुण्ये जन्मनाशानुभूतितः जाग्रत्स्वप्नावस्थयोः जन्मनाशयोः सुषुप्त्यादिषु जन्मनो नाशस्य च अनुभूतितः अनुभूयमानत्वात् विकारिस्वरूपत्वादित्यर्थः । तच्चिदाभासचैतन्यं अकूटस्थं । तदन्यत्तु कूटस्थचैतन्यं तु अविकारतः जन्मनाशाद्यात्मकविकारस्य तस्याविद्यमानत्वात् कूटस्थं भवतीत्यर्थः ॥ २४ ॥

चिदाभासव्यतिरिक्तः कूटस्थो न स्वकपोलकल्पितः किंतु पूर्वाचार्यैरप्यभ्युपगत इत्याह, अंत इति ।

**अन्तःकरणतद्वृत्तिसाक्षीत्यादावनेकधा ।**
**कूटस्थ एव सर्वत्र पूर्वाचार्यैर्विनिश्चितः ॥ २५ ॥**

अन्तःकरणतद्वृत्तिसाक्षीत्यादौ—

"अन्तःकरणतद्वृत्तिसाक्षिचैतन्यविग्रहः ।
आनन्दरूपः सत्यः सन् किं नात्मानं प्रपद्यसे ॥" इति

श्रीभगवत्पादानां वाक्यवृत्त्यादावनेकधा कूटस्थ एव सर्वत्र अन्तःकरणे अहंकरादिवृत्तिषु तत्संधिषु च सत्य आनन्दरूपः चैतन्यमेव विग्रह इवास्तीति भगवत्पादादिपूर्वाचार्यैर्विनिश्चितः ॥ २५ ॥

कूटस्थातिरिक्तचिदाभासोऽपि तैरङ्गीकृत इत्युपदेशसाहस्रीवाक्यं (१८-४३) प्रमाणयति, आत्मेति ।

**आत्माभासाश्रयाश्चैवं मुखाभासाश्रया यथा ।**
**गम्यन्ते शास्त्रयुक्तिभ्यामित्याभासश्च वर्णितः ॥ २६ ॥**

मुखाभासाश्रयाः मुखं, आभासस्तत्प्रतिबिंबं, आश्रयः तदाश्रयो दर्पणादिश्च यथा गम्यन्ते प्रत्यक्षेण प्रतीयन्ते तथा आत्माभासाश्रयाः, आत्मा कूटस्थः, आभासः छायात्मकः चिदाभासः तस्याश्रय उपाधिरन्तःकरणं च ते ; एवं शास्त्रयुक्तिभ्यां, "रूपं रूपं प्रतिरूपो बभूव" (कठ २-५-१०) इत्यादिशास्त्रेण विकारित्वाविकारित्वादियुक्त्या च गम्यन्तेऽभ्युपगम्यन्त इत्युपदेशसहस्र्यां वर्णितः॥ २६ ॥

चिदाभासकल्पनानावश्यकतां शंकते, बुद्धीति ।

**बुद्ध्यवच्छिन्नकूटस्थो लोकान्तरगमागमौ ।**
**कर्तुं शक्तो घटाकाश इवाभासेन किं वद ॥ २७ ॥**

बुद्ध्यवच्छिन्नकूटस्थः बुद्ध्युपाधिकः कूटस्थः पुण्यपापफलानुभवाय धूम्रोत्तरमार्गाभ्यां लोकान्तरगमागमौ स्वर्गादिगमनं क्षीणे पुण्ये कर्मशेषानुभवाय मर्त्यलोकं प्रत्यागमश्च घटाकाश इव यथा घटाकाशः घटेन साकं गमनागमने करोति तद्वत् कर्तुं शक्तः । तस्मादाभासेन तदभ्युपगमनेन किं प्रयोजनं वद ॥ २७ ॥

कूटस्थकल्पनागौरववादनिरासः ।

न ह्यसंगः कूटस्थः बुद्धिपरिच्छेदमात्रात् जीवत्वमाप्नोतीति हितोपदेशरूपेण समाधत्ते, शृण्विति ।

श्रृण्वसंगः परिच्छेदमात्रात् जीवो भवेन्न हि ।
अन्यथा घटकुड्याद्यैरवच्छिन्नस्य जीवता ॥ २८ ॥

शृणु, असंगः कूटस्थः बुद्धेः परिच्छेदमात्रात् जीवो न भवेद्धि । अनुपपत्तिं दर्शयति, अन्यथेति । अन्यथा घटकुड्याद्यैरवच्छिन्नस्य ब्रह्मचैतन्यस्य जीवताऽऽपतेत् । न चैतदिष्टं तवापीति भावः ॥ २८ ॥

बुद्धिकुड्ययोः स्वच्छतास्वच्छतावैषम्येन नेयमापत्तिरित्याह, नेति ।

न कुड्यसदृशी बुद्धिः स्वच्छत्वादिति चेत्तथा ।
अस्तु नाम परिच्छेदे किं स्वाच्छ्येन भवेत्तव ॥ २९ ॥

कूटस्थावच्छेदिका बुद्धिः स्वच्छत्वात् प्रकाशयुक्तत्वात् कुड्यसदृशी नेत्युच्यते चेत् तथा अस्तु नाम । परिच्छेदे सति स्वाच्छ्येन तव किं प्रयोजनं भवेत्? न हि कूटस्थस्य जीवत्वाप्तेः परिच्छेदकस्य स्वच्छता कारणमिति भावः ॥ २९ ॥

उक्तमर्थं दृष्टान्तयति, प्रस्थेति ।

प्रस्थेन दारुजन्येन कांस्यजन्येन वा न हि ।
विक्रेतुस्तंडुलादीनां परिमाणं विशिष्यते ॥ ३० ॥

दारुजन्येन अस्वच्छेन कांस्यजन्येन स्वच्छेन वा प्रस्थेन आढकचतुर्थांशपरिमाणेन मानपात्रेण तंडुलादीनां विक्रेतुर्मेयधान्यस्य परिमाणं न विशिष्यते न भिद्यते हि ॥ ३० ॥

कांस्यदारुप्रस्थयोः परिमाणे विशेषाभावेऽपि प्रथमे प्रतिबिंबस्य विशेष इत्याशंक्य तर्हि बुद्धौ चिदाभासोऽपि भवताऽनिच्छताप्यभ्युपगत एवेत्याह, परिमाणेति ।

परिमाणाविशेषेऽपि प्रतिबिंबो विशिष्यते ।
कांस्ये यदि तदा बुद्धावप्याभासो भवेद्बलात् ॥ ३१ ॥

कांस्य प्रस्थे तंडुलादिमेयवस्तुनः परिमाणाविशेषेऽपि तत्र कांस्यप्रस्थे प्रतिबिंबो यदि विशिष्यते तदा कूटस्थः स्वच्छया बुद्ध्या परिच्छिन्न इत्युक्तेर्बलात् बुद्धावपि कूटस्थः प्रतिबिंबितः सन् आभासो भवतीति भवताऽभ्युपगत एव बलात् भवेत् ॥ ३१ ॥

ननु बुद्धौ कुटस्थः प्रतिबिंबितः स्यात्। तथापि कथं तस्य चिदाभासत्वमङ्गीक्रियत इत्याशंक्य प्रतिबिंबाभासयोः समानार्थकत्वादित्याह, ईषदिति ।

**ईषद्भासनमाभासः प्रतिबिंबस्तथाविधः ।**
**बिंबलक्षणहीनस्सन् बिंबवद्भासते स हि ॥ ३२ ॥**

ईषद्भासनमाभासो भवति। ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः एतमातं ङितं विद्यादित्युक्तेः आङः ईषदर्थकत्वात् । प्रतिबिंबोऽपि तथाविधः ईषद्भासनमेव । अतः प्रतिबिंबाभासशब्दयोः समानार्थकतेत्यर्थः । प्रतिबिंबस्याभासत्वं कथं सिध्यतीत्याशंक्याह, बिंबेति ॥ बिंबलक्षणहीनः बिंबधर्मरहितः सः प्रतिबिंबः बिंबवत् भासते, चिदिव ईषत्साम्येन आभासत इति व्युत्पत्तिरत्राभिहिता भवति ॥ ३२ ॥

बिंबवद्भासनं विवृणोति, ससंगत्वेति ।

**ससंगत्वविकाराभ्यां बिंबलक्षणहीनता ।**
**स्फूर्तिरूपत्वमेतस्य बिंबवद्भासनं विदुः ॥ ३३ ॥**

एतस्य चिदाभासस्य ससंगत्वविकाराभ्यां अहमादिसंगराहित्यं जन्मनाशादिविकारश्च ताभ्यां बिंबलक्षणहीनता बिंबात्मकत्वहीनता स्फूर्तिरूपत्वं कूटस्थवत् स्फूर्तिरूपत्वं बिंबवद्भासनमिति च विदुः । चिदाभासः कूटस्थस्वरूपेणावभासते । किंतु ससंगत्वविकाराभ्यां स न भवतीत्यर्थः ॥ ३३ ॥

चिदाभासस्य बुद्धेः पार्थक्यप्रदर्शनम् ।

एवं चिदाभासस्य सार्थकतां प्रदर्श्य तस्य बुद्धेश्च पार्थक्यविवक्षया बुद्ध्यभेदमाशंक्य प्रतिबंध्या प्रतिवदति, नेति ।

**न हि धीभावभावित्वादाभासोऽस्ति धियः पृथक् ।**

इति चेदल्पमेवोक्तं धीरप्येवं स्वदेहतः ॥ ३४ ॥

धीभावभावित्वात् यावत्कालं धियो भावो विद्यते तावत्कालमेव चिदाभासस्य विद्यमानत्वात् आभासो धियः पृथक् नास्तीति चेदल्पमेव त्वयोक्तम्। तव वचः केवलमतिफल्गु इत्यर्थः। प्रतिबंध्या समाधत्ते, धीरिति। यद्येवं तर्हि देहसमकालवर्तिनी धीरपि स्वदेहतो एवं भिन्ना न स्यात् ॥ ३४ ॥

ननु देहधियोर्भिन्नत्वे शास्त्रं प्रमाणमस्ति। न तथा चिदाभासधियोरित्याशंक्य चिदाभासस्यापि शास्त्रे तथा श्रूयमाणत्वात् तस्यापि पार्थक्यमभ्युपगन्तव्यमित्याह, देह इति ॥

देहे मृतेऽपि बुद्धिश्चेच्छास्त्रादस्ति तथा सति।
बुद्धेरन्यश्चिदाभासः प्रवेशश्रुतिषु श्रुतः ॥ ३५ ॥

देहे मृतेऽपि "स विज्ञानो भवती" त्यादिशास्त्रात् बुद्धिरस्तीत्यतः तयोर्भेदकथनं युक्तमेवेति वदसि चेत् अङ्गीकृत्य सिद्धान्ती समाधत्ते, तथेति। तथा देहधियोर्भेदे शास्त्रात् प्रतिपादिते सति बुद्धेरन्यश्चिदाभासः ऐतरेयोक्त प्रवशश्रुतिषु श्रुतः ॥ ३५ ॥

ननु लोके बुद्धियुक्तस्य चैत्रादेर्गृहादौ प्रवेशो दृश्यते न तु तद्रहितस्य लोष्टादेः। तद्वत् बुद्धेः पृथग्भूतस्य चिदाभासस्य प्रवेशो नैव घटते; किंतु तत्सहितस्यैव। एवं च बुद्धेः पार्थक्यं चिदाभासस्य कथं घटते इत्याशंक्य परिहरति, धीरिति ॥

धीयुक्तस्य प्रवेशश्चेन्नैतरेये धियः पृथक्।
आत्मा प्रवेशं संकल्प्य प्रविष्ट इति गीयते ॥ ३६ ॥

धीयुक्तस्य चिदाभसस्यैव प्रवेश इत्युच्यते चेन्न, धियः पृथक् व्यतिरेकेणात्मा प्रवेशं संकल्प्य सीमानं विदार्यैतया द्वारा प्रविष्ट इत्यैतरेये गीयते। श्रुतिबलात् यथा देहपातानन्तरमपि बुद्धेः सत्त्वमभ्युपेयते तथैव श्रुतिबलात् बुद्धिरहितस्यात्मनोऽपि प्रवेशोऽभ्युपेय इति भावः ॥ ३ ॥

"स ईक्षत कथं न्विदं मद्दते स्यादिति"। "स एतमेव सीमानं

विदार्यैतया द्वारा प्रापद्यते" (ऐ. १. ३. १२.) त्युक्तामैतरेयश्रुतिमर्थतः पठति, कथमिति ।

**कथं न्विदं साक्षदेहं मद्दते स्यादितीरणात् ।**
**विदार्य मूर्धसीमानं प्रविष्टः संसरत्ययम् ॥ ३७ ॥**

"सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्छय"दित्यारभ्य "शिश्नाद्रेतो रेतस आपः" (ऐत. १. ४.) इत्यन्तया श्रुत्याऽभिहितमिदं साक्षदेहं अक्षाद्यवयवोपेतं चैतन्यरहितं देहं मद्दते चैतन्यस्वरूपं मां विना कथं नु स्यात्कथं निर्वहेदितीरणात्कथनात् अयमात्मा सीमानं कपालत्रयमध्यदेशं विदार्य देहं प्रविष्टः सन् जगति संसरति ॥ ३७ ॥

ननु क्रियादिविकाररहितस्यासंगस्यात्मनः प्रवेशोऽयुक्त इत्याशंक्य समाधत्ते, कथमिति ।

**कथं प्रवेशोऽसंगश्चेत् सृष्टिर्वाऽस्य कथं वद ।**
**मायिकत्वं तयोस्तुल्यं विनाशश्च समस्तयोः ॥ ३८ ॥**

यदि असगश्चिदात्मा तस्य कथं प्रवेशः इत्युच्यते चेदस्य सृष्टिः तत्कर्तृकजगत्सर्जनक्रिया कथं कृतेति वद । स्वयमेव समाधत्ते, मायिकत्वमिति ॥ तयोः सृष्टिप्रवेशक्रिययोः मायिकत्वं मायाकल्पितत्वं तुल्यम् । तयोर्विनाशश्चानित्यत्वं च समः ॥ ३८ ॥

सोपाधिकस्य विनाशोऽनिवार्य इति श्रुत्या प्रमाणयति, समुत्थायेति ॥

**समुत्थायैष भूतेभ्यस्तान्येवानुविनश्यति ।**
**विनष्टमिति मैत्रेय्यै याज्ञवल्क्य उवाच हि ॥ ३९ ॥**

एषः प्रज्ञानघन आत्मा भूतेभ्यो देहेंद्रियाद्युपाधिभ्यः समुत्थाय जीवत्वाभिमानमवाप्य यदा तानि विनश्यन्ति तदा तान्येवानुविनश्यति । तत्कृतजीवत्वाभिमानं जहातीत्यर्थः इति याज्ञवल्क्यः, "प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यती"ति, (बृ. ४. ५. १३.) विनष्टं सोपाधिकस्य विनाशं श्रुतौ

निजभार्यायै मैत्रेय्यै उवाच ॥ ३९ ॥

विनाशरहित आत्मा ततो विविच्योपदिष्टश्चेत्याह, अविनाशीति ॥

**अविनाश्ययमात्मेति कूटस्थः प्रविवेचितः ।**
**मात्रासंसर्ग इत्येवमसंगत्वस्य कीर्तनात् ॥ ४० ॥**

अयमात्मात्वविनाशी विनाश रहितो नित्य इति कुटस्थो जीवात् प्रविवेचितः विभाजितः । "अविनाशीवाऽरेऽयमात्मानुच्छत्तिधर्मा" (बृ. ४.५. १४.) इति श्रुतेः । अविनाशित्वेऽसंगत्वं कारणमित्युक्तमित्याह, मात्रेति ॥ "मात्रासंसर्गस्त्वस्य-भवाती"ति श्रुतौ एवमसंगत्वस्य कीर्तनात् कूटस्थस्य मात्रासंसर्गत्वस्य मीयन्त इति मात्राः देहादयः तेषां संगराहित्यस्य कीर्तनात् उक्तेः ॥ ४० ॥

ननु " जीवापेतं वाव किल इदं म्रियते न जीवो म्रियते " (छां.६.११.३.) इति श्रुतेः जीवस्याविनाशित्वमुक्तं भवतीत्याशंक्य लोकान्तरगमनविषयमिदं वाक्यं न तु मोक्षपरमिति परिहरति, जीवेति ।

**जीवापेतं वाव किल शरीरं म्रियते न सः ।**
**इत्यत्र न विमोक्षोऽर्थः किंतु लोकान्तरे गतिः ॥ ४१ ॥**

उक्तश्रुतौ विमोक्ष आत्यन्तिकनिश्रेयसरूपो विशेषमोक्षोऽर्थो न, किंतु पुण्यपापफलानुभवयोग्यस्य देहान्तरस्य प्राप्तये स्वर्गादिलोकान्तरे गतिः गमनमर्थः ॥ ४१ ॥

ननु जीवस्य विकारस्वभात्वे अहं ब्रह्मास्मीत्यविकारिब्रह्मैक्यज्ञानं नोदेतीत्याशंक्याह, नेति ।

**नाहं ब्रह्मेति बुध्येत स विनाशीति चेन्न तत् ।**
**सामानाधिकरण्यस्य बाधायामपि संभवात् ॥ ४२ ॥**

विनाशी नाशशीलः स जीवः अहं ब्रह्मेति न बुध्येत न जानीयात् । विकार्यविकारित्वरूपविरुद्धधर्माक्रान्तयोर्जीवब्रह्मणोरेकत्वासंभवादिति चेन्न । मुख्यसामानाधिकरण्यस्य बाधायामभावेऽपि सामानाधिकरण्यस्य संभवात् अहं

ब्रह्मेत्यवगन्तुं सुशकमेव। व्यवहारप्रयोजकं सामानाधिकरण्यं द्विविधं मुख्यं गौणं चेति। सर्वथाऽभेदे मुख्यं सामानाधिकरण्यम्। उत्तरकालं विरुद्धांशस्य सत्यां बाधायां विद्यमानं सामानाधिकरण्यं गौणम्। प्रकृते अहंब्रह्मास्मीत्यत्र अहंकाराद्यवच्छिन्नस्य जीवस्य ब्रह्मणाऽभेदाभावेऽपि विद्ययाऽहंकारादेर्विरुद्धांशस्य बाधायां ब्रह्माभेदस्य सत्त्वादौपचारिकं सामानाधिकरण्यम्। तादृशसामानाधिकरण्यमादाय "अहं ब्रह्मास्मी"ति व्यवहार उपपद्यत इतिभावः ॥ ४२ ॥

बाधसामानाधिकरण्येन वाक्यार्थज्ञानप्रकारनिरूपणम्।

उक्तमर्थं दृष्टान्तप्रदर्शनेन विशदयति, य इति।

**योऽयं स्थाणुः पुमानेष पुंधिया स्थाणुधीरिव।**
**ब्रह्मास्मीति धियाऽशेषाहंबुद्धिर्निवर्त्यते ॥ ४३ ॥**

पुरोवर्तिनं पुरुषं तमसि पश्यता याऽयं पुरोवर्ती स्थाणुरिति भ्रान्त्या संभाव्यते। एष पुमानित्याकारिकया पुंधिया स्थाणुधीरिव, यथा स्थाणुत्वविशिष्टधीः निवर्त्यते तथा नाहं जीवः किंतु ब्रह्मास्मीति धियाऽशेषाहंबुद्धिः अहंत्वविशिष्टा बुद्धिः निवर्त्यतेऽपाक्रियते। यथा स्थाणुरयमिति स्थाणुत्वविशिष्टव्यक्तिविषयकं ज्ञानं प्रथमतो जायते। अनंतरमाप्तवाक्यदिना एष पुमानिति पुंस्त्वविशिष्टविषयकज्ञानेन जायमानः पूर्वज्ञानस्य बाधो व्यक्त्यंशे पर्यवसितुमनर्हः स्थाणुत्वांशे पर्यवस्यति। तथा प्रकृतेऽप्यहं ब्रह्मास्मीति ज्ञानस्य ब्रह्मास्मीति ज्ञानेन जायमानो बाधः व्यक्त्यंशे पर्यवसितुमनर्हः विशेषणीभूताहंत्वाद्यंशे पर्यवस्यति। तदानींतनाभेदमादाय सर्वत्र सामानाधिकरण्येन व्यवहार इति भावः ॥ ४३ ॥

सुरेश्वराचार्यचरणैरप्येवमेवोक्तमित्याह, नैष्कर्म्येति।

**नैष्कर्म्यसिद्धावप्येवमाचार्यैः स्पष्टमीरितम्।**
**सामानाधिकरण्यस्य बाधार्थत्वमतोऽस्तु तत् ॥ ४४ ॥**

आचार्यैः सुरेश्वरैः। अतोऽहंब्रह्मास्मीति वाक्ये सामानाधिकरण्यस्य तद्बाधार्थत्वमस्तु इतिनैष्कर्म्यसिद्धावीरितम्। ब्रह्मण्यहंपदार्थसामानाधिकरण्येन

प्रयोगः सामानाधिकरण्यविघटकाहंत्वादिबाधफलकः ब्रह्मात्मावगत्यनन्तरं अहंपदार्थस्य सामानाधिकरण्यस्य बाधनार्थं अहं ब्रह्मास्मीति वाक्येऽहंशब्दस्य प्रयोग इति-भावः ॥ ४४ ॥

एवं सामानाधिकरण्येन लोकव्यवहारदर्शनेऽपि श्रौतस्य तादृशव्यवहार-स्यादर्शनात् वैदिकानामस्माकं भवदुक्तौ न विश्वास इत्याशंकां श्रौतव्यवहार प्रदर्शनेने परिहरति, सर्वमिति ।

सर्वं ब्रह्मेति जगता सामानाधिकरण्यवत् ।
अहं ब्रह्मेति जीवेन सामानाधिकृतिर्भवेत् ॥ ४५॥

"सर्वं खल्विदं ब्रह्म" (छां. ३. १४. १.) "इदं ब्रह्मेदं सर्वं" (बृ. २.५.६.) मित्यादिश्रुतिषु सर्वं जगत् ब्रह्मेति विशेषणांशबाधकालिकाभेदमादाय जगता सा-मानाधिकरण्यसिद्धिः संभवति । तद्वत् "अहं ब्रह्म"ति वाक्ये विनाशिनो जीवस्य अविनाशिना ब्रह्मणा सह सामानाधिकृतिर्भवेत् ॥ ४५ ॥

विवरणाचार्यकृतमुख्यसामानाधिकरण्यविवरणम् ।

नन्वेवं विवरणकाराणां बाधसामानाधिकरण्यनिराकरणप्रयासो विफल एव स्यादित्याशंक्य तदाशयं विवृणोति, सामानाधिकरण्येति ।

सामानाधिकरण्यस्य बाधार्थत्वं निराकृतम् ।
प्रयत्नतो विवरणे कूटस्थस्य विवक्षया ॥ ४६ ॥

अहं ब्रह्मास्मीत्यत्र अहमिति शब्देन कूटस्थस्य विवक्षया कूटस्थो बोधित इति वक्तुमिच्छया प्रयत्नतो विवरणे ग्रन्थे अहं ब्रह्मेति शब्दयोः सामानाधिकर-ण्यस्य बाधार्थत्वं निराकृतम् । यदि बाधसामानाधिकरण्यमभ्युपगच्छेद्विवरणका-रस्तदा तद्विवक्षितं सामानाधिकरण्यबलादहंशब्दस्य कूटस्थपरत्वं न सिध्येत् । जीवपरत्वेऽपि तत्र बाधसामानाधिकरण्योपपत्तेः । जीवपरत्वाभ्युपगन्तॄणामस्माकं बाधसामानाधिकरण्याभ्युपगमे न काऽपि क्षतिरिति भावः ॥ ४६ ॥

अहंशब्दस्य विवरणकाराणामभिप्रेतमर्थं विशदयति, शोधित इति ।

शोधितस्त्वंपदार्थो यः कूटस्थो ब्रह्मरूपता ।

तस्य वक्तुं विवरणे तथोक्तमितरत्र च ॥ ४७ ॥

शोधता बुद्ध्या विवेचितस्त्वंपदार्थः तत्त्वमसीत्यत्र त्वंपदशोधितो यः कूटस्थो विद्यते तस्य ब्रह्मरूपतां वक्तुं विवरणे इतरत्र च तथा बाधासामानाधिकरण्यनिरासपूर्वकं मुख्यसामानाधिकरण्यमुक्तम् ॥ ४७ ॥

कूटस्थब्रह्मशब्दार्थविचारः ।

कूटस्थस्य ब्रह्मैक्यबुबोधयिषया कूटस्थशब्देन विवक्षितमर्थं दर्शयति, देहेति ।

देहेन्द्रियादियुक्तस्य जीवाभासभ्रमस्य या ।
अधिष्ठानचितिः सैषा कूटस्थोऽत्र विवक्षिता ॥ ४८ ॥

देहेन्द्रियादियुक्तस्य स्थूलसूक्ष्मशरीरयुक्तस्य जीवाभासभ्रमस्य चिदाभास इत्ययथार्थज्ञानस्य याऽधिष्ठानचितिः चैतन्यं सैषाऽत्र अहंब्रह्मास्मीति स्थले कूटस्थ इति विवक्षिता ॥ ४८ ॥

तत्र ब्रह्मशब्दस्याभिप्रेतमर्थमाह, जगदिति ।

जगद्भ्रमस्य सर्वस्य यदधिष्ठानमीरितम् ।
त्रय्यन्तेषु तदत्र स्याद्ब्रह्मशब्दविवक्षितम् ॥ ४९ ॥

सर्वस्य जगद्भ्रमस्य सर्वं जगत्सत्यमिति मिथ्याज्ञानस्य यदधिष्ठानमाधारः इति त्रय्यन्तेषु ऋग्यजुस्सामात्मकवेदराशेरन्तेषु निश्चितार्थेषूपनिषत्सु ईरितं तदधिष्ठानमत्रास्मिन् वाक्ये ब्रह्मशब्देन विवक्षितम् ॥ ४९ ॥

ब्रह्मणि जीवस्यारोपितत्वविचारः ।

एवं परे ब्रह्मणि कृत्स्नस्य जगतः आरोपितत्वे तदन्तःपातिनो जीवस्याप्यारोपितत्वं कैमुतिकसिद्धमित्याह, एतस्मिन्निति ।

एतस्मिन्नेव चैतन्ये जगदारोप्यते यदा ।
तदा तदेकदेशस्य जीवाभासस्य का कथा ॥ ५० ॥

एतस्मिन्नेव कूटस्थाभिन्ने चैतन्ये परे ब्रह्मणि यदा अशेषं जगदारोप्यते

तदा तदेकदेशस्य जगत एकांशभूतस्य जीवाभासस्य का कथा ? सोऽप्यारोपित-एवेति प्रत्येकं किमु वक्तव्यम् ? ॥ ५० ॥

ननु जगदधिष्ठानभूतस्य चैतन्यस्यैकत्वे तत्त्वंपदार्थयोरभेदात्तयोः सह प्रयोगासंभव इत्याशंक्याह, जगदिति ।

**जगत्तदेकदेशाख्यसमारोप्यस्य भेदतः ।**
**तत्त्वंपदार्थौ भिन्नौ स्तो वस्तुतस्त्वेकता चितेः ॥ ५१ ॥**

जगत्तदेकदेशाख्यसमारोप्यस्य जगदिति तदेकदेश इति चाख्या यस्य तस्य समारोप्यरूपस्य भेदतो भेदमादाय तत्त्वंपदार्थौ कूटस्थजीवौ भिन्नौ स्तः । वस्तुतः चितेरधिष्ठानभूताया एकतैव । विशेष्यांशैक्येऽपि विशेषणीभूतारोप्यांशमादाय तयोर्भिन्नार्थत्वान्नीलो घट इतिवन्न पर्यायतेति भावः ॥ ५१ ॥

ननु जीवस्य जगदन्तःपातित्वोक्तिरसंगता । तस्यारोप्यधर्मवत्त्वानुपलंभेनारोपितत्वादित्याशंक्याह, कर्तृत्वेति ।

**कर्तृत्वादीन् बुद्धिधर्मान् स्फूर्त्याख्यां चात्मरूपताम् ।**
**दधद्विभाति पुरत आभासोऽतो भ्रमो भवेत् ॥ ५२ ॥**

आभासश्चिदाभासः कर्तृत्वादीन् कर्तृत्वभोक्तृत्वप्रमातृत्वादिबुद्धिधर्मान् अनृतानारोप्यमाणान् स्फूर्त्याख्यां प्रकाशस्वरूपामात्मरूपतां सत्यभूतां च दधत्पुरतो विस्पष्टं विभाति । अत आभासो भ्रमः कल्पितो भवेत् । आरोप्यमाणधर्मवत्त्वादारोपित एव । अत आरोपितजगदन्तःपातित्वं जीवस्य नासंगतमिति भावः ॥५२॥

भ्रमस्वरूपनिवारणाविचारः ।

बुद्ध्याभासादीनां विभागनिर्णयासक्तिरेवास्य भ्रमस्य कारणमित्याह, केति ।

**का बुद्धिः कोऽयमाभासः को वाऽऽत्माऽत्र जगत्कथम् ।**
**इत्यनिर्णयतो मोहः सोऽयं संसार इष्यते ॥ ५३ ॥**

बुद्धिः का ? किं लक्षणा, कोऽयमाभासः ? चिदाभासः किंस्वरूपः, आत्मा कः ? अत्रासिन्नात्मनि जगत्कथमारोप्यते ? इत्यनिर्णयतः निश्चयाभावात्

यो मोहो विद्यते साऽयं संसारो भ्रमस्वरूप इष्यते ॥ ५३ ॥

बुद्ध्यादेर्मिथ्यास्वरूपविवेचनया यो ज्ञानी भ्रमोपमर्दनं करोति स एव तत्त्वविदित्याह, बुद्धीति ।

बुद्ध्यादीनां स्वरूपं यो विविनक्ति स तत्त्ववित् ।
स एव मुक्त इत्येवं वेदान्तेषु विनिश्चयः ॥ ५४ ॥

स्वरूपं मिथ्यात्वरूपं, मुक्तस्संसारादित्यर्थः । स्पष्टमन्यत् ॥ ५४ ॥

ननु सर्वसंसारस्य भ्रममूलकत्वात्तत्कल्पितो जीवोऽपि मिथ्यैव भवति । तथा सति न बंधः । बंधाभावे न बद्धः । तदभावे कस्य प्रयोजनायायं मोक्षशास्त्रारंभ इत्यादिकुतर्का अवश्यं निरस्या इत्याह, एवमिति ।

एवं च सति बंधः स्यात्कस्येत्यादिकुतर्कजाः ।
विडंबना दृढं खंड्याः खंडनोक्तिप्रकारतः ॥ ५५ ॥

एवं सति सर्वस्य संसारस्य तदन्तःपातिनो जीवस्य च मिथ्यात्वे सति बंधः कस्य स्यात् ? इत्यादिकुतर्कजाः कुत्सितयुक्तिप्रभवाः विडंबनाः परिहासाः खंडनोक्तिप्रकारतः खंडनखाद्योक्तयुक्त्यनुसारतः दृढं खंड्याः परिहर्तव्याः॥ ५५ ॥

पुराणेषु कूटस्थविवेचनाप्रकारवर्णनम् ।

कूटस्थबुद्ध्यादिभ्यो विवेचने पुराणप्रदर्शिता युक्तीरपि श्लोकत्रयेण दर्शयति, वृत्तेरिति ।

वृत्तेस्साक्षितया वृत्तिप्रागभावस्य च स्थितः ।
बुभुत्सायास्तथाऽज्ञोऽस्मीत्याभाताज्ञानवस्तुनः ॥ ५६ ॥

असत्यालंबनत्वेन सत्यः सर्वजडस्य तु ।
साधकत्वेन चिद्रूपः सदा प्रेमास्पदत्वतः ॥ ५७ ॥

आनंदरूपः सर्वार्थसाधकत्वेन हेतुना ।
सर्वसंबंधवत्त्वेन संपूर्णः शिवसंज्ञितः ॥ ५८ ॥

वृत्तेः कामादिबुद्धिवृत्तेः, वृत्तिप्रागभावस्य, बुभुत्सायाः जिज्ञासायाः, तथा अज्ञोऽस्मीत्याभाताज्ञानवस्तुनः अज्ञोस्मीत्यनुभवविषयभावरूपाज्ञानस्य च, इदमुपलक्षणमन्तःकरणस्यापि, साक्षितया स्थितः यः साक्षी स तद्भिन्नः यस्तु न भिद्यते स न तत्साक्षी यथा वृत्त्यादीतिव्यतिरेकेण दृष्टान्तो बोध्यः। एतेन वाक्येन कूटस्थस्य वृत्त्यादिभ्यो भेदेऽनुमानं दर्शितम् ॥ ५६ ॥

सः साक्षी शिवः असत्यालंबनत्वेन, असत्यस्य जगतः आलंबनमधिष्ठानं तस्य भावेन सत्यः सत्यस्वरूपः। अनेन साक्षी शिवस्सत्यः, असत्यजगदधिष्ठानत्वात्, असत्यरजताधिष्ठानव्यावहारिकसत्यशुक्तिवदित्यनुमानमुक्तम्। सर्वजडस्य तु साधकत्वेन प्रकाशकत्वेन, चिद्रूपः, अनेन साक्षी शिवश्चिद्रूपः, सर्वजडावभासकत्वात्। यश्चिद्रूपो न भवति स सर्वजडावभासकोऽपि न भवति यथा घटादीत्यनुमानमुक्तम्। सदा प्रेमास्पदत्वतः प्रेमविषयत्वादानंदरूपः। अनेन शिवः परमानंदरूपः परप्रेमास्पदत्वात्, यन्नैवं तन्नैवं यथा घटादीत्यनुमानमुक्तम् ॥ ५७ ॥

शिवसंज्ञितः शिव इति नाम्ना वर्णितः चिद्रूपः सर्वार्थसाधकत्वेन सर्वजडपदार्थप्रकाशकत्वेन हेतुना सर्वसंबंधवत्त्वेन सर्वैरस्य संबंधोऽस्तीति हेतुना संपूर्णः। अनेन अयं संपूर्णः, सर्वसंबंधित्वात्, गगनवदित्यनुमानमुक्तम्। अयं सर्वसंबंधी, सर्वावभासकत्वात्, यन्नैवं तन्नैवं यथा प्रदीपादीत्यानुमानेन पूर्वानुमाने सर्वसंबंधित्वरूपहेतुस्साध्यः ॥ ५८ ॥

पूर्वोक्तश्लोकत्रयार्थमुपसंहरति, इतीति।

**इति शैवपुराणेषु कूटस्थः प्रविवेचितः।**
**जीवेशत्वादिरहितः केवलः स्वप्रभः शिवः ॥ ५९ ॥**

इत्येवं शैवपुराणेषु स्कांदवाय्वादिषु जीवेशत्वादिरहितः मायाकल्पितजीवेशभावरहितः केवलोऽद्वितीयः स्वप्रभः स्वप्रकाशः शिवो मङ्गलरूपः कूटस्थः प्रविवेचितः ॥ ५९ ॥

जीवेश्व भेदविचारः

जीवेशत्वादिराहित्ये तयोर्मायाकल्पितत्वमेव कारणमिति चित्रदीपे पंचपंचाशदुत्तरशततमे श्लोके तृप्तिदीपे तृतीयस्मिन् श्लोके चोक्तमर्थं स्मारयति,

मायेति

मायाभासेन जीवेशौ करोतीति श्रुतत्वतः ।
मायिकावेव जीवेशौ स्वच्छौ तौ काचकुंभवत् ॥ ६० ॥

स्पष्टः पूर्वार्धः । जीवेशयोर्मायाकल्पितत्वे देहादिभ्यो वैलक्षण्यं न स्यादित्याशंक्याह, स्वच्छाविति । काचकुंभः पार्थिवोऽपि साधारणकुंभाद्विलक्षणो यथा भाति स्वच्छत्वात्, तद्वत् तौ जीवेशौ मायिकावपि स्वच्छौ अतो वैलक्षण्येन भासेते इत्यर्थः ॥ ६० ॥

ननु घटकाचकुंभोपादानभूतयोर्मृद्विशेषयोर्वैलक्षण्यात् तयोरपि वैलक्षण्यं न्याय्यमेव । मायायास्त्वेकत्वात् तत्कार्यभूतयोर्जीवेश्वरयोः वैलक्षण्यमसमंजसमित्याशंक्याह, अन्नेति ।

अन्नजन्यं मनो देहात्स्वच्छं यद्वत्तथैव तौ ।
मायिकावपि सर्वस्मादन्यस्मात् स्वच्छतां गतौ ॥ ६१ ॥

यथाऽन्नजन्यं मनः अन्नकार्यभूतात् देहात्तदपेक्षया स्वच्छं तथा मायिकावपि जीवेशौ मायाकल्पितात् सर्वस्मादन्यस्माज्जगतः स्वच्छतां गता ॥ ६१ ॥

तयोश्चिद्रूपमपि मायाकल्पितमेवेत्याह, चिद्रूपत्वमिति ।

चिद्रूपत्वं च संभाव्यं चित्त्वेनैव प्रकाशनात् ।
सर्वकल्पनशक्ताया मायाया दुष्करं न हि ॥ ६२ ॥

चित्त्वेनव चैतन्यरूपेणैव प्रकाशनात् तयोर्जीवेश्वरयोः चिद्रूपत्वं च संभाव्यम् । स्पष्टमन्यत् ॥ ६२ ॥

मायाया जीवेश्वरकल्पने न किमप्याश्चर्यमित्यनुभवं दर्शयति, अस्मदिति ।

अस्मन्निद्रापि जीवेशौ चेतनौ स्वप्नगौ सृजेत् ।
महामाया सृजत्येताविल्याश्चर्यं किमत्र ते ॥ ६३ ॥

निद्राशब्दोऽत्र सौषुप्तिकमायापरः । स्पष्टमन्यत् ॥ ६३ ॥

ईशस्यापि मायाकल्पितत्वे सोऽपि जीव इवाज्ञः स्यादित्याशंक्य तस्य सर्वज्ञत्वादिकमपि मायाकल्पितमित्याह, सर्वज्ञेति ।

सर्वज्ञत्वादिकं चेशे कल्पयित्वा प्रदर्शयेत् ।
धर्मिणं कल्पयेद्याऽस्याः को भारो धर्मकल्पने ॥ ६४ ॥

माया ईशे सर्वज्ञत्वादिकं कल्पयित्वा प्रदर्शयेत् । तत्रोपपत्तिमाह, धर्मिणमिति । या माया धर्मिणमीशं कल्पयेदस्याः धर्मकल्पने को भारः ? ॥ ६४ ॥

कूटस्थस्य सत्यत्वनिरूपणम् ।

ननु कूटस्थोऽपि मायाकल्पितः स्यादिति शंकां वारयति, कूटस्थ इति ।

कूटस्थेऽप्यतिशंका स्यादिति चेन्मातिशंक्यताम् ।
कूटस्थमायिकत्वे तु प्रमाणं न हि विद्यते ॥ ६५ ॥

माऽतिशंक्यताम् प्रमाणमतिक्रम्य शंकां मा कुर्वीत । अतिशंकाया अकरणे कारणमाह, कूटस्थेति । कूटस्थमायिकत्वे कूटस्थस्य मायाकल्पितत्वे प्रमाणं नहि विद्यते स्पष्टमन्यत् ॥ ६५ ॥

न केवलं कूटस्थमायिकत्वे प्रमाणाभावः, किन्त्वमायिकत्वे तस्य प्रमाणबाहुल्यं च दर्श्यत इत्याह, वस्तुत्वमिति ।

वस्तुत्वं घोषयन्त्यस्य वेदान्ताः सकला अपि ।
सपत्नरूपं वस्त्वन्यन्न सहन्तेऽत्र किं च न ॥ ६६ ॥

स्पष्टं पूर्वार्धम् । वस्तुत्वं पारमार्थिकसत्यत्वम् । अत्र कूटस्थपारमार्थिकत्वविषये सपत्नरूपं विपक्षभूतमन्यद्वस्तु किंचन ते न सहन्ते । "सदेव सोम्येदमग्र आसीदि"त्यादिश्रुतेः (छां. ६. २. १.) ॥ ६६ ॥

मुमुक्षूणां श्रुतिरेव शरणम् ।

मुमुक्षुजनोपयोगिन्यस्मिन् ग्रन्थे श्रुतीनां स्पष्टार्थविचारणैवेष्टा न तु कर्कशतर्कोपन्यास इत्याह, श्रुत्यर्थमिति ।

श्रुत्यर्थं विशदीकुर्मो न तर्काद्वच्मि किंचन ।

तेन तार्किकशंकानामत्र कोऽवसरो वद ॥ ६७ ॥

वादप्रतिवादकोलाहलविमुखानां मुमुक्षूणां श्रुत्यर्थं श्रुतेरभिप्रेतमर्थं विशदीकुमः । तस्मान्नायमवसरस्तर्कशास्त्रपांडितीप्रदर्शनायेति भावः ॥ ६७ ॥

श्रुत्यर्थानुकूलं तर्कमालंब्य तदर्थग्रहणे निष्पन्नमर्थमाह, तस्मादिति ।

तस्मात्कुतर्कं संत्यज्य मुमुक्षुः श्रुतिमाश्रयेत् ।
श्रुतौ तु माया जीवेशौ करोतीति प्रदर्शितम् ॥ ६८ ॥

तस्मात् कुतर्कं श्रुतिप्रमाणापेतं तर्कं संत्यज्य मुमुक्षुर्निरतिशयसुखाभिलाषी श्रुतिमाश्रयेत् । श्रुतिरेव तस्य शरणं न तु घटपटेन्धनबहुलस्तर्क इत्यर्थः । प्रस्तुतमाह, श्रुताविति । माया जीवेशौ करोतीति श्रुतौ प्रदर्शितम् । न तु कूटस्थमित्यतः कूटस्थं प्रति मातिशंक्यतामिति भावः ॥ ६८ ॥

पूर्वग्रंथोदाहृतां जीवेशकृतसृष्टिं विभजति, ईक्षणेति ।

ईक्षणादिप्रवेशान्ता सृष्टिरीशकृता भवेत् ।
जाग्रदादिविमोक्षान्तः संसारो जीवकर्तृकः ॥ ६९ ॥

चित्रदीपे त्रयोदशोत्तरद्विशततमे श्लोके, तृप्तिदीपे चतुर्थे च व्याख्यातपूर्वोऽयं विस्तरेण ॥ ६९ ॥

कूटस्थस्यासंगत्वादिकमपि श्रुतिप्रतिपादितत्वान्मुमुक्षूणां मननयोग्यमित्याह, असंग इति ।

असंग एव कूटस्थः सर्वदा नास्य कश्चन ।
भवत्यतिशयस्तेन मनस्येवं विचार्यताम् ॥ ७० ॥

कूटस्थः सर्वदा असंगः । अस्य कश्चन जन्ममृत्युजराद्यतिशयो विकारो न भवतीति श्रुतौ प्रदर्शितम् । तेन कारणेन कुतर्कं संत्यज्य श्रुतिमश्रित्यैवं मनसि विचार्यताम् ॥ ७० ॥

एवं विचारे फलमाह, नेति ।

न निरोधो न चोत्पत्तिः न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ७१ ॥

चित्रदीपे पंचत्रिंशदुत्तरद्विशततमे श्लोके निरूपितोऽस्यार्थः ॥ ७१ ॥

श्रुतिबोधिततत्त्वनिर्णयः ।

ननु जगज्जीवेश्वरा अपि श्रुतिषु तत्र तत्र श्रूयन्ते इत्याशंक्य वागाद्यतीतस्य परब्रह्मणः सुखावबोधनायेत्याह, अवागिति ।

अवाङ्मनसगम्यं तं श्रुतिर्बोधयितुं सदा ।
जीवमीशं जगद्वापि समाश्रित्य प्रबोधयेत् ॥ ७२ ॥

अवाङ्मनसगम्यं तं परमात्मानं बोधयितुं सदा जीवमीशं जगद्वापि प्रतीयमानं वस्तु समाश्रित्य प्रबोधयेत् । ज्ञातवस्तुद्वाराऽज्ञातवस्त्ववगमनं भवतीति भावः ॥ ७२ ॥

ननु जगज्जीवेशादीनाश्रित्य परमार्थप्रबोधेऽपि श्रुतीनामनेकप्रकारा बोधनारीतिः । "जीवेशावाभासेन करोती"त्याभासवाद एकः । "रूपं रूपं प्रतिरूपं बभूवे"ति प्रतिबिंबवादोऽन्यः । "घटसंवृतमाकाशं नीयमाने घटे यदा । घटो नीयेत नाकाशस्तद्वज्जीवो नभोपमः," इत्यवच्छिन्नवादोऽपरः, तस्मात् किं नैकरूपमुपदिशति श्रुतिरित्याशंक्य सोपदेश्यबुद्धिवैशद्यमनुधावति । न च भिन्नमार्गप्रदर्शनेन तत्त्वबोधने किंचिदप्यस्या विगानमित्याह, ययेति ।

यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि ।
सा सैव प्रक्रियेह स्यात्साध्वीत्याचार्यभाषितम् ॥ ७३ ॥

यया यया प्रक्रियया बोधनरीत्या भिन्नरुचीनां जिज्ञासूनां पुंसां प्रत्यगात्मनि व्युत्पत्तिः श्रवणमननादिना विशेषेण ज्ञानोत्पत्तिः भवेत् सा प्रक्रियैव इह साध्वी विषयावगमे साध्वी भवेदित्याचार्यभाषितं सुरेश्वरोक्तिः ॥ ७३ ॥

ननु श्रुतिप्रमाणैक्ये कथं तत्प्रमाणप्रवृत्तानां वैदिकानामपि मतवैमत्यमित्यत आह, श्रुतीति ।

श्रुतितात्पर्यमखिलमबुद्ध्वा भ्राम्यते जडः ।
विवेकी त्वखिलं बुद्ध्वा तिष्ठत्यानंदवारिधौ ॥ ७४ ॥

श्रुतितात्पर्यमेकवाक्यतया प्रवृत्तानामशेषश्रुतीनां तात्पर्यमखिलं समग्रतया

उपक्रमादिलिंगैरेकवाक्यतया अबुद्ध्वा प्रामाण्यबुद्ध्या श्रुतौ प्रवृत्तोऽपि जडः संचित-फलादपक्वमनस्कः अद्वैतापेतमार्गे द्वैतदूषितेऽपारे संसारे निमग्नः पारमन्विच्छन् इतस्ततो भ्राम्यति, जन्मान्तरसुकृतकृतोपचयस्तद्विलक्षणो विवेकी त्वखिलं श्रुत्यर्थ-मेकवाक्यतया बुद्ध्वा आनंदवारिधौ "आनंदो ब्रह्मेति व्यजानात्" (तै. ३. ६.) "रसो वै सः" (तै. २. ७.) इत्यादिश्रुतिशतप्रतिपादिताद्वैताखंडरसानंदसुधासिंधौ तिष्ठति प्लवते ॥ ७४ ॥

एवंभूतस्य विवेकिनो न कोऽपि मायाकृतातंक इति दृष्टान्तमुखेनाह, मायेति ।

**मायामेघो जगन्नीरं वर्षत्येष यथा तथा ।**
**चिदाकाशस्य नो हानिर्नवा लाभ इति स्थितिः ॥७५॥**

यथा मेघो नीरं वर्षति तथा माया जगद्वर्षति । यथा वर्षेणाकाशस्य नो-हानिर्नवा लाभस्तथा जगता चितो नो हानिर्नवा लाभ इति स्थितिः । मेघमंडल-मतीत्य वर्तमानस्य वर्षप्रयुक्ताकुलीभावाभाव इव जगत्कृताकुलीभावो नास्तीति भावः ॥ ७५ ॥

फलकथनेन प्रकरणमुपसंहृति, इममिति ।

**इमं कूटस्थदीपं योऽनुसंधत्ते निरन्तरम् ।**
**स्वयं कूटस्थरूपेण दीप्यतेऽसौ निरन्तरम् ॥ ७६ ॥**

कूटस्थदीपं कूटस्थतत्त्वस्य दीपवत् प्रकाशकमिमं प्रकरणं यो निरन्तरमनि-शमनुसंधत्तेऽत्र विपुलतया प्रतिपादितमर्थं मनसि संयोजयत्यसौ ज्ञानी स्वयं कूटस्थ-रूपेण कूटवन्निर्विकारस्य प्रत्यगात्मनो रूपेण निरंतरं दीप्यते प्रकाश्यते ॥ ७६ ॥

इति
श्रीमत्परमहंसपरिव्राजकाचार्यशृंगेरीश्रीविरूपाक्षश्रीविद्याशङ्करपदमावेशप्रकाशित
जगद्गुरु श्रीकल्याणानन्दभारतीमान्ताचार्यात्यन्तप्रियान्तेवासिनात्रि
गोत्रसमुद्भूतेन **लिङ्गनसोमयाजिना** विरचितेयं कूटस्थदीप-
प्रकरणस्य कल्याणपीयूषव्याख्या समाप्ता ॥

इति कूटस्थदीपप्रकरणम् ।

*

अथ

# कल्याणपीयूषव्याख्यासमेता पंचदशी

## ध्यानदीप प्रकरणम् ॥ ९ ॥

संवादिभ्रमस्य मुक्तिफलकत्वकथनम् ।

एवंविचारेण साक्षात्कर्तुमसमर्थानामपि फलप्राप्त्युपायं विवरीतुमिदं प्रकरणमारभते, संवादीति ।

**संवादिभ्रमवद्ब्रह्मतत्त्वोपास्त्यापि मुच्यते ।**
**उत्तरे तापनीयेऽतः श्रुतोपास्तिरनेकधा ॥ १ ॥**

संवादिभ्रमवत् स्वार्थाविरोधेन वदतीति संवादी, स चासौ भ्रमश्च तथाभूतः । अतस्मिन् तद्बुद्धिरिति भ्रमलक्षणा भ्रमज्ञानं तत्त्वतो विसंवदति । तथापि केषुचित्समयेषु भ्रमज्ञानप्रवृत्तोऽपीप्सितार्थमवाप्नोति, यथा मणिप्रभां दृष्ट्वा मणिभ्रमेण प्रवृत्तो जनो मणिं लभते एव; अतो मणिप्रभायां मणिबुद्धिरूपो भ्रमः संवादी भवति । अन्यत्र काचप्रभां दृष्ट्वा मणिबुद्ध्या प्रवृत्तः काचमेव लभते। अत्र काचप्रभायां मणिबुद्धिरूपो भ्रमो विसंवादी भवति । संवादिभ्रमवत् भ्रमज्ञानेनापि प्रवृत्तस्येप्सितार्थसिद्धिर्यथा, तद्वद्ब्रह्मतत्त्वोपास्त्या निर्गुणब्रह्मतत्त्वस्य उपास्त्या लक्ष्यस्य समीपेऽस्तित्वमुपास्तिः, यत्किंचिदालंबनेन ध्यानमित्यर्थः । "यथाशास्त्रसमर्थितं किंचिदालंबनमुपादाय तस्मिन् समानचित्तवृत्तिसंतानकरणं तद्विलक्षणप्रत्ययानंतरितमुपासने"ति श्रीभगवत्पादाः, आप्तोपदेशं विश्वस्य वृत्त्यन्तरानन्तरितैः प्रत्ययैर्विचाराशक्तेन श्रद्धालुना कृता चिन्तोपासनेत्यधस्ताद्वर्णिता, (९–७९) । एवं रूपयोपास्त्याऽपि मुच्यते । नेदं स्वकपोलकल्पितं । किन्तु श्रुतिप्रसिद्धमित्याह, उत्तरे इति । अतः उत्तरे तापनीये नृसिंहोत्तरतापनीयश्रुतावोंकारस्योपासना अनेकधा श्रुता ॥

ननु साक्षात्कार्यं परं ब्रह्म यत्किंचिदालंबनमादायोपासितव्यमित्युक्तम् । कथमुपासना कर्तव्या, ब्रह्मदृष्ट्यालंबनं वस्तूपास्यते, आहोस्वित्, तद्दृष्ट्या ब्रह्मो-

पास्यते? कुतोऽयं प्रश्नः? "आदित्यं ब्रह्मेत्युपासीत", इत्यत्र आदित्यब्रह्मणोः सामानाधिकरण्येनोभयोर्विशेषाभावात्। उच्यते—ब्रह्मदृष्ट्यैव अन्यदालंबनमुपासितव्यम्। न ह्यविकारेऽनन्ते ब्रह्मणि सर्वैः पुंभिः शक्या बुद्धिः स्थापयितुं मन्दमध्यमोत्तमबुद्धित्वात् पुंसां। अत्यन्तानारूढनिर्गुणब्रह्मभावानां विचारचतुरेतराणामुपकारकतया इयमुपास्तिर्विधीयते। उत्कृष्टदृष्ट्या निकृष्टोपास्तिःफलवतीति लोकप्रसिद्धा। यथा राजदृष्ट्या सेवितो राजपुरुषः प्रसन्नो भवति। निकृष्टदृष्टिप्रतिष्ठितोत्कृष्टोपास्तिरनिष्टमेवप्रसूते, यथा राजपुरुषदृष्ट्या सेवितो राजा। "स य एवं विद्वानादित्यं ब्रह्मेत्युपास्ते" (छां ७. २. २.), "यः संकल्पं ब्रह्मेत्युपास्ते", (छां ७. ४. ३.) इत्याद्युपास्तिप्रतिपादकश्रुतिषु ब्रह्मशब्दसंवलितेतिशब्दसामर्थ्यादयमेवार्थः परिग्राह्यः। एवं सत्यकामत्वसत्यसंकल्पत्वाद्यपेतस्य कार्यब्रह्मण उपास्तिरपि फलं नियच्छति। "फलमत उपपत्तेः", (ब्र. सू. ३. २. ३८) इति सूत्रात्। ब्रह्मापि पृथिव्याद्युपाधिसंबंधात्तदाकारतामिव प्रतिपद्यते तदालम्बनो ब्रह्मण आकारविशेषोपदेश उपासनार्थो न विरुध्यते। किंत्वयं विशेषः। निर्गुणब्रह्मसाक्षात्कारमापन्नो जीवन्मुक्तो भवति। "न तस्य प्राणा उत्क्रामन्ते", (बृ. ४. ४. ६.) किंतु स्वोपादाने एव विलीयन्ते। अपरिपक्वोपासकस्तु मरणकाले वा ब्रह्मलोके वा मुक्तो ब्रह्मणा सह मुच्यते।

ननु निर्गुणब्रह्मदृष्ट्या प्रणवादिकमिव जीवादिकमप्युपास्यं स्यात्, तस्यापि ब्रह्मविकारित्वाविति चेन्न, उभयोरत्यन्तभिन्नधर्मत्वात्। नामरूपाद्यवच्छिन्नं जडात्मकं प्रतीकम्। तदनवच्छिन्नमत्यन्तविरुद्धस्वभावं परं निर्गुणं ब्रह्म। न हि नामरूपाद्युपमर्दनं विना ब्रह्मभावापत्तिरुपपद्यते। नायं सर्पः रज्जुरेवेति ज्ञाने सर्पबुद्धिरुपमृद्यते। न तथा प्रतीकस्य नामरूपोपमर्दनसिद्धिः। यस्योपास्यस्य यन्मात्रतया उपासना विधीयते तस्य तन्मात्रतयैवोपासना कर्तव्या। "न प्रतीके न हि सः" (ब्र. सू. ४. १. ४.) इति सूत्रादिति दिक् ॥ १॥

संवादिभ्रमप्रकाशकं वार्तिककारवाक्यं पठति, मणीति।

**मणिप्रदीपप्रभयोर्मणिबुद्ध्याऽभिधावतोः।**
**मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति ॥ २॥**

मणिप्रदीपप्रभयोर्मणेः प्रदीपस्य च प्रभयोः मणिबुद्ध्या मणिरिति बुद्ध्या तल्लाभायाभिधावतोः एको मणिप्रभां दृष्ट्वा मणिभ्रमेण प्रवृत्तः, अन्यः प्रदीपप्रभां दृष्ट्वा रक्तिमसाम्यान्मणिरिति भ्रान्त्या प्रवृत्तः। एवं मणिलिप्सया प्रवृत्तयोर्द्वयोरपि मणिं प्रति मिथ्याज्ञानाविशेषेऽप्यर्थक्रियां प्रति स्वाभीप्सितार्थलाभं प्रति विशेषो विद्यते। मणिप्रभायां भ्रम ईप्सितं मणिं प्रापयति, प्रदीपप्रभायां भ्रमस्तु न तथा ॥ २ ॥

उक्तं वार्तिकवचनं त्रिभिः श्लोकैर्विवृणोति, दीप इति।

**दीपोऽपवरकस्यान्तर्वर्तते तत्प्रभा बहिः।**
**दृश्यते द्वार्यथाऽन्यत्र तद्वद्दृष्टा मणेः प्रभा ॥ ३ ॥**

**दूरे प्रभा यं दृष्ट्वा मणिबुद्ध्याभिधावतोः।**
**प्रभायां मणिबुद्धिस्तु मिथ्याज्ञानं द्वयोरपि ॥ ४ ॥**

**न लभ्यते मणिर्दीपप्रभां प्रत्यभिधावता।**
**प्रभायां धावताऽवश्यं लभ्येतैव मणिर्मणेः ॥ ५ ॥**

दीपः अपवरकस्यान्तः राजसौधान्तर्गृहे रक्तिमादिविविधवर्णविरचिते वर्तते। तत्प्रभा सौधस्य बहिर्द्वारि मुग्धजनेन दृश्यते। अथ पक्षान्तरेऽन्यत्रापवरकान्तरे मणेः प्रभा तद्वत् बहिर्द्वार्यन्येन दृष्टा ॥ ३ ॥

एवं दूरे मणिदीपयोः प्रभाद्वयं दृष्ट्वा उभयत्र मणिबुद्ध्याऽभिधावतो-र्द्वयोरपि प्रभायां मणिबुद्धिस्तु मिथ्याज्ञानमेव ॥ ४ ॥

दीपप्रभां दृष्ट्वा मणिभ्रान्त्या प्रत्यभिधावता मुग्धेनेप्सितो मणिर्नलभ्यते। मणेः प्रभायां मणिबुद्ध्या धावताऽवश्यं मणिर्लभ्येत एव ॥ ५ ॥

अद्य संवादिविसंवादिभ्रमावुदाहरति, दीपेति।

**दीपप्रभामणिभ्रान्तिर्विसंवादिभ्रमः स्मृतः।**
**मणिप्रभा मणिभ्रान्तिः संवादिभ्रम उच्यते ॥ ६ ॥**

दीपप्रभामणिभ्रान्तिर्दीपप्रभायां मणिरिति भ्रमः स्वार्थासंपादकत्वाद्विसंवादिभ्रम इति स्मृतः। मणिप्रभामणिभ्रान्तिः स्वार्थसंपादकत्वात्संवादिभ्रम इत्युच्यते॥६॥

एवं प्रत्यक्षजन्यं संवादिभ्रमं विशदीकृत्य अनुमानजन्यं तं विशदयति, बाष्पमिति।

**बाष्पं धूमतया बुद्ध्वा तत्राङ्गारानुमानतः।**
**वह्निर्यदृच्छया लब्धः स संवादिभ्रमो मतः॥ ७॥**

हेमन्तादावनुभूयमानं हिमतुषारावरणं बाष्पं धूमतया धूम इति बुद्ध्वा तत्राङ्गारानुमानतः 'पर्वतो वह्निमान्, धूमवत्त्वा'दित्यनुमानरचनया प्रवृत्तेन यदृच्छयाऽकस्मात् वह्निर्लब्धः। एवं वह्निप्राप्तेः प्रयोजकीभूतो हैमंतप्रातःकालप्रालेये धूमभ्रमस्संवादिभ्रम इति मतः॥ ७॥

आगमिविषयसंवादिभ्रमं दर्शयति, गोदावरीति।

**गोदावर्युदकं गङ्गोदकं मत्वा विशुद्धये।**
**संप्रोक्ष्य शुद्धिमाप्नोति स संवादिभ्रमो मतः॥ ८॥**

गोदावर्युदकं गङ्गोदकमिति मत्वा भ्रान्त्या विशुद्धये शिरसि संप्रोक्ष्य शुद्धिमाप्नोति। गोदावर्युदकस्यापि विशुद्धिकारणत्वमागमप्रसिद्धम्। अतो गङ्गोदकप्रोक्षणफलमाप्नोति। तथापि गोदावर्युदकं गङ्गोदकमिति बुद्धिः भ्रम एव। फलकारीति स संवादिभ्रमो मतः॥ ८॥

आगमविषये उदाहरणान्तरमाह, ज्वरेणेति।

**ज्वरेणाप्तः सन्निपातं भ्रान्त्या नारायणं स्मरन्।**
**मृतः स्वर्गमवाप्नोति स संवादिभ्रमो मतः॥ ९॥**

ज्वरेण सन्निपातमाप्तः चित्तविक्षेपणात् भ्रान्त्याऽस्य भ्रान्तिरनेकधा संभवति, परमार्थतो नारायणं भगवत्त्वेनाबुद्ध्वा साधारणपुरुषत्वेन ज्ञानं भ्रान्तिः। यथा चैद्यादेः, बुद्ध्वापि शत्रुत्वेन ज्ञानं यथा कंसादेः, मित्रत्वेन वा ज्ञानं यथाऽर्जुनादेः, नारायणपदस्य पुत्रनामत्वेन ज्ञानमपि भ्रान्तिः यथाऽजामीलादेः, एवंविध-

भ्रान्त्या नारायणं स्मरन् मृतः स्वर्गमवाप्नोति । सेयं नारायणशब्दस्य पुत्रनामत्वादिभ्रान्तिः संवादिभ्रमः, स्वर्गफलकत्वात् ॥ ९ ॥

एवं संवादिभ्रमानामनेकत्वं लभ्यत इत्याह प्रत्यक्षस्येति ।

प्रत्यक्षस्यानुमानस्य तथा शास्त्रस्य गोचरे ।
उक्तन्यायेन संवादिभ्रमाः सन्ति हि कोटिशः ॥ १० ॥

स्पष्टोऽर्थः ॥ १० ॥

संवादिभ्रमेणेप्सितार्थलाभाभावे मृद्दारुशिलाद्युपासनानामुपनिषद्बोधितानामन्यासामुपासनानां च नैरर्थक्यापत्तिः स्यादित्याह, अन्यथेति ।

अन्यथा मृत्तिकादारुशिलाः स्युर्देवताः कथम् ।
अग्नित्वादिधियोपास्याः कथं वा योषिदादयः ॥ ११ ॥

अन्यथा संवादिभ्रमेणेप्सितार्थलाभाभावे देवत्वेन प्रतिदिनं पूज्यमानाः मृत्तिकादारुशिलाः, मृत्तिका पार्थिवलिंगं, दारु जगन्नाथः, शिला सालग्रामः, एताः कथं देवता देवत्वेन पूज्याः स्युः ? एवं कर्मकलापकलितमृदाद्युपासनायाः सार्थकतां प्रदर्श्य ततोऽप्युत्कृष्टायाश्छांदोग्योक्तपंचाग्न्याद्युपासनायाः सार्थकतां प्रदर्शयति, अग्नीति । योषिदादयः अग्नित्वादिधिया वा कथमुपास्या भवन्ति ? "योषा वा व गौतमाग्निः" (छां. ५, ४–५, ६, ७.), इत्यादिवाक्यैर्योषित्पुरुषपृथिवीपर्जन्यद्युलोकानामग्नित्वेनोपासना पंचाग्निविद्यायां विधीयते । अग्निधियोपास्तिस्संवादिभ्रमो भवति, "तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयती"ति (छां. ५. १०. १.) तत्फलत्वेनामृतत्वसिद्धेः श्रूयमाणत्वात् ॥ ११ ॥

एवमनेकलक्ष्यप्रदर्शनपूर्वकं निरूपितं संवादिभ्रमलक्षणं बोधनासौलभ्याय संक्षिपति, अयथेति ।

अयथावस्तुविज्ञानात्फलं लभ्यत ईप्सितम् ।
काकतालीयतः सोऽयं संवादिभ्रम उच्यते ॥ १२ ॥

अयथावस्तुविज्ञानात्, वस्त्वनतिक्रम्य यथावस्तु, अनतिक्रमार्थेन यथा-

शब्देन 'अव्ययं विभक्ती'त्यादिना समासः, तस्य विज्ञानं वस्तुनः स्वरूपज्ञानं, तत्र भवतीति तथाभूतं, तस्मात्, अतद्वस्तुबुद्धेरिति यावत्, ईप्सितं वांछितं फलं काकतालीयतः, काक इव तालमिव काकतालं, काकतालमिव काकतालीयम्। अत्र काकपदं काकागमनपरम्, तालफलं तालफलपतनपरम्, काकतालपदं काकतालसमागमप्रयोज्यकाककृततालफलोपभोगपरम्। अवितर्कितसंभवत्वं साधारणो धर्मः। एवं च यत्र फलमवितर्कितसम्भवं तत्र काकतालीयन्याय इति भावः। ततो लभ्यते सोऽयं संवादिभ्रम इत्युच्यते ॥ १२ ॥

संवादिभ्रमवत् ब्रह्मोपासनापीप्सितार्थप्रदेत्याह, स्वयमिति।

**स्वयं भ्रमोऽपि संवादी यथा सम्यक्फलप्रदः।**
**ब्रह्मतत्त्वोपासनापि तथा मुक्तिफलप्रदा ॥ १३ ॥**

स्पष्टोऽर्थः ॥ १३ ॥

ब्रह्म परोक्षमवगम्योपासना कर्तव्या।

एवं सति ब्रह्मस्वरूपं ज्ञात्वोपासना कर्तव्या उत अज्ञात्वेत्याकांक्षायां परोक्षमवगम्योपासितव्यमित्याह, वेदान्तेभ्य इति।

**वेदान्तेभ्यो ब्रह्मतत्त्वमखंडैकरसात्मकम्।**
**परोक्षमवगम्यैतदहमस्मीत्युपासते ॥ १४ ॥**

वेदान्तेभ्यः 'अस्ति ब्रह्मेति चेद्वेदे'त्यादिवेदान्तवाक्यानां गुरुमुखतः श्रवणादखंडैकरसात्मकं भेदत्रयशून्यमानंदरसघनं ब्रह्मतत्त्वं ब्रह्मणो यथार्थस्वरूपं परोक्षमवगम्य ज्ञात्वा साक्षात्कारासमर्थः पुरुषो ब्रह्मास्मीत्यहंब्रह्मोपासनयोपासते। ब्रह्मणोऽस्तित्वं शास्त्रेभ्योऽवगम्योपासना कर्तव्येति भावः ॥ १४ ॥

उपास्यब्रह्मतत्त्वस्य परोक्षज्ञानस्वरूपं निरूपयति, प्रत्यगिति।

**प्रत्यग्व्यक्तिमनुल्लिख्य शास्त्राद्विष्ण्वादिमूर्तिवत्।**
**अस्ति ब्रह्मेति सामान्यज्ञानमत्र परोक्षधीः ॥ १५ ॥**

प्रत्यग्व्यक्तिं प्रत्यगात्मानं साक्षिभूतमनुल्लिख्य अविषयीकृत्य "सत्यं ज्ञान-

मनन्तं ब्रह्मे"त्यादिश्रुतिप्रसिद्धं ब्रह्मास्तीति सामान्याकारं ज्ञानमविशेषज्ञानं, अत्रासिद्धवासनाप्रकरणे परोक्षधीरित्युच्यते। तत्रोदाहरणमाह, शास्त्रादिति। यथाशास्त्राद्विष्ण्वादिमूर्तिवत् विष्ण्वादिदेवतानां काचन मूर्तिः व्यक्त्युल्लेखनं विना शास्त्रप्रमाणादस्तीति धीर्विद्यते तद्वत् ॥ १५ ॥

शास्त्रप्रतिपादितानां विष्ण्वादिमूर्तीनां ज्ञानस्य कथं परोक्षत्वमुच्यते करचरणादिविशिष्टविग्रहविशेषप्रतीतेरित्याशंक्याह, चतुर्भुजेति।

चतुर्भुजाद्यवगतावपि मूर्तिमनुल्लिखन्।
अक्षैः परोक्षज्ञान्येव न तदा विष्णुमीक्षते ॥ १६ ॥

चतुर्भुजाद्यवतगतावपि, आदिशब्देन शंखचक्रगदादयः तेषां शास्त्रादवगतावपि ज्ञाने सत्यपि विष्ण्वादेः मूर्तिमक्षैः प्रत्यक्षतः अनुल्लिखन् अविज्ञाय केवलशास्त्रावगतज्ञानेन चतुर्भुजादिधरः कश्चिद्विग्रहवानस्तीति परोक्षज्ञान्येव भवति। तदा तादृग्ज्ञानसमये विष्णुमपरोक्षतया नेक्षते ॥ १६ ॥

ननु व्यक्त्युल्लेखमन्तरा परोक्षज्ञानं भ्रममूलकं स्यादित्याशंक्य शास्त्रजन्यत्वान्न तथात्वमित्याह, परोक्षत्वेति।

परोक्षत्वापराधेन भवेन्नाऽतत्त्ववेदनम्।
प्रमाणेनैव शास्त्रेण सत्यमूर्तेर्विभासनात् ॥ १७ ॥

परोक्षत्वापराधेन ज्ञानं परोक्षमिति न्यूनतामात्रेणातत्त्ववेदनमयथार्थज्ञानं न भवेत्। भ्रमो न भवतीत्यर्थः। तत्र कारणमाह, प्रमाणेति। प्रत्यक्षादिप्रमाणातीतविषयेषु प्रमाणेन ज्ञानसंपादनैकसाधनीभूतेन शास्त्रेणैव सत्यमूर्तेः वस्तुगत्या वैकुंठे विद्यमानायाः मूर्तेः विभासनात् ज्ञायमानत्वात्। अज्ञातविषयेषु शास्त्रमेव प्रमाणम्। नातस्तज्जन्यं ज्ञानं परोक्षत्वमात्रेण भ्रमो भवतीति भावः ॥ १७ ॥

तथैव शास्त्रप्रतिपादितं ब्रह्मणः सच्चिदानंदादिस्वरूपत्वं परोक्षज्ञानमेव। अपरोक्षसाक्षात्कारावश्यकीभूतप्रत्यक्त्वोल्लेखाभावादित्याह, सदिति।

सच्चिदानंदरूपस्य शास्त्राज्ज्ञानेऽप्यनुल्लिखन्।
प्रत्यंचं साक्षिणं तत्तु ब्रह्मसाक्षान्न वीक्षते ॥ १८ ॥

सच्चिदानंदरूपस्य परब्रह्मणः "सद्वीदं सर्वं तत्सदि"त्यादिशास्त्राज्ज्ञानेऽपि ज्ञानेऽपि प्रत्यंचं प्रत्यगात्मानमनुल्लिखन् अविषयीकुर्वन् तद्ब्रह्म साक्षादपरोक्षतया न वीक्षते। प्रत्यगनुल्लेखिनो ज्ञानस्य साक्षात्कारत्वाभावात्परोक्षत्वमेवेति भावः ॥१८॥

ब्रह्मणः परोक्षज्ञानस्य प्रमात्वविचारः।

ब्रह्मणः परोक्षज्ञानं भ्रमो न भवति, किन्तु प्रमैवेत्याह, शास्त्रोक्तेनेति।

शास्त्रोक्तेनैव मार्गेण सच्चिदानंदनिश्चयात्।
परोक्षमपि तद्ज्ञानं तत्त्वज्ञानं न तु भ्रमः ॥ १९ ॥

शास्त्रोक्तेनैव मार्गेण परब्रह्मणः सच्चिदानंदनिश्चयात् सच्चिदानंदरूपं ब्रह्मेति निश्चयात् तद्ज्ञानं परोक्षमपि तत्त्वज्ञानमेव प्रमैव शास्त्रजन्यत्वात्। न तु भ्रमः ॥१९॥

ननु सच्चिदानंदात्मकं परं ब्रह्मेति शास्त्रोपदिष्टं ज्ञानं प्रत्यग्व्यक्त्यनुल्लेखित्वात्परोक्षं भवतु। तत्त्वमसीत्यादिवाक्यैः प्रत्यग्रूपत्वमपि तस्य बोध्यत इति तच्छास्त्रजन्यज्ञानस्य प्रत्यग्व्यक्त्युल्लेखित्वादापरोक्ष्यं कुतो नेत्याशंक्याह, ब्रह्मेति।

ब्रह्म यद्यपि शास्त्रेषु प्रत्यक्त्वेनैव वर्णितम्।
महावाक्यैस्तथाऽप्येतद्दुर्बोधमविचारिणः ॥ २० ॥

शास्त्रेषु महावाक्यैस्तत्त्वमस्यादिभिः ब्रह्म प्रत्यक्त्वेनैवापरोक्षतयैव यद्यपि वर्णितम्। तथाप्यविचारिणः मननादेरभावात्तत्त्वंपदार्थविवेकशून्यस्यैतदपरोक्षोल्लेखनं दुर्बोधं न सुखेनावगम्यम्। अतस्तत्त्वमस्यादिवाक्यमप्यपरोक्षज्ञानजनकं भवतीति भावः ॥२०॥

ननु सर्वं तत्त्वज्ञानं प्रमाणाधीनम्। प्रमाणं च महावाक्यादिरूपं शास्त्रेषु श्रूयते। तैर्ब्रह्मतत्त्वमवगम्यते। एवं सति विचारेण विना कथं तस्य दुर्बोधत्वमित्याशंक्याह, देहेति।

देहाद्यात्मत्वविभ्रान्तौ जाग्रत्यां न हठात्पुमान्।
ब्रह्मात्मत्वेन विज्ञातुं क्षमते मंदधीत्वतः ॥ २१ ॥

देहाद्यात्मत्वविभ्रान्तौ स्थूलदेहादिकोशपंचकमेवात्मेति विशेषेण भ्रान्तौ

जाग्रत्यां मंदधीत्वतः द्वैतविवेचनासमर्थत्वात्पुमान् हठात्कारणमनपेक्ष्यैवात्मत्वेन ब्रह्म विज्ञातुं न क्षमते। चिरकालाभ्यस्तद्वैतविवेचनारूढदृढज्ञानस्यैव तत्साध्यमिति भावः ॥ २१ ॥

ननु देहाद्यात्मत्वविभ्रान्तौ जाग्रत्यामद्वितीयब्रह्मविषयकपरोक्षज्ञानमपि दुर्घटमेव स्यादित्याशंक्याह, ब्रह्मेति।

**ब्रह्ममात्रं सुविज्ञेयं श्रद्धालोः शास्त्रदर्शिनः।**
**अपरोक्षद्वतबुद्धिः परोक्षाद्वतबुद्ध्यनुत् ॥ २२ ॥**

श्रद्धालोः, गुरुवेदान्तवाक्येषु विश्वासः श्रद्धा तद्वतः। शास्त्रदर्शिनः पूर्वापरपर्यालोचनापूर्वकशास्त्रार्थज्ञानसहितस्य ब्रह्ममात्रं ब्रह्मसत्तामात्रं सम्यक्परोक्षत्वेन विज्ञातुं योग्यम्। शास्त्रपरिशीलनं श्रद्धालुता च ब्रह्मास्तीति ज्ञाने साधिक इत्यर्थः। ननु द्वतज्ञाने जाग्रति कथं परोक्षस्यापि ब्रह्मज्ञानस्य सिद्धिरित्याशंक्याह, अपरोक्षेति। अपरोक्षद्वैतबुद्धिः प्रत्यक्षतो द्वैतस्यानुभवः परोक्षाद्वैतबुद्ध्यनुत् अद्वितीयब्रह्मणः परोक्षज्ञानस्य अविरोधी। नवापरोक्षं नवज्ञानं दशमोऽस्तीति परोक्षज्ञानेन विरुध्यत इति भावः। "स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिता दृढम्। परस्परं विरुध्यन्ते तैरयं न विरुध्यत" इति (मां. ३—१७) गौडपादाचार्यवाक्यमनुसृत्य, द्वैतं त्वद्वैतविरोधि न तु द्वैतविरोध्यद्वैतमिति तात्पर्यम् ॥ २२ ॥

तत्र दृष्टान्तं दर्शयति, अपरोक्षेति।

**अपरोक्षशिलाबुद्धिर्न परोक्षेशतां नुदेत्।**
**प्रतिमादिषु विष्णुत्वे को वा विप्रतिपद्यते ॥ २३ ॥**

अपरोक्षशिलाबुद्धिः प्रतक्षतया सिद्धा सालग्रामादिशिलाविषयकबुद्धिः परोक्षेशतां परोक्षमीशज्ञानं न नुदेत् न नाशयेत्। विरोधाभावमनुभवेन दर्शयति, प्रतिमेति। प्रतिमादिषु प्रत्यक्षेषु विष्णुत्वे वस्तुगत्या चतुर्भुजादिविशिष्टविष्णुसत्त्वविषये शास्त्रबोधिते को वा विप्रतिपद्यते विवदते ॥ २३ ॥

ननु सन्त्येव केचिद्विप्रतिपद्यमाना इत्यत आह, अश्रद्धेति।

**अश्रद्धालोरविश्वासो नोदाहरणमर्हति।**

श्रद्धालोरेव सर्वत्र वैदिकेष्वधिकारतः ॥ २४ ॥

सर्वत्र वैदिकेषु वेदविहितानुष्ठानविषयेषु श्रद्धालोरेव वेदविश्वासयुक्तस्यैवाधिकारतः अधिकृतत्वात्, अश्रद्धालोर्नास्तिकस्याविश्वास उदाहरणं नार्हति। श्रुतिवाक्ये प्रामाण्यबुद्धिः श्रद्धा; तत्कार्यभूतस्य फलस्यावश्यंभावित्वनिश्चयो विश्वासः। वेदप्रामाण्यबुद्धिरेवास्तिकत्वलक्षणमिति गूढाभिसंधिः ॥ २४ ॥

एवं परोक्षज्ञानासिद्धिर्न कामपि मीमांसामर्हतीत्याह, सकृदिति।

सकृदाप्तोपदेशेन परोक्षज्ञानमुद्भवेत्।
विष्णुमूर्त्युपदेशो हि न मीमांसामपेक्षते ॥ २५ ॥

सकृदाप्तोपदेशेन सकृद्यस्य कस्यचिदाप्तस्य यथार्थज्ञानयुक्तस्य अनन्यथावादिनः उपदेशेन परोक्षज्ञानमुद्भवेत्। उक्तार्थं पूर्वोक्तदृष्टान्तदर्शनेन समर्थयति, विष्ण्विति। मीमांसां विचारणां। स्पष्टमन्यत् ॥ २५ ॥

तर्हि किंमूलकोऽयं शास्त्रार्थविचारविस्तर इत्यत आह, कर्मेति।

कर्मोपास्ती विचार्येते अनुष्ठेयाविनिर्णयात्।
बहुशाखाविप्रकीर्णं निर्णेतुं कः प्रभुर्नरः ॥ २६ ॥

अनुष्ठेयाविनिर्णयादाचरणयोग्यस्य मंदधियामनिश्चितत्वात्तेषां तन्निर्णयाय कर्मोपास्ती कर्मोपास्तिरूपानुसरणीयमार्गे विचार्येते। कुतोऽयमनिर्णय इत्यत आह, बह्विति। बहुशाखाविप्रकीर्णं बह्वीषु वेदशाखासु, "अनन्ता वै वेदाः" इत्युक्तेः। विप्रकीर्णं विशेषेण तत्र तत्र विक्षिप्तं कर्मोपास्तिरूपमेकत्र समाहृत्य निर्णेतुं को नरः प्रभुः समर्थः ? न कोपीत्यर्थः ॥ २६ ॥

कर्मोपास्त्योरनुष्ठेयाविनिर्णये तयोरननुष्ठानमेव प्राप्तमित्याशंक्याह, निर्णीत इति।

निर्णीतोऽर्थः कल्पसूत्रैर्ग्रथितस्तावताऽऽस्तिकः।
विचारमन्तरेणापि शक्तोऽनुष्ठातुमंजसा ॥ २७ ॥

जैमिन्यादिभिः पूर्वाचार्यैर्बहुशाखाविप्रकीर्णस्य कर्मकांडस्य निर्णीतोऽर्थः कल्पसूत्रैरेकत्र समाहृत्य ग्रथितः एकस्मिन् सूत्र इव निबद्धः। तावताऽऽस्तिकः तेषु विश्वासबुद्धिमान् विचारमंतरेणांजसा युक्तोऽनुष्ठातुं शक्तस्समर्थः ॥ २७ ॥

उपासनाविचारोऽपि ब्राह्मवासिष्ठादिग्रंथेषूपलभ्यत इत्याह, उपास्तीनामिति।

**उपास्तीनामनुष्ठानमार्षग्रन्थेषु वर्णितम्।**
**विचाराक्षममर्त्याश्च तच्छ्रुत्वोपासते गुरोः ॥ २८ ॥**

सुलभा पदयोजना। "अनेकशास्त्रं बहुवेदितव्यमल्पश्च कालो बहुवश्च विघ्नाः" इत्यभियुक्तोक्तेः स्वयमेव विचार्य निर्णेतुमपर्याप्तोऽयमायुष्काल इति गूढाभिसंधिः ॥

नन्वेवं पूर्वाचार्यैर्ग्रथितयोरपि तयोर्मीमांसा किमर्थमाधुनिकैः क्रियत इत्यत आह, वेदेति।

**वेदवाक्यानि निर्णेतुमिच्छन् मीमांसतां जनः।**
**आप्तोपदेशमात्रेण ह्यनुष्ठानं हि संभवेत् ॥ २९ ॥**

वेदवाक्यानि निर्णेतुमिच्छन् वेदार्थस्य निर्णिनीषयाऽऽधुनिको जनः मीमांसतां शास्त्रसहायेनार्थतत्त्वविचारणां करोतु। 'मान'धातोर्जिज्ञासार्थे 'मान्वदधा' नित्यादिना सन्प्रत्ययोऽभ्यासे इकारो दीर्घश्च। किंतु विश्वासयुक्तस्य आप्तोपदेशमात्रेणानुष्ठानं संभवेत्। हीति निश्चये। कार्याचरणधीराः मीमांसां नापेक्षन्त इत्याकूतम् ॥ २९ ॥

तर्हि ब्रह्मणः परोक्षज्ञान इवापरोक्षज्ञानेऽप्याप्तवाक्यमेवालमित्यत आह, ब्रह्मेति।

**ब्रह्मसाक्षात्कृतिस्त्वेवं विचारेण विना नृणाम्।**
**आप्तोपदेशमात्रेण न संभवति कुत्रचित् ॥ ३० ॥**

शास्त्रादधिगतार्थस्य विचारेण विना मननादिना विना एवमाप्तोपदेशमात्रेण ब्रह्मसाक्षात्कृतिः कुत्र चिन्न संभवति। अतो विचारणाऽवश्यं कर्तव्येत्यर्थः। पितुरुपदेशेन भृगुस्तपस्तप्त्वाऽन्नमयादिपंचकोशविचारेणैवानंदं ब्रह्मेति स्वयं व्यजा-

नात् ॥ ३० ॥

परोक्षज्ञानस्य यथाऽश्रद्धा प्रतिबंधिका तथैवापरोक्षज्ञानस्याविचारः प्रतिबंधक इत्याह, परोक्ष इति ।

परोक्षज्ञानमश्रद्धा प्रतिबध्नाति नेतरत् ।
अविचारोऽपरोक्षस्य ज्ञानस्य प्रतिबंधकः ॥ ३१ ॥

स्पष्टोऽर्थः ॥ ३१ ॥

ननु विचार्याप्यपरोक्षज्ञानाभावे किं कर्तव्यमित्याशंक्यापरोक्षसिद्धिपर्यन्तं विचारयेदित्याह, विचार्येति ।

विचार्याप्यापरोक्ष्येण ब्रह्मात्मानं न वेत्ति चेत् ।
आपरोक्ष्यावसानत्वाद्भूयो भूयो विचारयेत् ॥ ३२ ॥

शास्त्रादवगतार्थं विचार्यापि मननिदिध्यासने कृत्वाऽपि ब्रह्मात्मानं ब्रह्माभिन्नमात्मानमापरोक्ष्येण न वेत्ति चेद्विचारस्यापरोक्ष्यावसानत्वात् "आवृत्तिरसकृदुपदेशात्" (ब्र. सू. ४. १. १.), इति सूत्रबलात्, भूयो भूयो विचारयेत् । सम्यग्विचारसंपत्तये तत्त्वमसीति नवकृत्व उपदिदेश भगवानारुणिः ॥ ३२ ॥

पौनःपुन्येनापि साक्षात्कारासिद्धौ विचारो निरर्थकः स्यादित्यतआह, विचारयन्निति ।

विचारयन्नामरणं नैवात्मानं लभेत चेत् ।
जन्मांतरे लभेतैव प्रतिबंधक्षये सति ॥ ३३ ॥

आमरणं विचारयन्नप्यात्मानं न लभेत न साक्षात्करोति यदि तर्हि प्रतिबंधक्षये सति साक्षात्कारे प्रतिबंधस्य क्षये सति जन्मान्तरे आपरोक्ष्यं लभेतैव प्रतिबन्धस्तु ४९ श्लोके विवृतः ॥ ३३ ॥

तत्र प्रमाणमाह, इहेति ।

इहवाऽमुत्र वा विद्येत्येवं सूत्रकृतोदितम् ।
शृण्वन्तोऽप्यत्र बहवो यन्न विद्युरिति श्रुतिः ॥ ३४ ॥

"ऐहिकमप्यप्रस्तुतप्रतिबंधे तद्दर्शनादि"ति, (ब्र. सू. ३. ४. ५१.) सूत्रे इहवाऽस्मिन् जन्मनि वाऽमुत्र परलोके वा विद्या ज्ञानमुदेतीत्येवं सूत्रकृता व्यासमहर्षिणोदितम् । सूत्रस्यायमर्थः—अप्रस्तुतप्रतिबंधे, प्रस्तुताः विद्यासाधनभूताः श्रवणमनननिदिध्यासाः, तेषां प्रतिबंधो देहाद्यभिमानरूप आतंकस्तस्याभावः, तस्मिन् सति विद्योदयस्यातंकाभावे इत्यर्थः । ऐहिकं ज्ञानमस्मिन् जन्मन्येव ब्रह्मसाक्षात्कारः संपद्यते । यदा प्रतिबंधकनिवृत्तिस्तदा ब्रह्मसाक्षात्कारः । कुतः ? तद्दर्शनात् । वामदेवादिषु तस्य जन्मान्तरानुष्ठितमननादिसाधनेनान्यस्मिन् जन्मनि प्रतिबंधक्षये सति विद्योदयस्य दर्शनात् । विद्योदये इहामुत्रेति नियमाभावो "अपि"ना सूच्यते । सति प्रतिबंधकेऽस्मिन् जन्मनि विद्योदयाभावे श्रुतिं प्रमाणयति, शृण्वन्त इति । "शृण्वन्तोऽपि बहवो यं न विद्युः", (कठ. १. २. ७.) इति हि श्रुतिः । शृण्वन्तोऽपि विचारयन्तोऽपि बहवोऽसंस्कृतचित्तवृत्तयो यमात्मानं न विद्युर्न साक्षात्कुर्वन्तीति तस्या अर्थः ॥ ३४ ॥

प्राक्तनजन्मकृतश्रवणादेरुत्तरे जन्मनि फलकारित्वमिति श्रुत्यन्तरार्थकथनेन विशदयति, गर्भ इति ।

गर्भ एव शयानस्सन् वामदेवोऽवबुद्धवान् ।
पूर्वाभ्यस्तविचारेण यद्वदध्ययनादिषु ॥ ३५ ॥

पूर्वाभ्यस्तविचारेण पूर्वस्मिन् जन्मन्यसकृदाचरितो मननादिरूपो यो ब्रह्मविचारस्तेन वामदेवो मातृगर्भे एव शयानः सन् ब्रह्मतत्त्वमवबुद्धवान् । "तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च" (बृ. १. ४. १०.), इति श्रुतेः । तत्र दृष्टान्तमाह, यद्वदिति । अध्ययनादिषु, अत्रादिशब्देन शिल्पादिदीर्घकालाभ्यस्तविद्या गृह्यन्ते । तेषु तदानीं फलाजननेऽपि कालान्तरे फलोत्पत्तिर्यद्वत्तथेत्यर्थः ॥ ३५ ॥

"यद्वदध्ययनादिष्वि"त्युक्तं दृष्टान्तं विवृणोति, बह्विति ।

बहुवारमधीतेऽपि तदा नायाति चेत्पुनः ।
दिनान्तरेऽनधीत्यैव पूर्वाधीतं स्मरेत्पुमान् ॥ ३६ ॥

स्पष्टोऽर्थः ॥ ३६ ॥

दृष्टान्तान्तरमाह, कालेनेति ।

कालेन परिपच्यन्ते कृषिगर्भादयो यथा
तद्वदात्मविचारोऽपि शनैः कालेन पच्यते ॥ ३७ ॥

गर्भो मातृगर्भस्थपिंडः । ते यथा कालेन परिपक्वतां गच्छन्ति तथाऽऽत्मविचारोऽपि कालेनैव परिपक्वतां गच्छतीति भावः ॥ ३७ ॥

भूयो भूयस्तत्त्वविचारे कृतेऽपि फलाभावे वार्तिककारोदाहृतं कारणमाह, पुनरिति ।

पुनःपुनर्विचारेऽपि त्रिविधप्रतिबंधतः ।
न वेत्ति तत्त्वमित्येतद्वार्तिके सम्यगीरितम् ॥ ३८ ॥

स्पष्टोऽर्थः ॥ ३८ ॥

फलोद्गमे प्रतिबन्धविचारः ।

प्रतिबंधत्रयस्य क्षये सत्यात्मज्ञानमुदेतीति प्रदर्शयन् प्रतिबंधानाह, कुत इति ।

कुतस्तद्ज्ञानमितिचेत्तद्धि बंधपरिक्षयात् ।
असावपि च भूतो वा भावी वा वर्ततेऽथवा ॥ ३९ ॥

तर्हि तद्ज्ञानमात्मतत्त्वस्य ज्ञानं कुत उदेतीति चेत्, बंधपरिक्षयात्तदुदेति हि । प्रतिबंधत्रयं विवृणोति, असाविति । "असौ प्रतिबंधः भूतः, भावी, अथवावर्तते, वर्तमानकालिको वेति त्रिविधः ॥ ३९ ॥

अस्मिन्नर्थे सदृष्टान्तां श्रुतिप्रसिद्धिमाह, अधीतेति ।

अधीतवेदवेदार्थोऽप्यत एव न मुच्यते ।
हिरण्यनिधिदृष्टान्तादिदमेव हि दर्शितम् ॥ ४० ॥

अतएव त्रिविधप्रतिबंधस्य सद्भावादेवाधीतवेदवेदार्थोऽपि न मुच्यते । हिरण्यनिधिदृष्टान्तात्, यथा हिरण्यनिध्युपरि संचरन्नपि निधिशास्त्राज्ञानेन तं न जानाति, तद्वदिदमेव सति प्रतिबंधे न मुच्यत इत्येतत् "यथा हिरण्यनिधिं निहितमक्षेत्रज्ञाः" (छां. ८. ३. २.) इति श्रुत्या दर्शितमित्यर्थः ॥ ४० ॥

भूतप्रतिबंधं दृष्टान्तयति, अतीतेनेति ।

अतीतेनापि महिषीस्नेहेन प्रतिबंधतः ।
भिक्षुस्तत्त्वं न वेदेति गाथा लोके प्रतीयते ॥ ४१ ॥

भिक्षुः कश्चन यतिरतीतेन गृहस्थाश्रमे संप्राप्तेन महिषीस्नेहेन प्रतिबंधतः स्नेहरूपात्प्रतिबंधात् गुरुणोपदिष्टं तत्त्वं न वेदेति गाथा लोके प्रतीयते ॥ ४१ ॥

प्रतीकारे ज्ञानमुदेतीत्याह, अनुसृत्येति ।

अनुसृत्य गुरुः स्नेहं महिष्यां तत्त्वमुक्तवान् ।
ततो यथावद्वेदैष प्रतिबंधस्य संक्षयात् ॥ ४२ ॥

उपदेशकुशलो गुरुश्शिष्यस्य महिष्यां विद्यमानं स्नेहमनुसृत्य महिष्युपाधिकस्य ब्रह्मणस्तत्त्वमुक्तवान् । ततो यथावदेष यतिः प्रतिबंधस्य संक्षयात् तत्त्वं वेद ॥ ४२ ॥

वर्तमानप्रतिबंधमुदाहरति, प्रतिबंध इति ।

प्रतिबंधो वर्तमानो विषयासक्तिलक्षणः ।
प्रज्ञामान्द्यं कुतर्कश्च विपर्ययदुराग्रहः ॥ ४३ ॥

विषयासक्तिलक्षणः प्रज्ञामान्द्यं बुद्धेर्मान्द्यं, कुतर्कः केवलयुक्तिवादः विपर्ययदुराग्रहः तत्त्वस्य विपर्यये विपरीतज्ञाने आत्मनोऽहंकर्तेत्यादिधर्मयुक्तत्वज्ञानरूपे सत्यत्वाभिनिवेशः; एतेषामन्यतमो वर्तमानः प्रतिबंधः ॥ ४३ ॥

तन्निवारणोपायमाह, शमाद्यैरिति ।

शमाद्यैः श्रवणाद्यैश्च तत्र तत्रोचितैः क्षयम् ।
नीतेऽस्मिन् प्रतिबंधेऽतः स्वस्य ब्रह्मत्वमश्नुते ॥ ४४ ॥

तत्र तत्रोचितैः तस्य तस्य प्रतिबंधकस्य प्रतीकारक्षमैः शमाद्यैः श्रवणाद्यैश्चोपायैर्विषयासक्तौ शमदमादिनाऽन्तर्बहिरिन्द्रियनिग्रहेण, प्रज्ञामान्द्ये श्रवणेन, कुतर्के मननेन, विपर्ययदुराग्रहे निदिध्यासेन, एवमुचितैः प्रतीकारैरस्मिन् प्रति-

बंधे क्षयं नीते सति स्वस्य ब्रह्मत्वं ब्रह्मभावमश्नुते ॥ ४४ ॥

आगामिप्रतिबंधं दर्शयति, आगामीति ।

**आगामिप्रतिबंधश्च वामदेवे समीरितः ।**
**एकेन जन्मना क्षीणो भरतस्य त्रिजन्मभिः ॥ ४५ ॥**

आगामिप्रतिबंधो वामदेवे समीरितो दृष्टान्तितः । आरब्धशेषो जन्मान्तरकारणम् । स चोपभोगेन क्षयिष्णुः प्राबल्यानुसारतः वामदेवादीनां केषांचिदेकेन जन्मना, भरतस्य त्रिजन्मभिश्च क्षीणः ॥ ४५ ॥

बहुजन्माभ्यस्तविचारेणैव चरमजन्मनि प्रतिबन्धक्षये गीतावाक्यमुदाहरन् मध्येकालं विचारभ्रष्टस्य का गतिरित्याशंक्याह, योगेति ।

**योगभ्रष्टस्य गीतायामतीते बहुजन्मनि ।**
**प्रतिबन्धक्षयः प्रोक्तो न विचारोऽप्यनर्थकः ॥ ४६ ॥**

योगभ्रष्टस्य योगाच्छ्रवणादिपरिपाकलब्धजन्मनस्तत्त्वसाक्षात्काराद्भ्रष्टः सर्वकर्मसन्यासपूर्वकं वेदान्तवाक्यश्रवणादि कुर्वन्नप्यायुषोऽल्पत्वादिन्द्रियाणां व्याकुलतया वा मरणसमये चलितमानसोऽनिवृत्ताज्ञानतत्कार्योऽतत्त्वज्ञः, तस्य बहुजन्मन्यतीते प्रतिबन्धक्षयः प्रतिबन्धः श्रुत्यनेकतासंभाव्यताविपरीतभावनादिः तस्य नाशो गीतायां षष्ठाध्याये प्रोक्तः। एवं सति मध्ये विच्छिन्नयोगस्य परित्यक्तकर्मोपासनातः स्वर्गलोकब्रह्मलोकाद्यभावात् अपरिपक्वविचारतो जीवन्मुक्तेरभावात् का गतिरित्याशंक्याह, नेति । मध्येकालं कृतो ब्रह्मविचारो सम्यग्दर्शनफलेऽक्षमोऽपि नानर्थको भवति । "नैवेह नामुत्र विनाशस्तस्य विद्यते" इति स्मृतेर्न तस्य पूर्वस्माद्धीनजन्मप्राप्तिरिति भावः ॥ ४६ ॥

अपरिपक्वविचारस्य विचारपरिपाकाभावे कारणं विमृशन् विचारपरिपाकाभावकारणानुरूपां गतिं द्वाभ्यां विवृणोति, प्राप्येति ।

**प्राप्य पुण्यकृतां लोकानात्मतत्त्वविचारतः ।**
**शुचीनां श्रीमतां गेहे साभिलाषोऽभिजायते ॥ ४७ ॥**

अथवा योगिनामेव कुले भवति धीमतां ।
निस्पृहो ब्रह्मतत्त्वस्य विचारात्तद्धि दुर्लभम् ॥ ४८ ॥

सर्वकर्मसन्यासी श्रद्धालुर्योगाभ्यासकोऽसंपूर्णे वैराग्ये सम्यग्भोगजिहासाभावात् पूर्वोपचितभोगवासनाप्रादुर्भावे विषयकामनावान् भवति । अन्यो वैराग्ये पूर्णे सम्यग्भोगजिहासया निष्कामो भवति । तयोर्मध्ये विषयकामनावानात्मतत्त्वविचारतो वेदान्तश्रवणादीनां सामर्थ्यात् पुण्यकृतामाचरिताश्वमेधादिपुण्यकार्याणां लोकानर्चिरादिमार्गेण ब्रह्मलोकान्, एकस्मिन्नपि लोके तत्तत्पुण्यकार्योचितफलानुभवयोग्यस्थानभेदापेक्षया बहुवचनं, प्राप्य शाश्वतीस्समास्तत्रोषित्वा भोगक्षये शुचीनां शिष्टाचारसंपन्नानामुभयकुलपवित्राणां, अन्येषां शौचाभावादित्यर्थः, श्रीमतां गेहेऽभिजायते जनिमेति । द्वितीयं प्रत्याह, अथवेति । श्रद्धावैराग्यादिकल्याणगुणोपेतोऽपरिपक्वविचारो यदि मरणसमये निस्पृहो ब्रह्मतत्त्वस्य विचारात् श्रद्धावैराग्यादिकल्याणगुणाधिक्ये संपूर्णभोगजिहासया अथवा अथशब्द आनन्तर्यार्थकः, वा शब्दोऽवधारणार्थः, अथैव देहपातानन्तरोत्तरक्षणमेव पुण्यकृल्लोकप्राप्तिमन्तरा धीमतामात्मतत्त्वविचारकुशलानां योगिनां ब्रह्मविद्यावतां कुले भवति जायते । श्रीमतां गेहे जन्मापेक्षयात्र विशेषमाह, तदिति । तत् वैराग्यमोक्षेच्छावेगानुरूपं ब्रह्मनिष्ठानामेव कुले लोकान्तरजन्मनिमित्तकालव्यवधानमन्तरा यज्जन्म तत् दुर्लभं महतस्तपसः फलं, हि शुकादीनामिवेति प्रसिद्धार्थकः ॥ ४८ ॥

ब्रह्मनिरतानां कुले जन्मनो दौर्लभ्यं द्वाभ्यां विशदयति, तत्रेति ।

तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकम् ।
यतते च ततो भूयस्तस्मादेतद्धि दुर्लभम् ॥ ४९ ॥

पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ५० ॥

तत्र योगिनां कुले तं पौर्वदैहिकं पूर्वजन्मभवं बुद्धिसंयोगं लभते तत्त्वविचारशीलां बुद्धिमाप्नोति । तत्कुलीनप्रवृत्तेः सदा दर्शनसत्त्वात् । पूर्वजन्मसंस्का

रोद्बोधं लभत इति भावः। ततः पूर्वसंस्कारस्योद्बुद्धत्वाद्भूयो दृढतरविचाराय यतते। तस्मादेतज्जन्म दुर्लभं हि। पूर्वाभ्यासबलाद्विचारेऽनिच्छन्नप्याकृष्टो भवतीत्याह, पूर्वेति। अवशोऽपि स्वयमनिच्छन्नपि तेन पूर्वाभ्यासेनैव भूयो विचारेण ह्रियते आकृष्यते। एवमनेकजन्मसंसिद्धः अनेकजन्मस्वाचरितेन योगाभ्यासेन तत्त्वज्ञान-संपन्नस्ततः परामुत्कृष्टां गतिं याति। अत्र गीतायां षष्ठाध्याये ४०—४५ श्लोका अवलोकनीयाः।

अत्रायं विवेकः। मानसद्वैतरूपबन्धो निर्विकल्पसमाधिना शाम्यते। तात्कालिका च सा शान्तिः। निर्विकल्पसमाधिस्तु सविकल्पसमाधिना संपाद्यते। आगामिजनिक्षयस्तु ब्रह्मात्मैक्यज्ञानं विना न स्यात्।

ब्रह्मात्मैक्यज्ञानन्तु मिथ्याविवेचनविचारसाध्यम्। श्रवणादित्रयं तद्धेतु। ब्रह्मज्ञानस्य वैराग्योपरमावुभावुपकारकौ। बहुजन्मसमासादितपुण्यपूगपरिपाकवशात्त्र-योऽपि पूर्णा भवन्ति। येन जीवन्मुक्तत्वसिद्धिः। यद्यपि दुरितेन यस्मिन् कस्मिं-श्चित्पुरुषे यदाकदापि त्रयाणां मध्ये यः कश्चित् प्रतिबध्यते। बोधे प्रतिबद्धे वैराग्योपरमयोः पूर्णयोः तपोबलात् पुण्यलोकप्राप्तिः। पूर्णे बोधे इतरयोः प्रतिबद्ध-योर्मोक्षो विनिश्चितः। दृष्टदुःखं तु न नश्यति।

ब्रह्मात्मैक्यस्य दृढज्ञानपर्यन्तं श्रवणादिना विचारः कर्तव्यः। बहुजन्मदृढा-भ्यासाद्देहात्मधीर्जगत्सत्यत्वबुद्धिश्च पुनः पुनरुदेति। ततो भूयो भूय आमरणं विचारयन्नपि प्रतिबन्धवशाद्विचारस्य परिपाकाभावे आत्मसाक्षात्कारो न सिध्यति। जन्मान्तरे प्रतिबन्धक्षये सति शनैः कालेनात्मविचारस्य परिपक्वे स लभ्यते।

प्रतिबन्धस्त्रिविधः, भूतभाविवर्तमान इति। दैनंदिनप्रलये स्वमपियन्नपि पुरुषस्त्रिविधप्रतिबन्धवशाद्भूगर्भे निहितस्य स्वगृहस्थस्य निधेरुपर्युपरि संचरन्नपि तदपरिज्ञानेन दारिद्र्यमनुभवन्निवात्मदारिद्र्यमनुभवति। साधकस्त्वंजनादिभिर्निध्यु-पलंभेन सुखित इव प्रतिबन्धमुक्तमार्गेणापनीयात्मसाम्राज्यमधिगच्छति।

श्रवणात्पूर्वकालिकस्नेहादिनिमित्तो भूतप्रतिबन्धः। तादृक्स्नेहादिविषयको-पाधिमनुसृत्य तत्त्वोपदेशे प्रतिबन्धकापगमे जडभरतेनेव तत्त्वमधिगम्यते। वर्तमान-प्रतिबन्धे प्रज्ञामान्द्यं, कुतर्को विपर्ययदुराग्रह इति त्रीणि कारणानि। श्रुतीनामनेक-

त्वात् तत्त्वनिश्चये विचारचतुरेतरस्य बुद्धिः कुंठीभवति। तदा श्रवणं कुर्यात्। "तत्तु समन्वयादि"ति शास्त्रोक्तरीत्याशेषवेदान्ताना "महं ब्रह्मस्मी"ति वाक्यार्थे तात्पर्यमिति धीः श्रवणं भवेत्। केषांचिद्दुष्कर्मातिशयाच्छ्रवणमपि न लभ्यते। श्रुतस्यार्थस्याखंडैकरसस्याद्वितीयब्रह्मरूपस्यालौकिकत्वेनासंभावितत्वं शुष्कतार्किकत्वेन श्रुत्यर्थस्यान्यथोहनं कुतर्कः। तन्निवारणाय श्रुत्यनुमतं तर्कमनुसन्धाय मननं कुर्यात्। तन्मार्गश्च सूत्रभाष्ये द्वितीयाध्याये प्रदर्शितः। आत्मनः कर्तृत्वादिधर्मसाहित्यज्ञानं विपरीतभावना। तत्र युक्तिविरहितोऽभिनिवेशो दुराग्रहः। स च निदिध्यासेन क्षीयते। निदिध्यासश्चित्तैकाग्र्यलभ्यः। स चोपासनासाध्यः। गुरुशास्त्रादिनावगतपरोक्षज्ञानेन श्रद्धालुनोपासना कर्तव्या।

आगामिप्रतिबन्ध आरब्धशेषरूपो वामदेवादिष्विव जन्मान्तरे कारणं भवति। स च भोगोपक्षयिष्णुः। प्रारब्धस्य प्राबल्यानुसारतो वामदेवस्येवैकस्मिन् जन्मनि भरतस्येव त्रिजन्मभिरन्येषामनेकजन्मभिर्वा क्षीयते।

वैराग्योपरमौ बोधस्योपकारकौ। अत्यन्तभोगजिहासारूपो वैराग्यो ब्रह्मलोकस्यापि तृणीकारपर्यवसानकः। स च विषयानित्यत्वज्ञानेन जायते। उपरमश्चित्तवृत्तिनिरोधो यमादिना संजायते। वैराग्यबोधोपरमाणामुपासनस्य वा प्रागेव साधनचतुष्टयसंपत्तिरवश्यं संपाद्या।

एवं जीवन्मुक्तिनिमित्तस्य विचारपरिपाकस्यानेकजन्मसाध्यत्वं अशेषभोगेच्छाविदलनाभावे विचारभ्रंशश्च बहुजन्मनि सति प्रतिबन्धक्षये मोक्षश्च प्रकीर्तितः। यद्यपि विचारपरिपाकात् प्रागेवायुषोऽल्पत्वान्मरणकाले चेन्द्रियाणां चांचल्यादप्राप्तसाक्षात्कारस्य म्रियमाणस्य मध्येकालं विच्छिन्नयोगस्य न मोक्षावाप्तिः। सर्वकर्मसन्यासत्वान्न तस्य कर्मफलभूतपितृलोकानुभवः। अनभ्यस्तोपासनत्वान्न देवलोकयानम्। न चोपासनासहितकर्मफलं वा तस्य वक्तव्यम्। यद्यप्येतादृग्योगभ्रष्टो न विनश्यति। "नैवेह नामुत्र विनाशस्तस्य विद्यत" इति वाक्यात् पूर्वस्माद्धीनजन्म न तस्य विद्यते। कपूयचरणजन्यं कर्मान्तरमधमजन्मजनकं योगभ्रष्टस्य योगबलात्प्रतिबध्यते। "न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छती" त्युपक्रम्य भगवता योगभ्रष्टस्य साभिलाषत्वनिरभिलाषत्वभेदेन श्रीमतामथवा योगिनामेव

कुले जायत इत्युभयविधस्यैव जन्मनः कल्याणकृतो दुर्गत्यभावविवरणपरतया प्रतिपादनात् ।

अचंचलचित्तानामज्ञानपिहितात्मनां विचार उपदिश्यते । तदितरेषां बहुव्याकुलितचित्तानामुपासना विधीयते । तया धीदर्पो विनश्यति । अपक्वनिष्कामनिर्गुणोपासको मरणे ब्रह्मलोके वा तत्त्वं विज्ञाय मुच्यते । निर्गुणोपासनेन मूलाविद्यानिवर्तिका धीर्जायते । ततो विद्योत्पत्तिः । ततो मुक्तिः । सकामनिर्गुणोपासकस्तूपासनासामर्थ्यात् ब्रह्मलोके तत्त्वमवेक्षते । ततो मुच्यते । उभावपि ब्रह्मलोकान्न पुनरावर्तेते । "अनावृत्तिः शब्दात्, अनावृत्तिः शब्दात्" (सू. ४.४.२२.) "इमं मानवमावर्तं नावर्तन्ते । न स पुनरावर्तत" (छां. ४. १५. ६.) इत्यादिभिः । प्रतीकोपासकश्च यं यं वापि स्मरन् त्यजत्यन्ते कलेवरं तं तमेवैति । उपासनानां मोक्षस्य परंपरयोपकारकत्वाद्वेदान्तेषु तेषां चिन्तनमिति दिक् । अत्र २–७३, ४–३८, ४–६१, ६–२७७, ७–३१, ७–९८–१०३, ९–५४, ९–१३६ श्लोकानामर्थस्य सिंहावलोकनं क्रियताम् ॥ ५० ॥

स्वर्गलोकाभिलाष इव ब्रह्मलोकाभिलाषोऽप्यागामिप्रतिबन्धेष्वन्तर्भवतीत्याह, ब्रह्मेति ।

ब्रह्मलोकाभिवांछायां सम्यक्सत्यां निरुध्य ताम् ।
विचारयेद्य आत्मानं न तु साक्षात्करोत्ययम् ॥ ५१ ॥

वेदान्तविज्ञानसुनिश्चितार्था इति शास्त्रतः ॥ ५१॥ ॥

ब्रह्मलोकाभिवांछायां ब्रह्मणः कार्यब्रह्मणो लोकस्सत्यलोकः, तस्मिन् सम्यगभिवांछायां सत्यां तां निरुध्य य आत्मानं विचारयेत्स आत्मानं न साक्षात्करोति । आत्मसाक्षात्कारेण प्राग्देहपाताज्जीवन्मुक्तता । सैवात्यन्तिको मोक्षः । सा चात्यन्तोपमृदितसर्वकामनामूलकस्य वैराग्यभाग्यस्य फलम् । ब्रह्मलोककामनापि जीवन्मुक्तेः प्रतिबन्धक एव । ब्रह्मलोकतृणीकारो वैराग्यस्यावधिरित्यन्यत्रोक्तम् । (६–२८५) इममेवार्थं श्रुतिसिद्धं करोति, वेदान्तेति । "वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयश्शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृताः

परिमुच्यन्ति सर्वे" (कै. १.३.४.) मुं. ३.२.६., नारा. १-२२) इति शास्त्रतः जीवन्मुक्तस्यैव ब्रह्मसाक्षात्कारो न तु कामनानिपीडितस्येति तत्र प्रतिपादितत्वात् ।

श्रुत्यर्थस्तु वेदान्तविज्ञानसुनिश्चितार्थाः वेदान्तानामुपनिषदां विज्ञानेन महावाक्यार्थबोधस्यादार्ढ्ये हेतुभूतासु श्रुत्यनेकतासंभाव्यताविपरीतभावनासु श्रवण-मनननिदिध्यासैरपनीतासु स्थिरीभूतेनाहंब्रह्मेतिदृढज्ञानेन सुनिश्चितोऽर्थो ब्रह्मपदार्थो यैस्ते संन्यासयोगात् विषयाणामनित्यत्वज्ञानेन भोगजिहासात्मकसंपूर्णवैराग्ये सति सर्वकर्मपरित्यागपूर्वकब्रह्मनिष्ठारूपयोगाद्यतयो यतनशीलाः शुद्धसत्वाः संन्यासयोगेन विषयेभ्यो निवृत्तचित्ततया पुनस्तेषु वृत्त्यभावात् । ये सन्ति ते ब्रह्मलोके ब्रह्म एव लोकस्तस्मिन् परे ब्रह्मणि यद्वा ब्रह्मणो लोकः दर्शनं साक्षात्कारः, तस्मिन् परान्त-काले संसारावसानसमये देहाभिमानपरित्यागकाल इत्यर्थः, परामृताः परममृतम-मरणधर्मकं ब्रह्मभूतं येषां ते जीवन्त एव ब्रह्मभावमापन्नाः परिमुच्यन्ति समन्ता-न्निवृत्तिमुपयान्ति । न तत्र देशान्तरगमनमपेक्षन्ते । विस्तरस्तु भगवत्पादकर्तृक-मुंडकभाष्ये ग्रन्थकर्तुर्नारायणोपनिषद्विवरणे च द्रष्टव्यः ॥ ५१॥

एवं सति ब्रह्मलोकाभिवांछाप्रयुक्तस्य मोक्षावकाश एव न स्यादित्याशंकाह, ब्रह्मेति ।

**ब्रह्मलोके स कल्पान्ते ब्रह्मणा सह मुच्यते ॥ ५२ ॥**

इच्छावशादवश्यप्रासव्ये ब्रह्मलोके सत्यलोके उषित्वा तत्रेच्छायास्सम्यगुप-मर्दनात् कल्पान्ते प्रलयकाले ब्रह्मणा सह मुच्यते । इच्छायाः समुन्मूलनं विना न ब्रह्मभावापत्तिः ॥ ५२ ॥

एवं विचारप्रयुक्तानां ज्ञानावाप्तेः प्रतिबंधान् प्रदर्श्यान्येषां प्रतिबंधनिमि-त्तकं विचारदौर्लभ्यमपि प्रदर्शयति, केषामिति ।

**केषांचित्सविचारोऽपि कर्मणा प्रतिबध्यते ।**
**श्रवणायाऽपि बहुभिर्यो न लभ्य इति श्रुतेः ॥ ५३ ॥**

"श्रवणायाऽपि बहुभिर्नलभ्यः (कठ. १. २. ७.) इति श्रुतेः केषांचिद्बल-वत्तरप्रारब्धाभिहतानां विचारोऽपि ब्रह्मविचारोऽपीत्यर्थः । आरब्धेन कर्मणा प्रतिबध्यते ॥ ५३ ॥

मन्दबुद्धीनामुपासना विधीयते ।

तत्त्वसाक्षात्कारतद्विचारयोः प्रतिबंधप्रकारमभिधाय विचाराक्षममर्त्यानामीप्सितार्थसिद्धये कर्तव्यमुपदिशति, अत्यंतेति ।

**अत्यंतबुद्धिमान्द्याद्वा सामग्र्या वाप्यसंभवात् ।**
**यो विचारं न लभते ब्रह्मोपासीत सोऽनिशम् ॥ ५४ ॥**

सामग्र्याः ज्ञानस्य साधनीभूतगुरुशास्त्रादेः । स्पष्टमन्यत् ॥ ५४ ॥

निर्गुणब्रह्मोपासनस्य साध्यत्वविचारः ।

ननु कथं निर्गुणब्रह्मण उपास्योपासकादिद्वैतोपेतोपासनाविषयत्वं सिध्यतीत्याशंक्य उपासनायाः प्रत्ययावृत्तिरूपत्वात्सगुणब्रह्मण इव निर्गुणब्रह्मणोऽपि सिध्यतीत्याह, निर्गुणेति ।

**निर्गुणब्रह्मतत्त्वस्य नह्युपास्तेरसंभवः ।**
**सगुणब्रह्मणीवात्र प्रत्ययावृत्तिसंभवात् ॥ ५५ ॥**

यथा सगुणब्रह्मणि तद्विषयकोपासनायां, तथाऽत्रापि निर्गुणब्रह्मोपासनेऽपि प्रत्ययावृत्तिसंभवात् वृत्त्यंतरानवच्छिन्नबुद्धिवृत्तीनामावृत्तेः संभवात् निर्गुणब्रह्मतत्त्वोपास्तेर्नासंभवः । सगुणनिर्गुणोपासनयोर्बुद्धिसांतत्यस्य साम्यादिति भावः

अत्रेदमुच्यते किंचिदुपासनाविषये । तत्र सोपाधिनिरुपाधित्वभेदतो ब्रह्म द्विधाऽभिधीयते । प्रथममविद्याविषयं, द्वितीयं तु विद्याविषयम् । "एकमपिब्रह्मापेक्षितोपाधिसंबंधं निरस्तोपाधिसंबंधं चोपास्यत्वेन ज्ञेयत्वेन च वेदान्तेषूपदिश्यते" । परमात्माभिन्नप्रत्यगात्मसाक्षात्कारो हि मोक्षः । "अहं ब्रह्मास्मी" (बृ. १. ४. १०.) त्याकारकापरोक्षानुभूतिस्साक्षात्कारः । स च पंचकोशविवेचनापूर्वकः, अर्थादपास्तं तस्य चिदाभासावभासितत्स्वरूपं फलव्याप्यत्वम् । चिरंतनाभ्यस्तदेहात्मत्वविभ्रान्तस्य पुनःपुनर्विचारेऽपि प्रतिबंधतः सामग्र्यभावाद्वाऽधीतवेदवेदार्थानामप्यत्यंतव्याकुलचित्तानां मंदधियामात्मत्वेन ब्रह्मावगन्तुं न शक्यते । तेषामनिशं ब्रह्मोपासना विधीयते । लौकिकव्यवहारे इवोपासनायामपि ज्ञानिनस्तु मिथ्यात्वबुद्धिरेव ।

शास्त्रसमर्थितं किंचिदालंबनमुपादाय तस्मिन् समानचित्तवृत्तिसंतानकरणं तद्विलक्षणप्रत्ययानंतरितमेवोपासनेत्युच्यते । चित्तवृत्त्यात्मकत्वादुपासनं तु स्वम्यधन-स्कताप्रयुक्तं भवति । ज्ञानोपासनयोर्महदन्तरमस्ति । बोधो भवेद्वस्तुतंत्रः । उपासनं तु कर्तृतंत्रम् । यथा वस्तुस्वरूपं तथैव तद्ज्ञायते । नान्यथा । आलंबनवस्तूपादा-नस्योपासकायत्तत्वाद्यथारुचि तद्विनियते; कर्तुमकर्तुमन्यथा कर्तुमपि तस्य समर्थत्वात् । नैष्कर्म्यप्रस्थापिता च विद्या । कर्मप्रधाना तूपासना । ब्रह्मणस्सिद्धत्वेन तद्ज्ञाना-भावेऽपि ब्रह्म न विलीयते । उपासनस्य ध्यानस्वरूपत्वाद्ध्यानाभावे उपास्यस्वरूपं विलीयते । साक्षिणः स्वयमेव प्रमातृत्वात्तस्य फलव्याप्तित्वमेव निवारितम् । तथाप्यु-भयत्र धीव्याप्यत्वस्य विद्यमानत्वाद्यथा ब्रह्म वेद्यं भवति तथोपास्यमपीत्युभयोर्वेद्य-स्वरूपं सामान्यम् ।

स्वभावत उपासनाऽऽलंब्यालंबकालंबनरूपत्रिपुटीविशिष्टा भवति । धीप्रत्य-यगोचरं किंचिन्निकृष्टवस्त्वालंब्यं भवति । उत्कृष्टं वस्तूपास्यं भवति । यथा साल-ग्रामादिषु विष्णुः । उपास्यं ब्रह्म सगुणं निर्गुणं वा स्यात् । उपासनं सकामं निष्काममपि स्यात् । अहं ब्रह्मास्मीत्यादि (बृ. १. ४. १०.) महावाक्योपपादितस्य नित्यशुद्धबुद्धमुक्तस्वभावस्य परब्रह्मणोऽपरोक्षतयाऽनुभूतेरसाध्यत्वेऽहंब्रह्मास्मीत्यहंग्रहो-पासना निर्गुणेपासनेतीरिता । "सत्यकामः सत्यसंकल्प" (छां. ८. ७. १.) इत्याद्यन्तःकरणविशिष्टस्य ब्रह्मण उपासना सगुणा भवति । यद्वा सकलमिदमहं च वासुदेव इत्यहं गृहीततयोपास्यते । यद्वा "नामब्रह्मे" (छां. ७. १. ५.) त्युपास्यते । "सर्वं खल्विदंब्रह्मे"ति (छां. ३. १४. १.) प्रतीकोपास्यते । एवं बहुप्रकारकं सगुणोपासनं तत्र तत्र श्रूयते । यथाकथंचित्सर्वोपासनेषु चित्तवृत्तिरेव प्रधाना । उपासनायाः यावद्ब्रह्मसामीप्यं तावत्तस्याः श्रैष्ठ्यं विवर्धते । सगुणनिर्गुणोपासनयो-श्चित्तवृत्तेस्समानत्वेऽपि द्वितीये ब्रह्मप्रत्यासत्तिर्विशिष्यते । अतः शनैश्शनैस्सा ब्रह्म-ज्ञानायते । तस्मिन् पक्वे सति सविकल्पकसमाधिस्ततो निर्विकल्पकसमाधिश्च लभ्यते । तल्लाभेऽन्तरसंगमेव वस्तु शिष्यते । यस्मिन् पौनःपुन्येन वासिते महा-वाक्यान्निर्विकारासंगनित्यस्वप्रकाशैकपूर्णता झटिति बुद्धावारोहति । तत्त्वज्ञानोदये-ऽपरोक्षसाक्षात्कारः करतलामलकमिव भासते । एवं ब्रह्मणि नित्यनिर्गुणरूपमिति नाममात्रेण गीयमानेऽप्यर्थतः संवादिभ्रमवत्स्वरूपावस्थानमात्रमेव स्यात् ।

सकामो देहपातानंतरं सत्यं लोकमनुप्राप्य तत्र परिपक्वज्ञानतया कल्पान्ते ब्रह्मणा सह मुक्तो भवति । निष्कामस्तु यदा ज्ञानाविर्भावस्तदैव मुक्तः । तस्मिन्ना-देहपातमसति मरणे काले आविर्भूतज्ञानो यदि तदैव मुक्तो भवति । तदाप्यपरिपाके सत्यं लोकमनुप्राप्तः परिपाकेन ब्रह्मणा सह मुक्तो भवति । सगुणोपासकः देहपाता-नंतरं सत्यलोकमुपगतः आत्मतत्त्वे ब्रह्मणोपदिष्टस्तेन सह मुच्यते । क्रममुक्तिफल-भूते ब्रह्मलोके ज्ञानानन्तरमपि प्रारब्धस्य शरीरस्य कल्पान्तपर्यन्तं विद्यमानत्वात् तदन्ते ब्रह्मणा सह मुक्तिः । प्रतीकोपासकश्च यं यं वापि स्मरन् त्यजत्यंते कलेवरं तं तमेवैति । एवं संक्षेपतः प्रतिपादितमुपासनाप्रकारमस्मिन् प्रकरणे विस्तरतो व्याख्यास्यामः ॥ ५५ ॥

उपासनायाश्चित्तवृत्तिरूपत्वादवाङ्मनसगोचरस्य निर्गुणब्रह्मण उपासना-दौर्लभ्यमाशंक्याह, अवागिति ।

**अवाङ्मनसगम्यं तन्नोपास्यमिति चेत्तदा ।**
**अवाङ्मनसगम्यस्य वेदनं न च संभवेत् ॥ ५६ ॥**

अवाङ्मनसगम्यं मनसा चिन्तितुं वाचा वर्णितुं वाऽशक्यं "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" (तै. २–४) इति श्रुतेः । तन्निर्गुणं ब्रह्मोपास्यं नेत्युच्यते चेत्प्रतिबंद्या प्रतिवदति, अवागिति । तथा अवाङ्मनसगम्यस्य वेदनं ज्ञानं न संभवति ज्ञानस्यापि चित्तवृत्तिरूपत्वात् ।

अत्रायमाशयः । 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादिश्रुतिभिर्निर्गुणब्रह्म परोक्षतया ज्ञायते । परोक्षज्ञानं च चित्तवृत्तिरूपं वेदनास्वरूपत्वात् । "अप्रमेयमनादिं च यद् ज्ञात्वा मुच्यते बुधः" (अमृ. ९.) इति श्रुतेर्निर्गुणब्रह्मणो धीव्याप्यत्वमभिहितम् । अपास्तं च तस्य घटादेरिव चिदाभासावभासितत्वरूपं फलव्याप्यत्वम् । स्वयमेव प्रकाशरूपत्वात् । तृप्तिदीपे ९०–९६ श्लोकेषु सम्यग्विचारितोऽयं विषयः । एवं च यद्रूपेण निर्गुणं ब्रह्म वेद्यं भवति तद्रूपेणैवोपास्यं च भवति । यथा श्रुत्यैव ब्रह्म वेद्यं भवति तथैवोपासनापि कार्येत्यर्थस्तादुच्यते । एवं सत्यत्र वेदनशब्देन फलव्याप्य-भावेऽपि धीव्याप्यत्वस्याभिहितत्वाद्वेदनोपासनयोरुभयत्र ब्रह्मणः क्रियाविषयत्वमव-श्यमभ्युपगम्यते । परं तु "ब्रह्मविदाप्नोति पर"मित्यत्र विदिक्रियायाः साक्षात्का-

रार्थकत्वस्य गृहीतत्वादुपास्यसाक्षात्कार्यब्रह्मणोर्वेदने न कापि तुल्यधर्मता। सच्चिदानंदस्वरूपं प्रत्यगात्माभिन्नं परं ब्रह्म साक्षात्कार्यम्। चित्तालंबनावश्यकीभूतमुपासकातिरिक्तं ब्रह्मोपास्यं भवति। उपासनाया उपास्योपासकोपासनादित्रिपुटीनिमित्तत्वात्। नैवमुपास्यं ब्रह्म मुख्यं भवितुमर्हति। तत्सर्वदा गौणमेव स्यात्। न हि तत्त्वतो विचार्यमाणे सति निर्गुणब्रह्मोपासना संभवत्येव। अत एवोक्तं "अवास्तवी वेद्यता चेदुपास्यत्वं तथा न किम्" इति। तथापि विचारचतुरेतराणां ब्रह्मसाक्षात्कारासमर्थानां 'ब्रह्मास्मी'त्यनवरतचिन्तनयाऽनुभूतेरभावेऽप्यवास्तव्या उपासनायाः सामर्थ्यात् संवादिभ्रमस्थल इव ब्रह्मसाक्षात्कारस्संपद्यत इत्युपासनायाः ब्रह्मसाक्षात्कारोपकारकत्वमभिहितं भवतीति ॥ ५६ ॥

ननु निर्गुणं ब्रह्म अवाङ्मनसगोचरमित्येवंरूपेणैव ज्ञातुं शक्यत इति चेदेवमेवोपासितुमपि शक्यमित्याह, वागिति।

**वागाद्यगोचराकारमित्येवं यदि वेत्त्यसौ।**
**वागाद्यगोचराकारमित्युपासीत नो कुतः ॥ ५७ ॥**

असौ जिज्ञासुः परं ब्रह्म वागाद्यगोचराकारमित्येवं यदि वेत्ति तर्हि वागाद्यगोचराकारमिति कुतो नो उपासीत? तथैवोपासितुं शक्यमिति भावः॥५७॥

निर्गुणब्रह्मण उपास्यत्वेऽभ्युपगम्यमाने सति सगुणत्वमेव प्रसज्येतेत्याशंक्य, वेद्यत्वेऽपि, तत्तुल्यमेवेति पुनः प्रतिबंद्याह, सगुणत्वेति।

**सगुणत्वमुपास्यत्वाद्यदि वेद्यत्वतोऽपि तत्।**
**वेद्यं चेल्लक्षणावृत्त्या लक्षितं समुपास्यताम् ॥ ५८ ॥**

निर्गुणब्रह्मण उपास्यत्वात्तस्य सगुणत्वमापद्यत इति चेद्वेद्यत्वतोऽपि तदापद्यते। ननु निर्गुणे ब्रह्मणि लक्षणावृत्त्या वेद्ये सति न तत्र सगुणत्वापत्तिरित्याशंक्याह, वेद्यमिति। लक्षणावृत्त्या तद्वेद्यं चेत्तल्लक्षणावृत्त्या लक्षितं यन्निर्गुणं ब्रह्म समुपास्यताम् ॥ ५८ ॥

ननु निर्गुणब्रह्मण उपास्यत्वं युक्त्या सिध्यतु नाम। तथापि श्रुत्या निषिध्यते इत्यापत्त्यन्तरमुत्थापयति, ब्रह्मेति।

**ब्रह्म विद्धि तदेव त्वं न त्विदं यदुपासते ।**
**इति श्रुतेरुपास्यत्वं निषिद्धं ब्रह्मणो यदि ॥ ५९ ॥**

"यन्मनसा न मनुते येनाहुर्मनो मतं तदेव ब्रह्मत्वं विद्धि नेदं यदिदमुपासते" (केन. १-५) इति श्रुतेः ब्रह्मण उपास्यत्वं यदि निषिद्धं स्यादित्युत्तरेणान्वयः ॥ ५९ ॥

उपास्यत्वमिव वेद्यत्वमपि श्रुत्या निषिध्यत इत्याह, विदितादिति ।

**विदितादन्यदेवेति श्रुतेर्वेद्यत्वमस्य न ।**

"अन्यदेव तद्विदितादथोऽविदितादधी"ति (केन. १-३) श्रुतेरस्य वेद्यत्वं न । एवं च निषेधोऽप्युभयत्र समान इति भावः ।

ननु विदिताविदिताभ्यामन्यत्वेन श्रुत्या प्रतिपादनात्तद्रूपेण वेदनमुपपद्यत इति तूपासनेऽपि तुल्यमित्याह, यथेति ।

**यथा श्रुत्यैव वेद्यं चेत्तथा श्रुत्याऽप्युपासना ॥ ६० ॥**

यद्रूपेण श्रुत्या प्रतिपादितं तद्रूपेण वेद्यत्वमिति चेत्तथा तद्रूपेणैव श्रुत्याप्युपासना कार्या ॥ ६० ॥

यदि ब्रह्मणो वेद्यत्वमवास्तवं तदोपास्यत्वमपीत्याह, अवास्तवीति ।

**अवास्तवी वेद्यता चेदुपास्यत्वं तथा न किम् ।**
**वृत्तिव्याप्तिर्वेद्यता चेदुपास्यत्वेऽपि तत्समम् ॥ ६१ ॥**

ब्रह्मणो वेद्यताऽवास्तवी अमुख्या इत्युच्यते चेत्तथा तस्योपास्यत्वमपि तथा अमुख्यं किं न स्यात् । ननु वृत्तिव्याप्यत्वरूपं वेद्यत्वं ब्रह्मणि संभवति न तथोपास्यत्वमित्याशंक्याह, वृत्तिरिति । ब्रह्मणो वेद्यता नाम वृत्तिव्याप्तिः । बुद्धिवृत्तेर्व्याप्तिमात्रमिति चेदुपास्यत्वेऽपि तत्समम् । वेदनोपासनयोरुभयोरपि वृत्तिव्याप्यत्वं सममेवेति भावः । अत्रायमाशयः । घटादिजडविषये तस्य चिदाभासभास्यत्वेन वस्तुज्ञानरूपफलसिद्धिर्भवति । न तथा साक्षिणि, तस्य स्वप्रकाशरूपत्वात् । स्वयमेव प्रमातृस्वरूपत्वान्नान्योऽस्ति प्रमाता । एवं साक्षिणश्चैतन्यस्य वेद्यत्वं घटादिवन्न मुख्यम् । किंतु तदेकदेशवृत्तिव्याप्यत्वस्य "नेह नानास्ति किंचन

(कठ. २. ४. ११.) "सत्यं ज्ञानमनन्तं ब्रह्म" (तै. २-१) त्यादि श्रुतिप्रतिपादित-रूपेण वेद्यत्वम् । तथैव शास्त्रबलादुपास्यत्वस्यापि वृत्तिव्याप्यत्वमात्रेणामुख्यत्वं समानमिति भावः ॥ ६१ ॥

वादिनोः परस्परोपलंभोऽप्यत्र समान इत्याह, केति ।

**का ते भक्तिरुपास्तौ चेत्कस्ते द्वेषस्तदीरय ।**
**मनाभावो न वाच्योऽस्यां बहुश्रुतिषु दर्शनात् ॥ ६२ ॥**

उपास्तौ ते भक्तिः का किंमूलेति चेत्ते द्वेषः कः किंमूलकस्तदीरय । तत्र मानाभाव एव द्वेषकारणमित्युच्यते चेत्, उपास्तौ मानाभावो न वाच्यः कुतः ? अस्यामुपास्तौ प्रमाणस्य बहुश्रुतिषु दर्शनात् ॥ ६२ ॥

उपास्तेर्बहुश्रुतिषु प्रसिद्धिं प्रदर्शयति, उत्तरस्मिन्निति ।

**उत्तरस्मिंस्तापनीये शैब्यप्रश्नेऽथ काठके ।**
**मांडूक्यादौ च सर्वत्र निर्गुणोपास्तिरीरिता ॥ ६३ ॥**

"देवा ह वै प्रजापतिमब्रुवन्नणोरणीयांसमिममात्मानमोंकारं नो व्याचक्ष्वेति", (उत्त. ता. १-१) उत्तरस्मिंस्तापनीये उपनिषदि, "यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत", इति शैब्यप्रश्ने प्रश्नोपनिषदि शैब्यकृतपंचमप्रश्ने, "सर्वे वेदा यत्पदमामनन्ती"त्यारभ्य "एतद्ध्येवाक्षरं ब्रह्म एतदालंबनं श्रेष्ठ"मित्यन्तं (का. १-२-१५-१७) काठके "ओमित्येतदक्षरमिदं सर्वं" (मां. १. ) इति मांडूक्ये "ओमिति ब्रह्म ओमितीदग्ं सर्वं"मिति तैत्तिरीये च सर्वत्र निर्गुणोपास्तिरीरिता ॥ ६३ ॥

निर्गुणोपासनस्य परंपरया मोक्षसाधनत्वकथनम् ।

एवं निर्गुणोपासनायाः श्रुतियुक्तिसाध्यतां प्रदर्श्य तदनुष्ठानप्रकारविवक्षयाऽऽदौ तस्याः परंपरया मोक्षसाधनत्वमाह, अनुष्ठानेति ।

**अनुष्ठानप्रकारोऽस्याः पंचीकरण ईरितः ।**
**ज्ञानसाधनमेतन्नेति केनात्र वारितम् ॥ ६४ ॥**

अस्याः निर्गुणोपास्तेः अनुष्ठानप्रकारः पंचीकरणे विवरणात्मकतया

पंचीकरणमिति प्रसिद्ध भागे श्रीभगवत्पादविरचितसमाधिविधिनामकग्रंथस्थे पंचीकरण ईरितः। ननूपास्तेः ज्ञानसाधनत्वस्य प्रसिद्धत्वात्कथमुच्यते मुक्तिसाधनत्वमित्याशंक्याह, ज्ञनेति। एतदुपासनं ज्ञानसाधनं निर्गुणब्रह्मज्ञानसंपादने साधनमिति चेदस्माभिरप्यङ्गीकृतमेवैतत्। परन्तु "उपासनं नातिपक्वमिह यस्य परत्र सः। मरणे ब्रह्मलोके वा तत्त्वं विज्ञाय मुच्यते" (९-१३६) इत्यनुपदमेव ज्ञानद्वारा मुक्तिसाधनत्वस्य वक्ष्यमाणत्वान्मुक्तिसाधनत्वमपीति भावः॥ ६४॥

ननु निर्गुणोपास्तिः परंपरया मोक्षसाधिका भवतु नाम। तथापि न केनाप्यनुष्ठीयत इत्यत आह, नेति।

**नानुतिष्ठति कोऽप्येतदिति चेन्मानुतिष्टतु।**
**पुरुषस्यापराधेन किमुपास्तिः प्रदुष्यति॥ ६५॥**

एतन्निर्गुणब्रह्मोपासनं न कोऽप्यनुतिष्ठतीति चेन्नानुतिष्ठतु नाम। पुरुषस्यापराधेन करुणाकरणान्यथाकरणरूपेणोपास्तिः प्रदुष्यति किम्? न दूष्यतीत्यर्थः। प्रमाणसिद्धस्यापि निर्गुणोपासनस्याननुष्ठाने उपासकस्यैव दोषो न तूपास्तेरिति भावः॥ ६५॥

जना नानुतिष्ठन्तीत्येतावन्मात्रेण न काप्युपास्तिर्दुष्यतीति सदृष्टान्तमाह, इत इति।

**इतोऽप्यतिशयं मत्वा मन्त्रान्वश्यादिकारिणः।**
**मूढा जपन्तु तेभ्योऽतिमूढाः कृषिमुपासताम्॥ ६६॥**

मूढा उपासनातत्त्वानभिज्ञाः इतोऽपि निर्गुणब्रह्मोपास्तेरप्यतिशयं मत्वा वश्यादिकारिणः, आदिपदेन मारणादिसंग्रहः। मन्त्रान् जपन्तु। तदपेक्षितनियमादिविमुखास्तेभ्यो वशीकरणादिमन्त्रजपितृभ्योऽप्यतिमूढाः अनपेक्षितनियमं कृषिमुपासताम्। मूढतरैः कृषीवलैरनुष्ठितमपि मंत्रजपादिकं परैर्न परित्यज्यते। एवं मूढैर्मन्त्रजपपरैरननुष्ठितापि मुमुक्षुभिर्निर्गुणोपास्तिर्न परिह्रियत इति भावः॥ ६६॥

निर्गुणोपासनाप्रकारविचारः।

एवं श्रुतियुक्तिभ्यामुपासनां संसाध्य तदाचरणप्रकारं विवृणोति, तिष्ठन्त्विति।

**तिष्ठन्तु मूढाः प्रकृता निर्गुणोपास्तिरीर्यते।**

## विध्यैक्यात्सर्वशाखास्थान् गुणानत्रोपसंहरेत् ॥ ६७ ॥

मूढा अज्ञातोपासनातत्त्वास्तिष्ठन्तु नाम। प्रकृता प्रकृतप्रकरणविषयभूता निर्गुणोपास्तिरीर्यते कथ्यते। विध्यैक्याद्बहुश्रुतिप्रतिपादितस्य निर्गुणोपासनस्य ऐक्यात्सर्वशाखास्थानुपास्यान् गुणान् अत्र निर्गुणोपासने उपसंहरेत्। तत्तत्स्वरूपं ब्रह्मेत्युपासीतेत्यर्थः। ब्रह्मप्रतिपादिकासूपनिषत्सु आनंदविज्ञानघनसर्वगतत्वादिबोधकाश्शब्दाः तत्र तत्र श्रूयन्ते। सर्वत्रैव ते सर्वेऽपि संग्रहीतव्याः। तेषां सर्वेषां ब्रह्मप्रतिपादकाभिप्रायकत्वादिति भावः ॥ ६७ ॥

विविधश्रुतिप्रतिपादिता धर्मा विधेया निषेध्या इति द्विप्रकारकाः। तत्र नित्यशुद्धबुद्धमुक्ताद्वयानंदा इत्येवंजातीयकाः स्वरूपधर्मा विधेयाः। अस्थूलमनण्वह्रस्वमदृश्यमग्राह्यमशब्दमित्यादयो निषेध्यरूपाः। तत्र विधेयानामुपसंहारः ब्रह्मसूत्रे दर्शित इत्याह, आनंदेति।

## आनंदादेर्विधेयस्य गुणसंघस्य संहृतिः।
## "आनंदादय" इत्यस्मिन् सूत्रे व्यासेन वर्णिता ॥ ६८ ॥

विधेयस्य उपास्तौ परिग्रहीतव्यस्यानंदादेः आनन्दविज्ञानघनसर्वगतसर्वात्मत्वादेः गुणसंघस्य स्वरूपबोधकानां धर्माणां संघस्य संहृतिरेकत्रोपसंहारः "आनंदादयः प्रधानस्य" (ब्र. सू. ३. ३. ११.) इत्यस्मिन् सूत्रे व्यासेन वर्णिता आनन्दादयः प्रधानस्य ब्रह्मणो धर्माः सर्वे सर्वत्र प्रतिपत्तव्या इति सूत्रार्थः ॥ ६८ ॥

तथैव निषेध्य धर्माणामुपसंहृतिमाह, अस्थूलेति।

## अस्थूलादेर्निषेध्यस्य गुणसंघस्य संहृतिः।
## तथा व्यासेन सूत्रेऽस्मिन्नुक्ताक्षरधियां त्विति ॥ ६९ ॥

तथा निषेध्यस्य द्वैतनिषेधरूपस्य अस्थूलादेरस्थूलमनण्वह्रस्वमदृश्यमग्राह्यमशब्दमस्पर्शमरूपमित्यादेर्गुणसंघस्य संहृतिः "अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदनवत्तदुक्तमि" (ब्र. सू. ३. ३. ३३.) त्यस्मिन् सूत्रे उक्ता ॥ ६९ ॥

ननु निर्गुणब्रह्मतत्त्वज्ञाने विविधगुणसंहृतिरसमंजसैवेति चेत्सूत्रकृता व्यासमहर्षिणैवोक्तत्वान्नात्र चोद्यमित्याह, निर्गुणेति।

## निर्गुणब्रह्मतत्त्वस्य विद्यायां गुणसंहृतिः।

न युज्येतेत्युपालंभो व्यासं प्रत्येव मां न तु ॥ ७० ॥

निर्गुणब्रह्मतत्त्वस्य विद्यायां बोधे तद्विरुद्धभूता गुणसंहृतिर्न युज्येत न युक्तेत्युपालंभो व्यासं प्रत्येव न तु तदनुयायिनं मामित्यर्थः । निर्गुणोपासनावसरे विधेयनिषेध्यगुणसंहृतेर्ब्रह्मणस्तद्गुणविशिष्टत्वकथने न तात्पर्यं किन्तु तेषां तल्लक्षकत्वकथने एवेत्यधस्तादुच्यते । उपासनायां यत्किंचिदालंबनस्यावश्यकतया निर्गुणेऽपि परे ब्रह्मण्येवंरूपगुणसंहृतेर्व्यासादिप्राचीनाचार्यैर्ब्रह्मसूत्रे प्रतिपादिततया प्रमितत्वेन तदुपालंभः केवलोपहासायैव भवतीति भावः ॥ ७० ॥

गुणविशिष्टमूर्तिप्रसंगमपहाय केवलविधेयनिषेध्यगुणसंहृतिर्निर्गुणोपासनेन न विरुध्यत इत्याह, हिरण्येति ।

हिरण्यश्मश्रुसूर्यादिमूर्तीनामनुदाहृतेः ।
अविरुद्धं निर्गुणत्वमिति चेत्तुष्यतां त्वया ॥ ७१ ॥

हिरण्यश्मश्रुसूर्यादिमूर्तीनामस्मिन्निर्गुणोपासनेऽनुदाहृतेरनभिधानात् निर्गुणत्वमविरुद्धमिति चेत् केवलविधेयनिषेध्यगुणसंहृतेर्निर्गुणोपासना न विरुध्यत इत्युच्यते चेत् तर्हि त्वया तुष्यतां अस्माकमपीष्टापत्तेरिति भावः ॥ ७१ ॥

निरुक्तविरोधाभावमेव विवृणोति, गुणानामिति ।

गुणानां लक्षकत्वेन न तत्त्वेऽन्तःप्रवेशनम् ।
इति चेदस्त्वेवमेव ब्रह्मतत्त्वमुपास्यताम् ॥ ७२ ॥

आनन्दादिविधेयानां अस्थूलादिनिषेध्यानां च गुणानां ब्रह्मतत्त्वस्य लक्षकत्वेन तेषां संहृतिरुच्यते । न तु तेषां तत्त्वे ब्रह्मस्वरूपे अन्तःप्रवेशनमुक्तमिति चेत् अस्तु । एवमेव तेषां ब्रह्मणो लक्षकत्वेनैव ब्रह्मतत्त्वमुपास्यताम् । निर्गुणोपासनावसरे विधेयनिषेध्यगुणसंहृतेः ब्रह्मणस्तद्गुणविशिष्टत्वं नोक्तम् । तस्य निर्गुणत्वात् । किं तु तैर्ब्रह्म लक्ष्यत इत्यभिप्रेतम् । उपासनायाः कस्यचिदालंबनस्यावश्यकत्वात्तैर्लक्षितं निर्गुणं ब्रह्मोपास्यमिति भावः ॥ ७२ ॥

उक्तामुपासनारीतिं विवृणोति, आनन्देति ।

आनन्दादिभिरस्थूलादिभिश्चात्माऽत्र लक्षितः ।
अखण्डैकरसः सोऽहमस्मीत्येवमुपासते ॥ ७३ ॥

अत्र आसु श्रुतिषु योऽखण्डैकरसः सजातीयादिभेदत्रयशून्यो रसघन आत्मा आनन्दादिभिर्विधेयगुणैः अस्थूलादिभिर्निषेध्यगुणैश्च लक्षितः बोधितः। स आत्मा अहमस्मीत्येवं मुमुक्षुव उपासते। निर्गुणब्रह्मोपासनाविषयोऽयं न तु तत् साक्षात्कारविषय इति ज्ञेयम् ॥ ७३ ॥

ज्ञानोपासनयोर्भेदकथनम् ।

एवं सति विद्योपासनयोः को भेद इत्याशंक्य वस्तुतन्त्रकर्तृतन्त्रत्वाभ्यां तयोर्भेद इत्याह, बोधेति ।

बोधोपास्त्योर्विशेषः क इति चेदुच्यते शृणु ।
वस्तुतन्त्रो भवेद्बोधः कर्तृतन्त्रमुपासनम् ॥ ७४ ॥

बोधोपास्त्योः, बोधः वस्तुनो यथार्थस्वरूपावगतिः उपास्तिरुत्कृष्टवस्तुदृष्ट्या निकृष्टवस्तुविभावना, यथासंपदुपासना, तयोर्विशेषः क इति चेच्छृणु। बोधो वस्तुतन्त्रः वस्त्वधीनः; उपासनं तु कर्तृतंत्रं कर्त्रधीनं भवेत्। वस्तुनः स्वरूपज्ञानेनैव तद्बोधो भवति। उपासनायां तूपासकोऽन्यवस्तुदृष्ट्याऽन्यद्वस्तूपासते। वस्तुद्वयं च यथारुचि उपासकेन क्रियत इति भावः ॥ ७४ ॥

बोधस्य वस्तुतंत्रतामेव स्पष्टयति, विचारेति ।

विचाराज्जायते बोधोऽनिच्छा यं न निवर्तयेत् ।
स्वोत्पत्तिमात्रात्संसारे दहत्यखिलसत्यताम् ॥ ७५ ॥

बोधो वस्तुतत्त्वस्य विचारान्मननेन जायते। विचारेणोत्पद्यमानो यो बोधस्तं 'मा भूदयं वस्तुबोध' इत्याकारिकाऽनिच्छा न निवर्तयेत्, तस्येच्छानधीनत्वात्। चंद्रज्ञानं मे माभूदितीच्छतोऽपि चक्षुरिन्द्रियसंयोगे तत्स्वरूपज्ञानमवश्यं भवेदेवेत्यर्थः। ब्रह्मबोधे उपासनावैलक्षण्यमाह, स्वेति ॥ स्वोत्पत्तिमात्रात् स्वस्य ब्रह्मज्ञानस्योत्पत्तिमात्रादेव संसारे द्वैतेऽखिलसत्यतामखिलं सत्यमिति भावं दहति

नाशयति। ज्ञाने सति सर्वद्वैतोपमर्दनं भवति। नैतदुपासनायां, तत्र त्रिपुट्यास्सत्त्वात् ॥ ७५ ॥

ब्रह्मज्ञानफलमाह, तावतेति।

तावता कृतकृत्यस्सन्नित्यतृप्तिमुपागतः।
जीवन्मुक्तिमनुप्राप्य प्रारब्धक्षयमीक्षते ॥ ७६ ॥

तावता ब्रह्मज्ञानोत्पत्तिमात्रेण कृतकृत्यः सन् नित्यतृप्तिं नित्यां विकाररहितां तृप्तिमुपागतः दग्धाखिलसंसारसत्यत्वज्ञानस्सन् जीवन्मुक्तिं जीवतस्सत एव या मुक्तिस्तामनुप्राप्य अवाप्तनित्यतृप्तिमनुसृत्य प्रारब्धक्षयं प्रारब्धस्यानिवार्यस्य उपभोगेनैव क्षयशीलस्य क्षयं नाशं नाद्यापि कर्म नश्छिन्नमिति क्लिश्यन्नेव निष्ठिगृहीतवद्भुजान ईक्षते निरीक्षते ॥ ७६ ॥

उपासनायां विद्यातो वैलक्षण्यं तत्स्वरूपप्रदर्शनमुखेन स्पष्टयति, आप्तेति।

आप्तोपदेशं विश्वस्य श्रद्धालुरविचारयन्।
चिन्तयेत्प्रत्ययैरन्यैरनन्तरितवृत्तिभिः ॥ ७७ ॥

आप्तोपदेशमाप्तानां गुरुशास्त्रादीनामुपदेशं "स य एवं विद्वानादित्यं ब्रह्मेत्युपास्ते" (छां. ३. १९. ४.), "यो वाचं ब्रह्मेत्युपास्ते" (छां. ७. २. २.) इत्यादिवाक्यजातरूपं विश्वस्य श्रद्धालुर्भूत्वा मंदधीत्वात्तत्त्वमविचारयन्, अन्यैस्त्वास्यविरोधिप्रत्ययैरनन्तरितवृत्तिभिश्चिन्तयेन्मनसि ध्यायेत्। विचारजन्या विद्या। न च सा वृत्तिरूपा। विचारमनपेक्ष्योपदेशविश्वासमात्रजन्या उपासना। सा च वृत्तिरूपा। एवं च कारणतः स्वरूपतश्च विद्योपासनयोर्भेदः स्पष्ट एवेति भावः॥७७

उपासनायां चिन्तनावधिमाह, यावदिति।

यावच्चिन्त्यस्वरूपत्वाभिमानः स्वस्य जायते।
तावद्विचिन्त्य पश्चाच्च तथैवाऽऽमृति धारयेत् ॥ ७८ ॥

यावत्कालं चिन्तकस्य चिन्त्यस्वरूपत्वाभिमानश्चिन्तनादिविषयस्य देवतादेर्यत्स्वरूपं तदेव स्वस्यापि स्वरूपमित्यभिमानः देवतात्मनोरैक्यविभावना जायते

तावत्कालं मनसि विचिन्त्य पश्चादभिमानानन्तरमप्यामृति मरणपर्यन्तं तथैवाभिमानं धारयेत् ॥ ७८ ॥

स्वात्मनश्चित्यस्वरूपत्वाभिमानं छान्दोग्यादुदाहरति, ब्रह्मचारीति ।

ब्रह्मचारी भिक्षमाणो युतस्संवर्गविद्यया ।
संवर्गरूपतां चित्ते धारयित्वाप्यभिक्षत ॥ ७९ ॥

संवर्गविद्यया "संवर्जनात्संहरणात्संग्रसनाद्वा संवर्गः, संवर्गत्वगुणकस्य वायोः विद्ययोपासनया युतः भिक्षमाणः प्राणधारणनिमित्तामाश्रमविहितां भिक्षां याचमानः ब्रह्मचारी ब्रह्मणि वेदे चरतीति तथाविधश्चित्ते संवर्गरूपतां धारयित्वा कापेयमभिप्रतारिनाम राजानं प्रति "महात्मानश्चतुरो देव एकः कः स जगार भुवनस्य गोपास्तं कापेय नाभिपश्यन्ति मर्त्या अभिप्रतारिन् बहुधा रसन्तं" (छां. ४. ३. ६.) इति मन्त्रेण स्वात्मनस्संवर्गरूपतां चित्ते धृतां प्रकटीकृत्याभिक्षत ॥ ७९ ॥

आमृतिधारणे निमित्तमाह, पुरुषस्येति ।

पुरुषस्येच्छया कर्तुमकर्तुं कर्तुमन्यथा ।
शक्योपास्तिरतो नित्यं कुर्यात्प्रत्ययसन्ततिम् ॥ ८० ॥

कर्तृतन्त्रत्वादुपास्तिः पुरुषस्येच्छया तदनुसारेण कर्तुमकर्तुमन्यथा प्रकारान्तरेण कर्तुं च शक्या । अतः प्रत्ययसन्ततिं ध्यानं नित्यं कुर्यात् ॥ ८० ॥

नन्वामृत्यविच्छिन्ना धारणा न संभवति, सुषुप्तौ विच्छेदादित्याशंक्य तत्राप्यविच्छेदं दर्शयति, वेदेति ।

वेदाध्यायी ह्यप्रमत्तोऽधीते स्वप्नेऽधिवासतः ।
जपिता तु जपत्येव तथा ध्यातापि वासयेत् ॥ ८१ ॥

स्वप्ने अप्रमत्तो वेदाध्यायी, अधिवासतो वासनादार्ढ्यात् स्वप्नेऽप्यधीते; जपिता जपशीलश्च जपत्येव; तथा ध्याता ध्यानकर्ता मनसि वासयेत् प्रत्ययसंततिं मनसि वासनारूपेण स्थापयेत् । दृढवासनावशात्स्वप्नादिष्ववशात् प्रत्ययसन्तति-

रनुवर्तेत इति भावः ॥ ८१ ॥

तत्र कारणमाह, विरोधीति ।

**विरोधिप्रत्ययं त्यक्त्वा नैरन्तर्येण भावयन् ।**
**लभते वासनावेशात् स्वप्नादावपि भावनाम् ॥ ८२ ॥**

उपासको जाग्रति विरोधिप्रत्ययं ध्येयप्रत्ययविजातीयप्रत्ययं त्यक्त्वा नैरंतर्येणोपास्यं वस्तु मनसि भावयन् स्वप्नादावपि बहुवारमुपास्यस्य वासनावेशात्संस्कारसामर्थ्याद्भावनां लभते ॥ ८२ ॥

ननु प्रारब्धप्राप्ते विषयभोगे कथं भावनानैरंतर्यं घटत इत्याशंक्यास्थातिशयतो विषयव्यसनिन इव सिध्यतीत्याह, भुंजान इति ।

**भुंजानोऽपि निजारब्धमास्थातिशयतोऽनिशम् ।**
**ध्यातुं शक्तो न संदेहो विषयव्यसनी यथा ॥ ८३ ॥**

निजारब्धमात्मीयमारब्धं कर्म भुंजानोऽप्यनुभवन्नपि, आस्थातिशयतः उत्कटेच्छावशात् विषयव्यसनी विषयसुखेषु व्यसनी यथा कार्यान्तरेषु व्यापृतोपि विषयाननवरतं ध्यायति, तथाऽनिशं ध्यातुं शक्तः । नात्र संदेहः ॥ ८३ ॥

उक्तमुदाहरणं विवृणोति, परेति ।

**परव्यसनिनी नारी व्यग्रापि गृहकर्मणि ।**
**तदेवास्वादयत्यंतः परसंगरसायनम् ॥ ८४ ॥**

गृहकर्मणि गृहोचितकर्मणि व्यग्रापि निमग्नापीत्यर्थः, परव्यसनिनी जारपुरुषे व्यसनवती नारी अंतर्मनसि तत्परसंगरसायनं जारपुरुषसमावेशसुखानुभवरसमास्वादयति ॥ ८४ ॥

नन्वन्यानुरक्तमनस्कतया गृहकर्मणस्सम्यङ्निर्वहणं न स्यादित्याशंक्याह, परेति ।

**परसंगं स्वादयंत्या अपि नो गृहकर्म तत् ।**
**कुंठीभवेदपि त्वेतदापातेनैव वर्तते ॥ ८५ ॥**

परसंगं स्वादयन्त्या अपि स्त्रियः तद्गृहकर्म नो कुंठीभवेत् विफलं न भवतीत्यर्थः । अपि त्वेतद्गृहकर्मापातेनैवाविचारितेनैव वर्तते ॥ ८५ ॥

उक्तमापातवर्तनं विवृणोति, गृहेति ।

**गृहकृत्यव्यसनिनी यथा सम्यक्करोति तत् ।**
**परव्यसनिनी तद्वन्न करोत्येव सर्वथा ॥ ८६ ॥**

तत् गृहकृत्यम् । स्पष्टमन्यत् ॥ ८६ ॥

तत्त्वविदो लौकिकव्यवहारस्याऽविरोधित्वविचारः ।

दृष्टान्तं दार्ष्टान्तिके योजयति, एवमिति ।

**एवं ध्यानैकनिष्ठोऽपि लेशाल्लौकिकमाचरेत् ।**
**तत्त्ववित्त्वविरोधित्वाल्लौकिकं सम्यगाचरेत् ॥ ८७ ॥**

यथा परसंगरसायनमास्वादितवती नारी गृहकर्मण्यापातेनैव वर्तते एवं ध्यानैकनिष्ठोऽप्युपास्यावेशितचित्तैकाग्र्यः लौकिकं व्यवहारं लेशात्स्वल्पमाचरेत् । ब्रह्मविदस्तु तद्वैलक्षण्यं प्रदर्शयति, तत्त्वविदिति, तत्त्वविद् ज्ञानी त्वविरोधित्वाल्लौकिकं सम्यगाचरेत् । ध्याननिष्ठो विरोधिप्रत्ययैश्चित्तैकाग्र्यभंगभिया लौकिकव्यवहारे स्वल्पमेव प्रवर्तते । तत्त्ववित्तु सुविज्ञातद्वैतमिथ्यात्वात् तत्र सम्यगनुतिष्ठति । सम्यग्ज्ञानस्य, मिथ्यात्वेन गृहीतेन द्वैतेनाविरोधित्वादिति तात्पर्यम् ॥ ८७ ॥

तत्त्वविदो लौकिकव्यवहाराविरोधे कारणमाह, मायेति ।

**मायामयः प्रपंचोऽयमात्मा चैतन्यरूपधृत् ।**
**इति बोधे विरोधः को लौकिकव्यवहारिणः ॥ ८८ ॥**

अयं भासमानः प्रपंचः मायामयः, आत्मा चैतन्यरूपधृदिति बोधे तत्त्वविदस्समुत्पन्ने सति लौकिकव्यवहारिणो विरोधः कः न कोऽपीति भावः॥८८

उक्तविरोधाभावं प्रपंचयति, अपेक्षत इति ।

**अपेक्षते व्यवहृतिर्न प्रपंचस्य वस्तुताम् ।**

**नाप्यात्मजाड्यं किं त्वेषा साधनान्येव कांक्षति ॥ ८९॥**

व्यवहृतिर्लौकिकव्यवहारः प्रपंचस्य वस्तुतां सत्यतां नापेक्षते। आत्मजाड्यमात्मनः स्वस्य जाड्यं जडस्वभावं वा न। किं त्वेषा व्यवहृतिः प्रचलनाय साधनान्येव कांक्षते ॥ ८९ ॥

उक्तव्यवहारसाधनानि संख्याति, मन इति।

**मनोवाक्कायतद्बाह्यपदार्थाः साधनानि तान्।**
**तत्त्वविन्नोपमृद्नाति व्यवहारोऽस्य नो कुतः ॥ ९० ॥**

मनोवाक्कायतद्बाह्यपदार्थाः, मनः, वाक्, कायः, तेषां बहिर्भवा ये पदार्था गेहादयश्च ते व्यवहारस्य साधनानि। तानि तत्त्वविन्नोपमृद्नाति। न विनाशयति। किंतु क्रीडाकल्पितप्रतिमादिकमिव मिथ्यात्वेन गृह्णाति। अतोऽस्य व्यवहारः कुतो नो संभवति? संभवत्येवेत्यर्थः ॥ ९० ॥

ननु विषयाणामनुपमर्देऽपि बंधमोक्षयोः कारणभूतं चित्तमवश्यं तत्त्वविदोपमर्दनीयमेवेत्याशंक्य तथा सति तस्य ध्यातृत्वमेव न तत्त्वविरत्वमित्याह, उपेति।

**उपमृद्नाति चित्तं चेद्ध्याताऽसौ न तु तत्त्ववित्।**
**न बुद्धिं मर्दयन् दृष्टो घटतत्त्वस्य वेदिता ॥ ९१ ॥**

चित्तमुपमृद्नाति चित्तैकाग्र्यसंपादनाय तन्निरोधयतीति चेदसौ चित्तनिरोधकः ध्याता एव न तु तत्त्ववित्, ध्यानस्य चित्तवृत्तिनिरोधरूपत्वात्। "योगश्चित्तवृत्तिनिरोधः"। इति सूत्रबलादित्यर्थः। तत्र दृष्टान्तमाह, नेति। घटतत्त्वस्य वेदिता ज्ञाता बुद्धिं चित्तं मर्दयन् निरोधयन् कुत्रापि लोके न दृष्टः। घटस्य स्वरूपावगतये चित्तनिरोधरूपं चित्तैकाग्र्यं नापेक्षते। तत्स्वरूपध्यानं तु तदाकांक्षत इत्यर्थः ॥ ९१ ॥

ननु विषमोऽयं दृष्टान्तः। घटस्य स्थूलत्वात् चित्तवृत्तिनिरोधमन्तरा सकृत्प्रत्ययमात्रेण तद्ज्ञानसिद्धिर्भवति। न तथा ब्रह्मविषये। तस्यास्पष्टत्वाच्चित्तवृत्तिनिरोधोऽवश्यमपेक्ष्यत इत्याशंक्याह, सकृदिति।

सकृत्प्रत्ययमात्रेण घटश्चेद्भासते सदा ।
स्वप्रकाशोऽयमात्मा किं घटवच्च न भासते ॥ ९२ ॥

जडस्वरूपो घटः सकृत्प्रत्ययमात्रेण सकृज्जन्यज्ञानमात्रेण सदा भासते चेत् स्वप्रकाशोऽयमात्मा विना चित्तनिरोधनं घटवत्किं न भासते ॥ ९२ ॥

नन्वात्मनः स्वयंप्रकाशत्वेऽपि तद्विषयकबुद्धिवृत्तेरेव तद्ज्ञानत्वात् बुद्धिवृत्तेश्च क्षणिकत्वात् तस्मिन्नवस्थानाभ्यासोऽपेक्ष्यत इत्याशंक्येदं चोद्यं घटज्ञानेऽपि समानमेवेति प्रतिबंद्या समाधत्ते स्वप्रकाशेति ।

स्वप्रकाशतया किन्ते तद्बुद्धिस्तत्त्ववेदनम् ।
बुद्धिश्च क्षणनाश्येति चोद्यं तुल्यं घटादिषु ॥ ९३ ॥

आत्मनः स्वप्रकाशतया ते किं प्रयोजनम् ? न किमपीति भावः । कुतः ? तद्बुद्धिः बुद्धिवृत्तिरेव तत्त्ववेदनं तत्त्वस्य ज्ञानं भवति । बुद्धिश्च क्षणनाश्या बुद्धिवृत्तिश्च क्षणमात्रकालेनैव नाशनशीलेत्यर्थः । अतो ब्रह्मणि भूयो भूयोऽवस्थानमवेक्ष्यते इत्युच्यते चेदेतच्चोद्यं घटादिषु सर्वप्रमेयवस्तुषु तुल्यमेव । तेषामपि बुद्धिवृत्तिविषयत्वाविशेषादित्यर्थः ॥ ९३ ॥

ननु घटादिबुद्धिवृत्तेः क्षणिकत्वेऽपि सकृन्निश्चितस्य घटस्य सर्वदा व्यवहारक्षमत्वात् तत्र चित्तस्थैर्यानावश्यकतैवेत्याशंक्यात्मन्यपि तत्समानमित्याह, घटादाविति ।

घटादौ निश्चिते बुद्धिर्नश्यत्येव यदा घटः ।
इष्टो नेतुं तदाशक्य इति चेत्सममात्मनि ॥ ९४ ॥

घटादौ सकृन्निश्चिते स्वस्वरूपेण ज्ञाते सति तद्विषयिका बुद्धिर्नश्यत्येव । तथापि घटो नेतुं व्यवहर्तुमिष्टः तदा शक्यः पुनरदृश्यमानोऽपि व्यवहर्तुं शक्यते । इति चेत्तदात्मन्यपि समम् । सकृद्ज्ञानेनात्मापि व्यवहर्तुं शक्यत इत्यर्थः ॥ ९४ ॥

आत्मन्युक्तां समतां विवृणोति, निश्चित्येति ।

निश्चित्य सकृदात्मानं यदापेक्षा सदैव ताम् ।

वक्तुं मन्तुं तथा ध्यातुं शक्नोत्येव हि तत्त्ववित् ॥९५॥

आत्मानं सम्यङ्निश्चित्य ज्ञात्वा तदनन्तरं यदाऽपेक्षा जायते तदैव तमात्मानं वक्तुं मन्तुं ध्यातुं च तत्त्ववित् शक्नोत्येव ॥ ९५ ॥

ननूपासकस्य स्वोपास्यदेवतारूपानुसंधानावश्यकीभूतचित्तवृत्तिनिरोधेन जगद्विस्मृतिर्दृष्टा । तथैवात्मानुसंधानसन्निविष्टस्य ज्ञानिनोऽपि जगद्विस्मृतिर्वक्तव्येत्याशंक्य ज्ञानिनो विस्मृतिर्ध्याननिमित्ता न तु ज्ञानजन्येत्याह, उपासक इति ।

उपासक इव ध्यायन् लौकिकं विस्मरेद्यदि ।
विस्मरत्येव सा ध्यानाद्विस्मृतिर्न तु वेदनात् ॥ ९६ ॥

ननूपासक इवात्मविदपि ध्यायन्नात्मानुसंधानं कुर्वन् लौकिकं व्यवहारं जगदादिकं यदि विस्मरेत् सत्यं विस्मरत्येव । किंतु सा विस्मृतिर्ध्यानात् भवति, न तु वेदनात् । न तु ज्ञानादित्यर्थः ॥ ९६ ॥

ननु मोक्षसिद्धये ज्ञानिनोऽपि ध्यानमवश्यमेवेत्याशंक्याह, ध्यानमिति ।

ध्यानं त्वैच्छिकमेतस्य वेदनान्मुक्तिसिद्धितः ।
ज्ञानादेव तु कैवल्यमिति शास्त्रेषु डिंडिमः ॥ ९७ ॥

एतस्य तत्त्वविदो ब्रह्मात्माभेदस्य जगज्जीवेश्वरमिथ्यात्वस्य च वेदनात् दृढज्ञानान्मुक्तिसिद्धितो मुक्तेस्सिद्धत्वादेतस्य ध्यानमैच्छिकमिच्छाकल्पितं । नैतदावश्यकमित्यर्थः । मोक्षसिद्धये ज्ञानं विनोपायान्तरं शास्त्रेष्वन्वयव्यतिरेकाभ्यां निषिध्यत इत्याह, ज्ञानादेवेति । ज्ञानादेव नान्यस्मात्कैवल्यमिति "ज्ञानादेव तु कैवल्यं प्राप्यते येन मुच्यते ।" "तमेवं विदित्वाऽतिमृत्युमेति" "नान्यः पंथा विद्यतेऽयनाये"त्यादि (श्वेत. ३—८) शास्त्रेषु डिंडिम उद्घोषणं श्रूयते ॥ ९७ ॥

तत्त्वविदो ध्यानाभावे सदा बहिःप्रवृत्तिरूपमापत्तिमाशंक्येष्टापत्त्या परिहरति, तत्त्वविदिति ।

तत्त्वविद्यदि न ध्यायेत्प्रवर्तेत तदा बहिः ।

प्रवर्ततां सुखेनायं को बाधोऽस्य प्रवर्तने ॥ ९८ ॥

तत्त्वविद्ब्रह्म न ध्यायेद्यदि निरोधाभावात्तस्य चित्तं सदा बहिर्बाह्यविषयेषु प्रवर्तेत। तत्रेष्टापत्तिमाह, प्रवर्ततामिति। अयं ज्ञानी सुखेन बहिः प्रवर्तताम्। ब्रह्मज्ञानस्य बाह्यप्रवृत्तेर्बाधः किं न स्यादिति शंकां परिहरति, क इति। अस्य ज्ञानिनो बाह्यप्रवर्तने को बाधः? बाह्यप्रवृत्तेर्मिथ्यारूपत्वाद्ब्रह्मज्ञानस्य न बाध इत्यर्थः ॥ ९८ ॥

तत्त्वविदो बाह्यप्रवृत्तेरंगीकारेऽनुचिताचरणप्रसक्तिरित्याशंक्य परिहरति, अतीति।

अतिप्रसंग इति चेत्प्रसंगं तावदीरय।
प्रसंगो विधिशास्त्रं चेन्न तत्तत्त्वविदं प्रति ॥ ९९ ॥

अतिप्रसंगः उचितमतिक्रम्य प्रसंग इति चेदुचितं प्रसंगं तावदीरय। स दुर्निरूप इति भावः। स दुर्निरूपो न भवति किन्तु विधिशास्त्रं विधिनिषेध-शास्त्रं प्रसंग इति चेन्न। कुतः? तद्विधिनिषेधशास्त्रं तत्त्वविदं प्रति नोक्तम्। विधिनिषेधशास्त्रं न तत्त्ववित्परम्। किंत्वविद्यावित्परम्। तदतिक्रमस्तत्त्वविदं प्रति दोषत्वेन नोद्भाव्य इति तात्पर्यम् ॥ ९९ ॥

विधिनिषेधशास्त्राणामविद्यावद्विषयत्वं विवृणोति, वर्णेति।

वर्णाश्रमवयोऽवस्थाभिमानो यस्य विद्यते।
तस्यैव च निषेधाश्च विधयस्सकला अपि ॥ १०० ॥

वर्णाश्रमवयोऽवस्थाभिमानः वर्णा ब्राह्मणाद्या, आश्रमा गार्हस्थ्यादयः, वय उपनयनादिवैदिककर्माचरणयोग्यकालः। अवस्था बाल्यादिकास्तेष्वभिमानो यस्य विद्यते तस्यैव सकलाः शास्त्रप्रतिपादिता निषेधाः विधयश्च। शास्त्राणां तत्तदुल्लेखेन विधिनिषेधबोधकत्वात् ॥ १०० ॥

ननु देहधारित्वाद् ज्ञानिनोऽपि वर्णाश्रमाद्यभिमानोऽस्त्येवेत्याशंक्य मायापरिकल्पितत्वाद्वर्णाश्रमादयो देहस्य न त्वात्मन इत्याह, वर्णेति।

वर्णाश्रमादयो देहे मायया परिकल्पिताः ।
नात्मनो बोधरूपस्येत्येवं तस्य विनिश्चयः ॥ १०१ ॥

सुलभा पदयोजना । एवं निश्चितत्वात्तस्य वर्णाश्रमाद्यभिमानराहित्येन तं प्रति शास्त्रं न प्रवृत्तमिति भावः ॥ १०१ ॥

उक्तमर्थं द्वाभ्यां प्रपंचयति, समाधिमिति ।

समाधिमथ कर्माणि मा करोतु करोतु वा ।
हृदयेनास्तसर्वास्थो मुक्त एवोत्तमाशयः ॥ १०२ ॥

यो हृदयेन मनसा आस्तसर्वास्थः आस्ता निरस्ताः सर्वा आस्थाः आसक्तिविशेषा येन सः परित्यक्तसर्वसङ्गः स उत्तमाशयः । अतः सः मुक्तः एव । स समाधिं चित्तैकाग्र्यं कर्माणि विहितानि करोतु अथवा मा करोतु । न तेनास्य लाभालाभौ विद्येते "निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेध", इति भगवत्पादाः ॥ १०२ ॥

अस्मिन्नर्थे वचनान्तरमाह, नैष्कर्म्येति ।

नैष्कर्म्येण न तस्यार्थस्तस्यार्थोऽस्ति न कर्मभिः ।
न समाधानजप्याभ्यां यस्य निर्वासनं मनः ॥ १०३ ॥

यस्य मनः निर्वासनं निर्धूताखिलद्वैतसंस्कारं तस्य विदुषः सन्यासिनो नैष्कर्म्येण कर्मराहित्येन अर्थात् सन्यासेन अर्थः प्रयोजनं नास्ति । न च कर्मभिः, समाधानजप्याभ्यां समाधानं समाधिः जप्यं जपयोग्यं ओंकारादि ताभ्यां च न प्रयोजनम् ॥ १०३ ॥

तत्त्वविदो निर्वासनत्वे हेतुमाह, आत्मेति ।

आत्मासङ्गस्ततोऽन्यत्स्यादिन्द्रजालं हि मायिकम् ।
इत्यचञ्चलनिर्णीते कुतो मनसि वासना ॥ १०४ ॥

आत्मा असङ्गः ततः आत्मनोऽन्यत् । तद्भिन्नं जगदादिकं मायिकं

मायाकल्पितं इन्द्रजालं आभासमात्रमिति अचञ्चलनिर्णीते दृढं निश्चिते मनसि वासना द्वैतसंस्कारः कुत आयाति नायातीति भावः ॥ १०४ ॥

एवं सति तत्त्वविदः प्रसङ्गाभावेऽतिप्रसङ्गः कैमुतिकसिद्ध इत्युपसंहरति, एवमिति ।

**एवं नास्ति प्रसङ्गोऽपि कुतोऽस्यातिप्रसंजनम् ।**
**प्रसङ्गो यस्य तस्यैव शंक्येतातिप्रसंजनम् ॥ १०५ ॥**

सुलभा पदयोजना । वर्णाश्रमाद्युपेतं द्वैतज्ञानविशिष्टं प्रत्येव सर्वं विधिनिषेधशास्त्रं प्रवर्तते । न तु ज्ञानिनं प्रति । यस्य तच्छास्त्रप्रसङ्गस्तस्यैवातिप्रसङ्गोऽपि । विदुषस्तस्याविषयत्वात्तं प्रति प्रसङ्गो वातिप्रसङ्गो वा शंकितुमशक्य इति भावः ॥ १०५ ॥

तत्रोदाहरणमाह, विधीति ।

**विध्यभावान्न बालस्य दृश्यतेऽतिप्रसंजनम् ।**
**स्यात्कुतोऽतिप्रसङ्गोऽस्य विध्यभावे समे सति ॥ १०६ ॥**

सुलभा पदयोजना । बालस्यानुपनीतस्य विधिनिषेधयोरभावः । बालस्य तत्त्वविदश्च विधिनिषेधयोरभावस्य समे सति तयोरतिप्रसङ्गोऽपि सम एवेति भावः ॥ १०६ ॥

बालस्याज्ञत्वान्न समीचीनोऽयं दृष्टान्त इत्यत आह, नेति ।

**न किंचिद्वेत्ति बालश्चेत्सर्वं वेत्त्येव तत्त्ववित् ।**
**अल्पज्ञस्यैव विधयः सर्वे स्युर्नान्ययोर्द्वयोः ॥ १०७ ॥**

बालः किंचिदपि न वेत्तीति तस्य विध्यभाव इति चेत् तत्त्ववित् सर्वं वेत्त्येवेति तस्यापि विध्यभावः । सर्वे विधयो निषेधाश्च अल्पज्ञस्यैव । अन्ययोः अल्पज्ञेतरयोरज्ञप्राज्ञयोर्द्वयोः ते न स्युः । तत्त्वविदः सर्वज्ञत्वान्न तं प्रत्यज्ञातज्ञापनरूपा विधिः प्रवर्तते । अनेकशास्त्रपारगोऽप्यतत्त्वविदल्पज्ञ एवेत्यत्राकूतं भवति॥१०७

ननु शापानुग्रहसमर्थ एव तत्त्वविदित्याशंक्य तत्सामर्थ्यं तपसः फलं न

तु तत्त्वज्ञानस्येत्याह, शापेति ।

शापानुग्रहसामर्थ्यं यस्यासौ तत्त्वविद्यदि ।
तन्न शापादिसामर्थ्यं फलं स्यात्तपसो यतः ॥ १०८ ॥

शापो निग्रहः, स्पष्टमन्यत् ॥ १०८ ॥

ननु तपसः शापादिसामर्थ्यकारणत्वमभ्युपगतम् । ज्ञानस्य तन्निराकृतम् । तन्न संगच्छते । ज्ञानिनामपि व्यासादेश्शापादिसामर्थ्यस्य दर्शनादित्यत आह, व्यासेति ।

व्यासादेरपि सामर्थ्यं दृश्यते तपसो बलात् ॥ १०८= ॥

तत्त्वविदामुत्तमस्य व्यासादेरपि सामर्थ्यं शापादिसामर्थ्यं यत् तत्तपसो-बलात् तपःप्रभावादेव दृश्यते न तु ज्ञानात् ॥ १०८= ॥

ननु तपस्विनां व्यासादीनां ज्ञानशापादिसामर्थ्ययोरुभयोरपि र्शनात्तप एव ज्ञानद्वारा शापादिसामर्थ्यकारणमित्यायाति । तथा च ज्ञानस्य द्वारभूतस्य शापादिसामर्थ्यहेतुत्वमर्थात्सिद्धम् । यागद्वारभूतधर्मादेस्स्वर्गादिहेतुत्ववदित्याशंक्याह, शापेति ।

शापादिकारणादन्यत्तपो ज्ञानस्य कारणम् ॥ १०९ ॥

ज्ञानस्य कारणं हेतुभूतं तपः शापादिकारणात्तपसोऽन्यत् । "तपसा ब्रह्म विजिज्ञासस्व" (तै. ३–२) त्यत्र तपश्शब्देन गुरुशास्त्रावगतस्य मननमभिधीयते, न तु किञ्चिद्देवताकस्य मन्त्रस्य पुरश्चरणेन सिद्धिः । एवं च तपसः शापादि-सामर्थ्यहेतुभूतस्य न द्वारभूतं ज्ञानम् । तथा च ज्ञानस्य शापादिसामर्थ्यहेतुत्वं नार्थसिद्धमिति भावः ॥ १०९ ॥

व्यासादीनां तपस्विनामुभयमपि दृश्यत इत्यांशक्य समाधत्ते, द्वयमिति ।

द्वयं यस्यास्ति तस्यैव सामर्थ्यज्ञानयोर्जनिः ।
एकैकं तु ततः कुर्वन्नेकैकं लभते फलम् ॥ ११० ॥

स्पष्टोऽर्थः ॥ ११० ॥

विधिशास्त्रानतुसरणे शापानुग्रहसामर्थ्यस्यालभ्यत्वात् सामर्थ्याभावप्रयुक्ता निन्दा स्यादित्याह, सामर्थ्येति ।

सामर्थ्यहीनो निन्द्यश्चेद्यतिभिर्विधिवर्जितः ।
निन्द्यन्ते यतयोऽप्यन्यैरनिशं भोगलंपटः ॥ १११ ॥

सुगमा पदयोजना । विहितानुष्ठातारो यतयो भोगलंपटैर्निन्द्यन्ते । न तावता तेषां काऽपि क्षतिः । तथैव शापादिसामर्थ्यविरहितस्य ज्ञानिनो तद्व्यतिकृतनिन्दया न काऽपि हानिरिति तात्पर्यम् ॥ १११ ॥

नन्वेतेऽपि निजभोगतृष्णोपशमनाय विषयान् संगृह्णीयुरित्याशंक्य तेषां पूर्णवैराग्यराहित्यमेवात्र कारणमित्याह, भिक्षेति ।

भिक्षावस्त्रादि रक्षेयुर्यद्येते भोगतुष्टये ।
अहो यतित्वमेतेषां वैराग्यभरमंथरम् ॥ ११२ ॥

एते यतयो भोगतुष्टये भोगेच्छासन्तर्पणाय भिक्षावस्त्रादि आदिशब्देन मठादिकं च, यदि रक्षेयुः एतेषां यतित्वं वैराग्यभरमंथरं संपूर्णवैराग्यविधुरमित्यहो इत्याश्चर्यद्योतकम् । न तेषां काषायकर्पटकमण्डल्वादिसंकुलं यतित्वं वास्तवं किन्तु लोकानां यतित्वभ्रमजननमात्रोपयोगीत्याशयः ॥ ११२ ॥

यथा मूढानां निन्दया वर्णाश्रमधर्मपराणां नो हानिस्तथा देहाभिमानिनिन्दया न काप्यात्मविदो हानिरित्याह, वर्णेति ।

वर्णाश्रमपरान् मूढा निन्दन्त्वित्युच्यते यदि ।
देहात्ममतयो बुद्धं निन्दन्त्वाश्रममानिनः ॥ ११३ ॥

स्पष्टोऽर्थः । गुरुशास्त्राभ्यामवगतस्य मननिदिध्यानात्मकं ब्रह्मज्ञानोपकारकं तपः यत्किञ्चिद्देवताकस्य मन्त्रादेः पुरश्चरणरूपेण तपसा भिन्नमिति विषयप्ररोचनायामेवातीतश्लोकपंचकस्य तात्पर्यमिति बोध्यम् ॥ ११३ ॥

एवं श्लोकषट्केन तत्त्वविदो देहाभिमानराहित्यं ज्ञानवलक्षण्य च प्रदर्श्य तत्त्वविदविरोधित्वाल्लौकिकं सम्यगाचरेदि (९-८७) त्युक्तार्थं निगमयति,

तदिति ।

तदिद्धं तत्त्वविज्ञाने साधनानुपमर्दनात् ।
ज्ञानिनाचरितुं शक्यं सम्यग्राज्यादि लौकिकं ॥११४॥

तत् तत इद्धं तत्त्वविज्ञाने सति साधनानुपमर्दनात् व्यवहृतेः साधनानां मनआदीनामनुपमर्दनात् मिथ्यात्वज्ञानेऽपि तन्नाशाभावात् राज्यादि लौकिकं राज्यपरिपालनादिलोकव्यवहारः सम्यगाचरितुं ज्ञानिना जनकादिना शक्यम् ॥ ११४ ॥

ननु साधनादिषु ज्ञानिनो मिथ्यात्वबुद्धेस्तत्रेच्छा नोदेतीति चेत् तस्येच्छाभावेऽपि प्रारब्धानुसारिणी प्रवृत्तिः स्यादित्याह, मिथ्येति ।

मिथ्यात्वबुध्या तत्रेच्छा नास्ति चेत्तर्हि मास्तु तत् ।
ध्यायन् वाथ व्यवहरन् यथारब्धं वसत्वयम् ॥ ११५ ॥

जगतो मिथ्यात्वबुद्ध्या ज्ञानिनस्तत्तद्व्यवहारे इच्छा नास्ति चेत् तर्हि तदिच्छा मास्तु । अस्माकमपीष्टमेवेति भावः । ननु तर्हि लौकिकव्यवहारस्येच्छापूर्वकत्वेन दृष्टत्वात् तदभावे राज्यादिव्यवहारः कथं सिध्यतीत्याशंक्य समाधत्ते, तदिति । तत् राज्यादिलौकिकं यथारब्धं प्रारब्धानुसारेण ध्यायन् अथवा व्यवहरन् अयं ज्ञानी वसतु । उदासीनस्तिष्ठतु । राज्यादिलौकिको व्यवहारः प्रारब्धकृतो न त्विच्छाप्राप्त इति भावः ॥ ११५ ॥

उपासकस्य ध्यानैकपरत्वविचारः ।

एवमुपासकतत्त्वविदोर्भेदवर्णनाप्राप्तं तत्त्वविदोऽवस्थाकथनमुपसंहरन्नुपासकस्य ध्यानैकपरतां स्थापयति, उपासक इति ।

उपासकस्तु सततं ध्यायन्नेव वसेद्यतः ।
ध्यानेनैव कृतं तस्य ब्रह्मत्वं विष्णुत्वादिवत् ॥ ११६ ॥

ज्ञानी व्यवहारध्यानसमाधीन् करोतु मा करोतु । उपासकस्तु ध्यायन्नेव अनवरताभ्यस्यमानोपास्यवस्तुचिन्तनामेव कुर्वन् सततमनिशं वसेत् । तत्र कारणमाह यत इति, यतस्तस्योपासकस्य ब्रह्मत्वं विष्णुत्वादिवत् चतुर्भुजाद्युपेतं

विष्णवादिदेवतास्वरूपमिव ध्यानेनैव कृतं सिद्धम् । भावनाकल्पितं न तु वास्तवमिति भावः ॥ ११६ ॥

तस्यावास्तवत्वं दर्शयति, ध्यानेति ।

ध्यानोपादानकं यत्तद्ध्यानाभावे विलीयते ।
वास्तवी ब्रह्मता नैव ज्ञानाभावे विलीयते ॥ ११७ ॥

यत् ध्यानोपादानकं यस्य ध्यानमेवोपादानकारणं तत् ध्यानमूलकमिति यावत् उपासकस्य ब्रह्मत्वं ध्यानाभावे विलीयते नश्यति । उपादानकारणनाशे कार्यस्य नाशसंभवात् । ज्ञानिनो ब्रह्मता वास्तवी । अतो ज्ञानाभावे नैव विलीयते । सिद्धरूपत्वात् । उपासकस्य ध्यानजन्यो ब्रह्मभावो ध्याननाशे स्वयं नश्यति । न तथा वास्तवी ब्रह्मता । स्वतस्सिद्धत्वात् । न तत्र ज्ञानं कारणम् । वस्तुस्वरूपसमर्पणमात्रेणैव तस्य चरितार्थत्वात् ॥ ११७ ॥

"नैव ज्ञानाभावे विलीयत" इति चतुर्थपादार्थं स्वयमेव व्याचष्टे, तत इति ।

ततोऽभिज्ञापकं ज्ञानं न नित्यं जनयत्यदः ।
ज्ञापकाभावमात्रेण न हि सत्यं विलीयते ॥ ११८ ॥

यतोऽदो ब्रह्मत्वं नित्यं ततो ज्ञानं तस्याभिज्ञापकं भवति यथार्थस्वरूपसमर्पकमात्रमेव भवति । किंतु तन्न जनयति नोत्पादयति । अतोऽज्ञानावरणोच्छेदमात्रमेव तेषां प्रयोजनम् । "अवगतिनिष्ठान्येव ब्रह्मवाक्यानी"त्यर्थः । तत्र व्यतिरेकमुखेनोपपत्तिं दर्शयति, ज्ञापकेति । ज्ञापकाभावमात्रेण सत्यं न विलीयते न नश्यति । तिरस्करण्यपनयनाभावमात्रेणान्तर्दीपप्रकाशो न विलीयते । अपि तु बहिर्न स्फुरति ॥ ११८ ॥

उपासकानां ज्ञानिनां च वस्तुतो ब्रह्मता तुल्यैवेति शंकते, अस्तीति ।

अस्त्येवोपासकस्यापि वास्तवी ब्रह्मतेति चेत् ।
पामराणां तिरश्चां च वास्तवी ब्रह्मता न किम् ॥ ११९ ॥

सुगमा पदयोजना। उपासकज्ञानिनोर्ब्रह्मताया वास्तवत्वसमत्वमात्रेण नोपासकस्य पुरुषार्थः। पशुपामराणां वास्तवी ब्रह्मताऽस्त्येव। तथा च तेषामपि पुरुषार्थः प्रसज्येत। अतो ब्रह्मतामात्रेणोपासकः पामरादिवत् पुरुषार्थानर्ह इति भावः॥ ११९॥

ननु पामरादीनां विद्यमानस्यापि ब्रह्मत्वस्याज्ञातत्वान्न तेषां पुरुषार्थ इत्याशंक्य अज्ञातत्वमुपासकस्यापि सममित्याह, अज्ञानादिति।

**अज्ञानादपुमर्थत्वमुभयत्रापि तत्समम्॥ ११९॥**

उभयत्रापि पामरोपासकयोः यथार्थवस्तुस्वरूपस्य अज्ञानात् तदपुमर्थत्वं पुरुषार्थाभावः समं तुल्यमेव॥ ११९॥

तथा सत्युपासनं किमर्थमभिधीयत इत्याशंक्येतरेभ्यस्तस्य वरिष्ठत्वादिति सदृष्टान्तमाह, उपवासादिति।

**उपवासाद्यथा भिक्षा वरं ध्यानं तथान्यतः॥ १२०॥**

यथा भिक्षा उपवासात् भोजनाभावाद्वरं तथा ध्यानं अन्यत इतरानुष्ठानेभ्यो वरम्॥ १२०॥

निर्गुणोपासनस्य विज्ञानसामीप्यत्वविचारः।

अनुष्ठानान्तरेभ्य उपासनस्य वरिष्ठत्वप्रदर्शनाय कृषिनित्यकर्मसगुणनिर्गुणोपासनानां पूर्वपूर्वस्मादुत्तरोत्तरस्य श्रैष्ठ्यं दर्शयति, पामरेति।

**पामराणां व्यवहृतेर्वरं कर्माद्यनुष्ठितः।**
**ततोऽपि सगुणोपास्तिर्निर्गुणोपासना ततः॥ १२१॥**

व्यवहृतिः कृषिवाणिज्यादि। कर्म नित्यनैमित्तिकादि। स्पष्टमन्यत्॥ १२१॥

एवमुत्तरोत्तरस्योत्तमत्वे कारणमाह, यावदिति।

**यावद्विज्ञानसामीप्यं तावच्छ्रैष्ठ्यं विवर्धते।**
**ब्रह्मज्ञानायते साक्षान्निर्गुणोपासनं शनैः॥ १२२॥**

यावदनुष्ठानस्य विज्ञानसामीप्यं तत्त्वज्ञानस्य सन्निहितत्वं तावत् उत्कृष्टता विवर्धते । अतो वाणिज्यकर्माचरणसगुणोपासनानां पूर्वपूर्वस्मादुत्तरोत्तरस्य श्रेष्ठत्वम् । निर्गुणोपासनस्य तु तेभ्योऽप्युत्तमत्वे कारणमाह, ब्रह्मेति । निर्गुणोपासनं तु शनैः क्रमशः साक्षात् ब्रह्मज्ञानायते ब्रह्मज्ञानमिवाचरति । ब्रह्मज्ञानस्यात्यन्तसन्निहितत्वान्निर्गुणोपासनस्योत्कृष्टतमत्वमिति भावः ॥ १२२ ॥

निर्गुणोपासनं शनैर्ब्रह्मज्ञानायत इत्युक्तमर्थं स्पष्टयति, यथेति ।

यथा संवादिविभ्रान्तिः फलकाले प्रमायते ।
विद्यायते तथोपास्तिर्मुक्तिकालेऽतिपाकतः ॥ १२३ ॥

फलकाले ईप्सितार्थप्राप्त्यनुकूले काले प्रमेवेप्सितार्थं प्रापयति । विद्यायते मोक्षकाले ब्रह्मणो यथार्थज्ञानमिवाचरति तत्फलवद्भवति । स्पष्टमन्यत् ॥ १२३ ॥

ननु संवादिभ्रान्तिर्न स्वयमेव प्रमायते । तत्प्रवृत्तस्य यथार्थवस्तुसामीप्यान्नयनमात्रेणैव तस्य चरितार्थता । प्रमा त्विन्द्रियार्थसन्निकर्षेण जायत इत्यत आह, संवादीति ।

संवादिभ्रमतः पुनः प्रवृत्तस्यान्यमानतः ।
प्रमेति चेत्तथोपास्तिर्मान्तरे कारणायताम् ॥ १२४ ॥

संवादिभ्रमतः प्रवृत्तस्य पुंसोऽन्यमानतः प्रत्यक्षादिप्रमाणान्तरात् वस्तुनः प्रमा आयत इति चेत् इष्टमेव । तथा निर्गुणोपास्तिः मान्तरे प्रमाणान्तरे कारणायताम् । यथा संवादिभ्रमः प्रमाजनकप्रमाणे कारणं भवति तथोपास्तिरप्यपरोक्षज्ञाने कारणं भवत्विति तात्पर्यम् ॥ १२४ ॥

नन्वपरोक्षज्ञाने मूर्तिध्यानादेः कारणत्वं किं नाङ्गीक्रियत इति चेदस्त्वित्याह, मूर्तीति ।

मूर्तिध्यानस्य मन्त्रादेरपि कारणता यदि ।
अस्तु नाम तथाप्यत्र प्रत्यासत्तिर्विशिष्यते ॥ १२५ ॥

चतुर्भुजादिमूर्तिध्यानस्य गायत्र्यादिमन्त्रादेरपि चित्तैकाग्र्यसंपादनद्वारा

ब्रह्मणोऽपरोक्षज्ञाने कारणतां स्याद्यद्यस्तु नाम । तर्हि निर्गुणोपासने को विशेष इत्यत आह, तथेति । तथाप्यत्र निर्गुणोपासने प्रत्यासत्तिः ज्ञानस्य सन्निहितत्वं विशिष्यते । विशेषतो वर्तते ॥ १२५॥

निर्गुणोपासने प्रत्यासत्त्यतिशयं प्रदर्शयति, निर्गुणेति ।

**निर्गुणोपासनं पक्वं समाधिः स्याच्छनैस्ततः ।**
**यः समाधिर्निरोधाख्यः सोऽनायासेन लभ्यते ॥ १२६ ॥**

निर्गुणोपासनं पक्वं सत् शनैः समाधिः सविकल्पकसमाधिः स्यात् । ततः सविकल्पकसमाधेः निरोधाख्यः तन्नामको यो निर्विकल्पकसमाधिर्विद्यते सोऽनायासेन लभ्यते ॥ १२६ ॥

निरोधाख्यसमाधिलाभे प्रयोजनमाह, निरोधेति ।

**निरोधलाभे पुंसोऽन्तरसंगं वस्तु शिष्यते ।**
**पुनः पुनर्वासितेऽस्मिन्वाक्याज्जायते तत्त्वधीः ॥ १२७ ॥**

निरोधलाभे निर्विकल्पकसमाधेः प्राप्तौ पुंसः उपासकस्य अन्तः अन्तःकरणे असंगं संगरहितं आत्मवस्तु शिष्यते अवशिष्यते । अस्मिन्नसंगवस्तुनि पुनः पुनः वासिते भाविते सति तत्त्वमस्यादिमहावाक्यात्तत्त्वधीः अपरोक्षसाक्षात्कारो जायते । अत्रायं भावः । सगुणोपासनापेक्षया निर्गुणोपासने ज्ञानस्य सन्निहितत्वं विशेषतो वर्तते; पक्वे निर्गुणोपासने सविकल्पकसमाधिः, ततो निर्विकल्पकसमाधिः; तत्रासंगवस्तुन्यसकृद्भाविते तत्त्वमस्यादिमहावाक्यार्थविचारणेन अपरोक्षसाक्षात्कारो भवतीत्युपासनायाः ब्रह्मज्ञानोपकारकत्वमिति ॥ १२७ ॥

तत्त्वज्ञानस्य स्वरूपजन्मनी विशदयति, निर्विकारेति ।

**निर्विकारासंगनित्यस्वप्रकाशैकपूर्णताः ।**
**बुद्धौ झटिति शास्त्रोक्ता आरोहन्त्यविवादतः ॥ १२८ ॥**

शास्त्रोक्ता निर्विकारासंगनित्यस्वप्रकाशैकपूर्णताः विकारविधुरत्वं संगराहित्यं त्रैकालिकाबाध्यत्वं स्वप्रकाशत्वं परिपूर्णत्वं एतानि झटिति अविवादतः

बुद्धावारोहन्ति ॥ १२८ ॥

अत्र प्रमाणमाह, योगेति ।

योगाभ्यासस्त्वेतदर्थोऽमृतबिंद्वादिषु श्रुतः ।
एवं च दृष्टद्वाराऽपि हेतुत्वादन्यतो वरम् ॥ १२९ ॥

एतदर्थो निर्विकारत्वादिपूर्णतान्तानां बुद्ध्यारोहणं यस्य प्रयोजनं स योगाभ्यासो निर्गुणोपासनं अमृतबिंद्वादिषूपनिषत्सु श्रुतः । आदिशब्देन कठवल्ल्यादिर्गृह्यते । एवं सति दृष्टद्वारा निर्विकल्पकसमाधिलाभद्वारा अपिशब्दाददृष्टद्वाराऽपि अपरोक्षज्ञानस्य हेतुत्वात् सन्निहितसाधनभूतत्वात् अन्यतः सगुणोपासनादिभ्यो निर्गुणोपासनं वरं श्रेष्ठम् । "निरस्तविषयासंगं संनिरुद्धं मनो हृदि । यदा यात्युन्मनीभावं तदा तत्परमं पद"मिति (अ. बिं. ४.) "एतदालंबनं श्रेष्ठमेतदालंबनं परं । एतदालंबनं ज्ञात्वा ब्रह्मलोके महीयते" (कठ. १. २. १७.) इत्युक्तें श्रुती ॥ १२९ ॥

एवमपरोक्षज्ञानसाधनक्षमं मार्गमुपेक्ष्य तीर्थयात्रादिकक्ष्यान्तरमपेक्षमाणानामविचक्षणतां लौकिकन्यायेनोपक्षिपति, उपेक्ष्येति ।

उपेक्ष्य तत्तीर्थयात्राजपादीनेव कुर्वताम् ।
पिंडं समुत्सृज्य करं लेढीति न्याय आपतेत् ॥ १३० ॥

स्पष्टं पूर्वार्धम् । पिंडं करतलकलितं पायसादि समुत्सृज्य शुष्कं करं लेढि आस्वादयतीति न्याय आपतेत् । केवलतीर्थयात्राजपादीन् परमसाधनतया गृहीतवतामाचार एवात्र विषय एवेत्येवार्थः ॥ १३० ॥

उपासने अधिकारिविचारः ।

ननु साक्षात्कारकारणमात्मतत्त्वमुत्सृज्य ततो व्यवहितफलकं निर्गुणोपासनमनुसरतामपि तन्न्यायगोचरत्वं समानमित्याशंक्य विचारचतुरेतराणामिदं विधीयत इत्याह, उपासकानामिति ।

उपासकानामप्येवं विचारत्यागतो यदि ।
बाढं तस्माद्विचारस्यासंभवे योग ईरितः ॥ १३१ ॥

निर्गुणब्रह्मतत्त्वस्य विचारत्यागता मननादिपूर्वकविचारपरित्यागान्निर्गुण-ब्रह्मण उपासकानामपि एवं पिंडमुत्सृज्य करं लेढीति न्याय आपतेदिति चेत् बाढं सत्यमेव। किमर्थं तर्हि निर्गुणोपासनं विधीयत इत्यत आह, तस्मादिति। तस्मात् शक्त्यभावाद्वा भूतभविष्यद्वर्तमानप्रतिबन्धकैर्वा विचारस्यासंभवे योगो निर्गुणोपासना ईरितः ॥ १३१॥

विचारासंभवे कारणमाह, बह्विति।

**बहुव्याकुलचित्तानां विचारात्तत्त्वधीर्न हि।**
**योगो मुख्यस्ततस्तेषां धीदर्पस्तेन नश्यति ॥ १३२॥**

बहुव्याकुलचित्तानां अमितव्यापाराकुलितमानसानां विचारात् तत्त्वधीः न जायते। कार्यान्तरोद्विग्नमानसानां मननादेरसंभव इत्यर्थः। ततस्तेषां योगो निर्गुणोपासना मुख्यः। तेन धीदर्पो बुद्धेश्चांचल्यं नश्यति। मुख्योपायेऽशक्ताना-मुपायान्तरमवश्यमाश्रयणीयमिति भावः॥ १३२॥

अव्याकुलितचित्तानां सुसाधत्वाद्विचारो मुख्य इत्याह, अव्याकुलितेति।

**अव्याकुलितधियां मोहमात्रेणाच्छादितात्मनाम्।**
**साङ्ख्यनामा विचारः स्यान्मुख्यो झटिति सिद्धिदः॥१३३॥**

प्रतिबन्धैरव्याकुलितबुद्धीनां धीदर्परहितानां मोहमात्रेण अज्ञानमात्रेण आच्छादितात्मनां पिहितमनस्कानां साङ्ख्यनामा विचारः पञ्चकोशविवेचना-पूर्वकतत्त्वविचारो मुख्यः स्यात्। "ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिना" मिति (गी. ३—३) स्मृतेः। तस्य मुख्यत्वं प्रतिपादयति झटितीति, स विचारो झटिति शीघ्रं सिद्धिदो मोक्षप्रदो भवति॥ १३३॥

साङ्ख्ययोगयोरुभयोरपि मोक्षसाधनत्वे श्रीकृष्णवाक्यमुदाहरति, यदिति।

**यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते।**
**एकं साङ्ख्यं च योगं च यः पश्यति स पश्यति॥ १३४॥**

साङ्ख्यैः सम्यक् ख्यानं ज्ञानं संख्या तद्वद्भिः ज्ञाननिष्ठैः प्राप्यते यन्मोक्षाभिधानं स्थानं तद्योगैरपि फलानभिसन्धिपूर्वकमीश्वरे सर्वकर्मसमर्पणपूर्वकमाचरितैः कर्मभिर्गम्यते । साङ्ख्यं तु साक्षान्मोक्षसाधनम्, योगस्तु परंपरया तत्साधनमित्यपेर्थः । अतः साङ्ख्यं योगं च फलैक्येन एकमिति यः पश्यति जानाति स पश्यति सम्यग्जानाति ॥ १३४ ॥

अस्मिन्नर्थे श्वेताश्वतरश्रुतिं प्रमाणयति, तदिति ।

**तत्कारणं साङ्ख्ययोगाधिगम्यमिति हि श्रुतिः ।**
**यस्तु श्रुतेर्विरुद्धः स आभासः साङ्ख्ययोगयोः ॥ १३५ ॥**

साङ्ख्ययोगाधिगम्यं ज्ञानोपासनाभ्यां प्राप्तव्यं ज्ञानं यद्विद्यते तन्मोक्षस्य कारणमिति । "तत्कारणं साङ्ख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशै"रिति श्वेताश्वतरश्रुतिः (६—३) । अनेन कपिलपतञ्जलिप्रतिपादितयोः साङ्ख्ययोगयोरङ्गीकारः स्यादित्याशंक्य श्रुतिविरुद्धत्वात्ते शास्त्राभासमात्रे एवेत्याह, य इति । यस्तु श्रुतेर्विरुद्धः कपिलपतञ्जलिप्रणीतः स साङ्ख्ययोगयोः आभासो आभासो भवति । न तौ वस्तुतः साङ्ख्ययोगौ । "स्मृत्यनवकाशदोषप्रसंग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसंगात्" (ब्र. २. १. १.) "एतेन योगः प्रत्युक्त" (ब्र. सू. २. १. ३.) इति सूत्राभ्यां कापिलपतञ्जलिकृतयोस्साङ्ख्ययोगयोर्वेदान्तविरोधितया निराकृतत्वात्तयोः शास्त्राभासत्वमात्रमेवेति भावः । गीतादौ साङ्ख्ययोगशब्दौ तत्त्वविचारोपासनापरौ, न तु कपिलपतञ्जलिप्रणीतदर्शनपरौ । ननु गीताशास्त्रे योगशब्दः कर्मयोगपरतया प्रयुक्त इति चेन्न दोषः । उपास्तेरपि कर्मयोगान्तःपातित्वात् । "ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिना" मित्यधिकारिभेदेन ज्ञानकर्मरूपमार्गद्वयमात्रस्यैव तत्र प्रतिपादितत्वात् ॥ १३५ ॥

अपक्वोपासकानां गतिविचारः ।

नन्वात्मज्ञानोदयात् प्रागेव मृतस्योपासकस्य का गतिरित्याशंक्य मरणकाल ब्रह्मलोके वा तस्य तत्सिद्धिरिति समाधत्ते, उपासनमिति ।

**उपासनं नातिपक्वमिह यस्य परत्र सः ।**

मरणे ब्रह्मलोके वा तत्त्वं विज्ञाय मुच्यते ॥ १३६ ॥

यस्य निर्गुणोपासकस्य इह अस्मिन् जन्मनि उपासनं अविच्छिन्नमपि नातिपक्वं फलोन्मुखं न भवति स परत्र उत्तरकाले तत्त्वं विज्ञाय मुच्यते। उत्तरकालं विभजति, मरणे ब्रह्मलोके वेति । निर्गुणोपासनया तत्त्वं विज्ञाय तद्द्वारा मुच्यते। तत्त्वज्ञानं चोपासनापरिपाके जायते। यदि परिपाकोऽस्मिन् जन्मनि तदा इहैव विज्ञाय जीवन्मुक्तो भवति। यदि परिपाकाभावः, उत्तरकाले परिपाके तदा तत्त्वज्ञानोदयान्मुक्तो भवति। उत्तरकालः प्राणवियोगकालो ब्रह्मलोकस्थितिकालो वेति भावः। यस्य निर्गुणोपासनं नातिपक्वं तस्य ब्रह्मलोकावाप्तिरसंशयेति सिध्यति। पूर्वोक्तयोगिकुलादिजन्मोक्तिस्तु मध्ये मध्ये विच्छिन्नब्रह्मतत्त्वविचारविषयेत्यवगन्तव्या ॥ १३६ ॥

उपासकस्य मरणसमये तत्त्वज्ञानं जायत इति श्रुतिस्मृतिप्रमाणदर्शनपूर्वकं विशदयति, द्वाभ्याम्।

यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेबरम्।
तं तमेवैति यच्चित्तस्तेन यातीति शास्त्रतः ॥ १३७ ॥

अन्त्यप्रत्ययतो नूनं भावि जन्म तथा सति।
निर्गुणप्रत्ययोऽपि स्यात्सगुणोपासने यथा ॥ १३८ ॥

अन्ते मरणसमये यं यं वापि भावं देवताविशेषं निर्गुणब्रह्म वा स्मरन् कलेबरं देहं त्यजति तं तमेवरूपमेती (गी. ८–६) त्याकारकात् यच्चित्तः यस्मिन् भावे चित्तं यस्य स तेन भावेन यातीत्यर्थकात् "यच्चित्तस्तेनैष प्राणमायाति प्राणस्तेजसा युक्तः सहाऽऽत्मना यथा संकल्पितं लोकं नयति (प्रश्न. ३–१०) यथाकारी यथाचारी तथाभवती (बृ. ४. ६. ५.) त्याकारकाच्च शास्त्रतः श्रुतिस्मृतिरूपात् अन्त्यप्रत्ययतः प्राणोत्क्रमणसमये यद्विधं ज्ञानं तदनुसारतो भाविजन्म नूनं भवति। तर्हि जन्मान्तरे निश्चिते सति निर्गुणोपासकस्य मरणकाले ज्ञानस्य मोक्षोपकारकत्वे प्रमाणत्वेन कथमेते उदाह्रियते इत्याशंक्याह, तथेति। तथा सति

यथा सगुणोपासने मरणसमये पूर्वाभ्यस्तसगुणब्रह्माकारः प्रत्ययो भवति तथा निर्गुणोपासने निर्गुणप्रत्ययोऽपि निर्गुणब्रह्मगोचरः प्रत्ययोऽपि भविष्यति॥१३७,१३८

ननु निर्गुणोपास्त्या अन्ते तत्फलभूतनिर्गुणब्रह्मावाप्तिरेव स्यान्न तु ज्ञाननिमित्तः साक्षात्काररूपो मोक्ष इत्याशंक्य नाममात्रेणैव तयोर्भेद इत्याह, नित्येति।

**नित्यनिर्गुणरूपं तन्नाममात्रेण गीयताम् ।**
**अर्थतो मोक्ष एवैष संवादिभ्रमवन्मतः ॥ १३९ ॥**

तद्विचारप्राप्तं ब्रह्म नित्यनिर्गुणरूपमिति नाममात्रेण गीयताम् । एष नित्यनिर्गुणब्रह्मप्रत्ययो मोक्ष एवाथता भवति । तत्रोदाहरणमाह, संवादीति । संवादिभ्रमवन्मतः । संवादिभ्रमो नाममात्रेण भ्रमस्वरूपः । वस्तुतस्तु प्रमैव । फलप्राप्त्युपयोगित्वात् । तद्वन्निर्गुणोपासनाफलभूतो निर्गुणब्रह्मप्रत्ययोऽर्थतो नित्यनिर्गुणात्मकं परं ब्रह्मैव भवतीत्यर्थः ॥ १३९ ॥

उपासनासामर्थ्यात् ज्ञानोत्पत्तिः ततो मुक्तिः ।

ननु ज्ञानमन्तरा केवलमानसिकक्रियारूपभूतेन निर्गुणोपासनेन कथं मोक्षसिद्धिः स्यादित्याशंक्य तत्सामर्थ्यान्निर्गुणब्रह्मधीर्जायत इति सदृष्टान्तमाह, तदिति ।

**तत्सामर्थ्यात् जायते धीर्मूलाविद्यानिवर्तिका ।**
**अविमुक्तोपासनेन तारकब्रह्मबुद्धिवत् ॥ १४० ॥**

अविमुक्तोपासनेन सगुणब्रह्मोपासनेन तारकब्रह्मबुद्धिवत् सगुणब्रह्मबुद्धिवत् तत्सामर्थ्यात् तस्य निर्गुणोपासनस्य सामर्थ्यात् मूलाविद्यानिवर्तिका धीः अपरोक्षा बुद्धिर्जायते ॥ १४० ॥

तत्र प्रमाणमाह, स इति ।

**सोऽकामो निष्काम इति ह्यशरीरो निरिन्द्रियः ।**
**अभयं हीति मुक्तत्वं तापनीये फलं श्रुतम् ॥ १४१ ॥**

"सोऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्त्यत्रैव

समविलीयन्ते ब्रह्मैव सन् ब्रह्माप्येतीति (उ. ता. ५.) तापनीये तन्नामकोपनिषदि "अशरीरो निरिन्द्रियो" इत्यारभ्य "य एवं वेदेति रहस्यं" इत्यन्तेन मन्त्रवर्णेन अभयं हीति संसारान्निर्भयत्वं चेति अकामोपहतस्य निर्गुणोपासकस्य मुक्तत्वं मोक्षं फलं फलत्वेन श्रुतमित्यर्थः ॥ १४१ ॥

ननु निर्गुणोपासनाया मोक्षफलकत्वे सति "नान्यः पन्था विद्यतेऽयनायेति" (श्वे. ३. ८.) श्रुतिविरोधः स्यादित्याशंक्य मोक्षावाप्तिसाधनैकभूतस्य ज्ञानस्योपासनाजन्यत्वान्न विरोध इत्याह, उपासनस्येति ।

**उपासनस्य सामर्थ्याद्विद्योत्पत्तिर्भवेत्ततः ।**
**नान्यः पन्था इति ह्येतच्छास्त्रं नैव विरुध्यते ॥ १४२ ॥**

उपासनस्य सामर्थ्यात् विद्योत्पत्तिर्भवेत् । ततो "नान्यः पन्था विद्यतेऽयनायेत्ये (श्वेता. ३–८) तच्छास्त्रं न विरुध्यते । ज्ञानादेवतु कैवल्यं । ज्ञानं चोपासनासामर्थ्यादुत्पद्यते इत्युपासनस्य मोक्षसाधनत्वोक्तिः श्रुत्यविरुद्धेति भावः।

उपासनस्य मोक्षसाधनत्वे ज्ञानस्य द्वारभूततया द्वारेण द्वारिणोऽन्यथा सिद्ध्यभावेनोपासनस्य साधनत्वमबाधितम् । अव्यवधानेन फलजनकस्यैव द्वारभूततया तादृशं जनकत्वं नान्यः पन्था इत्यनेन वाक्येन ज्ञानस्य बाधितम् । एवं चोभयोर्वाक्ययोर्द्वारद्वारिणोर्यथायोगं जनकत्वबोधकतया न परस्परविरोधः ॥ १४२ ॥

निष्कामकृतनिर्गुणोपासनाया मुक्तिफलकत्वं निगमयति, निष्कामेति ।

**निष्कामोपासनान्मुक्तिस्तापनीये समीरिता ॥ १४२॥ ॥**

तापनीये "सोऽकामो निष्काम" (उ. ता. ५.) इति वाक्ये ॥१४२॥॥

सकामकृतनिर्गुणोपासनाया ब्रह्मलोकफलकत्वं सप्रमाणमुपपादयति, ब्रह्मलोक इति ।

**ब्रह्मलोकः सकामस्य शैब्यप्रश्ने समीरितः ॥ १४३ ॥**

सकामस्य निर्गुणोपासकस्य ब्रह्मलोकः शैब्य प्रश्ने "यः पुनरेतत्त्रिमात्रेणोमित्यनेनैवाक्षरेणे"त्यारभ्य "पुरिशयं पुरुषमीक्षते" इत्यन्ते (प्रश्न. ५.) पञ्चमे समीरितः ॥ १४३ ॥

उक्तं शैब्यप्रश्नवाक्यमर्थतः पठति, य इति ।

य उपास्ते त्रिमात्रेण ब्रह्मलोके स नीयते ।
स एतस्माज्जीवघनात्परं पुरुषमीक्षते ॥ १४४ ॥

यस्त्रिमात्रेण अकारोकारमकाररूपमात्रत्रयविशिष्टेनोंकारेण उपास्ते स ब्रह्मलोके नीयते । "सत्पुरुषोऽमानवः स एनान् ब्रह्म गमयत्येष देवयानः पन्था" । (छां. ५. १०. २.) इति श्रुतेः । ननूक्तश्रुतिवाक्ये ब्रह्मलोकावाप्तिमात्रस्यैव श्रूयमाणत्वात् सकामोपासको मोक्षावाप्तौ हताश एवेत्याशंक्य ब्रह्मलोकगमनानन्तरं विद्यामास्थाय परमपुरुषमीक्षत इत्याह, स इति । स एवं नीयमानः सकामस्तत्र ब्रह्मलोके सर्वपाप्मना मुक्तो भूत्वा विद्यामास्थाय एतस्माज्जीवघनात् सर्वसंसारिणां जीवानामात्मभूतत्वात् सर्वजीवसंहतस्वरूपाद्धिरण्यगर्भाद्विशिष्टं परं पुरुषं ईक्षते साक्षात्करोति ॥ १४४ ॥

ननु सकामोपासना द्विप्रकारिका । सत्यसंकल्पत्वाद्यनेकगुणविशिष्टाहंग्रहात्मिका एका, जडेषु नामादिषु ब्रह्मप्रत्ययानयात्मिका प्रतीकोपासना अन्या। एवं सत्युभयोरपि ब्रह्मलोकावाप्तिरूपतुल्यफलता आहोस्विदन्यतरस्याः विशेषो वेत्याशंक्य आदिमाया एव तत्फलं न त्वन्तिमाया इति व्याससूत्रं प्रमाणयति, अप्रतीकेति ।

अप्रतीकाधिकरणे तत्क्रतुन्याय ईरितः ।
ब्रह्मलोकं फलं तस्मात् सकामस्येति वर्णितम् ॥ १४५ ॥

अप्रतीकाधिकरणे "आश्रयान्तरप्रत्ययस्याश्रयान्तरे क्षेपः प्रतीकः यथा नाम ब्रह्म इत्यादौ नामादिषु ब्रह्माश्रयस्य प्रत्ययस्य प्रक्षेपः", प्रतीकः । स न भवतीत्यप्रतीकः । तमधिकृत्य कृते अधिकरणे । एकार्थप्रतिपादके विषयसंशयपूर्वपक्षसिद्धान्तफलभेदात्मकपञ्चाङ्गबोधकवाक्यसमुदायरूपं न्यायनिर्णयस्थानमधिकरणम्। तस्मिन् चतुर्थाध्यायतृतीयपादे षष्ठाधिकरणे "अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात्तत्क्रतुश्चति", (सू. ४. ३. १५.) सूत्रे तत्क्रतुन्याय ईरितः । अस्य सूत्रस्यायमर्थः । सकामोपासकानां मध्ये प्रतीकोपासका "नामब्रह्मेत्युपासीत (उ.ता. ७) "आदित्यं ब्रह्मेत्युपास्ते" इति (छां. ३-१९) विविधजडवस्त्वारोपित ब्रह्मदृष्ट्यो-

पासनं कुर्वाणाः। अप्रतीकोपासका मनोमयत्वभारूपत्वसत्यसंकल्पत्वाद्यनेकधर्मविशिष्टं ब्रह्मैवाहमस्मीत्यहंग्रहोपासका अन्ये। तेषु सर्वानमानवः पुरुषो ब्रह्मलोकं गमयति उतान्यतरानिति संदेहे अप्रतीकालंबनानेव नयतीति बादरायणोऽभिप्रैति। ननु "अनियमः सर्वासामविरोधः शब्दानुमानाभ्यां", (सू. ३. ३. ३१.) इति सूत्रे नयने नियमाभावस्योक्तत्वात्केषांचिदेव नयने तद्विरोधः स्यादित्यत आह, उभयथेति। उभयथा अदोषात्, कांश्चिन्नयति न कांश्चिदित्युभयथाभ्युपगमे दोषस्याभावात्। अत्र सर्वशब्देन प्रतीकालंबनोपासकातिरिक्तानामेव गृहीतत्वात्। तन्मात्रग्रहणे कारणमाह, तत्क्रतुश्चेति। तत्क्रतुः तस्य परब्रह्मणः क्रतुः संकल्पः उपासनं यस्य स तथाभूतः। "तं यथा यथोपासते तदेव भवति" "यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम्"। इति श्रुतिस्मृत्योः यद्विषय उपासकस्तद्भावमेतीति कार्यब्रह्मोपासकानामेव तत्प्राप्तिः। अप्रतीकोपासकस्य सकामस्य ब्रह्मलोकः फलम्। प्रतीकोपासकस्य तु प्रतीकस्यैव प्राधान्यान्न तस्य ब्रह्मलोकावाप्तिः ॥ १४५ ॥

मोक्षस्यावश्यं ज्ञाननिमित्तकत्वात् सकामोपासकस्य कथं तत्त्वज्ञानोत्पत्तिरित्याशंक्याह, निर्गुणेति।

निर्गुणोपास्तिसामर्थ्यात्तत्र तत्त्वमवेक्षते।
पुनरावर्तते नायं कल्पान्ते च विमुच्यते ॥ १४६ ॥

अयं सकामनिर्गुणोपासको निर्गुणोपास्तिसामर्थ्यात् तत्र ब्रह्मलोके तत्त्वमवेक्षते जानाति। ननु सकामस्य निर्गुणोपासकस्य ब्रह्मलोकावाप्तिः फलमित्युदाहृतप्रमाणैरवगम्यते। न तु नियमेनोपासनापरिपाको भवतीति ज्ञायते। तथा च कथमुच्यते उपासनासामर्थ्यात्तत्र ज्ञानोदय इतीत्यत आह, पुनरिति। अयं तस्माद्ब्रह्मलोकान्न पुनरावर्तते। "अनावृत्तिः शब्दात् अनावृत्तिः शब्दात्" (सू. ४. ४. २२.) "इमं मानवमावर्तं नावर्तन्ते न स पुनरावर्तते" (छां. ४. १५. ६.) इत्यादिभिः पुनरावृत्त्यभावकथनेन ब्रह्मलोकेऽवश्यमुपासनापरिपाकोऽपि भवतीति कल्पनीयमिति भाति। तत्रोपासनापरिपाके किं तस्य फलमित्यत आह, कल्पान्त इति। अयं कल्पान्ते ब्रह्मणा सह मुच्यते ॥ १४६ ॥

ओंकारोपासनस्य सगुणत्वनिर्गुणत्वकथनम् ।

निर्गुणोपासनप्रकरणे "य उपास्ते त्रिमात्रेणेति" प्रणवोपासनाकथनमसंबद्धं, तस्याः सगुणोपासनात्वादित्याशंक्य सा निर्गुणोपासनापीत्याह, प्रणव इति ।

**प्रणवोपास्तयः प्रायो निर्गुणा एव वेदगाः ।**
**क्वचित्सगुणताप्युक्ता प्रणवोपासनस्य हि ॥ १४७ ॥**

वेदगाः प्रश्नकठामृतनादाद्युपनिषत्प्रतिपादिताः प्रणवोपास्तयः ओंकारस्योपास्तयः प्रायो निर्गुणा एव । क्वचित् प्रणवोपासनस्य सगुणताप्युक्ता ॥१४७॥

द्वैविध्ये प्रश्नोपनिषदं प्रमाणयति, परेति ।

**परापरब्रह्मरूप ओंकार उपवर्णितः ।**
**पिप्पलादेन मुनिना सत्यकामाय पृच्छते ॥ १४८ ॥**

स्पष्टोऽर्थः । "एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः" इत्यु (प्रश्न. ५.) पवर्णितः ॥ १४८ ॥

तत्र कठवल्लीं प्रमाणमाह, एतदिति ।

**एतदालंबनं ज्ञात्वा यो यदिच्छति तस्य तत् ।**
**इति प्रोक्तं यमेनापि पृच्छते नचिकेतसे ॥ १४९ ॥**

"एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं पर"मिति (कठ. १. २. १६.) इत्येतदालम्बन साधनं परमपरं च । तत् ज्ञात्वा यस्तयोर्यदिच्छति तस्य तत् सिध्यतीति पृच्छते नचकेतसे यमेन प्रोक्तम् ॥ १४९

निरुक्तार्थस्य पिंडितार्थकथनम् ।

उक्तमर्थमुपसंहरति, इहेति ।

**इह वा मरणे वाऽस्य ब्रह्मलोकेऽथवा भवेत् ।**
**ब्रह्मसाक्षात्कृतिः सम्यगुपासीनस्य निर्गुणम् ॥ १५० ॥**

निर्गुणब्रह्मणः सम्यगुपासीनस्य इह वा अस्मिन् जन्मनि परत्र मरणे वा अथवा ब्रह्मलोके वा ब्रह्मसाक्षात्कृतिः ब्रह्मापरोक्षज्ञानं अवश्यं भवेत् ॥ १५० ॥

आत्मतत्वविचाराक्षमस्योपासनेऽधिकार इत्यादि आत्मगीतायामुदाहृतमित्याह, अर्थ इति ।

अर्थोऽयमात्मगीतायामपि स्पष्टमुदीरितः ।
विचाराक्षम आत्मानमुपासीतेति सन्ततम् ॥ १५१ ॥

स्पष्टोऽर्थः ॥ १५१ ॥

तानि वाक्यान्युदाहरति, साक्षादिति ।

साक्षात्कर्तुमशक्तोऽपि चिन्तयेन्मामशंकितः ।
कालेनानुभवारूढो भवेयं फलितो ध्रुवम् ॥ १५२ ॥

मां परमात्माभिन्नं निर्गुणत्वेन साक्षात्कर्तुमशक्तोऽपि अशंकितः वीतसंदेहस्सन् चिन्तयेत् निष्कामतया मम निर्गुणस्वरूपं मनस्युपासीत । किं तेन ? चिरकालचिन्तनेन कालेन गच्छता काले परिपाके सति अनुभवारूढः निरन्तराभ्यासानुभवेन चिन्तकस्य मनसि सम्यगारूढः संस्थापितः फलितो भवेयमिति ध्रुवम् ॥ १५२ ॥

ध्यानस्य सम्यग्ज्ञानसंपादने व्यतिरेकदृष्टान्तमाह, यथेति ।

यथाऽगाथनिधेर्लब्धौ नोपायः खननं विना ।
मल्लाभेऽपि तथा स्वात्मचिन्तां मुक्त्वा न चापरः॥१५३॥

स्पष्टोऽर्थः ॥ १५३ ॥

अगाथनिध्युदाहरणमन्वयमुखेन दर्शयति, देहेति ।

देहोपलमपाकृत्य बुद्धिकुद्दालकात्पुनः ।
खात्वा मनोभुवं भूयो गृह्णीयान्मां निधिं पुमान् ॥१५४॥

पुनः पुनः बुद्धिकुद्दालकात् बुद्धिरेव कुद्दालकं खननसाधनविशेषः तस्मा-

देहोपलं देह एवोपलः निध्याच्छादकीभूता शिला तमपाकृत्य उन्मूलनेन बहिर्निस्सार्य मनोभुवं मन एव भूः तां खात्वा तत्र संस्थापितं मामसूल्यरत्ननिचयं निधिं भूयो भूय आतृप्तेः पुमान् गृह्णीयात् । अत्र मनसो भूत्वकथनेन ध्याने मनसः प्राधान्यमुक्तं भवति ॥ १५४ ॥

विचाराक्षमस्योपासनाधिकारे प्रमाणान्तरमाह, अन्विति ।

अनुभूतेरभावेऽपि ब्रह्मास्मीत्येव चिन्त्यताम् ।
अप्यसत्प्राप्यते ध्यानान्नित्याप्तं ब्रह्म किं पुनः ॥ १५५ ॥

परब्रह्मणोऽनुभूतेरपरोक्षसाक्षात्कारस्याभावेऽपि ब्रह्मास्मीत्येव चिन्त्यताम् । तेन ब्रह्मप्राप्तिः कैमुतिकसिद्धेत्याह, अपीति । ध्यानादसत् मिथ्यात्मकं विष्ण्वादिदेवत्वमपि प्राप्यते एव । "देवो भूत्वा देवानप्येतीति" (बृ. ४. १. ३.) इति श्रुतिबलात् । किं पुनः नित्याप्तं नित्यतया हृत्कमलेऽतिसन्निहिततयोपलब्धं ब्रह्म ध्यानात् प्राप्यत इति पुनः किमु वक्तव्यम् ॥ १५५ ॥

निर्गुणध्यानफलस्य प्रत्यक्षत्वेऽपि तद्विमुखान् निन्दति, अनात्मेति ।

अनात्मबुद्धिशैथिल्यं फलं ध्यानाद्दिने दिने ।
पश्यन्नपि न चेद्ध्यायेत्कोऽपरोऽस्मात् पशुर्वद ॥ १५६ ॥

स्पष्टोऽर्थः ॥ १५६ ॥

प्रकरणादौ प्रतिज्ञातं ब्रह्मतत्त्वोपास्त्यर्थं संक्षिप्य प्ररोचनापूर्वकमुपसंहरति, देहेति ।

देहाभिमानं विध्वस्य ध्यानादात्मानमद्वयम् ।
पश्यन्मर्त्योऽमृतो भूत्वा ह्यत्र ब्रह्म समश्नुते ॥ १५७ ॥

देहाभिमानं दिह्यते उपचीयत इति देहः स्थूलाध्यात्मकः तस्मिन्नश्वरे अभिमानं अहमिदं ममेदमित्यैक्यभावं विध्वस्य ध्यानादुपासनेन अद्वयमात्मानं पश्यन् मर्त्योऽमृतो भूत्वा ध्यानपरिपाकेन भ्रान्तेरपगमे मरणमप्राप्यैव अत्र अस्मिन् जन्मनि ब्रह्म समश्नुते ॥ १५७ ॥

फलकथनेन प्रकरणमुपसंहरति, ध्यानेति ।

ध्यानदीपमिमं सम्यक् परामृशति यो नरः ।
मुक्तसंशय एवायं ध्यायति ब्रह्म सन्ततम् ॥ १५८ ॥

य इमं ध्यानदीपं ध्यानस्वरूपस्य दीप इव प्रकाशकं प्रकरणं सम्यक् पूर्वापरसंदर्भेण सकामनिष्कामसगुणनिर्गुणोपासनस्य ज्ञानद्वारा ब्रह्मभावफलकत्वं नित्यनिर्गुणरूपमिति नामघालेण गीयमानस्य संवादिभ्रमवदर्थान्मोक्षफलकत्वं च परामृशति विमर्शनारूपमर्थावबोधं करोति सोऽयं चिन्तको मुक्तसंशयोऽपास्तसर्वसंशयः सन्ततं ब्रह्म ध्यायति ॥ १५८ ॥

इति
श्रीमत्परमहंसपरिव्राजकाचार्यशृंगेरीश्रीविरूपाक्षश्रीविद्याशङ्करपदमावेशप्रकाशित जगद्गुरु श्रीकल्याणानन्दभारतीमान्ताचार्यात्यन्तप्रियान्तेवासिनात्रि गोत्रसमुद्भूतेन **लिङ्गनसोमयाजिना** विरचितेयं ध्यानदीपप्रकरणस्य कल्याणपीयूषव्याख्या समाप्ता ॥

इति ध्यानदीपप्रकरणम् ।

*

अथ

# कल्याणपीयूषव्याख्यासमेता पंचदशी

---

## नाटकदीप प्रकरणम् ॥ १० ॥

अष्टमे साक्षिणः कूटवन्निर्विकारस्वरूपं विस्तरतो व्याख्यातम् । नवमे विचारचतुरेतराणां मन्दधियां मोक्षप्राप्त्युपायत्वेनोपासनाविधानमुपपादितम् । विषयस्य दुरवगाहत्वात्सुकुमारबुद्धीनामुपदेश्यांशस्य रूपकमुखेनोपदेश. संप्रदायसिद्ध इति तत्संप्रदायमनुसृत्य साक्षात्कार्यस्य साक्षिणः स्वरूपं नाटकदृष्टान्तेन विशदीचिकीर्षया प्रारभ्यत इदं प्रकरणम् , परमात्मेत्यादिना ।

**परमात्माद्वयानन्दपूर्णः पूर्वं स्वमायया ।**
**स्वयमेव जगद्भूत्वा प्राविशज्जीवरूपतः ॥ १ ॥**

सृष्टेः पूर्वमद्वयानंदपूर्णः, अद्वयः "एकमेवाद्वितीयं" (छां. ६. २. १.) इति श्रुतिबोधितभेदत्रयशून्यः, आनन्दः "आनन्दो ब्रह्मेति व्यजानात्"(तै. ३–६), इति श्रुतिप्रसिद्धो निरतिशयानंदस्वरूपः, पूर्णः "पूर्णमदः पूर्णमिदम्" (ईश. ) इत्यादि श्रुतिप्रतिपादितः, परमात्मा, परं दृश्यपदार्थजातं माति साक्षित्वेन भासयतीति परमः, स चासावात्मेति परमात्मा स्वमायया "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वर" मिति (श्वेत. ४–१०) श्रुत्युक्तस्वनिष्ठमायया स्वयमेवेतरकरणानपेक्षस्सन् जगद्भूत्वा "बहुस्यां प्रजायेय" (तै. २–६) "तदात्मानं स्वयमकुरुत सच्चत्यच्चाभवत्" (तै. २–६) इत्यादि श्रुतिभ्यः, स्वयमेव जगदाकारेण सर्परूपेण रज्जुरिव प्रतीयमानः "अनेन जीवेनात्मनाऽनुप्रविश्य", (छां. ६. ३. २.) इति श्रुत्यनुसारं जीवरूपतः प्राविशत् प्रविष्ट इव प्रतीयते । मायानटीसचिवः परमात्मा जगन्नाटकसूत्रधारस्वरूपोऽमेयचित्ररचनारमणीयं सर्वप्राणिसम्मोहनकरं जगन्नाटकमाकलय्य तिर्यङ्नरामराद्यधममध्यमोत्तमपात्रधारणं स्वयमेवैकयत्नेन कृतवानित्यर्थः॥१

ननु जीवरूपेण सर्वशरीरेषु प्रविशतः परमात्मन एकस्यैव कथं देवमानवतिर्यगादिभेदो घटत इत्याशंक्याह, विष्ण्वति ।

विष्ण्वाद्युत्तमदेहेषु प्रविष्टो देवता भवेत् ।
मर्त्याद्यधमदेहेषु स्थितो भजति मर्त्यताम् ॥ २ ॥

स्पष्टोऽर्थः । शरीरोपाधिकृतोऽयं भेद इति भावः ॥ २ ॥

एवं परमात्मनि जगत आरोपणं प्रदर्श्य तदपवादमुपपादयति, अनेकेति ।

अनेकजन्मभजनात्स विचारं चिकीर्षति ।
विचारेण विनष्टायां मायायां शिष्यते स्वयम् ॥ ३ ॥

अनेकजन्मभजनादनेकेषु मर्त्यादिदेहेष्वाचरितानां कर्मणां परे ब्रह्मणि समर्पणरूपाद्भजनात्सेवातः, "भजसेवाया" मित्युक्तेः, स्वविचारं स्वस्य रूपस्य श्रवणादिविचारं जीवः चिकीर्षति कर्तुमिच्छति । एवं विचारेण विचारजन्यज्ञानेन मायायां विनष्टायामावरणविच्छेदे सति स्वयमद्वयानन्दपूर्णः परमात्मैव शिष्यते॥३॥

ननु ज्ञानान्मोक्ष इति श्रूयते । ज्ञानान्मायाविनाशे स्वरूपेणावस्थितिरिति तद्वैलक्षण्येनात्र कथमुच्यत इत्याशंक्य स्वरूपावस्थितिरेव मुक्तिरित्याह, अद्वयेति ।

अद्वयानंदरूपस्य सद्वयत्वं च दुःखिता ।
बन्धः प्रोक्तः स्वरूपेण स्थितिर्मुक्तिरितीर्यते ॥ ४ ॥

अद्वयानंदरूपस्य परमात्मनः सद्वयत्वं द्वितीयेन साहित्यं, दुःखिता दुःखेन संस्पृष्टता च, यत्तदेव संसाररूपो बन्धः इति प्रोक्तः । स्वरूपेण स्वस्य रूपेण स्थितिरेव मुक्तिरिति चेर्यते । बंधस्य मायापरिकल्पितत्वान्मायानाशे बन्धनाशोऽपि स्यात् । बंधनाशे या स्वस्वरूपावस्थितिस्सैव मोक्ष इति भावः ॥ ४ ॥

ननु "कर्मणैव हि संसिद्धिमास्थिता जनकादय"इति मोक्षसाधनत्वेन कर्मणोऽप्यभ्युपगमान्मुमुक्षुभिः किमर्थं विचारः कर्तव्य इत्याशंक्याह, अविचारेति ।

**अविचारकृतो बन्धो विचारेण निवर्तते ।**
**तस्माज्जीवपरात्मानौ सर्वदैव विचारयेत् ॥ ५ ॥**

बन्धः संसाररूपः, अविचारकृतः विचारजन्यतत्त्वज्ञानाभावोऽविचारस्तेन-कृतस्तन्मूलक इत्यर्थः । अतस्तत्त्वस्य विचारेण स निवर्तते । तस्माज्जीवपरात्मानौ सर्वदा साक्षात्कारपर्यन्तं विचारयेत् । बंधस्य तत्त्वज्ञानाभावमूलकत्वेन मूलविनाश-मन्तरा बन्धनिवृत्तेरयोगेन विचारजन्यं ज्ञानमेव बन्धनिवर्तकमिति सिध्यति । बन्धनाशाधीनत्वान्मोक्षस्य विचारमन्तरेण नैव मोक्षसिद्धिः । "कर्मणैवही"ति स्मृतौ संसिद्धिशब्दश्चित्तशुद्धिपरो न तु मोक्षपर इति भावः ॥ ५ ॥

जीवस्वरूपनिरूपणम् ।

विचारोपयोगित्वेन प्रथमतो जीवस्वरूपं निरूपयत्यहमिति ।

**अहमित्यभिमन्ता यः कर्ताऽसौ तस्य साधनम् ।**
**मनस्तस्य क्रिये अन्तर्बहिर्वृत्ती क्रमोत्थिते ॥ ६ ॥**

यश्चिदाभासो देहादौ तादात्म्याध्यासेनाहमित्यभिमन्ता "अहं ब्राह्मणः, अहं यज", इत्याकारकाभिमानं करोति सोऽसौ कर्ता कर्तृत्वादिधर्मविशिष्टो जीवो भवति । कर्तुः क्रियाकरणसाकांक्षत्वात्क्रमेण ते दर्शयति, मन इति । मनस्तस्य करणं साधनम् । क्रमोत्थिते प्रथमतोऽन्तर्वृत्तिः पश्चाद्बहिर्वृत्तिरित्येवं क्रमादुत्थिते अन्तर्बहिर्वृत्ती तस्य क्रिये ॥ ६ ॥

निरुक्तान्तर्बहिर्वृत्त्योः स्वरूपविषयौ विशदयति, अन्तरिति ।

**अन्तर्मुखाऽहमित्येषा वृत्तिः कर्तारमुल्लिखेत् ।**
**बहिर्मुखेदमित्येषा बाह्यं वस्त्विदमुल्लिखेत् ॥ ७ ॥**

अहं ब्रह्मेत्याकारकैषाऽन्तर्मुखावृत्तिः अन्तःकरणवृत्तिश्चिदाभासं कर्तारमुल्लिखेत् विषयीकुर्यात् । बहिर्वृत्तेः स्वरूपं विषयं च दर्शयति, इदमिति । सूक्ष्मदेहाद्बहिर्मुखैषा बुद्धिवृत्तिरिदं बाह्यं देहाद्बहिर्भवं वस्तूल्लिखेत् । इदमित्याकारका वृत्तिर्बहिर्वृत्तिः । तत्रोल्लिख्यमान इदमर्थो विषयः । एवमहमित्युल्लेखिनीवृत्तिरन्तर्वृत्तिः ।

तत्र विषयीभूतः कर्ता तद्विषयः ॥ ७ ॥

ननु रूपं रस इत्येवमुल्लेखिनीनामपि वृत्तीनां सद्भावेन बाह्यवृत्तिस्वरूप-विवरणं न्यूनमित्याशंक्य तेषां तदन्तर्भावं विशदयन् तद्वृत्तीनामसांकर्यप्रयोजकप्रदर्शनव्याजेन मनसः पृथगिन्द्रियत्वाङ्गीकारावश्यकतां दर्शयति, इदमिति।

इदमो ये विशेषाः स्युर्गन्धरूपरसादयः ।
असांकर्येण तान् भिन्द्याद्घ्राणादीन्द्रियपञ्चकम् ॥ ८ ॥

इदम इदमर्थस्य सामान्यस्य गन्धरूपरसादयो ये विशेषा धर्माः स्युस्तान् घ्राणादीन्द्रियपञ्चकमसांकर्येण प्रत्येकं प्रत्येकं भिन्द्यात् विभजेत । एवं चासांकर्य-सिद्धये मनसः पृथक् चक्षुरादीन्यवश्यमभ्युपेयानीति भावः ॥ ८ ॥

परमात्मस्वरूपनिरूपणम् ।

परमात्मस्वरूपं निरूपयति, कर्तारमिति ।

कर्तारं च क्रियां तद्वद्व्यावृत्तविषयानपि ।
स्फोरयेदेकयत्नेन योऽसौ साक्ष्यत्र चिद्वपुः ॥ ९ ॥

अहंकाराभिमानेन कर्तारं व्यवहर्तारं, अन्तर्बहिर्वृत्तिरूपां क्रियां च तद्व-द्व्यावृत्तविषयानपि व्यावृत्ता असांकर्येण घ्राणादीन्द्रियपंचकस्य विषयभूता रूपरस-गन्धादयस्तानेकयत्नेन युगपदेव यः स्फोरयेत्प्रकाशयेदसौ चिद्वपुश्चिदेव वपुस्स्वरूपं यस्य सोऽत्र वेदान्तशास्त्रे साक्षीतीर्यते । "तस्य भासा सर्वमिदं विभाती"ति (कठ.२. ५. १५.) श्रुतेस्साक्षिणश्चिद्रूपत्वं सर्वभासकत्वेनावगम्यते ॥ ९ ॥

कर्तृक्रियाविषयाणामेकयत्नेन स्फूर्तिं दृष्टान्तमुखेन विवृणोति, ईक्ष इति।

ईक्षे शृणोमि जिघ्रामि स्वादयामि स्पृशाम्यहम् ।
इति भासयते सर्वं नृत्यशालास्थदीपवत् ॥ १० ॥

अहं मनसा चक्षुरिन्द्रियद्वारा घटादिविषयानीक्षे पश्यामि, तथैव श्रोत्राभ्यां शब्दं शृणोमि, नासिकया जिघ्रामि, रसनया रसंमास्वादयामि, त्वचा स्पृशामीति सर्वं ज्ञातृज्ञेयज्ञानतत्सहकारीणि स साक्षी भासयते । अत्र दृष्टान्तमाह, नृत्येति ।

यथा नृत्यशालास्थदीपवत् नृत्यशालायां रंगभूमौ प्रकाशमानो दीपस्तद्वत् ॥ १० ॥

दृष्टान्तमेव विवृणोति, नृत्येति ।

नृत्यशालास्थितो दीपः प्रभुं सभ्यांश्च नर्तकीम् ।
दीपयेदविशेषेण तदभावेऽपि दीप्यते ॥ ११ ॥

नृत्यशालास्थितो दीपः नाटकप्रवर्तकं प्रभुं सर्वशक्तिमन्तं राजानं, तदाश्रितान् सभ्यान्, नर्तकीं चाविशेषेण तुल्यमेव दीपयेत् प्रकाशयेत् । तदभावेऽपि प्रभ्वादेरभावेऽपि दीप्यते स्वयं प्रकाशते । सूर्यकान्तिः प्रकाश्यप्रकाशनायैव न प्रकाशते; किंतु प्रकाश्याभावेऽपि प्रकाशते ॥ ११ ॥

दृष्टान्तार्थं दार्ष्टान्तिके समन्वेति, अहमिति ।

अहंकारं धियं साक्षी विषयानपि भासयेत् ।
अहंकाराद्यभावेऽपि स्वयं भात्येव पूर्ववत् ॥ १२ ॥

साक्षी अहंकारमहमित्यभिमानप्रेरितं जीवं तस्य साधनीभूतां धियं रूपरसगन्धादीन्विषयानप्येकयत्नेन युगपदेव भासयेत्प्रकाशयेत् । सुषुप्तिकाले सर्वोपरमसमयेऽहंकाराद्यभावेऽपि स्वयं पूर्ववज्जाग्रत्स्वप्नयोरिव साक्षी स्वयं भात्येव ॥ १२ ॥

ननु सत्त्वगुणप्रधानाया बुद्धेस्सर्ववस्त्ववभासनसमर्थत्वात्तयैव भाने सिद्धे साक्षिभास्यत्वकल्पना गौरवग्रस्तैव स्यादित्याशंक्य साक्ष्यनवभास्यमाना बुद्धिः स्वयं विषयग्रहणासमर्थेत्याह, निरन्तरमिति ।

निरन्तरं भासमाने कूटस्थे ज्ञप्तिरूपतः ।
तद्भासा भास्यमानेयं बुद्धिर्नृत्यत्यनेकधा ॥ १३ ॥

कूटस्थे स्वयंप्रकाशे निरन्तरं भासमाने सतीयं स्वयं जडरूपा बुद्धिस्तद्भासा कूटस्थस्य तेजसा भास्यमानाऽनेकधा नृत्यति विविधविषयान्विषयीकरोति ॥ १३ ॥

जगतो नाटकत्वरूपकमवयवरूपकपूर्वकं समर्थयति, अहंकार इति ।

अहंकारः प्रभुः सभ्या विषया नर्तकी मतिः ।

तालादिधारीण्यक्षाणि दीपः साक्ष्यवभासकः ॥ १४ ॥

अस्मिन् जगन्नाटकेऽहंकारो जीवः विषयाभिमाननिमित्तसुखदुःखाभ्यां संस्पृष्टत्वात्प्रभुर्नृत्याभिमानी तत्प्रवर्तकः। विषयाः स्रक्चंदनादयस्सभ्याः। अभिमानराहित्यात्तेषां सभ्यसाम्यता। विविधविकारविशिष्टा मतिर्नर्तकी। धीविकाराननुसरन्त्यक्षाणि तालादिधारीणि। तेषां सर्वेषां युगपदवभासकः साक्षी ॥ १४ ॥

ननु विषयाद्यवभासकस्य साक्षिणस्तत्संसर्गसंभूतं विकारित्वं सिध्येतेत्याशंक्याह, स्वस्थानेति।

स्वस्थानसंस्थितो दीपः सर्वतो भासयेद्यथा।
स्थिरस्थायी तथा साक्षी बहिरन्तःप्रकाशयेत् ॥ १५ ॥

यथा स्वस्थानसंस्थितो दीपः सर्वतः परिसरप्रदेशं तत्स्थानपि भासयेत्तथा स्थिरस्थायी स्थिरो गमनागमनशून्यः स्थायी स्थितिमात्रस्वभावो नित्यः साक्षी शरीरस्य बहिरन्तःप्रकाशयेत् ॥ १५ ॥

साक्षिणि बुद्धिचांचल्यारोपकथनम्।

ननु परिपूर्णस्य साक्षिणो बहिरन्तरवभासकत्वाभिधानमसमंजसमित्यत आह, बहिरिति।

बहिरन्तर्विभागोऽयं देहापेक्षो न साक्षिणि।
विषया बाह्यदेशस्था देहस्यान्तरहंकृतिः ॥ १६ ॥

अयं बहिरन्तर्विभागो देहापेक्षो देहमपेक्ष्यैव कृतः; साक्षिणि तु न नास्त्येव। देहापेक्षं बाह्याभ्यन्तरत्वमुक्तमित्यर्थः। एवं सति देहस्यान्तरः कः? बाह्यः कः? इत्याशंक्याह, विषया इति। विषया देहस्य बाह्यदेशस्थाः, तस्यान्तरहंकृतिः ॥ १६ ॥

ननु "स्थिरस्थायी तथा साक्षी बहिरन्तः प्रकाशयेदि"ति साक्षिणो निर्विकारस्य स्थिरस्थायिनो बहिरन्तःप्रकाशकत्वमयुक्तमेव, घटमहं पश्यामीत्यत्र साक्षी अहमिति चिदाभासं प्रथमतः प्रकाशयति। मन इन्द्रियद्वारा घटादिबाह्यवस्तु चानन्तरं स्फोरयति; एवं तस्य साक्षिणो गमनागमने अनुभू-

येते; एवं कथमुच्यते तस्य स्थिरत्वमित्याशंक्याह, अन्तस्थेति ।

अन्तस्था धीः सहैवाक्षैर्बहिर्याति पुनः पुनः ।
भास्यबुद्धिस्थचांचल्यं साक्षिण्यारोप्यते वृथा ॥ १७ ॥

चिदाभासविशिष्टाऽन्तस्था धीश्चक्षुराद्यक्षैरिन्द्रियैस्सह विविधविषयग्रहणाय देहाद्बहिः पुनः पुनर्याति । एवं सति भास्यबुद्धिचांचल्यं साक्षिभास्याया बुद्धेश्चांचल्यं साक्षिणि वृथाऽऽरोप्यते । वास्तवतो न साक्षिणो गमनागमने ॥ १७ ॥

तत्र दृष्टान्तमाह, गृहान्तरेति ।

गृहान्तरगतः स्वल्पो गवाक्षादातपोऽचलः ।
तत्र हस्ते नर्त्यमाने नृत्यतीवातपो यथा ॥ १८ ॥

यथा गवाक्षात् गावः सूर्यकरान् जलानि वाऽक्ष्णुवन्ति व्याप्नुवन्त्येतमनेन वा गवाक्षो वातायनं तस्माद्गृहान्तरगतः स्वल्प आतपोऽचलश्चांचल्यरहितः । तथापि तत्रातपे हस्ते नर्त्यमाने संचालिते सत्यातपो नृत्यतीव दृश्यते ॥ १८ ॥

दृष्टान्तार्थं दार्ष्टान्तिके योजयति, निजेति ।

निजस्थानस्थितः साक्षी बहिरन्तर्गमागमौ ।
अकुर्वन् बुद्धिचांचल्यात्करोतीव तथा तथा ॥ १९ ॥

निजस्थानस्थितः स्वरूपस्थाने स्थितः साक्षी देहाद्बहिरन्तश्च गमागमावकुर्वन्नपि बुद्धिचांचल्याद्बुद्धेश्चचलस्वभावात्तथा तथा तदनुरूपं गमागमौ करोतीव दृश्यते । वस्तुतो न चलतीत्यर्थः ॥ १९ ॥

साक्षिणो देशकालाद्यनवच्छिन्नत्वकथनम् ।

ननु निजस्थानस्थितः साक्षी बहिरन्तर्गमागमौ करोतीवेत्यत्र बहिरन्तर्देशौ साक्षिण आहोस्विद्बुद्धेरिति विकल्प्याह, नेति ।

न बाह्यो नान्तरः साक्षी बुद्धेर्देशौ हि तावुभौ ।
बुद्ध्याद्यशेषसंशान्तौ यत्र भात्यस्ति तत्र सः ॥ २० ॥

साक्षी देहान्न बाह्यः; तथाऽऽन्तरोऽपि न। देहस्य बाह्याभ्यन्तरवर्तित्वं न साक्षिणो वक्तव्यं, पूर्णत्वादिति भावः। तावुभौ बुद्धेरन्तःकरणस्य देशौ। तर्हि साक्षिणः स्थानं कुत्रेत्यत आह, बुद्धीति। बुद्ध्याद्यशेषसंशान्तौ बुद्धेरिन्द्रियाणां चात्यन्तं प्रतीतेरुपरमे सति यत्र साक्षी भाति तत्र स साक्षी अस्ति ॥२०॥

नन्वशेषबुद्ध्युपरमे देशव्यवहार एव नोपलभ्यते। किमुत तन्निष्ठत्व-मित्याशंक्येष्टापत्तिमेवाचष्टे देश इति।

देशः कोऽपि न भासेत यदि तर्ह्यस्त्वदेशभाक्।
सर्वदेशप्रक्लृप्त्यैव सर्वगत्वं न तु स्वतः ॥ २१ ॥

बुद्ध्याद्यशेषसंशान्तौ सर्वव्यवहाराभावात्कोऽपि देशो यदि न भासेत तर्हि साक्षी अदेशभाक् देशानवच्छिन्नोऽस्तु। अस्माकमपीष्टमेव। "नन्वाकाशवत्सर्वगतश्च नित्यः" इति श्रुतिस्तस्य बाधिका स्यादित्याशंक्याह, सर्वेति। सर्वदेशप्रक्लृप्त्यैव सर्वदेशप्रकल्पनेनैव तस्य सर्वगत्वं सिध्यति; तस्मिन् साक्षिणि सर्वस्यापि देशस्य प्रकल्पनात्तस्य सर्वगतत्वं कल्पितं न तु वास्तवमित्यर्थः, स्वतस्तु तस्य सर्वगत्वं न विद्यत एव ॥२१॥

सर्वगतत्वं प्रपंचयति, अन्तरिति।

अन्तर्बहिर्वा सर्वं वा यं देशं परिकल्पयेत्।
बुद्धिस्तद्देशगः साक्षी तथा वस्तुषु योजयेत् ॥ २२ ॥

बुद्धिरन्तर्बहिर्वा यं सर्वं देशं परिकल्पयेत् तद्देशगः साक्षी भवेत्, सर्व-गतत्वमिव सर्वसाक्षित्वमप्यत्रास्तत्रमेवेत्याह, साक्षीति। तथैव वस्तुष्वपि, साक्षीति योजयेत् ॥ २२॥

सर्वद्वैतशान्तौ साक्षी स्वयं प्रकाशते।

योजनाप्रकारं विवृणोति, यदिति।

यद्यद्रूपादि कल्प्येत बुद्ध्या तत्तत्प्रकाशयन्।
तस्य तस्य भवेत्साक्षी स्वतो वाग्बुद्ध्यगोचरः ॥ २३ ॥

बुद्ध्या यद्यद्घटादिरूपं, आदिशब्देन गंधस्पर्शादिविषयजातं च बुद्ध्या कल्प्येत तत्तत्प्रकाशयन् तस्य तस्य रूपादिकस्य साक्षी भवेत्। तर्हि किं तस्य निजस्वरूपमित्यत आह, स्वत इति। स्वतो वाग्बुद्ध्यगोचरः वाचां तदुपलक्षितेतरेन्द्रियाणां बुद्धेश्चागोचरोऽविषयः। "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" (तै. २. ४.) इति श्रुतेः ॥२३॥

एवमवाङ्मनसगोचर आत्मा कथं मुमुक्षोर्ग्राह्यो भवतीत्याशंक्याऽग्राह्यत्वमस्माकमपीष्टमेवेत्याह, कथमिति।

**कथं तादृङ्मया ग्राह्य इति चेन्नैव गृह्यताम्।**
**सर्वग्रहोपसंशान्तौ स्वयमेवावशिष्यते ॥ २४ ॥**

तादृग्वाग्बुद्ध्यगोचरः साक्षी मया मुमुक्षुणा कथं ग्राह्यो ज्ञेय इति चेत्तन्नैव गृह्यताम्। ग्राह्यत्वे सति ग्राह्यग्रहणादिरूपद्वैतसत्त्वान्मुमुक्षोर्न मोक्षावाप्तिरिति गूढाभिसंधिः। ननु तर्ह्यात्मनोऽग्राह्यत्वे विचाराभावः, विचाराभावे मायाया विनाशाभावस्तदभावे परमात्मावशेषाभाव, इत्येवंरूपानर्थपरंपरा संभवेदित्याशंक्याह, सर्वेति। सर्वग्रहोपसंशान्तौ बुद्धिकर्तृकस्य सर्वग्रहस्य ग्राह्यग्राहकादिद्वैतभावस्य संशान्तौ मिथ्यात्वबुद्ध्या अपगमे सति परमात्मा स्वयमेवावशिष्यते ॥ २४ ॥

स्वप्रकाशः प्रमाणान्तरं नापेक्षत इत्याह, नेति।

**न तत्र मानापेक्षाऽस्ति स्वप्रकाशस्वरूपतः।**
**तादृग्व्युत्पत्त्यपेक्षा चेच्छ्रुतिं पठ गुरोर्मुखात् ॥ २५ ॥**

स्वप्रकाशस्वरूपतस्तत्र परमात्मनि मानापेक्षा मानस्य प्रमाणस्यापेक्षा नास्ति। न हि स्वप्रकाशस्य दीपस्य प्रकाशे दीपान्तरापेक्षा। स्वप्रकाशविषये न प्रमाणापेक्षेति ज्ञानोत्पत्तये किं कर्तव्यमित्यत आह, तादृगिति। तादृग्व्युत्पत्त्यपेक्षा तादृशी परमात्मा स्वयंप्रकाश इत्याकारका व्युत्पत्तिर्ज्ञानं तस्या अपेक्षा विद्यते चेत् संप्रदायकुशलस्य गुरोर्मुखान्न तु स्वकपोलकल्पितपाण्डित्येन श्रुतिं पठ। "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" (मुं. १. २. १२.)। "तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया" (गी. ४—३४) इति श्रुतिस्मृतिभ्याम् ॥२५

नन्वेवं सर्वग्रहत्यागाशक्तानां मन्दधियां का गतिरित्याशंक्याह, यदीति।

**यदि सर्वग्रहत्यागोऽशक्यस्तर्हि धियं व्रज ।**
**शरणं तदधीनोऽन्तर्बहिर्वैषोऽनुभूयताम् ॥ २६ ॥**

यदि सर्वग्रहत्यागोऽशक्यस्तर्हि धियं शरणं व्रज । ततः किं स्यात् ? तदधीनस्तस्या बुद्धेरधीन एष परमात्मा अन्तर्बहिर्वाऽनुभूयतां, बुद्ध्या यदाऽऽन्तरं बाह्यं च द्वैतं कल्प्यते तस्य साक्षितया तदधीनः परमात्मा तथैवानुभूयताम् । बुद्धिपरिकल्पितनामरूपादीन्, तदवभासकं चिदाभासं च मिथ्यात्वेन निश्चित्य तेभ्यस्साक्षिणं विविच्य सर्वग्रहाशक्तौ मंदधिया तद्यथार्थस्वरूपमनुभूयतामित्यर्थः ॥ २६ ॥

इति
श्रीमत्परमहंसपरिव्राजकाचार्यशृंगेरीश्रीविरूपाक्षश्रीविद्याशङ्करपदमावेशप्रकाशित
जगद्गुरु श्रीकल्याणानन्दभारतीमान्ताचार्यात्यन्तप्रियान्तेवासिनालि
गोलसमुद्भूतेन **लिङ्गनसोमयाजिना** विरचितेयं नाटकदीप-
प्रकरणस्य कल्याणपीयूषव्याख्या समाप्ता ॥
इति नाटकदीपप्रकरणम् ।

*

अथ

# कल्याणपीयूषव्याख्यासमेता पंचदशी

## ब्रह्मानन्दे योगानन्दाख्य प्रकरणम् ॥ ११ ॥

यद्यपि ब्रह्मानन्दाख्यस्यास्य ग्रंथस्य पूर्वग्रंथादत्यन्तं पार्थक्यं प्रतीयते परिशीलनशालिनाम् । तथापि तृप्तिदीपे प्रदर्शितायास्तृप्तेरनन्तरमाविर्भूतस्याखंडफलभूतस्यानंदस्य विस्तरेण स्वरूपप्रदर्शनायामुं ग्रन्थमारभते ब्रह्मानन्देत्यादिना । अस्मिन् ग्रन्थे आनन्दस्य त्रिविधत्वेन विभजनात्तत्राद्यस्य पुनस्त्रैविध्येन विभजनादानन्दस्य पंचविधत्वं सिद्धम् । तत्रादिभूतब्रह्मानन्दस्यावान्तरभेदत्रयमाद्यप्रकरणत्रयेण विवृतम् । अवशिष्टं प्रकारद्वयं क्रमेण चतुर्थपंचमयोरित्यध्यायसंगतिरवगन्तव्या । अस्य पृथग्ग्रन्थत्वसंभावनायामप्येतद्ग्रंथमन्तरा पूर्वग्रन्थजनिताकांक्षायाः स्वरसतो निवृत्त्यभावे नैतद्ग्रन्थघटित एक एव ग्रन्थ इति निश्चित्यैतेन साकमाहृत्य पंचदशप्रकरणानि भवन्तीति पंचदशीति नामापि प्रसिद्धिमगमदित्यादि सुधीभिराकलनीयम् ।

ब्रह्मानन्दस्य सर्वानर्थहननपूर्वकसुखहेतुत्वकथनम् ।

**ब्रह्मानन्दं प्रवक्ष्यामि ज्ञाते तस्मिन्नशेषतः ।**
**ऐहिकामुष्मिकानर्थव्रातं हित्वा सुखायते ॥ १ ॥**

ब्रह्मानन्दं ब्रह्म चासावानन्दश्चेति तथाभूतमानंदस्वरूपं ब्रह्म "आनन्दो ब्रह्मेति व्यजनात्" (तै. ३-६) इति श्रुतेः । प्रतिपाद्यप्रतिपादकयोरभेदात्तत्प्रतिपादको ग्रन्थो ब्रह्मानन्दः; तं प्रवक्ष्यामीति प्रतिजानीते । अनेनास्य ग्रंथस्य ब्रह्मानन्दो विषयः । तद्ज्ञानं प्रयोजनमित्युक्तप्रायम् । तद्ज्ञानस्य प्रयोजनत्वं विशदयति, ज्ञात इति । तस्मिन् प्रतिपाद्यप्रतिपादकयोरभेदादेतत्प्रतिपाद्ये ब्रह्मरूपानन्दे इत्यर्थः, ज्ञाते सति, ऐहिकामुष्मिकानर्थव्रातं, ऐहिकाः इहलोके भवा आध्यात्मिकाधिभौतिकाधिदैवताः, आमुष्मिकाः परलोके भवास्तापास्तेऽनर्थास्तेषां व्रातं समूहमशेषतो

हित्वा जिज्ञासुस्सुखायते स्वस्य सुखं वेदयते "सुखादिभ्यः कर्तृवेदनाया"मिति क्यङ्प्रत्ययः ॥ १ ॥

तत्र प्रमाणभूतं श्रुतिद्वयमर्थतः पठति, ब्रह्मविदिति ।

**ब्रह्मवित्परमाप्नोति शोकं तरति चात्मवित् ।**
**रसो ब्रह्म रसं लब्ध्वाऽऽनन्दी भवति नान्यथा ॥ २ ॥**

"ब्रह्मविदाप्नोति परमि"ति (तै. २-१) श्रुत्या सर्वमुमुक्षुजनप्रवृत्तिनिमित्तात्यन्तनिश्श्रेयसावाप्तिस्सर्वोपनिषत्तात्पर्यत्वेन प्रतिपाद्यते । तत्र ब्रह्मशब्देन नित्य शुद्धबुद्धमुक्तस्वभावमेकमेवाद्वितीयं परं ब्रह्माभिधीयते । "अस्तितावद्ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्तिसमन्वितम् । ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते बृहतेर्धातोरर्थानुगमादि"ति श्रीभगवत्पादाः । ब्रह्म वेत्ति मनसा साक्षात्करोतीति ब्रह्मवित् । ननु परं ब्रह्म मनसोऽगोचरमेव स्यात् "यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे"ति (तै. २-४) श्रुतेरिति चेन्न । घटादिवत्तदाकाराकारितबुद्धिवृत्तिजन्यफलव्याप्यत्वमेवानया तस्य निवार्यते (७-९०) "मनसैवानुद्रष्टव्यं नेह नानास्ति किंचने"ति (कठ. ४-११) ह्यन्यत्र समाम्नायते । मनसैवेत्यवधारणया चक्षुरादिबाह्यदृष्टिर्व्यावर्त्यते। अनुशब्दबलेन यच्छास्त्रप्रतिपादितं ब्रह्म तदेवानुसृत्यान्तर्दृष्ट्या वेदनीयमिति चावगम्यते । स्वयं प्रकाशमपरोक्षं ब्रह्म । तथापि तस्मिन् परोक्षभ्रमोऽस्तीति तन्निवृत्त्यर्थं प्रत्यगात्मनस्तस्य तादात्म्यं बोध्यते । "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" । (तै. २-१) "य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वमभवत्"; (बृ. १.४.१०.) "यो वेद निहितं गुहायां" (तै. २-१) इत्यादिभिः। प्रत्यगात्मनस्त्वपरोक्षत्वमपंडितानामप्यहमिति मानसप्रत्यक्षेण स्पष्टमेव। देहादिपञ्चकोशेभ्यो विविक्तं प्रत्यगात्मतादात्म्येन गम्यमानं ब्रह्मापरोक्षं मनसाऽवगम्यते । ननु "यन्मनसा मनुते येनाहुर्मनो मतं तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" (केन. १-५) इति श्रुतेर्ब्रह्मणो मनसाऽवगतत्वमेव निषिध्यत इति चेन्न। नास्यां श्रुतौ ब्रह्मणो मनोविषयत्वं निषिध्यते । "ब्रह्म त्वं विद्धी"ति ब्रह्मणो विदिक्रियायाः कर्मत्वोक्तेः । अस्य मन्त्रस्यायमभिप्रायः । स्वप्रकाशमपरोक्षं साक्षिचैतन्यं देहादिपञ्चकोशेभ्यो विविच्य साक्षात्कर्तुं न हि विचारचतुरेतरः प्रभवति । किं तु

तेन मनः प्रकाशितं भवतीति स मन्यते । तदेवान्तःकरणावभासकं साक्षिचैतन्यं ब्रह्मेति विज्ञातव्यम् । तत्साक्षात्कारासमर्था मन्दधियः स्वातिरिक्ततया प्रतीयमानं शास्त्रप्रसिद्धं ब्रह्मोपासते । नैतदुपास्यमुपाधिविशिष्टं मुख्यं ब्रह्म भवति । "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा । यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं, यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यं स भगवस्तस्मिन् प्रतिष्ठित इति स्वे महिम्ने"ति (छां. ७.२४.१.) श्रुतेः । तथापि साक्षिचैतन्यं ब्रह्मेत्युपासनायां साक्षिचैतन्ये व्याप्यमाना चित्तवृत्तिपरंपराऽऽत्मब्रह्मणोर्भेदकारणीभूतामविद्यामपाकरोति । तथा सत्यात्मब्रह्मैक्यरूपा धीवृत्तिर्महावाक्यविषयसंबंधादेव जायत इति वाक्यजन्यं ज्ञानमप्यपरोक्षमेव । यथा बहिर्मुखः पुरुषोऽनवच्छिन्नध्यानप्रवणेन चित्तैकाग्र्येण बहिर्वस्तुनिरूपणसमर्थो भवति तथा प्रत्यगात्माकाराकारिता बुद्धिवृत्तिरपास्तसर्वभेदभ्रमा ब्रह्मसाक्षात्कृतवती भवति । एकमेव वस्तु ब्रह्मेति शास्त्रेण प्रतिपाद्यते । आत्मेति मानसप्रत्यक्षत्वमेति । एवं च पदद्वयोपपादिताखंडैकरसे परब्रह्मण्यपरोक्षज्ञानसिद्धेस्तथाविधज्ञानोपेतो ब्रह्मविदित्युच्यते। सः परं निरतिशयं तदेव ब्रह्म । आप्नोति प्राप्नोति । ब्रह्म ज्ञात्वा ब्रह्मैव भवतीत्यर्थः । ब्रह्मणोऽन्यस्य सर्वस्य मिथ्याभूतत्वात्; अन्यस्य विज्ञानादन्यभवनस्याऽसंभवाच्च । "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवती"ति (मुं ३.२.९.) च श्रूयते ।

ननु "परमाप्नोती"त्यत्र ब्रह्मलोकगमनमेवाभिहितं भवति; आप्नोतेर्गत्यर्थकत्वात्; यथा ग्रामाद्ग्रामं प्राप्नोतीति चेन्न । ब्रह्मविदः प्राणोत्क्रमणाभावात्, "न तस्य प्राणा उत्क्रामन्त्यत्रैव समविलीयन्ते ब्रह्मैव सन् ब्रह्माप्येति (उ. ता. ५.) इति श्रुतेः । ननु ब्रह्मण आप्यत्वमेव न स्यात्; तस्याद्वितीयस्य सर्वस्यात्मभूतत्वादपरिच्छिन्नत्वाच्चेति चेन्न । प्राप्तेर्दर्शनार्थापेक्षत्वात् । प्राक् ज्ञानादप्ययं जीवो ब्रह्मैव सन्नपि न तज्जानाति । अविद्ययाऽन्नमयादिपञ्चकोशानात्मत्वेन मन्यमानः स्वात्मभूतं ब्रह्म नाप्नोति । शास्त्राचार्योपदेशाभ्यां महावाक्यार्थस्य मननादिना चाहं ब्रह्मास्मीति साक्षात्करोति । कंठस्थो मणिरज्ञानेनान्विष्यमाणोऽपि नावाप्यते । तव कंठ एव भासते मणिरिति केन चित् स्मारिते कंठे हस्तेन मणिः प्राप्यते । तथैव नवगणनासक्तेन दशमेनात्मबोधात्स्वयमेव प्राप्यते । एवमज्ञानदशायां ब्रह्म न प्राप्यते ।

अविद्यानिवृत्तौ प्राप्यते। अत्र प्राप्तिशब्देन स्वस्वरूपज्ञानोपलब्धिरेवाभिधीयते। न तु पूर्वालब्धलाभः।

एवं तैत्तिरीयकश्रुत्यर्थमुदाहृत्य श्रुत्यन्तरमर्थतः पठति शोकमिति। एवमात्मविद्यो मन्त्रोपदिष्टं सर्वं विकारजातं कर्मकार्यमपावृत्य ब्रह्माभिन्नात्मस्वरूपं वेत्ति स आत्मविच्छोकं संसारं तरत्यतिक्रामति। "मन्त्रविदेवास्मि नात्मविच्छ्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदि"ति (छां. ७. १. ३.), श्रुतेः।

एवं ब्रह्मप्राप्तेरिष्टप्रापकत्वमनिष्टनिवारकत्वं च श्रुतिद्वयेन प्रतिपाद्य प्रतिज्ञात परावाप्तिहेतुप्रतिपादनपरं "रसो वै सः रसग्ह्येवायं लब्ध्वाऽऽनंदी भवती"ति (तै.२-७) वाक्यमर्थतः पठति, रस इति। रसो ब्रह्म, निरतिशयसुखावाप्तिहेतुभूतस्य ब्रह्मणो मुख्यतयाऽऽस्वादनविषयत्वात्तस्यानन्दरूपत्वमभिहितम्। अयं तत्त्वविद्रसं ब्रह्म लब्ध्वा साक्षात्कृत्यानन्दी "धन्योहं धन्योहं कर्तव्यं मे न विद्यते किं चित्। धन्योहं धन्योहं प्राप्तव्यं सर्वमद्य संपन्न"मित्यानन्दी आनन्दवान्भवति। अन्यथा साधनान्तराश्रयेणानन्दी न भवति ॥ २ ॥

"यदाह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दतेऽध सोऽभयं गतो भवति।" "यदाह्येवैष एतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भयं भवती"ति (तै. २. ७.) वाक्यद्वयार्थपठनेन ब्रह्मज्ञानस्यानिष्टनिवारकत्वमन्वयव्यतिरेकाभ्यां दर्शयति, प्रतिष्ठामिति।

प्रतिष्ठां विन्दते स्वस्मिन् यदा स्यादथ सोऽभयः।
कुरुतेऽस्मिन्नंतरं चेदथ तस्य भयं भवेत् ॥ ३ ॥

यदा मुमुक्षुः ब्रह्माभिन्ने स्वास्मिन् प्रत्यगात्मनि प्रतिष्ठां प्रकर्षेण संशयविपर्ययराहित्येन स्थितिं ब्रह्माहमस्मीत्यवस्थानं प्रतिष्ठा तां विन्दते आप्नोति ब्रह्मनिष्ठो भवतीत्यर्थः। अथ सोऽभयः द्वितीयात्पतनभीतिविरहितो भवति, तस्याभावादित्यर्थः। अस्मिन्नद्वितीये ब्रह्मणि, अन्तरमुपास्योपासकादिद्वैतनिपीडितं भेदं कुरुते चेत्पश्यति चेदथ तस्य भयं भवेत् सांसारिकं दुःखं भवेत्। यत्र द्वैतं पश्यति तत्र भयं भवतीति भावः ॥ ३ ॥

"भीषास्माद्वातः पवते भीषोदेति सूर्य" इति (तै. २. ९. कठ. २. ६.) श्रुत्यर्थपठनेनैतस्मिन्नद्वितीये ब्रह्मण्यान्तरं कुर्वतां वाय्वादीनां भयकारणं प्रदर्शयति, वायुरिति ।

वायुस्सूर्यो वह्निरिंद्रो मृत्युर्जन्मान्तरेऽन्तरम् ।
कृत्वा धर्मं विजानन्तोऽप्यस्माद्भीत्या चरन्ति हि ॥ ४ ॥

वायुस्सूर्यो वह्निरिंद्रो मृत्युश्च पूर्वजन्मकर्मानुरूपाणि देवताद्युत्कृष्टशरीराणि लब्ध्वापि जन्मान्तरे धर्मं विधिविहितं कर्म विजानन्तोऽपि विशेषेण ज्ञात्वाऽऽचरन्तोऽपि प्रत्यग्ब्रह्मणोरन्तरं भेदं कृत्वा विभाव्यास्माज्जगन्नियमनकर्तुर्ब्रह्मणो भीत्या चरन्ति तदाज्ञानुवर्तिनः सन्तो भवन्ति हीति प्रसिद्धार्थकः ॥ ४ ॥

वाक्यान्तरोदाहरणेन "तरति शोकमात्मवदि" (छां. ७. १. ३.) त्यादिषु ब्रह्मानन्दज्ञानस्य शोकनिवृत्तिकारणत्वं स्पष्टयति, आनन्दमिति ।

आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्च न ।
एतमेव तपेन्नैषा चिन्ता कर्माग्निसंभृता ॥ ५ ॥

ब्रह्मणः स्वरूपभूतमानन्दं राहोश्शिर इतिवदौपचारिकमात्रमेव षष्ठ्यर्थः । विद्वान्योऽपरोक्षतया साक्षात्करोति स कुतश्चन कस्मादप्यैहिकामुष्मिकाद्धेतोः न बिभेति । एतं विद्वांसं कर्माग्निसंभृता कर्मैवाग्निस्संतापकारणं तेन संभृता संपादिता एषा "किमहं साधु नाकरवं किमहं पापमकरव" (तै. २–९) मित्याकारककरणाकरणजन्या चिन्ताऽनुतापः न तपेन्न तापयति । तदन्योऽविद्वांस्तच्चिन्तया सन्तप्यत इत्येवशब्दार्थः ॥ ५ ॥

"स य एवं विद्वानेते आत्मानगं स्पृणुते, उभे ह्येवैष एते आत्मानगं स्पृणुते," (तै. २. ९.) इतिश्रौतवाक्योदाहरणेन "एतमेव तपेन्नैषा चिन्ते" त्यत्र हेतुं प्रदर्शयति, एवमिति ।

एवं विद्वान् कर्मणी द्वे हित्वाऽऽत्मानं स्मरेत्सदा ।
कृते च कर्मणी स्वात्मरूपेणैवैष पश्यति ॥ ६ ॥

एवं साध्वसाधू कर्मणी सन्तापकारणत्वेन यो विद्वान् जानाति स द्वे कर्मणी पुण्यापुण्यरूपे हित्वाऽपहाय संन्यस्येत्यर्थः। सदा आत्मानं स्मरेच्चिन्तयेत्। किं नाम कर्मणोर्हानम्? कर्माचरणस्यात्यन्ताभाव आहोस्वित्तन्मिथ्यात्वज्ञानसिद्धिः? नाद्यः। आत्मनो ब्रह्मत्वेनावगतत्वेऽपि देहेन्द्रियव्यापाराणामत्यन्ताभावस्यासंभवात्। द्वितीय इष्टापत्तिरित्यङ्गीकृत्य तत्फलमाह, कृत इति। पूर्वस्मिन् जन्मन्यस्मिन् जन्मनि वा कृते आचरिते पुण्यपापे कर्मणी स्वात्मरूपेणैव एष पश्यति। परमात्मस्वरूपेणैव ते अनुसंदधाति। ब्रह्मविदः पुण्यपापे स्वरूपेणापि न विद्येते। एवं सति का कथा तच्चिन्ताकृतस्य सन्तापस्येति भावः ॥ ६ ॥

ननु प्राक्तनानन्तजन्मसमासादितेषूपभोगेनैव क्षयशीलेषु सत्त्वसंख्याकेषु कर्मसु तच्चिन्ता दुरन्तैव स्यादित्याशंक्य मौंडकवाक्येन (२.२.८.) समाधत्ते, भिद्यत इति।

**भिद्यते हृदयग्रंथिश्छिद्यन्ते सर्वसंशयाः।**
**क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ ७ ॥**

तस्मिन् परावरे यस्मात्परमत्यन्तोत्कृष्टोऽभ्युदयः अवरं निकृष्टं भवति तस्मिन् परमात्मनि दृष्टे साक्षात्कृते सति हृदयग्रन्थिर्हृदयस्य बुद्धेर्ग्रन्थिश्चिदात्मना सह दृढसंश्लेषरूपोऽन्योन्याध्यासः ग्रन्थिसदृशत्वाद्ग्रन्थिरित्युच्यते; तादृशो मायापाशः अविद्यावासनाप्रचयो भिद्यते नश्यति। सर्वसंशयाः सद्वस्त्वस्तीत्येके नास्तीति चैके; कोऽयमात्मा देहादिव्यतिरिक्तो न वा; कर्तृत्वभोक्तृत्वाद्यभिमानी, उत केवलकर्तृत्वाभिमानी वा; जीव एको वा नाना वा; जगज्जीवेश्वरादयः सत्या असत्या वेत्याद्याकारकाः संशयाश्छिद्यन्ते विच्छिन्ना भवन्ति। अस्य कर्माण्यनारब्धान्यनारब्धफलानि पूर्वजन्मकृतान्यस्मिन् जन्मनि ज्ञानोत्पत्तेः प्राक् कृतानि संचितानि पुण्यपापकर्मफलानि क्षीयन्ते नश्यन्ति। आगामि च नश्यति। आगामिनाशश्च तदश्लेषरूप एवेति भावः। "तदधिगाम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" (ब्र. सू. ४. १. १३), "इतरस्याप्येवमसंश्लेषः पाते तु", (ब्र. सू. ४. १. १४.) "अनारब्धकार्ये एव तु पूर्वे तदवधेः", (ब्र. सू. ४. १. १५.) इति सूत्रेभ्यः। तत्र प्रथमं सूत्रं संचितविषयम्; द्वितीयमागामिविषयं; तृतीयन्तु प्रारब्धविषयमिति

विवेकः। देहारंभकाणि तु देहान्त एव विनश्यन्तीति न तेषामत्र क्षयो विवक्षितः ॥ ७ ॥

"नन्वेतमेव तपेन्नैषा चिन्ता कर्माग्निसंभृते"त्युक्तिरसमंजसा, कर्मणोऽपि मुक्तिहेतुत्वात्, "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतगुंसमाः" (ईश. २. .) "विद्यां चाविद्यां च यस्तद्वेदोभयगुं सह। अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" (ईश. १. ११.) "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" इत्यादिश्रुतिस्मृतिशतैः केवलस्य वा ज्ञानसमुच्चितस्य वा कर्मणो मुक्तिहेतुत्वमुद्घोषितमित्याशंक्य मुक्तेः साधनान्तरनिरपेक्षत्वविवक्षया "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये"ति (श्वे. ६. १५.) श्रुतिमर्थतः पठति, तमिति।

तमेव विद्वानत्येति मृत्युं पन्था न चेतरः।
ज्ञात्वा देवं पाशहानिः क्षीणैः क्लेशैर्न जन्मभाक् ॥ ८ ॥

विद्वान् ज्ञानी तं मृत्युं संसारशोकमत्येत्यतिक्रम्य एति याति, तरतीत्यर्थः। इतरो ज्ञानादन्यः पन्था अयनाय नैव विद्यते। देवं स्वप्रकाशं परं ब्रह्म ज्ञात्वा साक्षात्कृत्य पाशहानिः, पाशाः अविद्यास्मितारागद्वेषाभिनिवेशरूपाः पञ्च तेषां हानिर्विच्छेदो भवति। क्षीणैर्नष्टैः क्लेशैरैहिकामुष्मिकानर्थैर्जन्मभागन्यस्य जन्मनो भागनुभविता न भवति। जन्मनिमित्तस्यानारब्धफलस्य सर्वकर्मणः विनष्टत्वादित्यर्थः। "ज्ञात्वा देवं सर्वपाशापहानिः, क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः" (श्वे. १-११), इति श्रुतेः ॥ ८ ॥

नन्वात्मविदः शोकसन्तरणं केवलशास्त्रप्रसिद्धं नत्वनुभवसिद्धम्, तस्यापीष्टानिष्टप्रवृत्तिनिवृत्त्योर्विद्यमानत्वादित्याशंक्य, दृढतरज्ञानवतां तदभाव एवेति, "अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाती"त्याशयिकां (कठ. १. २. १२.) श्रुतिमर्थतः पठति, देवमिति।

देवं मत्वा हर्षशोकौ जहात्यत्रैव धैर्यवान्।
नैनं कृताकृते पुण्यपापे तापयतः क्वचित् ॥ ९ ॥

धैर्यवान् हर्षशोकादिकारणेषु सत्स्वपि मनसो निर्विकारत्वं धैर्यं, तद्वान्

धीरः, स्थितप्रज्ञ इत्यर्थः । देवं तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणमात्मानं मत्वा विषयेभ्यश्चेतस्समुपसंहृत्यात्मनि समाधायात्रैवास्मिन् जन्मन्येव हर्षशोकौ सन्तोषविषादरूपचित्तविकारौ जहाति। हर्षशोकयोरभावे एनं धीरं कृताकृते-पूर्वकृतं पापमनिष्टप्राप्तिहेतु अकृतं पुण्यमिष्टप्राप्तिहेतु । यद्वा कृतमारब्धमकृतमना-रब्धं कचिदपि न तापयतो विकारं नापादयतः । "नैनं कृताकृते तपतः" इति, (बृ. ४. ४. २२.) श्रुतेः ॥ ९॥

अस्मिन् विषयेऽन्यानि बहूनि प्रमाणानि सन्तीत्याह, इतीति ।

**इत्यादिश्रुतयो बह्वयः पुराणैः स्मृतिभिस्सह ।**
**ब्रह्मज्ञानेऽनर्थहानिमानन्दं चाप्यघोषयन् ॥ १० ॥**

बह्वय इत्यादिश्रुतयः । पुराणैः स्मृतिभिस्सह "सर्वभूतस्थमात्मानं सर्व-भूतानि चात्मनि । संपश्यन्नात्मयाजी वै स्वाराज्यमधिगच्छती", त्यादिभिस्सह ब्रह्मज्ञाने सत्यनर्थहानिमानन्दं निरतिशयानन्दरूपमोक्षं चाघोषयन् । इत्यादि श्रुतय इत्यत्रादिशब्देन "इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः" (केन. २–५) "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्" (बृ. १. ४. १०) "निचाय्य तं मृत्युमुखात्प्रमुच्यते" (कठ. १. ३. १५) इत्यादयो गृह्यन्ते ॥ १० ॥

ब्रह्मानन्दस्य त्रैविध्योक्तिविचारः ।

ब्रह्मानन्द इत्यत्रानन्दशब्दस्य ब्रह्मशब्देन विशेषणादस्त्यानन्दान्तरमि-त्याशयेन तदभिधाय ततो ब्रह्मानन्दं विवेचयति, आनंद इति ।

**आनन्दस्त्रिविधो ब्रह्मानन्दो विद्यासुखं तथा ।**
**विषयानन्द इत्यादौ ब्रह्मानन्दो विविच्यते ॥ ११ ॥**

आनन्दो ब्रह्मानन्दो विद्यासुखं विषयानन्दश्चेति त्रिविधः । तेषां मध्य आदावितरानंदद्वयमूलभूतत्वाद्ब्रह्मानंदो विविच्यते । अनेनाध्यायत्वेन पृथङ्निर्दि-श्यमानानां योगानन्दात्मानंदाद्वैतानंदानां ब्रह्मानन्दावान्तरभेदत्वसूचनेन तदन्तर्भा-वान्न त्रैविध्यहानिः । एतेनाग्रे "ब्रह्मानन्दो वासना च प्रतिबिंब इति त्रय"मिति (११–८७) श्लोकेऽन्यादृशानन्दत्रैविध्योक्तिरेतद्विभागविरुद्धेति शङ्का निरस्ता ।

तेषामुभयत्र निर्दिष्टानां परस्परमुक्तानंदत्रयान्तर्भूतत्वात् । तथाहि - तत्रोत्तरत्र प्रतिबिंबित इत्युक्त आनन्दोऽन्तःकरणप्रतिबिंबरूपतया विषयानन्द एव भवति । तत्र ब्राह्मणवसिष्ठन्यायेन प्राशस्त्यमपेक्ष्य विद्यानन्दस्य पृथगुक्तत्वेऽपि धीवृत्तिरूपतया विषयानंदत्त्वेनोभावप्यानंदावुत्तरत्रोक्तप्रतिबिंबानंदेन सन्निहितौ भवतः। वासनानन्दस्तु ब्रह्मानन्दरूप एव । उत्तरत्र ब्रह्मानंदात्पृथगुक्तिस्तु जगत्कारणत्वोपाधिमादाय किंचिद्भेदं परिकल्प्य प्रवृत्ता। भेदेन विभागकरणन्तु तत्र तत्र विवेचनीयं विषयानुसारेण। अत्र तु ब्रह्मानन्दशब्देन ब्रह्मानन्दविशेष एव ग्राह्यः, न तु सामान्यरूपः। सामान्यरूपग्रहणे सामान्यविशेषयोः प्रकारभेदत्वानुपपत्त्या त्रैविध्योक्तेरसंभवात् । नन्वेवं विद्यानन्दस्यापि धीवृत्तिरूपत्वेन विषयानन्देऽन्तर्भावाद्ब्रह्मानन्दो विषयानन्दश्चेति द्वैविध्यमेव वक्तुं युक्तं, न त्रैविध्यमिति चेन्न । विद्यानन्दस्य विषयानन्दरूपत्वेऽपि ब्रह्मानन्दसन्निकृष्टत्वादभ्यर्हितत्वेन ब्राह्मणवसिष्ठन्यायेन पृथगुक्तेस्सोपपादत्वात्। एवं तत्र तत्र भिन्नशब्देनोपात्ता आनन्दा उक्तेष्वेवानन्देष्वन्तर्भवन्तीत्युक्तं त्रैविध्यं सुस्थमेवेति बोध्यम् । ग्रहणसौलभ्यायेदं कोष्टमवलोकनीयम् ॥




ब्रह्मण आनन्दस्वरूपत्वकथनम् ।

भृगुवल्ल्यर्थपर्यालोचनया तत्स्वरूपनिरूपणं शक्यत इत्याशयेन तदर्थं संक्षिपति, भृगुरिति ।

**भृगुः पुत्रः पितुः श्रुत्वा वरुणाद्ब्रह्मलक्षणम् ।**
**अन्नप्राणमनोबुद्धीस्त्यक्त्वाऽऽनन्दं विजिज्ञिवान् ॥ १२ ॥**

"यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मे" ति (तै. ३. १.) ब्रह्मलक्षणं ब्रह्मणस्तटस्थलक्षणं पुत्रो भृगुः पितुर्वरुणाच्छ्रुत्वा विज्ञाय स्वयं तपस्तप्त्वाऽन्नप्राणमनोबुद्धीस्तदाख्यकोशानुक्तलक्षणासंभवेनाब्रह्मत्वनिश्चयेन त्यक्त्वान्ते "ब्रह्मपुच्छं प्रतिष्ठे"ति (तै.३. ) श्रुतिसिद्धमानन्दं ब्रह्मलक्षणयोजनया ब्रह्मेति विजिज्ञिवान् समग्रतो ज्ञातवान् ॥ १२ ॥

आनन्दे ब्रह्मलक्षणयोजनपरा "मानन्दाद्ध्येव खल्विमानि भूतानि जायन्ते, आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्त्यभिसंविशन्ती"ति (तै. ३. ६.) श्रुतिमर्थतः पठति, आनन्दादिति ।

**आनन्दादेव भूतानि जायन्ते तेन जीवनम् ।**
**तेषां लयश्च तत्रातो ब्रह्मानन्दो न संशयः ॥ १३ ॥**

आनन्दादेव सर्वाणि भूतानि जायन्ते । तेनैव जातानां सर्वेषां जीवनं भवति। सुषुप्तिसमये तेषां लयश्च तत्रानंद एव, सर्वेन्द्रियाणां मनसा सहोपरमात्। अतस्सुषुप्तौ प्रतिदिनमनुभूयमानः सर्वभूतसंभावित आनंदो ब्रह्मानंदः । तत्र न संशयः । अत्रानन्दमयकोशेऽनुभूयमान आनन्दः बिंबभूत आनन्दो गृह्यते, सर्वप्राण्यनुभवसिद्धत्वात् ॥ १३ ॥

"यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमे"ति (छां. ७. २४. १.) छांदोग्यश्रुत्यर्थं संक्षेपतो निक्षिपन् बृहिधात्वर्थभूतं ब्रह्मशब्दार्थं व्युत्पादयति, भूतेति ।

**भूतोत्पत्तेः पुरा भूमा त्रिपुटीद्वैतवर्जनात् ।**
**ज्ञातृज्ञानज्ञेयरूपा त्रिपुटी प्रलये हि नो ॥ १४ ॥**

भूतोत्पत्तेराकाशादिपंचमहाभूतानां तत्कार्याणां सर्वप्राणिजातानामुत्पत्तेर्नामरूपाभ्यां व्याकरणात्पुरा त्रिपुटीद्वैतवर्जनात् त्रयाणां पुटानामाकाराणां समाहारस्त्रिपुटी, सैव द्वैतं, तस्याभावात्, देशकालवस्त्वपरिच्छिन्नो निरतिशयः परमात्मा भूमैवासीदित्यध्याहारः । त्रिपुटीं विवृणोति, ज्ञात्रिति । ज्ञातृज्ञानज्ञेयरूपा । ज्ञाता कर्ता, ज्ञानं क्रिया, ज्ञेयं तद्विषयः । एवं विलक्षणभागत्रयात्मिका त्रिपुटी । सा

प्रलये नो, नास्ति ॥ अत्र भूम्नो ज्ञेयत्वं निषिध्यते। तच्चान्यज्ञेयत्वमाहोस्वित्स्वज्ञेयत्वम्। न द्वितीयः। "ब्रह्म स्वं जानाति" त्युक्ते युगपत्कर्मकर्तृव्यपदेशस्य भेदव्याप्यत्वेन स्वकर्तृकदर्शनादिक्रियायास्स्वविषयत्वस्य सर्वथाऽप्रसिद्धत्वेन प्रतियोग्यप्रसिद्धेः। आद्य इष्टापत्तिरेव। भूम्न्यन्यदर्शनविषयत्वाभावस्य "विज्ञातारमरे केन विजानीयात्" (बृ. ४. ५. १५.) "अदृश्येऽनात्म्येऽनिलयने" (तै. २. ७.) इत्यादिश्रुतिप्रतिपादितत्वात्। ननु श्रुतौ "यत्रान्यदि" त्युक्त्या यत्रान्यशब्दाभ्यां भिन्नवस्तुसत्ता प्रतीयत इति चेन्न, बोध्यबोधनायाविद्यावतां भाषयैवं श्रुत्योपदिष्टत्वात्। यथाऽद्वितीयब्रह्मबोधनाय द्वैतमात्रोपजीव्यया "एकमेवाद्वितीय" मित्यादिभाषया द्वैतविरोध्यद्वैतब्रह्मप्रतिपादनं तद्वदिहाप्यद्वितीयस्य भूम्नस्तद्विरोधिद्वैतोपजीव्ययाऽविद्वद्विषयया भाषया "यत्रान्यदि" त्येवंरूपेण प्रतिपादनम्। विद्वद्दृष्ट्यनुसारेण पर्यालोचने वस्तुभूतायाः श्रुतेरप्यसंभवेन तेन विवक्षितार्थप्रतिपादनमपि न संभवत्येवेति ध्येयम् ॥ १४ ॥

ज्ञातृज्ञानज्ञेयानां स्वरूपमाह, विज्ञानेति।

**विज्ञानमय उत्पन्नो ज्ञाता ज्ञानं मनोमयः।**
**ज्ञेयाश्शब्दादयो नैतत्त्रयमुत्पत्तितः पुरा ॥ १५ ॥**

उत्पन्नः बुद्ध्युपाधिकश्चिदाभासो विज्ञानमयो ज्ञाता, मनोमयः मनसि प्रतिबिंबितं चैतन्यं ज्ञानं, मनसः सर्वज्ञानसाधनत्वात्, बाह्याश्शब्दादयो ज्ञेया ज्ञानविषयाः, एवं कार्यस्वरूपत्वादेतत्त्रयं जगत उत्पत्तितः पुरा नास्ति। एतत्त्रयस्य जगदन्तःपातितया तदुत्पत्तेः प्राक् तद्रूपेणाभावः स्पष्ट एवेति भावः ॥ १५ ॥

जगदुत्पत्तेः प्राक् ज्ञातृत्वादित्रिपुट्या अभावेऽद्वैतानंद एवानुभूयत इति समाधिमूर्छादिदृष्टान्तमुखेनाह, त्रयेति।

**त्रयाभावे तु निर्द्वैतः पूर्ण एवानुभूयते।**
**समाधिसुप्तिमूर्छासु पूर्णः सृष्टेः पुरा तथा ॥ १६ ॥**

त्रयाभावे ज्ञात्रादित्रयाभावे तु निर्द्वैतः पूर्ण आनन्दः समाधिसुप्तिमूर्छासु यथाऽनुभूयते तथा सृष्टेः पुराऽनुभूयते ॥ १६ ॥

भूम्नो निरतिशयसुखस्वरूपत्वमन्वयव्यतिरेकाभ्यां छांदोग्यवाक्येन (७. २३. १.) प्रदर्शयति, य इति।

**यो भूमा स सुखं नाल्पे सुखं त्रेधा त्रिभेदिनि ।**
**सनत्कुमारः प्राहैवं नारदायातिशोकिने ॥ १७ ॥**

यो भूमाऽपरिच्छिन्नबहुत्वकः स सुखमद्वितीयानन्दः । त्रेधा त्रिभेदिनि ज्ञातृज्ञानज्ञेयरूपत्रिविधभेदविशिष्टे हेतुगर्भविशेषणमेतत्, अत एवाल्पे सातिशये परिच्छिन्नो सुखं न । "सोहं भगवो मन्त्रविदेवास्मि नात्मविदि"ति (छां. ७.१.३) अतिशोकिने नारदाय "यो वै भूमा तत्सुखमि"त्यादि सनत्कुमारः प्राह उपदिदेश ॥ १७ ॥

विविधनिगमागमवैदुष्यविराजमानस्यापि नारदस्यात्मज्ञानाभाव एव शोककारणमित्याह, सपुराणानिति ।

**सपुराणान् पंचवेदान् शास्त्राणि विविधानि च ।**
**ज्ञात्वाप्यनात्मवित्त्वेन नारदोऽतिशुशोच ह ॥ १८ ॥**

सपुराणान् भारतादिभिः पुराणैस्सहितान् पंचवेदान् ऋग्यजुस्सामाथर्वणाश्चत्वारो वेदाः पुराणग्रंथेन सह पञ्च भवन्ति, विविधानि शास्त्राणि च ज्ञात्वाप्यनात्मवित्त्वेन नारदोऽतिशुशोच । हेति खेदे । तेन नारदस्य निरतिशयश्शोकस्सूचितः ॥ १८ ॥

आत्मज्ञानाभावे केवलशास्त्रवैदुष्यं पूर्वतोऽप्यधिकदुःखजनकमित्याह, वेदेति ।

**वेदाभ्यासात्पुरा तापत्रयमात्रेण शोकिता ।**
**पश्चात्त्वभ्यासविस्मारभंगगर्वैश्च शोकिता ॥ १९ ॥**

वेदाभ्यासात्पुरा तापत्रयमात्रेणाधिभौतिकाध्यात्मिकाधिदैवतरूपतापत्रयेणैव शोकिता सन्ताप आसीत् । पश्चाद्वेदाभ्यासानन्तरं त्वभ्यासविस्मारभंगगर्वैश्शोकिता भवति । भंगश्शास्त्रार्थचर्चास्वधिकात्पराभवः तेन पूर्वोक्ततापत्रयं समुच्चीयते ॥ १९ ॥

ब्रह्मज्ञानमेवापारशोकस्य सन्तरणोपाय इति नारदद्दृष्टान्तेनाह, स इति ।

**सोऽहं विद्वन् प्रशोचामि शोकपारं नयात्र माम् ।**

इत्युक्तस्सुखमेवास्य पारमित्यभ्यधादृषिः ॥ २० ॥

विद्वन् ब्रह्मज्ञानिन् सोऽहं सर्ववेदवेदाङ्गपारगोऽहं नात्मविदिति प्रशोचामि। अत्रात्मज्ञानाभावविषये शोकपारं यश्शोकस्तदभावप्रयुक्तस्तस्य पारं तीरं मां नय । "तं मां भगवान् शोकस्य पारं तारयत्वि" ति (छां. ७. १. ३.) नारदेनोक्तः सनत्कुमारऋषिः ऋषति ज्ञानेन संसारं गच्छतीति तथाभूतः । "यो वै भूमा तत्सुखमेवे" (छां. ७. २३. १.) त्यस्यापारशोकस्य पारमित्यभ्यधादुपदिदेश ॥२०॥

न हि तदन्येष्वल्पेषु स्रगादिवैषयिकेषु बहुष्वपि सुखाभासमात्रेषु वास्तवं सुखमिति बोधनाय "यदल्पं तन्मर्त्य"मिति (छां. ७. २४. १.) श्रुत्यर्थमाह, सुखमिति ।

सुखं वैषयिकं शोकसहस्रेणावृतत्वतः ।
दुःखमेवेति मत्वाह नाल्पेऽस्ति सुखमित्यसौ ॥ २१ ॥

अल्पे सातिशये । सुगममन्यत् ॥ २१ ॥

सुखस्वरूपत्वस्वप्रकाशत्वमानन्दस्य लक्षणम् ।

ननु द्वैते सुखं मास्तु । अद्वैतेऽपि तदभाव एवेत्याशंक्याह, नन्विति ।

ननु द्वैते सुखं माभूदद्वैतेऽप्यस्ति नो सुखम् ।
अस्ति चेदुपलभ्येत तथा च त्रिपुटी भवेत् ॥ २२ ॥

नन्विति पूर्वपक्षं प्रवेशयति । द्वैतेऽल्पे सुखं माभूत् । तथैवाद्वैतेऽपि सुखं नो अस्ति । तत्र कारणमाह, अस्तीति । अस्तिचेत् विषयसुखादिवदुपलभ्येत । तद्वदुपलब्धिर्नास्तीत्यभिप्रायः । तद्वदुपलभ्यमाने सति त्रिपुटीसंभवाददैतमेव न घटत इत्याह, तथेति । यद्युपलभ्येत, तथा उपलब्ध्रुपलब्ध्युपलभ्यरूपा त्रिपुटी भवेत् । त्रिपुटीद्वैतवर्जनस्याद्वैतस्य हानिर्भवेदित्यर्थः ॥२२॥

अद्वैतं नाम सुखस्वरूपं न तु सुखसंपादकमिति समाधत्ते, मास्त्विति ।

मास्त्वद्वैते सुखं किन्तु सुखमद्वैतमेव हि ।
किं मानमिति चेन्नास्ति मानाकांक्षा स्वयंप्रभे ॥ २३ ॥

अद्वैते सुखं मास्तु । अद्वैतं न सुखाधिकरणमित्यस्माकमपीष्टमेव । किं-त्वद्वैतमेव सुखम् । तच्च न वृत्तिरूपं किन्तु स्वरूपभूतम् । सर्ववृत्तीनां विलयात् अद्वैताभिन्नं सुखमिति भावः । तत्र मानं किमिति शंक्यते चेत्स्वयंप्रभे स्वयंप्रकाशे वस्तुनि मानाकांक्षा नास्ति । न हि दीपान्तरमपेक्षते दीपप्रकाशः ॥ २३ ॥

नन्वद्वैतस्य स्वप्रकाशत्वेऽपि मानाभाव एवेत्याशंक्याह, स्वप्रभत्व इति ।

**स्वप्रभत्वे भवद्वाक्यं मानं यस्माद्भवानिदम् ।**
**अद्वैतमभ्युपेत्यास्मिन् सुखं नास्तीति भाषते ॥ २४ ॥**

अद्वैतस्य स्वप्रभत्वे भवद्वाक्यं "अद्वैतेऽप्यस्ति नो सुख"मिति वाक्यमेव मानम् । तत्र कारणमाह यस्मादिति । यस्मादिदमद्वैतमभ्युपेत्यास्मिन्नद्वैते सुखं नास्तीत्येवं भवान् भाषते । भवत्येवं वदति स्वप्रकाशं चैतन्यमेव स्फुरति, अन्यथैवं भाषणस्यासंभवात् । अतः स्वप्रकाशस्य न मानापेक्षेति भावः ॥ २४ ॥

न मयाऽद्वैतमंगीक्रियते किन्तु भवदुक्तिमेवानुवदन् दूषयामीति प्रतिवादिमुखेन वक्ति, नेति ।

**नाभ्युपैम्यहमद्वैतं तद्वचोऽनूद्य दूषणम् ।**
**वच्मीति चेत्तदा ब्रूहि किमासीद्द्वैततः पुरा ॥ २५ ॥**

अहमद्वैतं नाभ्युपैमि किन्तु 'यो भूमा स सुख'मिति तद्वचोऽनूद्य तत्र दूषणं वच्मि अद्वैतस्य स्वप्रकाशत्वं प्रतिपिपादयिषुरद्वैतानङ्गीकारिणं प्रथमतोऽद्वैतमङ्गीकारयति विकल्पपूर्वकं तदेति तदा द्वैततः पुरा किमासीदिति ब्रूहि ॥ २५ ॥

अङ्गीकरणानुकूलतया विकल्पते, किमिति ।

**किमद्वैतमुत द्वैतमन्यो वा कोटिरन्तिमः ।**
**अप्रसिद्धो न द्वितीयोऽनुत्पत्तेश्शिष्यतेऽग्रिमः ॥ २६ ॥**

द्वैतोत्पत्तेः पुरा किं स्यादद्वैतमुत द्वैतमन्यो द्वैताद्वैतविलक्षणो वा? तेषां मध्येऽन्तिमः पक्षो द्वैताद्वैतविलक्षणरूपोऽप्रसिद्धोऽसंभावितपूर्वः । सृष्टेः प्राक्स्वस्यानुत्पत्तेर्द्वितीयो द्वैतं न स्यात् । अतोऽग्रिमः प्रथमः पक्षोऽद्वैतं शिष्यते ॥२६॥

नन्वद्वैतं युक्त्यैव सिध्यति, नानुभूयत इत्याशंक्यानुभवमपि दर्शयितुं युक्तिं विकल्पते, अद्वैतेति ।

**अद्वैतसिद्धिर्युक्त्यैव नानुभूत्येति चेद्वद ।**
**निर्दृष्टान्ता सदृष्टान्ता वा कोट्यन्तरमत्र नो ॥ २७ ॥**

अद्वैतसिद्धिर्युक्त्यैवानुमानप्रमाणमात्रेण सिध्यति नानुभूत्या सिध्यतीति चेत्तर्ह्यद्वैतसाधिका युक्तिर्निर्दृष्टान्ता सदृष्टान्ता वा वद । तृतीयः पक्षो नास्तीत्याह—कोटीति । कोट्यन्तरं तृतीयः पक्षस्सदृष्टान्तनिर्दृष्टान्तातिरिक्तः पक्षोऽत्र नो विद्यते ॥ २७ ॥

तत्र प्रथमं पक्षमुपहासपूर्वकमपाकरोति, नेति ।

**नानुभूतिर्न दृष्टान्त इति युक्तिस्तु शोभते ।**
**सदृष्टान्तत्वपक्षे तु दृष्टान्तं वद मे मतम् ॥ २८ ॥**

अद्वैतं युक्त्यैव सिध्यतीति विवदमानेनानुभूतेर्नांगीक्रियते । तस्या युक्तेर्नदृष्टान्त इति युक्तिस्तु शोभते । दृष्टान्तरहिता युक्तिरनुपपन्नेत्यर्थः । द्वितीयपक्षमाह—नेति । सदृष्टान्तत्वपक्षे तु मे मतमभिमतं दृष्टान्तं वद ॥ २८ ॥

सौषुप्तिकसुखस्वरूपविचारः ।

प्रतिवादी दृष्टान्तं दर्शयति, अद्वैत इति ।

**अद्वैतः प्रलयो द्वैतानुपलंभेन सुप्तिवत् ।**
**इति चेत्सुप्तिरद्वैतेत्यत्र दृष्टान्तमीरय ॥ २९ ॥**

द्वैतानुपलंभेन द्वैतज्ञानाभावात्प्रलयस्सुप्तिवदद्वैतो द्वैतरहितो भवति, यत्र यत्र द्वैतानुपलब्धिस्तत्र तत्र द्वैतराहित्यं यथा सुप्ताविति ज्ञानादिति चेत्सुप्तौ द्वैतराहित्यस्याननुभूयमानत्वेन तत्रापि तदनुमानेनैव साधनीयमिति तत्र दृष्टान्तो वक्तव्य इत्याशयेनाह तत्रेति । सुप्तिरद्वैतेत्यत्र सुप्तौ द्वैतभानं नास्तीत्यत्र दृष्टान्तमीरय । दृष्टान्तो न संभवतीत्याशयः ॥ २९ ॥

यदि सुप्त्यन्तरं दृष्टान्त इत्युच्यते तत्र सुप्त्यन्तरं परसुप्तिस्स्वसुप्तिर्वेति विकल्प्य द्वितीयं सोपहासं निराकरोति, दृष्टान्त इति ।

दृष्टान्तः परसुप्तिश्चेदहो ते कौशलं महत् ।
यः स्वसुप्तिं न वेत्त्यस्य परसुप्तौ तु का कथा ॥ ३० ॥

परसुप्तिरद्वैतदर्शने दृष्टान्तश्चेदहो परसुप्तिग्रहणसमर्थे ते कौशलं महदिति परिहासः । अननुभूयमानस्य दृष्टान्तत्वकथनासंगतेः यः स्वसुप्तेरननुभूयमानत्वम-भ्युपैति तेन परसुप्तेरननुभूयमानत्वस्यावश्यमभ्युपेयत्वेन तद्दृष्टान्तकथनं परिहासा-स्पदमित्यहोशब्दसूचितं परिहासं विशदयति—य इति, यः स्वसुप्तिं न वेत्ति अस्य परसुप्तौ का कथा । परसुप्तिं न वेत्तीति किमु वक्तव्यमित्यर्थः । अज्ञातस्य दृष्टा-न्तीकरणं तवासंबद्धमिति भावः ॥ ३० ॥

ननु परसुप्तेरनुभवं न ब्रूमः । किंत्वनुमानेन साधयामः । तेन सिद्धां परसुप्तिं दृष्टान्तीकुर्म इति वदन्तं तन्निराकरणव्याजेन स्वसुप्तेः स्वप्रभत्वं बला-त्कारेणाङ्गीकारयति, निश्चेष्टत्वादिति ।

निश्चेष्टत्वात्परस्सुप्तो यदाहमिति चेत्तदा ।
उदाहर्तुस्सुषुप्तेस्ते स्वप्रभत्वं बलाद्भवेत् ॥ ३१ ॥

"परस्सुप्तो निश्चेष्टत्वाद्यथाऽह"मित्यनुमानेन परसुप्तिसिद्धिरिति चेत्तर्ह्ये-वमुदाहर्तुर्दृष्टान्तत्वेन प्रदर्शयतस्ते सुषुप्तेः स्वप्रभत्वं बलात्तवानिष्टमप्युदाहरणसा-मर्थ्याद्भवेत् ॥ ३१ ॥

स्वप्रभत्वं बलादायातीत्यमुमर्थं विशदयति, नेति ।

नेन्द्रियाणि न दृष्टान्तस्तथाप्यङ्गीकरोषि ताम् ।
इदमेव स्वप्रभत्वं यद्भानं साधनैर्विना ॥ ३२ ॥

सुषुप्तिग्राहकाणीन्द्रियाणि न सन्ति, तदा तेषां स्वकारणे विलीनत्वात् । कोऽपि दृष्टान्तश्च न लभ्यते । प्रकृते स्वसुप्तेस्साध्यत्वेन दृष्टान्तत्वासंभवात् । परसुप्तेः पूर्वानुमानेनासिद्धेरिति भावः । तथाऽपि तां सुप्तिमङ्गीकरोषि । एवं च साधनैर्विना ज्ञानोत्पादकानां प्रमाणानामभावेऽपि यद्भानं विद्यते, तदिदमेव स्व-प्रभत्वं भवति । दृष्टान्तावभासितदार्ष्टान्तिकत्वं द्वैतविषयः । न तु स्वयंप्रकाशस्य साक्षिण इत्यभिसंधिः ॥ ३२ ॥

एवं पूर्ववादिप्रतिपादितप्रलये दृष्टान्तितायास्सुषुप्तेरद्वितीयत्वं स्वप्रभत्वं च संपाद्य तत्र सुखमपि साधयति, स्तामिति ।

**स्तामद्वैतस्वप्रभत्वे वद सुप्तौ सुखं कथम् ।**
**शृणु दुःखं तदा नास्ति ततस्ते शिष्यते सुखम् ॥ ३३ ॥**

सुषुप्तावद्वैतस्वप्रभत्वे स्ताम् युक्त्या सिध्येतां नामेत्यर्थः । सुप्तौ सुखमानन्दः कथं भवतीति वद । उत्तरमाह, शृण्विति तदा सुषुप्तौ सुखप्रतिद्वंद्वि दुःखं नास्ति ततस्तदभावे ते सुखमेव शिष्यते ॥ ३३ ॥

सुषुप्तौ दुःखाभावं श्रुत्यनुभवाभ्यां दर्शयति, अन्ध इति ।

**अन्धस्सन्नप्यनन्धस्याद्विद्धोऽविद्धोऽथ रोग्यपि ।**
**अरोगीति श्रुतिः प्राह तच्च सर्वे जना विदुः ॥ ३४ ॥**

जाग्रत्यन्धस्सन्नपि सुषुप्तौ अनन्धः स्यात् तथैव युद्धे विद्धोऽपि शस्त्राहतोऽपि सुषुप्तावविद्ध एव । शस्त्राहतिबाधां नानुभवति । अथ रोग्यप्यरोग्येवेति "तत्रांधस्सन्ननंधो भवति विद्धस्सन्नविद्धो भवत्युपतापी सन्ननुपतापी भवती"ति (छां. ८. ४. २.) श्रुतिः प्राह । तच्चैतदर्थस्य याथार्थ्यं सर्वे जना विदुः । अनुभवेन जानन्तीत्यर्थः । अन्धत्वादीनां देहाभिमानविषयत्वाज्जाग्रत्यनुभूयमानानि तानि सुषुप्तावपगतदेहाभिमानत्वान्नानुभूयन्त इति भावः ॥ ३४ ॥

ननु सुषुप्तौ दुःखाभावात्सुखमेवानुमीयत इत्ययुक्तं शिलादिषु व्यभिचारादिति शंकामुत्थापयति, नेति ।

**न दुःखाभावमात्रेण सुखं लोष्ठशिलादिषु ।**
**द्वयाभावस्य दृष्टत्वादिति चेद्विषमं वचः ॥ ३५ ॥**

दुःखाभावमात्रेण लोष्ठशिलादिषु मृत्पिंडपाषाणादिषु जडपदार्थेषु सुखं न विद्यते । तत्र कारणमाह, द्वयेति ॥ तत्र द्वयाभावस्य सुखदुःखयोरभावस्य दृष्टत्वादिति चेच्छंकां परिहरति विषममिति ॥ तव वचो विषमम् । अननुकूलोऽयं दृष्टान्त इत्यर्थः ॥ ३५ ॥

उक्तमननुकूलत्वमुपपादयति, मुखेति ।

**मुखदैन्यविकासाभ्यां परदुःखसुखोहनम् ।**
**दैन्याद्यभावतो लोष्ठे दुःखाद्यूहो न संभवेत् ॥ ३६ ॥**

मुखदैन्यविकासाभ्यां परदुःखसुखोहनं परनिष्ठदुःखसुखयोरनुमानं क्रियते। लोष्ठे तु दैन्याद्यभावतः दुःखाद्यूहो न संभवेत् चेतने सुखदुःखे अनुमातुं शक्येते। अचेतने तु ते तदभावो वा नानुमातुं शक्येते । अतस्तत्र दुःखाभावस्यापि निश्चेतुमशक्यत्वेन तत्र दुःखाभावरूपहेतोर्व्यभिचारोद्भावनं न समंजसमिति भावः ॥३६॥

परकीयसुखदुःखापेक्षया स्वीयसुखदुःखयोर्वैषम्यस्य सत्त्वेन स्वस्मिन्नपि दुःखतदभावयोस्सुखतदभावयोश्चानुभवैकवेद्यत्वमिति दर्शयति, स्वकीये इति ।

**स्वकीये सुखदुःखे तु नोहनीये ततस्तयोः ।**
**भावो वेद्योऽनुभूत्यैव तदभावोऽपि नान्यतः ॥ ३७ ॥**

यतः स्वकीये सुखदुःखे अनुमानादिना नोहनीये, नानुमितेर्विषयौ भवतः तस्तयोर्भावो विद्यमानताऽनुभूत्यैव प्रत्यक्षानुभवेनैव वेद्यः । तथा तदभावोऽपि तत्सुखदुःखयोरभावोऽपि प्रत्यक्षानुभवेनैव वेद्यः । प्रत्यक्षानुभवादन्यतोऽन्यप्रमाणेनानुमानादिना न, उभयमपि न वेद्यमित्यर्थः ॥ ३७ ॥

तत्र दुःखाभावस्यानुभवैकवेद्यतया दुःखप्रतिद्वंद्वि सुखमप्यनुभवेनैव गोचरीक्रियत इत्याह, तथेति ।

**तथा सति स्वसुप्तौ च दुःखाभावोऽनुभूतितः ।**
**विरोधिदुःखराहित्यात्सुखं निर्विघ्नमिष्यताम् ॥ ३८ ॥**

तथा सति सुखदुःखयोस्तदभावयोश्च स्वानुभवैकवेद्यत्वात्स्वसुप्तावप्यनुभूतितः अनुभवेनैव दुःखाभावो गोचरीक्रियते विरोधिदुःखराहित्यात्सुखस्य प्रतिद्वंदिनो दुःखस्याभावात्सुखं निर्विघ्नमिष्यतामनुभूयत इत्यंगीक्रियताम् । सुषुप्तौ दुःखं नानुभूयते। न सुप्तोत्थितः कोऽपि "दुःखमस्वाप्स"मिति सौषुप्तिकदुःखं स्मरति। अतो दुःखाभाव एवानुमीयते। ननु दुःखानुभवाभावे दुःखाभाव एवानुमातव्यो न तु सुखानु-

भव इति चेन्न। पूर्वत्र सौषुप्तिकाद्वितीयत्वस्वप्रभत्वे सुसंपादिते । अद्वितीयस्याभावे कारणभूतस्य दुःखाद्यवरोधकस्याभावे स्वप्रकाशसुखस्वरूपं भासते । अत एव विरोधिदुःखाभावे निर्विघ्नं सुखमिष्यतामिति सुष्ठूक्तमधस्तात् (६०. ६१. श्लोकयोः ॥ ३८ ॥

किं च पूर्वसुषुप्तौ सुखानुभवाभावे सुषुप्त्यभिलाषी पुरुषः सुखसाधनीभूतशय्यादिकं प्रति प्रयत्नं न कुर्यात् । तत्करणात्पूर्वसुषुप्तौ सुखानुभवो निश्चेतुं शक्यत इत्याह, महदिति ।

**महत्तरप्रयासेन मृदुशय्यादिसाधनम् ।**
**कुतस्संपाद्यते सुप्तौ सुखं चेत्तत्र नो भवेत् ॥ ३९ ॥**

तत्र पूर्वसुप्तौ सुखं नो भवेच्चेत्कुतो महत्तरप्रयासेन मृदुशय्यादिसाधनं मृदुलशय्योपधानमंचादिसुखसाधनं संपाद्यते ॥ ३९ ॥

ननु शय्यादिकं न सुखसाधनम् । किं तु दुःखनिवारकमित्याशंक्याह, दुःखेति ।

**दुःखनाशार्थमेवैतदिति चेद्रोगिणस्तथा ।**
**भवत्वरोगिणस्त्वेतत्सुखायैवेति निश्चिनु ॥ ४० ॥**

एतच्छय्यादिकं दुःखनाशार्थमेवेति चेद्रोगिणस्तथा दुःखनिवारकं भवतु अरोगिणस्तु दुःखाभावादेतच्छय्यादिकं सुखायैव संपद्यत इति निश्चिनु ॥ ४० ॥

ननु शय्यादिसाध्यस्य सुखस्याद्वैतसुखत्वमनुपपन्नमित्याशंक्य द्वाभ्या समाधत्ते, तर्हीति ।

**तर्हि साधनजन्यत्वात्सुखं वैषयिकं भवेत् ।**
**भवत्वेवात्र निद्रायाः पूर्वं शय्यासनादिजम् ॥ ४१ ॥**

मृदुशय्यदि सुखसाधकं चेत्तर्हि साधनजन्यत्वात्तत्सुखं वैषयिकं विषयसंबंधि भवेत् शय्यासनादिजं निद्रायाः पूर्वं सुखं निद्रासुखविलक्षणत्वाद्वैषयिकं भवत्वित्यंगीकरोति भवत्विति ॥ अत्र निद्रायाः पूर्वं सुखं वैषयिकं भवतु । निद्रा पूर्वकालिकं सुखमेव शय्यादिसाध्यं न तु निद्रासुखमिति भावः ॥ ४१ ॥

निद्रासुखे शय्यादिजसुखवैलक्षण्यं दर्शयति, निद्रायामिति।

**निद्रायां तु सुखं यत्तज्जन्यते केन हेतुना।**
**सुखाभिमुखधीरादौ पश्चान्मज्जेत्परे सुखे ॥ ४२ ॥**

निद्रायां तु यत्सुखं विद्यते तत्केन हेतुना जन्यते तत्र शय्यादीनां ज्ञानाभावान्न तत्कारणमित्याशयः। तर्हि निद्रासुखं वैषयिकसुखमिव किं नानुभूयत इत्याशंक्याह, सुखेति॥ आदौ निद्रायाः प्राक् जीवः सुखाभिमुखधीस्सुखेच्छासंपन्नो भवति॥ पश्चान्निद्रासमये पर उत्कृष्टे सुखे मज्जेद्विलीनो भवेत्। तदानीं स्वरूपेऽनुभवितुर्जीवस्यानुभवरूपाया धीवृत्तेरनुभाव्यस्य सुखस्य च विलीनतया त्रिपुट्यभावान्निद्रासुखं वैषयिकसुखमिव नानुभूयत इति भावः ।।४२॥

एतदर्थमेव विंभिर्विपुलीकुर्वाण आदौ शय्यासुखप्रकारमाह, जाग्रदिति।

**जाग्रद्व्यापृतिभिः श्रान्तो विश्रम्याथ विरोधिनि।**
**अपनीते स्वस्थचित्तोऽनुभवेद्विषये सुखम् ॥ ४३ ॥**

जीवो जाग्रद्व्यापृतिभिर्जाग्रति या व्यापृतयो व्यापारा विद्यन्ते ताभिश्शान्तस्तन्निवारणार्थं मृदुलतल्पोपरि विश्रम्य अथ अनन्तरं विश्रमविरोधिनि व्यापारश्रमेऽपनीते सति स्वस्थचित्तस्स्वस्मिन् तिष्ठतीति स्वस्थं निर्व्यापारं तादृक्चित्तं यस्य तथाभूतः, अव्याकुलचित्तो भूत्वेत्यर्थः। विषये शय्यादौ सुखमनुभवेत् व्यापारश्रमापनोदननिमित्तमात्रमेव सुखं शय्यायामनुभवतीति भावः ॥ ४३ ॥

शय्यासुखस्य त्रिपुटीप्रयुक्तत्वात्तत्रापि श्रमकारणत्वं प्रदर्शयति, आत्मेति।

**आत्माभिमुखधीवृत्तौ स्वानन्दः प्रतिबिंबति।**
**अनुभूयैनमत्रापि त्रिपुट्या श्रान्तिमाप्नुयात् ॥ ४४ ॥**

आत्माभिमुखधीवृत्तौ जाग्रद्व्यापारविरामहेतोः शय्यागतस्यात्मनोऽभिमुखीभूता या, सुखस्वरूपा धीवृत्तिस्तस्यां स्वानन्दः स्वस्वरूपभूत आनंदः प्रतिबिंबति। विषयानन्दस्य ब्रह्मानन्दांशभूतत्वादिति भावः। एनं विषयानंदं स्वानंदाभासमात्रमनुभूय अत्रापि त्रिपुट्या अनुभवित्रनुभाव्यानुभवरूपया श्रान्तिं खेदमाप्नुयात् ॥ ४४ ॥

अत्रापि विषयविषय्याकारस्पंदनरूपखेदापनोदनार्थं जीवः परात्मन्यैक्यमवाप्य ब्रह्मानंदस्वरूपमेतीत्याह, तदिति ।

तच्छ्रमस्यापनुत्त्यर्थं जीवो धावेत्परात्मनि ।
तेनैक्यं प्राप्य तत्स्थो ब्रह्मानन्दः स्वयं भवेत् ॥ ४५ ॥

तच्छ्रमस्य त्रिपुटीकृतस्यापनुत्त्यर्थं निवारणार्थं जीवः परात्मनि स्वरूपे धावेत् तेन परात्मन्यैक्यं प्राप्य "सता सोम्य तदा संपन्नो भवती"ति (छां.६.८.१.) श्रुतेः तत्स्थस्तत्र सुषुप्तौ स्थितस्सन् स्वयं ब्रह्मानंदो भवेत् ॥ ४५ ॥

अत्रानेकानि श्रौतोदाहरणानि प्रदर्शयति, दृष्टेति ।

दृष्टान्ताः शकुनिः श्येनः कुमारश्च महानृपः ।
महाब्राह्मण इत्येते सुप्त्यानन्दे श्रुतीरिताः ॥ ४६ ॥

शकुन्यादयो दृष्टान्तास्सुप्त्यानंदे धीवृत्त्यभावादनिश्श्रेयसत्त्वाकेऽस्य सौषुप्तिकानंदे श्रुतीरिताः श्रुत्या बोधिताः ॥ ४६ ॥

दृष्टान्तविवरणे "स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा बंधनमेवोपश्रयत" इति (छां. ६. ८. २.) श्रुतिप्रसिद्धं शकुनिदृष्टान्तमादावाह, शकुनिरिति ।

शकुनिः सूत्रबद्धस्सन् दिक्षु व्यापृत्य विश्रमम् ।
अलब्ध्वा बंधनस्थानं हस्तस्तम्भाद्युपाश्रयेत् ॥ ४७ ॥

शकुनिस्सूत्रबद्धस्सन् बंधनमोक्षाय दिक्षु इतस्ततो व्यापृत्य उड्डीयमानो विश्रममलब्ध्वा बंधनस्थानं हस्तस्तंभाद्याश्रयते ॥ ४७ ॥

दृष्टान्तार्थं दार्ष्टान्तिके योजयति, जीवेति ।

जीवोपाधि मनस्तद्वद्धर्माधर्मफलाप्तये ।
स्वप्ने जाग्रति च भ्रान्त्वा क्षीणे कर्मणि लीयते ॥ ४८ ॥

तद्वत् जीवोपाधि मनः जीवस्योपाधिभूतं मनः धर्माधर्मफलाप्तये सुकृतदुष्कृतफलस्यानुभवाय स्वप्ने जाग्रति च भ्रान्त्वा उपभोगेन कर्मणि क्षीणे स्वोपा-

दानेऽज्ञाने लीयते। उपाधिनाशे तत्कृतजीवत्वमपि नश्यति। अतः स्वस्वरूपमेवै-तीति भावः॥ ४८॥

श्येनदृष्टान्तं दार्ष्टान्तिके योजयति, श्येन इति।

श्येनो वेगेन नीडैकलंपटः शयितुं व्रजेत्।
जीवः सुप्त्यै तथा धावेद्ब्रह्मानंदैकलंपटः॥ ४९॥

यथा श्येन आकाशेऽतिवेगेनोड्डीय परिपतनपरिश्रान्तः शयितुं नीडैकलंपटः कुलायमात्रमभिलष्येत्यर्थः व्रजेत्। तथा जीवोऽपि ब्रह्मानंदैकलंपटो ब्रह्मानंदमेवान्विच्छन् सुप्त्यै हृदयाकाशं धावेत्। "तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णोवा विपरिपत्य परिश्रान्तः संहृत्य पक्षौ स्वालयायैव द्रियते। एवमेवायं पुरुष एतस्मा आनंदाय धावति यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यती"ति (बृ. ४. ३. १९.) श्रुतेः॥४९॥

"स यथा कुमारो वा महाराजो वा महाब्राह्मणोवाऽतिघ्नीमानन्दस्य गत्वा शयीतैवमेवैष एतच्छेते" इति (बृ. २. १. १९.) श्रुतेरवशिष्टान् दृष्टान्तान् बालभूपालात्मकुशलान् त्रिभिर्विवृण्वन्नादौ कुमारदृष्टान्तमाह, अतिबाल इति।

अतिबालः स्तनं पीत्वा मृदुशय्यागतो हसन्।
रागद्वेषाद्यनुत्पत्तेरानंदैकस्वभावभाक्॥ ५०॥

अतिबालोऽनुत्पन्नप्रत्यभिज्ञः स्तनन्धयः मातुःस्तनं पीत्वा मृदुशय्यागतो हसन्नकारणमन्दहासं कुर्वन् रागद्वेषाद्यनुत्पत्तेरानन्दविरोधिनो रागद्वेषादेरनुत्पत्तेरिति हेतोरानंदैकस्वभावभाग्भवति। स्वभावतः सुखस्वरूपमानंदमनुभवतीति भावः॥ ५०॥

महाराजमुदाहरति, महाराज इति।

महाराजस्सार्वभौमः संतृप्तस्सर्वभोगतः।
मानुषानन्दसीमानं प्राप्यानंदैकमूर्तिभाक्॥ ५१॥

महाराजस्सार्वभौमः सर्वस्याभूमेरीश्वरश्चक्रवर्ती "तस्येश्वर" इत्यण् अनुशतिकादिषु पाठादुभयपदवृद्धिश्च॥ "यस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यादि"ति

(तै. २. ८.) स यो मनुष्याणां राद्धः समृद्धो भवत्यन्येषामधिपतिः सर्वैर्मानुष्यकैर्भोगैः संपन्नतमः स मनुष्यणां परम आनन्दः (बृ. ४. ३. ३३) इति श्रुत्यत्रानुसंधेये। सर्वभोगतस्सर्वस्यैकस्य मानुषानंदस्य भोगतोऽनुभवतः मानुषानंदसीमानं प्राप्यानंदैकमूर्तिभाक् आनन्दस्वरूप एव भवति ॥ ५१ ॥

ब्रह्मज्ञानिनमुदाहरति, महाविप्र इति ।

**महविप्रो ब्रह्मवेदी कृतकृत्यत्वलक्षणाम् ।**
**विद्यानंदस्य परमां काष्ठां प्राप्यावतिष्ठते ॥ ५२ ॥**

महांविप्रो ब्रह्मनिष्ठो ब्रह्मवेदी कृतकृत्यत्वलक्षणां विद्यानन्दस्य विद्याया ज्ञानस्य य आनन्दस्तस्य परमामुत्कृष्टां काष्ठां कोटिं जीवन्मुक्त्यवस्थामित्यर्थः प्राप्यावतिष्ठते ॥ ५२ ॥

पिण्डितार्थमाह, मुग्धेति ।

**मुग्धबुद्धातिबुद्धानां लोके सिद्धा सुखात्मता ।**
**उदाहृतानामन्ये तु दुःखिनो न सुखात्मकाः ॥ ५३ ॥**

उपरिष्टादुदाहृतानां मुग्धबुद्धातिबुद्धानां, मुग्धानां मध्ये बालः, बुद्धानां विवेकिनां मध्ये चक्रवर्ती, अतिबुद्धानां ज्ञानिनां मध्ये अनंदसाक्षत्कारवांश्चेत्यर्थः तेषां मध्ये सुखात्मता सुखस्वरूपता लोके सिद्धा । अन्ये तु दुःखिन एव न सुखात्मकाः ॥ ५३ ॥

कुमारादिवदस्य जीवस्यानंदैकपरत्वप्रदर्शिकां श्रुतिमुदाहरति, कुमारेति ।

**कुमारादिवदेवायं ब्रह्मानंदैकतत्परः ।**
**स्त्रीपरिष्वक्तवन्नेद न बाह्यं नापि चान्तरम् ॥ ५४ ॥**

कुमारादिवत् बालमहीपालात्मकुशला इवायं जीवः सुषुप्तौ ब्रह्मानदकतत्परः स्त्रीपरिष्वक्तवदंगनालिंगितः कामुक इव न बाह्यं वेद, आन्तरं चापि न वेद । बाह्याभ्यान्तरज्ञानशून्यत्वात्सुखस्वरूपो भवति । "तद्यथा प्रियया स्त्रिया परिष्वक्तो न बाह्यं किं च न वेद नान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किं च न वेद नान्तरमि"ति (बृ. ४. ३. २१.) श्रुतिरत्रानुसंधेया ॥ ५४ ॥

दृष्टान्तदार्ष्टान्तिकवाक्यगतौ बाह्याभ्यन्तरशब्दौ विवृणोति, बाह्यमिति।

**बाह्यं रथ्यादिकं वृत्तं गृहकृत्यं यथान्तरम्।**
**तथा जागरणं बाह्यं नाडीस्थः स्वप्न आन्तरः॥ ५५॥**

यथा कामुकस्य विषये रथ्यादिकं वीथ्यादौ वर्तमानं वृत्तं व्यापारः बाह्यम् गृहकृत्यमान्तरम्। तथा जीवविषये जागरणं जाग्रदवस्था बाह्यं, नाडीस्थः जाग्रद्वासनावशान्नाडीषु प्रतीयमानः स्वप्न आन्तरो भवति॥ ५५॥

सौषुप्तिकस्वस्वरूपसुखनिमग्नस्यापगतोपाधिखेदस्य जीवस्य वास्तवस्वरूपप्रदर्शनाय "अत्र पिताऽपिता भवती"ति (बृ. ४. ३. २२.) श्रुत्यर्थं संक्षिपति, पितेति।

**पिताऽपि सुप्तावपितेत्यादौ जीवत्ववारणात्।**
**सुप्तौ ब्रह्मैव नो जीवः संसारित्वासमीक्षणात्॥ ५६॥**

पिताऽपि सुप्तावपिता पिता न भवति। अपेतपितृभावो भवतीत्याद्यर्थक "पिताऽपिता भवती"त्यादौ श्रुतिवाक्ये आत्मनो जीवत्ववारणात्सुप्तौ संसारित्वासमीक्षणात्संसारिभावस्यादर्शनाद्ब्रह्मैव नो जीवः तदा जीवत्वं नानुभूयत इत्यर्थः। सुषुप्तावपगतपितृपुत्रादिसर्वसंसारसंबंधोऽविद्याकामकर्मविनिर्मुक्तः सर्वसंबंधातीतानंदस्वरूपो भवतीति भावः॥ ५६॥

संसारासमीक्षणविवरणाय निरुक्तश्रुतेरुत्तरार्थं संक्षिपति, पित्रिति।

**पितृत्वाद्यभिमानो यः सुखदुःखाकरस्स हि।**
**तस्मिन्नपगते तीर्णः सर्वान् शोकान् भवत्ययम्॥ ५७॥**

यः पितृत्वाद्यभिमानः 'ममायं पुत्रः, तस्याहं पिते' त्याकारकः स सुखदुःखाकरो हि। तस्मिन् संसारेऽपगते सत्ययं जीवः सर्वान् सांसरिकशोकान् पुण्यपापफलभूतानि सुखदुःखानीत्यर्थः। तीर्णो भवति। जीवस्य सांसारिकाभिमानाभावे सर्वदुःखाभाव इति भावः॥ ५७॥

ज्योतिर्ब्राह्मणस्य निगूढार्थं "स्वप्ने स जीवः सुखदुःखभोक्ता स्वमायया

कल्पितजीवलोके । सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेती "ति कैवल्यश्रुत्या (१. १३.) स्पष्टयति, सुषुप्तीति ।

**सुषुप्तिकाले सकले विलीने तमसाऽऽवृतः ।**
**सुखरूपमुपैतीति ब्रूते ह्याथर्वणी श्रुतिः ॥ ५८ ॥**

सुषुप्तिकाले सकले जाग्रत्स्वप्नात्मके स्वमायया कल्पितजीवलोके स्वोपादानभूतायां तमःप्रधानायां प्रकृतौ विलीने सति तमसा प्रकृत्याऽऽवृत आच्छादितो जीवः सुखरूपमानन्दस्वरूपमुपैति । सुखरूपो भवतीत्यर्थः । इत्येवमाथर्वणी कैवल्यश्रुतिर्ब्रूते ॥ ५८ ॥

अस्यार्थस्य सर्वानुभवसिद्धत्वं दर्शयति, सुखमिति ।

**सुखमस्वाप्समत्राहं न वै किंचिदवेदिषम् ।**
**इति सुप्ते सुखाज्ञाने परामृशति चोत्थितः ॥ ५९ ॥**

सुषुप्तेरुत्थितः पुरुषः "सुखमहमस्वाप्सं, न वै किंचिदवेदिष"मिति सुप्ते सुषुप्तौ वर्तमाने सुखाज्ञाने सुखमज्ञानं च परामृशति स्मरति ॥ ५९ ॥

स्मृतेरनुभवमूलत्वात्तन्मूलभूतोऽनुभवः सुषुप्तावंगीकार्य इत्याह, परेति ।

**परामर्शोऽनुभूतेऽस्तीत्यासीदनुभवस्तदा ।**
**चिदात्मत्वात्स्वतो भाति सुखमज्ञानधीस्ततः ॥ ६० ॥**

परामर्शः स्मृतिरनुभूतेऽनुभूतविषयेऽस्ति नान्यत्रेति हेतोस्तदा सुषुप्तिसमयेऽनुभव आसीदिति सिध्यति । ननु सुषुप्तौ सर्वेन्द्रियाणां मनसा सह विलये कथमनुभवसिद्धिः स्यादिति चेत् किं सुखानुभवसाधनाभावात्सा न स्यादुताज्ञानानुभवसाधनाभावात्, नाद्यः । साक्षिणस्स्वतश्चिदात्मत्वात् स्वप्रकाशसुखस्वरूपत्वात् सुखं स्वतो भाति । न तत्र साधनापेक्षा । न द्वितीयः । स्वप्रकाशस्वरूपस्य सुखस्य तत्साधनत्वादित्याह, अज्ञानेति । ततश्चितेरज्ञानधीरज्ञाना[illegible] सुखस्वरूपं सद्वस्तु । सुखं च स्वयंप्रकाशचिदात्मकम् । अतो न तस्य साधनापेक्षा । तस्य बलादज्ञानमपि प्रतीयत इत्यतो न द्वितीयस्यापि साधनापेक्षेति भावः ॥ ६० ॥

सौषुप्तिकसुखं ब्रह्मानन्द एव ।

चित्प्रकाशस्वरूपं सौषुप्तिकसुखं ब्रह्मानन्दः स्वयं भवेदित्यत्र तस्य ब्रह्मरूपत्वसंभवे श्रुतिः प्रमाणमित्याह, ब्रह्मेति ।

**ब्रह्मविज्ञानमानन्दमिति वाजसनेयिनः ।**
**पठन्त्यतः स्वप्रकाशं सुखं ब्रह्मैव नेतरत् ॥ ६१ ॥**

"तेनैक्यं प्राप्य तत्रत्यो ब्रह्मानन्दः स्वयंभवे "दित्युक्त (११.४५.) ब्रह्मविज्ञानमानन्दमिति विज्ञानानंदस्वरूपमिति वाजसनेयिनः, वाजसनेः सूर्यस्य छात्रो वाजसनेयो याज्ञवल्क्यः, तेन प्रोक्तमधीयत इति तथोक्ताः शुक्लयजुर्वेदशाखान्तर्गतबृहदारण्यकश्रुत्यनुयायिनः । "विज्ञानमानंदं ब्रह्मे "ति (बृ. ३. ९. २८.) पठन्ति । अतः स्वप्रकाशं सुखमानंदो ब्रह्मैव इतरन्न ॥ ६१ ॥

सुषुप्तावानन्दमयस्य ब्रह्मानन्दानुभवकथनम् ।

ननु सुखमस्वाप्सं न किंचिदवेदिषमिति स्मृतिः जीवस्यैव । तथाचानुभविताऽपि स एवेत्यवश्यमभ्युपेयम् । स्मृत्यनुभवयोस्सामानाधिकरण्यनियमादन्यानुभूतस्यान्यस्मरणाविषयत्वादित्याशंकते, यदिति ।

**यदज्ञानं तत्र लीनौ तौ विज्ञानमनोमयौ ।**
**तयोर्हि विलयावस्था निद्राऽज्ञानं च सैव हि ॥ ६२ ॥**

यत्सुषुप्तावनुभूयमानमज्ञानं तत्र तस्मिन्नज्ञाने प्रमातृप्रमाणस्वरूपभूतौ तौ विज्ञानमनोमयौ कोशौ लीनौ विलयं गतौ । तदाकारं विहाय कारणरूपं गताविमित्यर्थः । जीवत्वव्यवहारभूतस्य कोशद्वयस्याभावे जीवत्वाभावात् । साम्राज्याभावे साम्राट्त्वाभावो यथा । तथा च सामानाधिकरण्यं कथं घटत इत्याह, तयोरिति । तयोर्विज्ञानमनोमययोर्विलयावस्थैव निद्रेत्युच्यते । "विज्ञानविरतिस्सुप्ति "रित्युक्तेः । सैव निद्राऽज्ञानं च भवति । विज्ञानमनोमययोर्विलयात्मिकाया निद्रयाः स्वरूपमेवाज्ञानमिति हेतोः निद्रायां जीवभावाभावान्न जीवस्य सुखाज्ञानानुभव इति भावः ॥ ६२ ॥

समाधत्ते, विलीनेति ।

विलीनघृतवत्पश्चात्स्याद्विज्ञानमयो घनः ।
विलीनावस्थ आनन्दमयशब्देन कथ्यते ॥ ६३ ॥

विलीनघृतवद्यथोष्णसंयोगेन विलीनं घृतं पुनश्शीतसंयोगेन घनीभवति तथा सुषुप्तावज्ञने विलीनो विज्ञानमयः पश्चात्सुषुप्त्यनन्तरं जागरिते घनः स्यात् घनीभवेत् । प्रबोधे विज्ञानमये घनीभूते सत्युपाधिविशिष्ट आत्मापि घनीभूत इव भवति । विलीनावस्थ आत्मैवानन्दमयशब्देन कथ्यते । एक एवात्मा निद्राविलीनावस्थायामानन्दमयो भूत्वा सुखाज्ञाने अनुभवति । प्रबोधे विज्ञानमयो भूत्वा ते स्मरति । एवं च तत्तदुपाधिकश्चिदाभास एक एव । भेदस्तूपाधिकृतः । तथा चानुभवितृत्वस्मर्तृत्वयोरेकनिष्ठतासिद्धेर्नोपाधिभेदो न सामानाधिकरण्यविघटकत्वं च। कालभेदेन भिन्नदेशवर्तिन एकस्यैव देवदत्तस्यानुभवितृत्वस्मर्तृत्वदर्शनात् । न हि तत्र देशभेदस्सामानाधिकरण्यं विघटयति ॥ ६३ ॥

विलीनावस्थ आनंदमय इत्युक्तार्थं स्पष्टीकरोति, सुप्तीति ।

सुप्तिपूर्वक्षणे बुद्धिवृत्तिर्या सुखबिंबिता ।
सैव तद्बिंबसहिता लीनानन्दमयस्ततः ॥ ६४ ॥

सुप्तिपूर्वक्षणे "आत्माभिमुखधीवृत्तौ स्वानंदः प्रतिबिंबति" (११. ४४.) इत्युक्तरीत्याऽभिमुखप्रतिबिंबितमुखमुकुर इव सुखबिंबिता सुखप्रतिबिंबिता या बुद्धिवृत्तिर्विद्यते सैव तद्बिंबसहिता सुखप्रतिबिंबसहिता ततो निद्रावस्थायां लीना सत्यानंदमयो भवति ॥ ६४ ॥

विज्ञानमयस्य स्मरणोपपत्तये आनन्दमयस्य तदेकरूपत्वानुभवं प्रदर्शयति अन्तर्मुख इति ।

अन्तर्मुखो य आनन्दमयो ब्रह्मसुखं तदा
भुंक्ते चिद्बिंबयुक्ताभिरज्ञानोत्पन्नवृत्तिभिः ॥ ६५ ॥

अन्तर्मुखः सुखप्रतिबिंबयुतान्तर्मुखबुद्धिवृत्तिजन्यसंस्कारसहिताज्ञानोपाधिको य आनंदमयः सः तदा सुषुप्तिसमये चिद्बिंबयुक्ताभिश्चिदाभासेन युक्ताभिरज्ञानो-

त्पन्नवृत्तिभिर्ब्रह्मसुखं भुङ्क्ते । विज्ञानमय एवान्तर्मुख आनन्दमयरूपत्वमवाप्य सुषुप्तौ स्वरूपभूतमानन्दं चिदाभाससहितवृत्तिभिरनुभवति । अतो जाग्रत्काले रूपान्तरं प्राप्तस्य "सुखमस्वाप्स"मिति सर्तृत्वं युज्यत एवेति भावः ॥ ६५ ॥

ननु सुषुप्तावानंदानुभवस्याज्ञानवृत्तिजन्यत्वांगीकारे जाग्रदनुभव इव सौषुप्तिकानुभवोऽपि वृत्तिजन्यत्वाविशेषेणानुभवामीति प्रतीयेतेत्याशंक्याह, अज्ञानेति ॥

**अज्ञानवृत्तयः सूक्ष्मा विस्पष्टा बुद्धिवृत्तयः ।**
**इति वेदान्तसिद्धान्तपारगाः प्रवदन्ति हि ॥ ६६ ॥**

सुषुप्तावज्ञानवृत्तयः सूक्ष्मा अज्ञानस्याव्यक्तरूपत्वात् । अतस्तदाऽनुभवो न प्रतीयते । जाग्रति तु बुद्धिवृत्तयो विस्पष्टा व्यक्ताः, बुद्धेर्व्यक्तत्वात् । तस्मा-त्तदानुभवः स्पष्टमेव प्रतीयते । इति वेदान्तसिद्धान्तपारगाः प्रवदन्ति । एवं च तदानींतनवृत्तीनामव्यक्तत्वात्तज्जन्यानुभवस्याप्यव्यक्ततया न प्रतीतिरिति भावः॥६६॥

सुषुप्तावानन्दमयो ब्रह्मानन्दमनुभवतीत्यत्र प्रमाणमाह, माण्डूक्येति ।

**माण्डूक्यतापनीयादिश्रुतिष्वेतदतिस्फुटम् ।**
**आनंदमयभोक्तृत्वं ब्रह्मानंदे च भोग्यता ॥ ६७ ॥**

स्पष्टोऽर्थः ॥ ६७ ॥

तत्र "सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानंदमयो ह्यानंदभुक् चेतोमुख" इति (१.५.) माण्डूक्यवाक्यार्थमादावाचष्टे, एकीभूत इति ।

**एकीभूतः सुषुप्तस्थः प्रज्ञानघनतां गतः ।**
**आनन्दमय आनन्दभुक्चेतोमयवृत्तिभिः ॥ ६८ ॥**

सुषुप्तस्थः सुषुप्त्यभिमानी, एकीभूतो विज्ञानाद्युपाधीनामुपरमादेकाकारतां गत आनन्दमयः आनंदप्रायः प्रज्ञानघनतां विज्ञानानां नीहारघन इव समष्टिभावं गतस्सन्, चेतोमयवृत्तिभिश्चैतन्यप्रचुराभिश्चैतन्यप्रतिबिंबिताभिर्वृत्तिभिरानंदभुक् भवत्यानंदमनुभवति ॥ ६८॥

श्रुत्यर्थसंयोजनधिया तत्रत्यानां " एकीभूतः, प्रज्ञानघनः, चेतोमुख, " इति शब्दानामर्थमधस्तात् क्रमशो विवृण्वन् एकीभूतपदेन बोधितमेकीभावं दर्शयति, विज्ञानेति ।

विज्ञानमयमुख्यैर्यो रूपैर्युक्तः पुराऽधुना ।
स लयेनैकतां प्राप्तो बहुतंडुलपिष्टवत् ॥ ६९ ॥

पुरा जाग्रत्स्वप्नयोः य आत्मा विज्ञानमयमुख्यैर्विज्ञानं बुद्धिस्तेनोपलक्ष्यमाणस्तन्मयस्तत्प्रभृतिभीरूपैः "स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमय" इति (बृ. ४–५) श्रुत्युक्तैर्धर्मैर्युक्तः उपाधिवशाद्युक्त इव विभाव्यमानः सोऽधुना सुषुप्तिसमये उपाधेर्लयेन बहुधा तंडुलपिष्टवदेकतां प्राप्तः ॥ ६९ ॥

अनन्तरं प्रज्ञानघनशब्दं विवृणोति, प्रज्ञानानीति ।

प्रज्ञानानि पुरा बुद्धिवृत्तयोऽथ घनोऽभवत् ।
घनत्वं हिमबिंदूनामुदग्देशे यथा तथा ॥ ७० ॥

पुरा जाग्रत्स्वप्नयोः प्रज्ञानानि प्रज्ञानशब्दाभिधेया बुद्धिवृत्तयः घटादिगोचराः अथ सुषुप्तौ घनोऽभवत् । घटाद्यभावे चिद्रूपेणैकरूपोऽभवत् । तत्रोदाहरणमाह, घनत्वमिति । यथोदग्देशे उत्तरदेशे हिमबिंदूनां घनत्वं भवति तथा ॥७०॥

सकलवृत्तीनामेकीभावरूपं प्रज्ञानघनत्वं वैदिकलौकिकव्यवहारेण विशदयति, तदिति ।

तद्घनत्वं साक्षिभावं दुःखाभावं प्रचक्षते ।
लौकिकास्तार्किका यावद्दुःखवृत्तिविलोपनात् ॥ ७१ ॥

तद्घनत्वं साक्षिभावं वेदान्तिनः प्रचक्षते । वेदान्तेषु साक्षिण एकत्वाभिधानादेकीभावमभिदधति । तद्घनत्वमेव दुःखाभाव इति लौकिकास्तार्किकाः प्रचक्षते । तत्र कारणमाह, यावदिति । सुषुप्तौ यावद्दुःखवृत्तिविलोपनात्, साकल्येन दुःखवृत्तीनां लयात् ॥ १ ॥

चेतोमुखशब्दार्थमाचष्टे, अज्ञानेति ।

अज्ञानबिंबिता चित् स्यान्मुखमानन्दभोजने ।
भुक्तं ब्रह्मसुखं त्यक्त्वा बहिर्यात्यथ कर्मणा ॥ ७२ ॥

सुषुप्तावानंदभोजने स्वस्वरूपभूतस्यानंदस्यानुभवेऽज्ञानबिंबिता अज्ञानवृत्तौ प्रतिबिंबिता चिन्मुखं प्रधानं भवति । चिदाभास एव तदनुभवे प्रधानं साधनमित्यर्थः । तर्हि "यूनिलब्धे तु युवतिर्जरठे रमते कथमि"ति न्यायमनुसृत्य सर्वदाऽऽनंद एव लग्नो भवेन्न तु जागराद्यभिमुखस्स्यादित्यत आह, भुक्तमिति । भुक्तमनुभूतं ब्रह्मसुखं त्यक्त्वाऽथ कर्मणा प्राग्जन्मकृतपुण्यपापरूपेण बहिर्याति स्वप्नजाग्रत्प्रपंचमाप्नोति ॥ ७२ ॥

बहिर्यात्यथ कर्मणेत्यत्र कैवल्यश्रुतिं प्रमाणयति, कर्मेति ।

कर्म जन्मान्तरेऽभूद्यत्तद्योगाद्बुध्यते पुनः ।
इति कैवल्यशाखायां कर्मणो बोध ईरितः ॥ ७३ ॥

जन्मान्तरे पूर्वस्मिन् जन्मनि यच्छेषरूपं धर्माधर्मलक्षणं कर्माभूत्तद्योगात्तत्संबंधात्पुनर्जीवो बुध्यते । सुषुप्तिं जहातीति कैवल्यशाखायां बोधः कर्मज इतीरितः । "पुनश्च जन्मान्तरकर्मयोगात्स एव जीवः स्वपिति प्रबुद्धः" (कै-१-१४) इति तत्रोक्तम् ॥ ७३ ॥

सुषुप्तौ ब्रह्मानंदानुभवस्य लिंगमाह, कंचिदिति ।

कंचित्कालं प्रबुद्धस्य ब्रह्मानंदस्य वासना ।
अनुगच्छेद्यतस्तूष्णीमास्ते निर्विषयः सुखी ॥ ७४ ॥

सुषुप्तेः प्रबुद्धस्य सौषुप्तिकब्रह्मानंदस्य वासना संस्कारः किंचित्कालमनुगच्छेत् । तत्कथं ज्ञायत इत्यत आह, यत इति, यतः प्रबोधानंतरं निर्विषयोऽप्यनधिगतविषयव्यापारोऽपि सुखी सन् कंचित्कालं तूष्णीमास्ते ॥ ७४ ॥

पश्चात्तत्तूष्णींभावस्य भंगे कारणमाह, कर्मभिरिति ।

कर्मभिः प्रेरितः पश्चन्नानादुःखानि भावयन् ।
शनैर्विस्मरति ब्रह्मानंदमेषोऽखिलो जनः ॥ ७५ ॥

एषोऽखिलो जनः जन्मान्तरैः कर्मभिः प्रेरितः पश्चान्नानादुःखानि सन्तापकराणि भावयन् मनस्यनुसंदधानः शनैर्ब्रह्मानंदं विस्मरति ॥ ७५ ॥

सर्वप्राणिनां ब्रह्मानन्दे पक्षपात इत्यत्र न कोऽपि विवाद इत्याह, प्रागिति ।

प्रागूर्ध्वमपि निद्रायाः पक्षपातो दिने दिने ।
ब्रह्मानन्दे नृणां तेन प्राज्ञोऽस्मिन् विवदेत कः ॥ ७६ ॥

निद्रायाः प्रागूर्ध्वमपि नृणां ब्रह्मानंदे दिने दिने पक्षपातोऽस्त्येव । अत एव निद्रादौ मृदुशय्यादि संपादयति । निद्रान्ते तूष्णीमास्ते । तेन हेतुना कः प्राज्ञोऽस्मिन् ब्रह्मानन्दे विवदेत ? नकोऽपीति भावः ॥ ७६ ॥

श्रवणादिनापि सुदुर्लभस्य ब्रह्मानन्दस्य तूष्णींभावमात्रेण लभ्यत्वे गुरुशास्त्रादीनामनावश्यकतामाशंकते, नन्विति ।

ननु तूष्णीं स्थितौ ब्रह्मानन्दश्चेद्भाति लौकिकाः ।
अलसाश्चरितार्थाः स्युः शास्त्रेण गुरुणात्र किम् ॥ ७७ ॥

ननु सुप्तोत्थितस्य कंचित्कालं तूष्णींस्थितौ ब्रह्मानन्दो भाति चेल्लौकिकाः शास्त्रानभिज्ञाः अलसाः तत्तत्कार्याचरणासामर्थ्येन मन्दाः चरितार्थाः कृतकृत्याः स्युः । तेषामपि प्रायस्तूष्णींभावस्थितेर्दर्शनात् । एवं सत्यत्र ब्रह्मानंदविषये शास्त्रेण गुरुणा च किं प्रयोजनम् ? न तयोरावश्यकतात्र विषय इत्यर्थः ॥ ७७ ॥

ब्रह्मानन्दलाभे गुरुशास्त्रे साधनम् ।

गुरुशास्त्राभ्यां विनेदं ब्रह्मानंदसुखमिति न ज्ञायते, तच्च तयोरधीनमिति समाधत्ते, बाढमिति ।

बाढं ब्रह्मेति विद्युश्चेत्कृतार्थास्तावतैव ते ।
गुरुशास्त्रे विनात्यन्तं गंभीरं ब्रह्म वेत्ति कः ॥ ७८ ॥

बाढं युक्तमेव। सुषुप्तौ तदुत्थाने चानुभूयमानमानंदं ब्रह्मेति विद्युश्चेत्तावतैव ते लौकिकादयः कृतार्था एव । तथापि गुरुशास्त्रे विनाऽत्यन्तं गंभीरं वाङ्मनसा-

भ्यामनधिगम्यं सर्वात्मरूपं परं ब्रह्म को वेत्ति ॥ ७८ ॥

तर्हि भवद्वाक्येनैवाहं सुषुप्त्युत्तरकालिकमानंदं ब्रह्मेति वेदेति कुतोऽहं न जानामीति पृच्छन्तं परिहसति, जानामीति ।

जानाम्यहं त्वदुक्त्याऽद्य कुतो मे न कृतार्थता ।
श‍ृण्वत्र त्वादृशो वृत्तं प्राज्ञंमन्यस्य कस्यचित् ॥ ७९ ॥

गुरुशास्त्राभ्यामनावश्यकतैव स्यात्, यतस्त्वदुक्त्या तत्त्वं जानतस्तवोक्त्या सौषुप्तिकं सुखं ब्रह्मेति वचनेनाद्य मे अहं ब्रह्म जानामीति कृतार्थता कुतो न स्यादिति चेत्प्राज्ञंमन्यस्याप्राज्ञं प्राज्ञमात्मानं मन्यमानस्य त्वादृशस्त्वत्सदृशस्य कस्यचिद्वृत्तान्तं शृणु ॥ ७९ ॥

तद्वृत्तान्तमेव कथयति, चतुरिति ।

चतुर्वेदविदे देयमिति श‍ृण्वन्नवोचत ।
वेदाश्चत्वार इत्येवं वेद्मि मे दीयतां धनम् ॥ ८० ॥

स्पष्टोऽर्थः ॥ ८० ॥

यदि वेदानां संख्यापरिमितिज्ञानेनैव तत्स्वरूपज्ञानमसेत्स्यत्, तवापि सुप्तोत्थितस्य कंचित्कालमनुभूयते ब्रह्मानंद इति श्रवणमात्रेण तदसेत्स्यदित्याह, संख्येति ।

संख्यामेवैष जानाति न तु वेदानशेषतः ।
यदि तर्हि त्वमप्येवं नाशेषं ब्रह्म वेत्सि हि ॥ ८१ ॥

एष वेदानां संख्यामेव जानाति किं त्वशेषतो वेदान्न जानातीति यदि त्वयांगीक्रियते तर्हि त्वमप्येवं ब्रह्मशब्दश्रवणमात्रेण ब्रह्म वेत्सि न त्वशेषतः ॥ ८१ ॥

ननु भेदत्रयशून्येऽखंडैकरसस्वरूपे परे ब्रह्मण्यंशाभावेंऽशतो ज्ञानं साकल्येनाज्ञानमिति वक्तुमशक्यमित्याशंकते, अखंडेति ।

अखंडैकरसानन्दे मायातत्कार्यवर्जिते ।
अशेषत्वसशेषत्ववार्तावसर एव कः ॥ ८२ ॥

स्पष्टोऽर्थः ॥ ८२ ॥

नाशेषं ब्रह्म वेत्सीत्यत्र विवक्षितमशेषत्वमविज्ञाय कृतस्य प्रश्नस्य विवक्षिताशेषत्वप्रतिपादनेन समाधानविवक्षया ब्रह्म जानामीत्यत्र विकल्प्य पृच्छति, शब्देति ।

शब्दानेव पठस्याहो तेषामर्थं च पश्यसि ।
शब्दपाठेऽर्थबोधस्ते संपाद्यत्वेन शिष्यते ॥ ८३ ॥

अखण्डैकरसानन्दं मायातत्कार्यवर्जितमित्यादिशब्दानेव तन्मात्रमेवेत्यर्थः, पठस्याहोस्वित्तेषामर्थंच पश्यसि ? आद्ये तेषामर्थबोधोऽर्थज्ञानं सम्पाद्यत्वेन शिष्यते । केवलशब्दश्रवणमात्रेणैव कृतार्थता तव नास्तीति भावः ॥ ८३ ॥

अर्थज्ञानमपि तदुपयोगिशास्त्रबलाज्जातमेवेति तदपि नावशिष्टमिति पृच्छन्तमवशेषं दर्शयति, अर्थे इति ।

अर्थे व्याकरणाद्बुद्धे साक्षात्कारोऽवशिष्यते ।
स्यात्कृतार्थत्वधीर्यावत्तावद्गुरुमुपास्व भोः ॥ ८४ ॥

भोश्चतुर्वेदाभिज्ञंमन्य, व्याकरणात्तत्सहायेन, व्याकरणशब्देनात्र वेदार्थावबोधकानि सर्वशास्त्राण्युपलक्ष्यन्ते; अर्थे बुद्धे "अस्ति ब्रह्मे"ति परोक्षज्ञाने सिद्धेऽपि तस्यापरोक्षेणाहं ब्रह्मासीति साक्षात्कारोऽवशिष्यते । तदवशेषात्तव कृतार्थता नास्तीति भावः । सिद्धे साक्षात्कारेऽशेषं ब्रह्म ज्ञातं भवति । तदैव ते कृतार्थता । अतो यावत्कृतार्थत्वधीस्स्यात्, तावद्गुरुमुपास्व । आचार्यचरणपरायणस्यैवापरोक्षसाक्षात्कारभाग्यभाजनतेति तदैव कृतार्थत्वज्ञानम् । तदैव ज्ञानस्य संपूर्णता । तादृशसम्पूर्णत्वमेव पूर्वत्र विवक्षितमिति भावः ॥ ८४ ॥

आनन्दभेदनिरूपणम् ।

चतुरुत्तरसप्ततितमश्लोकोक्तब्रह्मानन्दवासनायाः व्याप्तिमाह, आस्तामिति ।

आस्तामेतद्यत्र यत्र सुखं स्याद्विषयैर्विना ।
तत्र सर्वत्र विद्ध्येतां ब्रह्मानन्दस्य वासनाम् ॥ ८५ ॥

प्रसक्तानुप्रसक्तया प्राप्तोऽयं विषय आस्ताम् । यत्र यत्र तूष्णींभावादि-समये विषयैर्विना विशेषेण सिन्वन्ति बध्नंति पुरुषमिति विषयाः, तैर्विना स्रगाद्या-काराकारितवृत्तीर्विना सुखं स्यात्तत्र सर्वत्रैतां ब्रह्मानन्दस्य वासनां विद्धि । विषयाजन्यत्वे सति केवलाहंकारावृतत्वे सति सुखत्वं वासनानन्दस्य लक्षणम् । अत्रेदं बोध्यम् । वासनानंदनिजानंदयोर्ब्रह्मानन्दत्वाविशेषेऽपि यो ह्यानन्दो माया-हंकाराद्युपाधिरहितस्त्रिपुटीशून्यः स्वयंप्रकाशमानो वर्तते स एव ब्रह्मानन्दशब्देन व्यवह्रियते । सत्यामपि त्रिपुट्यां ज्ञातृज्ञेयास्पर्शेनैव समाधौ योगिभिरनुभूयमानो निजानन्द इति मुख्यतया व्यवह्रियते । औदासीन्यावस्थायामहंसुखीत्येवं ज्ञात्रादि-कमुल्लिख्यानुभूयमानो वासनानन्द इत्युच्यते । अत्रायं निर्गलितोऽर्थः । सर्वद्वैतनाशे स्वप्रकाशतयाऽनुभूयमान आनन्दो ब्रह्मानन्दः । सत्यपि द्वैते तदनुल्लिख्यानुभूयमानो ब्रह्मानन्द एव निजानन्दः । अहं सुखीत्येवं रीत्या द्वैतमप्युल्लिख्यौदासीन्यावस्थाया-मनुभूयमानो ब्रह्मानन्द एव वासनानन्दः । तेन निजानन्दवासनानन्दयोर्ब्रह्मानन्द-रूपतैव वस्तुतो नातिरिक्तेति । आत्मानंदाद्वैतानन्दयोस्तु भेदेनोपादानं शिष्यबोध-नार्थं कूटस्थब्रह्मणोरेव भेदं परिकल्प्येति बोध्यम् ॥ ८५ ॥

१२-७३ श्लोकेषु ब्रह्मानन्दः, ७४-८५ श्लोकेषु वासनानन्दश्च प्रदर्शितौ। विषयानन्दश्च परिशिष्टः । तद्विवक्षया चतुश्चत्वारिंशत्तमश्लोकोक्तार्थानुवादपूर्व-कं तत्स्वरूपं निरूपयति, विषयेष्विति ।

विषयेष्वपि लब्धेषु तदिच्छोपरमे सति ।
अन्तर्मुखमनोवृत्तावानन्दः प्रतिबिंबति ॥ ८६ ॥

लब्धेषु विषयेषु स्रगादिषु अपि तदिच्छोपरमे सति तेषु विषयेष्विच्छा-यास्तल्लाभेनोपरमे सत्यन्तर्मुखमनोवृत्तावभीप्सितविषयोपलब्धेः प्राक् बहिर्मुखा, या, मनोवृत्तिस्साऽभीप्सितार्थोपलब्धेरिच्छाभावेऽन्तर्मुखा भवति । तथाभूतायां मनोवृत्तावानन्दः प्रतिबिंबति । अयं प्रतिबिंबस्वरूपो विषयानन्द इत्युच्यते ॥८६॥

फलितमाह, ब्रह्मानन्द इति ।

ब्रह्मानन्दो वासना च प्रतिबिंब इति त्रयम् ।

**अन्तरेण जगत्यस्मिन्नानन्दो नास्ति कश्चन ॥ ८७ ॥**

एवं प्रकारेणानंदः सुषुप्तौ स्वयंप्रकाशतया भासमानो ब्रह्मानन्दः, सुप्तोत्थितस्य तूष्णींभावसमये तद्वासनाजनितं सुखं वासनानन्दः, अभीप्सितार्थोपलब्धेरिच्छोपरमेऽन्तर्मुखमनोवृत्तौ प्रतिबिंबो विषयानन्द इति त्रयं त्रिविधं भवति। एतदन्तरेणास्मिन् जगत्यन्यः आनन्दः कश्चन नास्ति ॥ ८७ ॥

ननु ब्रह्मानंदाध्यायेऽन्यानन्दप्रसङ्गोऽसंगत इत्याशंक्य तयोर्ब्रह्मानन्दजन्यत्वान्नासंगतिरित्याह, तथेति ।

**तथा च विषयानन्दो वासनानन्द इत्यमू ।**
**आनन्दौ जनयन्नास्ते ब्रह्मानन्दः स्वयंप्रभः ॥ ८८ ॥**

स्पष्टोऽर्थः ॥ ८८ ॥

जाग्रति ब्रह्मानन्दावाप्त्युपायकथनम् ।

वृत्तानुकथनपूर्वकमुत्तरग्रंथमवतारयति, श्रुतीति ।

**श्रुतियुक्त्यनुभूतिभ्यः स्वप्रकाशचिदात्मके ।**
**ब्रह्मानन्दे सुप्तिकाले सिद्धे सत्यन्यथा शृणु ॥ ८९ ॥**

श्रुतियुक्त्यनुभूतिभ्यः "सुषुप्तिकाले सकले विलीने तमेवाभिभूतः सुखरूपमेती"त्यादिभिः श्रुतिभिः, 'सुखमस्वाप्स'मिति स्मरणान्यथानुपपत्त्या कल्पितानुभवविषयत्वरूपया युक्त्याऽनुभूत्या च सुप्तिकाले स्वप्रकाशचिदात्मके स्वयंप्रभाचैतन्यस्वरूपे ब्रह्मानंदे सिद्धे सत्यन्यथा जाग्रदवस्थायां ब्रह्मानन्दावगमोपायं शृणु॥८९

आनंदावगत्युपायदिदर्शयिषया तदुपोद्घातरूपेणादौ जीवस्य स्वप्नजाग्रदवस्थाद्वयप्राप्तिं दर्शयति य इति ।

**य आनन्दमयः सुप्तौ स विज्ञानमयात्मताम् ।**
**गत्वा स्वप्नं प्रबोधं वा प्राप्नोति स्थानभेदतः ॥ ९० ॥**

सुप्तौ विलयसमय आनन्दमय इति य उच्यते स बुद्ध्युपाधिवशाद्विज्ञानमयात्मतां तत्स्वरूपं गत्वा स्थानभेदतः स्वप्नं प्रबोधं वा प्राप्नोति ॥ ९० ॥

जाग्रत्स्वप्नसुषुप्तिषु जीवस्याश्रयस्थानान्याह, नेत्रेति ।

**नेत्रे जागरणं कंठे स्वप्नः सुप्तिर्हृदंबुजे ।**
**आपादमस्तकं देहं व्याप्य जागर्ति चेतनः ॥ ९१ ॥**

नेत्रे जागरणं जाग्रदवस्था, कण्ठे स्वप्नं, हृदंबुजे सुप्तिश्च, तिष्ठन्ति । अत्र नेत्रपदं सर्वदेहोपलक्षणमित्याह, आपादेति । आपादमस्तकं देहं व्याप्य चेतनो जागर्ति जागरवान् भवति ॥ ९१ ॥

जीवस्य जागरे आपादमस्तकदेहव्यापकत्वं सदृष्टान्तं विशदयति, देहेति ।

**देहतादात्म्यमापन्नस्तप्तायःपिण्डवत्ततः ।**
**अहं मनुष्य इत्येवं निश्चित्यैवावतिष्ठते ॥ ९२ ॥**

तप्तायःपिण्डवत् यथा तप्तेऽयःपिण्डेऽग्निरयःपिण्डतादात्म्यमाप्नोति, तथा जीवोऽपि देहतादात्म्यं देहोहमिति भावमापन्नः, ततोऽहं मनुष्य इत्येवं निश्चित्यैवावतिष्ठते प्रवर्तते । अयःपिण्डतादात्म्यमापन्नो वह्निर्यथाऽयःपिण्डं सर्वं व्याप्नोति तथा देहतादात्म्यमापन्नो जीवोऽपि सर्वं देहं व्याप्य स्थित इति भावः ॥ २ ॥

देहतादात्म्यंगतस्य जीवस्यावस्थामाह, उदासीन इति ।

**उदासीनः सुखी दुःखीत्यवस्थात्रयमेत्यसौ ।**
**सुखदुःखे कर्म कार्ये त्वौदासीन्यं स्वभावतः ॥ ९३ ॥**

देहतादात्म्यंगतो असौ जीव उदासीनः, सुखी, दुःखीत्यवस्थात्रयमेति । तत्र सुखदुःखयोस्सहेतुकत्वमौदासीन्यस्याहेतुकत्वं चाह, सुखेति । सुखदुःखे कर्मकार्ये जन्मान्तरकृतपुण्यपापरूपकर्मणः संभूते । औदासीन्यं स्वभावतः प्राप्तम् ॥९३॥

वासनानन्दस्वरूपविचारः ।

सुखदुःखयोर्निमित्तकल्पितं द्वैविध्यमाह, बाह्येति ।

**बाह्यभोगान्मनोराज्यात्सुखदुःखे द्विधा मते ।**
**सुखदुःखान्तरालेषु भवेत्तूष्णीमवस्थितिः ॥ ९४ ॥**

बाह्यभोगात्स्रगादिबाह्यविषयाणां भोगात्। मनोराज्यान्मानसिकभावनातश्च सुखदुःखे द्विधा मते। सुखदुःखान्तरालेषु तयोर्मध्यकालेषु तूष्णीमवस्थितिरौदासीन्यं भवेत् ॥ ९४ ॥

जाग्रदवस्थायां विद्यमानमौदासीन्यमेव स्वस्वरूपभूतानन्दाभिव्यंजकमित्याह, नेति।

न कापि चिन्ता मेऽस्त्यद्य सुखमास इति ब्रुवन्।
औदासीन्ये निजानन्दभानं वक्त्यखिलो जनः ॥ ९५ ॥

अद्य मे न काऽपि चिन्ताऽस्ति, सुखमासे इति ब्रुवन्नौदासीन्ये निजानन्दभानं स्वस्वरूपानन्दस्फुरणमखिलो जनो वक्ति ॥ ९५ ॥

औदासीन्ये भासमान आनन्दो वासनामात्र एव न तु मुख्यो निजानन्द इत्याह, अहमिति।

अहमस्मीत्यहंकारसामन्याच्छादितत्त्वतः।
निजानन्दो न मुख्योऽयं किंत्वसौ तस्य वासना ॥९६॥

औदासीन्ये भासमान आनन्दोऽयं मुख्यो निजानन्दो न, किन्तु असौ तस्य मुख्यनिजानन्दस्य वासना, कुतः? अहमस्मीत्यहंकारसामान्याच्छादितत्वतः, प्रत्येकव्यक्तिमनुल्लिख्य 'सुख्यसी'ति स्वसुखाववोधके वाक्ये उल्लिख्यमानं यदहंकारसामान्यं तेनाच्छादितत्वात्। उपाधिकृतजीवभावसहितत्वादित्यर्थः ॥ ९६ ॥

तत्र दृष्टान्तमाह, नीरेति।

नीरपूरितभाण्डस्य बाह्ये शैत्यं न तज्जलम्।
किन्तु नीरगुणस्तेन नीरसत्ताऽनुमीयते ॥ ९७ ॥

नीरपूरितभाण्डस्य बाह्ये हस्तस्पर्शेनानुभूयमानं यच्छैत्यं तज्जलं न। किन्तु नीरगुणः। तेन शैत्येन घटे नीरसत्ता नीरस्य विद्यमानताऽनुमीयते। जलवानयं घटः शैत्यवत्त्वात्। यथा नीरधृतिरिति प्रयोगः ॥ ९७ ॥

एवमेव वासनानन्दान्निजानन्दोऽनुमीयत इत्याह, यावदिति।

यावद्यावदहंकारो विस्मृतोऽभ्यासयोगतः ।
तावत्तावत्सूक्ष्मदृष्टेर्निजानन्दोऽनुमीयते ॥ ९८ ॥

निरोधसमाधेरभ्यासयोगतोऽहंकारः तदादिचित्तवृत्तिर्यावद्यावद्विस्मृतो भवति विलयं याति तावत्तावत्सूक्ष्मदृष्टेर्निजानन्दो यथार्थभूतो ब्रह्मानन्दोऽनुमीयते । "यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेद् ज्ञानमात्मनि ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्तरात्मनी"ति (कठ. १. ३. १३.) श्रुतेर्यावद्यावदभ्यस्तसमाधिवशाच्चित्तसौक्ष्म्यं संपाद्यते तावत्तावदहंकारविस्मरणतारतम्यानुरूपा निजानन्दाभिव्यक्तिर्भवतीत्यर्थः । अयं भावः । अहंकारानाच्छादित एवानन्दो ब्रह्मानन्द इति मुख्यतया व्यपदिश्यते । प्रकृतेऽहंकारसद्भावात्तदाच्छादितत्वेन न मुख्यो ब्रह्मानन्दः । अपि तु तद्वासनारूपः । ततो नात्यन्तविलक्षणो निजानन्द इत्यभ्युपेयम् ॥ ९८ ॥

समाधौ निजानन्दानुभवकथनम् ।

सम्पूर्णनिजानन्दावाप्तिः कदा स्यादित्यत आह, सर्वात्मनेति ।

सर्वात्मना विस्मृतस्सन् सूक्ष्मतां परमां व्रजेत् ।
अलीनत्वान्न निद्रैषा ततो देहोऽपि नो पतेत् ॥ ९९ ॥

अहंकारस्सर्वात्मना समग्रतो विस्मृतस्सन्, अशेषवृत्तिविरमे सति समाधावित्यर्थः, परमामुत्कृष्टां सूक्ष्मतां व्रजेत् । ननु निद्रायामनुभूयमान आनन्दो मुख्य इत्यभ्युपगतो भवता । तदानीं विद्यमानस्यानन्दस्यापि सर्ववृत्त्युपरतिसमकालतयेदानींतनस्यापि तादृशत्वेन ब्रह्मानन्दत्वमेवास्तु । किमुच्यते पूर्वो निजानन्द इत्याशंक्य भेदं दर्शयति, अलीनत्वादिति । अन्तःकरणस्यालीनत्वात्सर्ववृत्तीनां विलयेऽप्यन्तःकरणस्य विद्यमानत्वादेषावस्था निद्रा न भवति । अन्तःकरणस्य सुषुप्तौ विद्यमानत्वेऽपि तदा कारणे लयेन तद्रूपेण स्थितौ निद्रेत्युच्यते । अधुना न तस्य कारणे लयः । किंत्वशेषवृत्तिनिवृत्तिरेव । वृत्तिविरमेऽप्यन्तःकरणं स्वस्वरूपेणावतिष्ठते । न तु लयं गच्छति । तदानीमन्तःकरणस्य सत्त्वे लिंगमाह, तत इति । सुषुप्तावन्तःकरणे विलीने सति देहपातो दृश्यते । ततोऽत्रालीनत्वादेव देहोऽपि नो पतेत् । देहपाताभावेनाविलीनत्वमनुमीयत इति भावः ॥ ९९ ॥

नन्वेवं सति निजानन्दोऽन्यानन्दोऽस्तु। किमुच्यते वासनानन्द इति। वासनानन्द इत्युक्तौ ब्रह्मानन्दवासनेत्यर्थः। अस्य ब्रह्मानन्दत्वे प्रमिते ततः किंचिद्वैलक्षण्ये ब्रह्मानन्दवासनेति वक्तुं युक्तमित्याशंक्य तत्र प्रमाणमस्तीत्याह, नेति।

न द्वैतं भासते नापि निद्रा तत्रास्ति यत्सुखम्।
स ब्रह्मानन्द इत्याह भगवानर्जुनं प्रति ॥ १०० ॥

यस्मिन् काले द्वैतं न भासते निद्रापि नास्ति तत्र तस्मिन् काले यत्सुखमनुभूयते स ब्रह्मानन्द इति भगवानर्जुनं प्रत्याह। एवं च निद्राप्राक्कालिकस्य वासनानन्दस्य ब्रह्मानन्दत्वेन भगवता व्यवहारादहंकारानाच्छादितस्यैव मुख्यब्रह्मानन्दत्वेन मुख्यत्वाभावाद्गौणोऽयं व्यवहारो भगवता कृतमित्यवश्यमभ्युपेयमिति भावः ॥ १०० ॥

उक्तार्थप्रतिपादकानि भगवद्वाक्यानि प्रदर्शयति, शनैरिति।

शनैश्शनैरुपरमेद्बुद्ध्या धृतिगृहीतया।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥ १०१ ॥

धृतिगृहीतया धैर्येण निगृहीतया बुद्ध्या विषयेभ्यः शनैश्शनैः कुशाग्रेण जलबिंदुविश्लेषणपूर्वकमुच्छोषितोदधेरिवोपरमेत्। मन आत्मसंस्थमात्मनि स्वस्वरूपे संस्थितं "आत्मैव सर्वं न ततोऽन्यत्किंचिदस्तीत्ये"वं कृत्वा किंचिदपि न चिंतयेत्। एष योगस्य परमोऽवधिः (गी. ६–२५) ॥ १०१ ॥

अस्य संपादनोपायमाह, यत इति।

यतो यतो निश्चरति मनश्चंचलमस्थिरम्।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ १०२ ॥

मन आत्मसंस्थं कर्तुं यतमानो योगी स्वभावतश्चंचलमत एवास्थिरं विषयाद्विषये गमनशीलं मनः यतो यतो यस्माद्यस्मान्निमित्ताच्छब्दादेर्निश्चरति बहिर्निर्गच्छति ततस्ततस्तस्माच्छब्दादेर्नियम्यात्मन्येव स्वस्वरूप एतन्मनो वशं

नयेत् (गी. ६-२६) ॥ १०२ ॥

एवं कृते फलितमाह, प्रशान्त इति ।

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ १०३ ॥

अकल्मषमपेताधर्मादिदोषत्वान्निर्मलं अतएव शान्तरजसं शान्तं रजो रजोगुणकार्यभूतं मोहादि यस्य तं विलीनमनस्कं, योगाभ्यासेन क्रमशः सर्ववृत्तिविलये सति निरिंधनवह्निवत्स्वत एव मनो विलयं यातीति भावः । अत एव ब्रह्मभूतं ब्रह्मभावमापन्नमेनं जीवन्मुक्तं योगिनमुत्तमं सुखं निरतिशयं स्वरूपमुपैति । अत्रोपगमनं स्वस्वरूपेणावस्थितिरेव ॥ १०३ ॥

एतदर्थप्रतिपादकांश्छ्लोकांश्चतुरः पठति, यत्रेति ।

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ १०४ ॥

सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतींद्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ १०५ ॥

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥ १०६ ॥

तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ १०७ ॥

यत्र यस्मिन् काले योगसेवया योगाभ्यासेन वृत्तिनिरोधनान्निरुद्धं विषयेभ्योऽपकृष्टं निवारितप्रचारं चित्तमुपरमते निवातदीपवदचञ्चलं भवति; यत्र चात्मनैवमुपरतान्तःकरणेनात्मानं स्वयंप्रकाशमद्वितीयं परमात्मानं पश्यन्नुपलब्धं कुर्वन्नात्मनि तुष्यति स्वस्मिन्नेव तृप्तो भवति (गी. ६-२०) ॥ १०४ ॥

यत्र यस्मिन् काले आत्मनि स्थितोऽयं योगी आत्यन्तिकं निरतिशयमतीन्द्रियं बुद्धिग्राह्यमिन्द्रियनिरपेक्षयाऽन्तर्मुखया बुद्ध्या एव ग्राह्यं यत्सुखं तद्वेत्त्यनुभवति, किं च यत्र यस्मिन् काले आत्मनि स्थितोऽयं ज्ञानी तत्त्वतस्त्वस्वरूपान्न चलत्येव। (गी. ६. २१.) ॥ १०५ ॥

किं च यं स्वस्वरूपं लब्ध्वा ततोऽपरं लाभमधिकं न मन्यते "आत्मलाभान्न परं विद्यत" इत्यभियुक्तोक्तेः, यस्मिन् स्थितो गुरुणा विषासिसमुद्रपतनादिकृतेन दुःखेनापि न विचाल्यते नान्यथावृत्तिर्भवति, (गी. ६. २२.) ॥ १०६ ॥

तं दुःखसंयोगवियोगं सर्वदुःखसंबन्धपरित्यागं योगसंज्ञितं योग इति संज्ञा नाम यस्य तं विद्याद्विजानीयात्। स योगोऽनिर्विण्णचेतसा निर्वेदविरहितेन मनसा निश्चयेन विश्वासदार्ढ्येन योक्तव्योऽनुष्ठेयः। (गी. ६. २३.) ॥१०७॥

उक्तमर्थमुपसंहरति, युञ्जन्निति।

युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ १०८ ॥

विगतकल्मषोऽपेतदुरितो योगी ध्याननिष्ठ एवं यथोक्तक्रमेण सदा सततमात्मानं स्वस्वरूपे युञ्जन् संयोजयन् ब्रह्मसंस्पर्शं ब्रह्मसंबंध्यत्यन्तमुत्कृष्टं सुखमानन्दं सुखेनानायासेनाश्नुते। (गी. ६. २५.) ॥ १०८ ॥

माण्डूक्यगौडपादकारिका (३. ४१.) पठनेन शनैश्शनैरनायासेन योगाभ्यासः कर्तव्य इत्याह, उत्सेक इति।

उत्सेक उदधेर्यद्वत् कुशाग्रेणैकबिंदुना।
मनसो निग्रहस्तद्वद्भवेदपरिखेदतः ॥ १०९ ॥

कुशाग्रेणोद्धृतेनैकबिन्दुनैकैकेन बिन्दुनोदधेरुत्सेको बहिस्सेचनं यद्यत्क्रमशो भवेत्तद्वन्मनसो निग्रहोऽपरिखेदतोऽनायासेनाभ्यस्यमानः कालान्तरे भवेत्। अपरिखेदत इत्युक्तिः मातृवदस्मिन् कल्म इतिवद्व्यतिरेकदृष्टान्तत्वभ्रमनिरासार्था ॥ १०९ ॥

गीताशास्त्रप्रतिपादितोऽयमेवार्थो मैत्रायणीयशाखायामप्युपदिष्ट इत्याह, बृहद्रथस्येति ।

बृहद्रथस्य राजर्षेश्शाकायन्यो मुनिः सुखम् ।
प्राह मैत्राख्यशाखायां समाध्युक्तिपुरस्सरम् ॥ ११० ॥

शाकायन्यस्तन्नामको मुनिः "दुःखेष्वनुद्विग्नमनास्सुखेषु विगतस्पृहः वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यत" इति (गी. २. ५६.) लक्षणलक्षितो बृहद्रथस्य राजर्षेर्ब्रह्मसुखं समाध्युक्तिपुरस्सरं मैत्राख्यशाखायां प्राह ॥ ११० ॥

तत्प्रकारप्रतिपादकान् श्लोकान्पठति, यथेति ।

यथा निरिन्धनो वह्निः स्वयोनावुपशाम्यति ।
तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति ॥ १११ ॥

स्वयोनौ सूक्ष्मतेजसि वृत्तिक्षयान्निरोधसमाध्यभ्यासेन सर्ववृत्तीनां नाशात्स्वयोनौ सत्त्वमात्रे उपशाम्यति । (तै. ४. १.) स्पष्टमन्यत् ॥ १११ ॥

स्वयोनावुपशान्तेः फलमाह, स्वेति ।

स्वयोनावुपशान्तस्य मनसः सत्यकामिनः ।
इन्द्रियार्थविमूढस्यानृताः कर्मवशानुगाः ॥ ११२ ॥

सत्यकामिनः सत्यं कामयति इति सत्यकामः तत्कामनाशीलस्तस्य ब्रह्मावाप्त्युत्कंठस्यात एव स्वयोनावुपशान्तस्य वृत्तिक्षयादिन्द्रियार्थविमूढस्य इन्द्रियैरर्थ्यन्ते विषयीक्रियन्ते शब्दादय इन्द्रियार्थास्तेषु विमूढस्य विमुखस्य मनसो अनृतां असत्यभूता इन्द्रियार्थाः कर्मवशानुगाः प्रारब्धमनुसृत्य प्रसरन्ति । न तु तस्य भोगजनका इत्यर्थः ॥ ११२ ॥

भोगजनकत्वस्वभावानां भोगजनकत्वाभावः कथं स्यादित्याशङ्क्याह, चित्तमिति ।

चित्तमेव हि संसारस्तत्प्रयत्नेन शोधयेत् ।
यच्चित्तस्तन्मयो मर्त्यो गुह्यमेतत्सनातनम् ॥ ११३ ॥

चित्तमेव संसारस्तत्कल्पितत्वात्, अतः प्रयत्नेन तच्चित्तं शोधयेत् वृत्तिराहित्येनैकाग्रं कुर्यात्। ननु चित्तवृत्तिनिरोधे कथमात्मलाभः स्यादित्याशंक्याह, यदिति। मर्त्यो मरणशीलो यच्चित्तस्तन्मयो भवेत् तस्य चित्तं यत्र लग्नं भवति तद्रूपमाप्नोति। "यच्चित्तस्तेनैष प्राणमायाति" (प्रश्न. ३. १०.) "यथाकारी यथाचारी तथाभवति" (बृ. ४. ६. ५.) इत्यादिशास्त्रतः। जीवस्य बंधकं मानसं जगदित्युक्तं पूर्वमेव। (४. ३५.) ॥ ११३ ॥

चित्तनैर्मल्येनासंख्येयजन्मसमुपार्जितस्यापि कर्मणः संक्षयः तेनाक्षयसुखावाप्तिरित्याह, चित्तेति।

**चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम्।**
**प्रसन्नात्माऽऽत्मनि स्थित्वा सुखमक्षय्यमश्नुते ॥ ११४ ॥**

प्रसन्नात्मा चित्तस्य प्रसादेन तदुपलक्षितब्रह्मानुसंधानेन शुभाशुभं कर्म हन्ति नाशयति "तद्यथेषीका तूलमग्नौ प्रोतः प्रदूयेतैवं हाऽस्य सर्वे पाप्मानः प्रदूयन्ते" (छां.५. २४. ३.) इति श्रुतेः। आत्मनि स्वस्वरूपभूते परे ब्रह्मणि स्थित्वाऽक्षय्यं सुखमश्नुते ॥ ११४ ॥

अमुमेवार्थं द्रढयति, समेति।

**समासक्तं यथा चित्तं जन्तोर्विषयगोचरे।**
**यद्येवं ब्रह्मणि स्यात्तत्को न मुच्येत बंधनात् ॥ ११५ ॥**

जन्तोर्जननशीलस्य अविद्यावशाद्देहाभिमानयुक्तस्य जीवस्य चित्तं विषयगोचरे इन्द्रियप्रचारभूमौ यथा समासक्तं दृढं लग्नं तथैव ब्रह्मणि समासक्तं यदि स्यात् तत्तदा को बन्धनान्न मुच्येत? सर्वोऽपि मुच्येत एवेति भावः ॥ ११५ ॥

मनसः परस्परविरुद्धबंधमोक्षकारणत्वोपपादनाय मनसो द्वैविध्यमाह, मन इति।

**मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च।**
**अशुद्धं कामसंपर्काच्छुद्धं कामविवर्जितम् ॥ ११६ ॥**

स्पष्टोऽर्थः ॥ ११६ ॥

द्विधाभूतं मन एव बन्धमोक्षहेत्वित्याह, मन इति ।

मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥११७॥

पूर्वार्धो व्याख्यातपूर्वः । कदा बन्धस्य कारणं कदा मोक्षस्येत्यत आह, बन्धायेति, निर्विषयं मिथ्येति ज्ञाना।न्निर्गता विषया यस्मा त्तन्मुक्त्यै भवति। विषयासक्तं बन्धाय भवति ॥ ११७ ॥

"प्रसन्नात्माऽऽत्मनि स्थित्वा सुखमक्षय्यमश्नुत" इत्युक्तमर्थं श्रुत्या प्रपञ्चितमाह, समाधीति ।

समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत् ।
न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तःकरणेन गृह्यते ॥११८॥

समाधिनिर्धूतमलस्य चित्तवृत्तिनिरोधेनापास्तविषयासक्तेः आत्मनि प्रत्यग्रूपे निवेशितस्य अहंब्रह्मास्मीत्येतावन्मात्रज्ञानवतश्चेतसो यत्सुखं भवेत् तत् गिरा वर्णयितुं न शक्यते । किन्तु तदा तत्सुखानुभवसमये तत्स्वरूपभूतं सुखं स्वयं अन्तःकरणेनैव गृह्यते समाधावन्तःकरणस्य लयाभावात् ॥ ११८ ॥

ननु समाधेस्सातत्यदौर्लभ्यात्कथं तेन ब्रह्मानन्दनिश्चयः संपद्यत इत्याशंक्याह, यदिति ।

यद्यप्यसौ चिरं कालं समाधिर्दुर्लभो नृणाम् ।
तथापि क्षणिको ब्रह्मानंदं निश्चाययत्यसौ ॥ ११९ ॥

यद्यपि समाधावात्मनि सुखस्य सत्त्वेऽप्यसौ समाधिर्नृणां चिरं कालं दुर्लभः क्षणकालमात्रमेवानुवर्तते, तथाप्यसौ क्षणिकस्समाधिर्ब्रह्मानन्दं निश्चाययति । समाधावनुभूयमानवासनानन्दद्वारा ब्रह्मानन्दमनुमापयतीति भावः ॥ ११९ ॥

ब्रह्मानन्दस्य सातत्यविचारः ।

क्षणमात्रस्फुरितेन कदाप्यननुभूतपूर्वेण निजानन्दरूपेण हेतुना कथं ब्रह्मानन्दानुभूतिर्जायते हेतोरनिश्चितत्वादित्याशङ्कां परिहरति, श्रद्धालुरिति ।

श्रद्धालुर्व्यसनी योऽत्र निश्चिनोत्येव सर्वदा ।
निश्चिते तु सकृत्तस्मिन् विश्वसित्यन्यदाप्ययम् ॥ १२० ॥

यः श्रद्धालुर्व्यसनी तद्ज्ञानेऽभिनिवेशवानत्र समाधौ सर्वदा ब्रह्मानन्दं निश्चिनोत्येव । ननु भवतु निश्चयः, तथापि तस्य क्षणिकत्वात्तद्ज्ञानकाले ब्रह्मानन्दस्य सत्त्वे सिद्धेऽपि तत्सार्वदिकं न स्यादित्याशंक्याह, निश्चित इति । अस्मिन् ब्रह्मानन्दे सकृन्निश्चिते त्वयं सकृन्निश्चयवान् पुरुषोऽन्यदापि समाधीतरकालेऽपि तस्मिन् ब्रह्मानन्दस्य सत्वे विश्वसिति ॥ १२० ॥

एवं ब्रह्मानन्दसत्ताविषये जातविस्रम्भ उदासीनसमयेऽपि ब्रह्मानन्दवासनामपहाय मुख्यमानन्दं भावयतीत्याह, तादृगिति ।

तादृक्पुमानुदासीनकालेऽप्यानन्दवासनाम् ।
उपेक्ष्य मुख्यमानन्दं भावयत्येव तत्परः ॥ १२१ ॥

स्पष्टोऽर्थः ॥ १२१ ॥

अत्र दृष्टान्तमाह, परेति ।

परव्यसनिनी नारी व्यग्राऽपि गृहकर्मणि ।
तदेवास्वादयत्यन्तः परसङ्गरसायनम् ॥ १२२ ॥

व्याख्यातपूर्वः (९. ९४.) ॥ १२२ ॥

दृष्टान्तं दार्ष्टान्तिके योजयति, एवमिति ।

एवं तत्त्वे परे शुद्धे धीरो विश्रान्तिमागतः ।
तदेवास्वादयत्यन्तर्बहिर्व्यवहरन्नपि ॥ १२३ ॥

स्पष्टोऽर्थः । धीरो वक्ष्यमाणलक्षणः ॥ १२३ ॥

किं नाम धीरत्वमित्यत आह, धीर इति ।

धीरत्वमक्षप्राबल्येऽप्यानंदास्वादवाञ्छया ।
तिरस्कृत्याखिलाक्षाणि तच्चिन्तायां प्रवर्तनम् ॥ १२४ ॥

अक्षप्राबल्येऽपि पुरुषाकर्षणे इन्द्रियाणां प्राबल्येऽप्यानन्दास्वादवाञ्छया

स्वस्वरूपसुखसन्धाने उत्कटेच्छयाऽखिलाक्षाणि तिरस्कृत्य तच्चिन्तायां तद्ब्रह्मसुखस्यानुसन्धानचिन्तायां प्रवर्तनं यदस्ति तद्धीरत्वमित्यर्थः ॥ १२४ ॥

अत्र विश्रमस्वरूपं विशदयति, भारेति ।

भारवाही शिरोभारं मुक्त्वाऽऽस्ते विश्रमं गतः ।
संसारव्यापृतित्यागे तादृग्बुद्धिस्तु विश्रमः ॥ १२५ ॥

स्पष्टः पूर्वार्धः । संसारव्यापृतित्यागे संसारव्यापारविरामे । तादृग्बुद्धिस्संसारव्यापारभारो मम श्रमस्य कारणं, स च मया त्यक्त इति या बुद्धिस्सैव विश्रमः । स्पष्टोऽर्थः ॥ १२५ ॥

जाग्रति ब्रह्मानन्दावाप्तिविचारः ।

विश्रान्तिप्राप्तेः फलमाह, विश्रान्तिमिति ।

विश्रान्तिं परमां प्राप्तस्त्वौदासीन्ये यथा तथा ।
सुखदुःखदशायां च तदानन्दैकतत्परः ॥ १२६ ॥

परमामुत्कृष्टां विश्रान्तिं प्राप्तः पुरुष औदासीन्ये यथा मुख्यमानन्दं भावयति तथा सुखदुःखदशायां जाग्रति च तदानन्दैकतत्परो ब्रह्मानन्दस्वरूपभावनापरो भवति ॥ १२६ ॥

नन्विष्टप्राप्तिहेतोर्दुःखस्यानुसन्धानाभिलाषा मा स्यात् । कथमनुदिनमर्थ्यमानविषयसुखावाप्तिहेतौ विमुखता स्यादित्यत आह, अग्नीति ।

अग्निप्रवेशहेतौ धीश्शृंगारे यादृशी तथा ।
धीरस्योदेति विषयेऽनुसन्धानविरोधिनि ॥ १२७ ॥

भर्तुर्मरणे तत्पत्न्याः अग्निप्रवेशहेतौ धीरग्निप्रवेशे दृढं बद्धा इच्छा शृंगारेऽलंकारादौ यादृशी वैरस्यभावसहिता यथा स्यात्तथैवास्य ब्रह्मानंदस्यानुसंधानविरोधिनि विषये धीर्वैरस्ये नोदेति ॥ १२७ ॥

ननु ब्रह्मानन्दानुसन्धानविरोधिनि विषये सुखेऽस्य धीर्माभूत् । तदविरोधिनि भोजनादिजन्यसुखे सा कुतो न स्यादित्याशंक्याह, अविरोधीति ।

अविरोधिसुखे बुद्धिः स्वानन्दे च गमागमौ ।
कुर्वन्त्यास्ते क्रमादेषा काकाक्षिवदितस्ततः ॥ १२८ ॥

स्वस्वरूपानुसन्धानस्याविरोधिसुखे विरोधाभाववति अप्रयत्नसाध्यत्वेन बहिर्मुखत्वाहेतौ सुखे स्वानन्दे च बुद्धिरितस्ततः काकाक्षिवद्गमागमौ कुर्वन्ती आस्ते। स्वस्वरूपानन्दस्य सात्विकसुखानन्दस्याविरोधित्वं राजसतामससुखस्य विरोधित्वं चात्राभिहितं भवति ॥ १२८ ॥

दृष्टान्तं विवृणोति एकेति ।

एकैव दृष्टिः काकस्य वामदक्षिणनेत्रयोः ।
यात्यायात्येवमानन्दद्वये तत्त्वविदो मतिः ॥ १२९ ॥

स्पष्टः पूर्वार्धः । प्रकृते योजयति, एवमिति । एवमानन्दद्वयेऽपि स्वानन्दे तदविरोधिनि भोजनाद्यानन्दे च तत्त्वविदो मतिर्यात्यायात्येव । गमनागमने करोति ॥ १२९ ॥

दार्ष्टान्तिकमेव स्पष्टयति, भुंजान इति ।

भुंजानो विषयानंदं ब्रह्मानंदं च तत्त्ववित् ।
द्विभाषाभिज्ञवद्विद्यादुभौ लौकिकवैदिकौ ॥ १३० ॥

लौकिकवैदिकौ लौकिकः स्वानन्दाविरोधी विषयानन्दः, वैदिक औपनिषदो ब्रह्मानन्दस्तावुभौ भुंजानोऽनुसंदधानस्तत्त्वविद्द्विभाषाभिज्ञवदुभावानन्दौ विद्यादवगच्छेत् ॥ १३० ॥

ननु दुःखानुभवाभिलाषाभावेऽप्यनिवार्यतया तदनुभवसमये उद्वेगो जायेतेत्युद्वेगसमये कथं स्वस्वरूपानन्दोऽनुभूयते? तदनुभवप्रतिबन्धकस्योद्वेगस्य तदानीं सत्त्वादित्याशंक्य तदुद्वेगो न जायत इत्याह, दुःखेति ।

दुःखप्राप्तौ न चोद्वेगो यथापूर्वं यतो द्विदृक् ।
गंगामग्नार्धकायस्य पुंसश्शीतोष्णधीर्यथा ॥ १३१ ॥

तत्त्वविद उपभोगेनैव क्षयशीलस्य दुःखस्य प्राप्तौ मनस उद्वेगो यथापूर्वं तत्त्वज्ञानानुदयदशायामिव न भवति। तत्र हेतुमाह, यतो द्विदृगिति। लौकिकवैदिकोभयदर्शित्वादित्यर्थः। युगपत्परस्परविरुद्धोभयदर्शित्वं दृष्टान्तेन द्रढयति, गंगेति। यथा नदीस्नानसमये गंगामग्नार्धकायस्य गंगायां मग्नमर्धं कायस्य यस्य तस्य पुंसः शीतोष्णधीरधःकाये शीतस्योर्ध्वकाये उष्णस्य च धीर्यथा जायते तथैव विरुद्धोभयदर्शित्वमस्येति भावः ॥ १३१ ॥

स्वप्नेऽपि ब्रह्मानन्दावाप्तिकथनम्।

एवं जाग्रति तत्त्वविदो ब्रह्मसुखानुसन्धानस्य साध्यतामनूद्य स्वप्नेऽपि तां प्रदर्शयति, इत्थमिति।

**इत्थं जागरणे तत्त्वविदो ब्रह्मसुखं सदा।**
**भाति तद्वासनाजन्ये स्वप्ने तद्भासते तथा ॥ १३२ ॥**

तत् ब्रह्मसुखम्। स्पष्टमन्यत् ॥ १३२ ॥

समाहितस्य तत्त्वविदो जाग्रदनुभूतानन्दवासनाजन्ये स्वप्नेऽप्यविद्यावासनाजन्यत्वात्सुखदुःखानुभवोऽप्यस्तीत्याह, अविद्येति।

**अविद्यावासनाप्यस्तीत्यतस्तद्वासनोत्थिते।**
**स्वप्ने मूर्खवदेवैष सुखं दुःखं च वीक्षते ॥ १३३ ॥**

सुलभा पद्योजना। स्वप्नस्य जाग्रदनुभूतानन्दवासनाया इव, अविद्यावासनाया अपि कारणत्वात् तत्रोभयवासनायाः सत्वात् सुखं दुःखं चानुभूयेते इति भावः ॥ १३३ ॥

ग्रंथसंदर्भमुपसंहरति, ब्रह्मेति।

**ब्रह्मानन्दाभिधे ग्रंथे ब्रह्मानन्दप्रकाशकम्।**
**योगिप्रत्यक्षमध्याये प्रथमेऽस्मिन्नुदीरितम् ॥ १३४ ॥**

ब्रह्मानन्दाभिधे ग्रंथेऽस्मिन् प्रथमेऽध्याये ब्रह्मानन्दप्रकाशकं सुषुप्त्यवस्थायां, जाग्रत्स्वप्नयोरौदासीन्यकाले समाध्यवस्थायां सुखदुःकाले च ब्रह्मानन्दस्य

प्रकाशकं योगिप्रत्यक्षं योगिनामनुभवरूपमुदीरितम् । योगेन प्रत्यक्षीक्रियत इत्य-ध्यायस्य नामाऽपि ततो गृहीतम् ॥ १३४ ॥

इति
श्रीमत्परमहंसपरिव्राजकाचार्यशृंगेरीश्रीविरूपाक्षश्रीविद्याशङ्करपदमावेशप्रकाशित
जगद्गुरु श्रीकल्याणानन्दभारतीमान्ताचार्यात्यन्तप्रियान्तेवासिनात्रि
गोत्रसमुद्भूतेन **लिङ्गनसोमयाजिना** विरचितेयं पञ्चदश्यां
ब्रह्मानंदे योगानंदाख्यप्रकरणस्य कल्याणपीयूषव्याख्या समाप्ता ॥
इति ब्रह्मानंदे योगानंदाख्यप्रकरणम् ।

अथ

# कल्याणपीयूषव्याख्यासमेता पंचदशी

## ब्रह्मानन्दे - आत्मानन्दप्रकरणम् ॥१२॥

एकादशप्रकरणे योगिनो निजानन्दमावेदितम् । तेन तदन्यस्य गत्यभावः सूचितः । तस्यापि तां बोधयितुकामः प्रश्नमुखेनेदं प्रकरणमारभते, नन्विति ।

मन्दप्रज्ञ आत्मानन्देन बोध्यः ।

**नन्वेवं वासनानन्दाद्ब्रह्मानन्दादपीतरम् ।**
**वेत्तु योगी निजानन्दं मूढस्यात्रास्ति का गतिः?॥ १ ॥**

नन्विति प्रश्नार्थे । एवं पूर्वप्रकरणोक्तरीत्या ब्रह्मानन्दात् सुषुप्तावनुभूयमानात् वासनानन्दादपि विषयैर्विनौदासीन्येऽनुभूयमानादानन्दात् इतरं भिन्नं निजानन्दं सत्यपि द्वैते तदनुल्लिख्यानुभूयमानं योगी समाधिनिष्ठागरिष्ठो वेत्तु । अत्र ब्रह्मानन्दानुभवविषये मूढस्य योगविहीनस्य का गतिरस्तीति तां बोधयति॥१॥

अतिमूढस्य तस्य विद्याधिकार एव नास्तीति प्रतिवदति, धर्मेति ।

**धर्माधर्मवशादेष जायतां म्रियतामपि ।**
**पुनःपुनर्देहलक्षैः किं नो दाक्षिण्यतो वद ॥ २ ॥**

एष मूढः अतीतानेकजन्मसमासादितात् धर्माधर्मवशात् पुण्यपापफलपरिपाकवशात् देहलक्षैः असंख्याकैर्जन्मभिः पुनःपुनः अनवरतं जायतां म्रियताम् । "मृत्योः स मृत्युमाप्नोती"ति (कठ.२.४.१०.) श्रुतेः । तस्मिन् विषये दाक्षिण्यतः अनुकूलभावेन नो अस्माकं किं वद? न किमपि प्रयोजनमित्यर्थः । नास्ति तस्यान्या गतिरिति भावः ॥२॥

तस्यापि काचिद्गतिः कल्पनीयेति भृशं प्रार्थयत्यन्तेवासीत्याह, अस्तीति ।

**अस्ति वोऽनुजिघृक्षुत्वाद्दाक्षिण्येन प्रयोजनम् ।**
**तर्हि ब्रूहि स मूढः किं जिज्ञासुर्वा पराङ्मुखः ॥ ३ ॥**

मूढं प्रति वो युष्माकमनुजिघृक्षुत्वात् अनुगृहीतुमिच्छावत्त्वात् भवतां दाक्षिण्येन प्रयोजनमस्त्येव । एवं प्रार्थितो मूढोद्धरणमार्गविवक्षया पृच्छति, तर्हीति । स मूढः जिज्ञासुः किं तत्त्वं ज्ञातुमिच्छुर्वा उत पराङ्मुखः तत्त्वविमुखो वा? ब्रूहि ॥ ३ ॥

मूढानुजिघृक्षोः किमर्थमयं विकल्प इत्याशंक्य उपदेशस्याधिकार्यनुरूपत्वात् उपास्तिकर्मादीनां मध्येऽन्यतममार्गविनिश्चयार्थमित्याह, उपास्तिमिति ।

**उपास्तिं कर्म वा ब्रूयाद्विमुखाय यथोचितम् ।**
**मंदप्रज्ञं तु जिज्ञासुमात्मानन्देन बोधयेत् ॥ ४ ॥**

गुरुसत्तमः शिष्यस्य सामर्थ्यं विज्ञाय ब्रह्मजिज्ञासां प्रति विमुखाय यथोचितं उचितमार्गमनतिक्रम्य ब्रह्मलोकादिसुखप्राप्तये ध्यानदीपोक्तनिर्गुणाहंग्रहाद्युपास्तिं स्वर्गकामाय कर्म च ब्रूयात् । रोगनिदानानुरूपो ह्यौषधोपचारः । जिज्ञासुं तत्त्वजिज्ञासावंतं मन्दप्रज्ञं तथापि आत्मानन्देन बोधयेत् । अनात्मवित्त्वनिमित्तकशोकस्य पारं तारयत्विति प्रार्थ्यमानस्य नारदस्य "यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामी" (छा. ७. १. १.) त्यादिना सनत्कुमारेण बोधनमार्गदर्शनात्; कर्मोपासनयोर्ब्रह्मज्ञानोपकारकत्वमनेन सूचितम् । उपास्तयोऽत्र एवात्र ब्रह्मशास्त्रेऽपि चिन्तिता (७–१०५) इत्यन्यत्रोक्तम् ॥ ४ ॥

जिज्ञासोर्मन्दप्रज्ञस्य आत्मानन्दबोधनाप्रकारं याज्ञवल्क्येनोपदिष्टमवतारयति, बोधयामासेति ।

**बोधयामास मैत्रेयीं याज्ञवल्क्यो निजप्रियाम् ।**
**न वा अरे! पत्युरर्थे पतिः प्रिय इतीरयन् ॥ ५ ॥**

याज्ञवल्क्यो निजप्रियां मैत्रेयीं "न वा अरे! पत्युरर्थे पतिः प्रिय" इतीर-

यन् बोधयामास "न वा अरे! पत्युः कामाय पतिः प्रियो भवती"ति श्रुतिः (बृ. २.४.५. – ४.५. ६.)। अरे इति प्रेमपुरस्सरं प्रियां प्रति संबोधयति। अरे मैत्रेयि पत्युः कामाय! संतोषणाय पतिः पत्न्याः प्रियो न भवति किंत्वात्मनस्तु कामायैवेति श्रुतेस्तात्पर्यम् ॥ ५॥

सर्वमात्मार्थं प्रियं भवति।

"इयमात्मा परानन्दः परप्रेमास्पदं यतः" (१. ८.) इत्युक्तत्वात् परप्रेमास्पदत्वहेतुनाऽत्मनः परानन्दतां सिसाधयिषुरादौ परप्रेमास्पदत्वहेतुप्रदर्शकस्य "आत्मनस्तु कामाय सर्वं प्रियं भवती" (बृ. ४.५. ६.) ति श्रुत्युदाहृतवाक्यस्य तात्पर्यमर्थतः पठति, पतिरिति।

पतिर्जाया पुत्रवित्ते पशुब्राह्मणबाहुजाः।
लोका देवा वेदभूते सर्वं चात्मार्थतः प्रियम् ॥ ६॥

स्पष्टोऽर्थः ॥ ६॥

आत्मनस्तु कामायेति श्रुत्यर्थविचारणा।

तत्रादौ पतिपत्नीपुत्रदृष्टान्तानि चतुर्भिर्विशदयति, पत्याविति।

पत्याविच्छा यदा पत्न्यास्तदा प्रीतिं करोति सा।
क्षुदनुष्ठानरोगाद्यैस्तदा नेच्छति तत्पतिः ॥ ७॥

न पत्युरर्थे सा प्रीतिः स्वार्थे एव करोति ताम्।
पतिश्चात्मन एवार्थे न जायार्थे कदाचन ॥ ८॥

अन्योन्यप्रेरणेऽप्येवं स्वेच्छयैव प्रवर्तनम् ॥ ९॥

श्मश्रुकण्टकवेधेन बाले रुदति तत्पिता।
चुम्बत्येव न सा प्रीतिर्बालार्थे स्वार्थ एव सा ॥ १०॥

स्पष्टोऽर्थः ॥ ७–१०॥

पतिजायादिचेतनेषु क्रियमाणायाः प्रीतेः कतरस्मै प्रयोजनायेति संदेहास्पदत्वान्निरुक्तश्रुतेरवशिष्टवाक्यार्थपठनपूर्वकं रत्नादिजडवस्तूदाहरणेन प्रीतिकर्तुः स्वार्थतां नवभिर्द्रढयति, निरिच्छमिति ।

निरिच्छमपि रत्नादिवित्तं यत्नेन पालयन् ।
प्रीतिं करोति स स्वार्थं वित्तार्थत्वं न शंकितम् ॥ ११ ॥

अनिच्छति बलीवर्दे विवाहयिषते बलात् ।
प्रीतिः सा वणिगर्थैव बलीवर्दार्थता कुतः ॥ १२ ॥

ब्राह्मण्यं मेऽस्ति पूज्योऽहमिति तुष्यति पूजया ।
अचेतनाया जातेर्नो संतुष्टिः पुंस एव सा ॥ १३ ॥

क्षत्रियोऽहं तेन राज्यं करोमीत्यत्र राजता ।
न जातेर्वैश्यजात्यादौ योजनायेदमीरितम् ॥ १४ ॥

स्वर्गलोकब्रह्मलोकौ स्तां ममेत्यभिवांछनम् ।
लोकयोर्नोपकाराय स्वभोगायैव केवलम् ॥ १५ ॥

ईशविष्ण्वादयो देवा पूज्यन्ते पापनष्टये ।
न तन्निष्पापदेवार्थं तत्तु स्वार्थं प्रयुज्यते ॥ १६ ॥

ऋगादयो ह्यधीयन्ते दुर्ब्राह्मण्यानवाप्तये ।
न तत्प्रसक्तं वेदेषु मनुष्येषु प्रसज्यते ॥ १७ ॥

भूम्यादिपञ्चभूतानि स्थानतृट्पाकशोषणैः ।
हेतुभिश्चावकाशेन वांछन्त्येषां न हेतवः ॥ १८ ॥

स्वामिभृत्यादिकं सर्वं स्वोपकाराय वांछति ।
तत्तत्कृतोपकारस्तु तस्य तस्य न विद्यते ॥ १९ ॥

विवाहयिषते वाहयितुं कामयते । निष्पापदेवार्थं अपगतसर्वपाप्मनां देवानां तोषणाय । दुर्ब्राह्मण्यानवाप्तये दुर्ब्राह्मणो व्रात्यः; तस्य भावः तत्त्वं । व्रात्यत्वावाप्ति-निवारणार्थम् । स्थानप्रदानदाहोपशमनान्नपचनार्द्रशोषणावकाशदाननिमित्तैः भूम्या-दिपञ्चभूतानि मनुष्यैरपेक्ष्यन्ते । तत्तत्कृतोपकारः स्वामिना भृत्याय वेतनप्रदानं, भृत्यकृतस्वामिसेवा च स्पष्टमन्यत्सर्वम् ॥ ११–१९ ॥

एवमनेकनिदर्शनप्रदर्शने प्रयोजनमाह, सर्वेति ।

**सर्वव्यवहृतिष्वेवमनुसंधातुमीदृशम् ।**
**उदाहरणबाहुल्यं तेन स्वां वासयेन्मतिम् ॥ २० ॥**

स्वाभीष्टसंपादनपरासु सर्वव्यवहृतिषु एवं "न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति । आत्मनस्तु कामाय सर्वं प्रियं भवती" (बृ. ४. ५. ६.) त्यनु-संधातुं ईदृशं चेतनाचेतननिरिच्छादीनां सर्वजगदन्तःपातिनामुदाहरणबाहुल्यं प्रदर्शितम् । तेन स्वां मतिं वासयेत् । सर्वं स्वस्यैव शेषत्वेन विज्ञाय स्वस्यैव प्रियतमत्वानुसंधानवर्ती कुर्यात् ॥ २० ॥

प्रीतिस्वरूपविचारः ।

एवमभिहितमात्मनः प्रियतमत्वमयुक्तम् । आत्मनः प्रीतेर्निरूपणाशक्य-त्वात्, इत्याशयेन प्रीतिं विकल्पते, अथेति ।

**अथ केयं भवेत्प्रीतिः श्रूयते या निजात्मनि ।**
**रागो वध्वादिविषये श्रद्धा यागादिकर्मणि ।**
**भक्तिः स्याद्गुरुदेवादाविच्छा त्वप्राप्तवस्तुनि ॥ २१ ॥**

निजात्मनि या प्रीतिः श्रूयते सेयं प्रीतिरथ का भवेत् । अथेति प्रश्नार्थे । सा प्रीतिः रागश्चेत् स वध्वादिविषय एव स्यात्; श्रद्धा चेत् यागादिकर्मण्येव स्यात्; भक्तिश्चेत् गुरुदेवादावेव स्यात्; इच्छा चेत् अप्राप्तवस्तुनि स्यात्; नेतरेषु । रागाद्यतिरिक्तायाः प्रीतेर्लोकेऽननुभूयमानत्वात्त्वया विवक्षिता प्रीतिर्दुर्नि-रूपेति भावः ॥ २१ ॥

एवंरूपामाशंकां पक्षान्तरमाश्रित्य समाधत्ते,

तर्ह्यस्तु सात्विकी वृत्तिः सुखमात्रानुवर्तिनी ।
प्राप्ते नष्टेऽपि सद्भावादिच्छातो व्यतिरिच्यते ॥ २२ ॥

तर्हि भक्तिश्रद्धारागेच्छारूपाणां प्रीतीनां लोके प्रसिद्धानां प्रकृतेऽसंभवेऽपि तद्विलक्षणा काचित्प्रीतिर्विवक्षणीया इत्याह, अस्त्विति । सा सुखमात्रानुवर्तिनी सुखमेव सुखमात्रं । तदितरव्युदासार्थो मात्रशब्दः । सुखमेवानुसृत्य वर्तत इति तथाभूता सुखैकविषयिकेत्यर्थः । सात्विकी वृत्तिः सत्वगुणात्मिका चित्तवृत्तिः प्रीतिरित्युच्यते । सुखमात्रानुवर्तित्वे सति चित्तस्य सात्विकवृत्तित्वं प्रीतेर्लक्षणमिति संपन्नम् । इच्छातस्तद्वैलक्षण्यमाह, प्राप्त इति । सुखादौ प्राप्ते लब्धे नष्टेऽपि आत्मविषये अस्याः प्रीतेः सद्भावात् विद्यमानत्वात् अप्राप्तसुखादिवस्तुविषयकेच्छातो व्यतिरिच्यते भिद्यते ॥ २२ ॥

नन्वन्नपानादौ सुखसाधनत्वाद्यथा तत्र प्रीतिः तथैवात्मन्यपि प्रेमदर्शनात्तस्य सुखसाधनत्वमेवास्त्विति शंकते, सुखेति ।

सुखसाधनतोपाधेरन्नपानादयः प्रियाः ॥ २३ ॥
आत्मानुकूल्यादन्नादि समश्चेत् .... .... ....

सुखसाधनतोपाधेः सुखसंपादने कारणभूतत्वादन्नपानादयोऽस्माकं प्रियाः । यथा भवन्ति तथैवात्मापि आनुकूल्यात् सुखसाधनेऽनुकूलभूतत्वात् अन्नादिसमश्चेत् आत्मनोप्यन्नादिवत्सुखसाधनत्वमिति चेत् ॥ २३ ॥

समाधत्ते, अमुनेति ।

... ... ... ... अमुनात्र कः ।
अनुकूलयितव्यः स्यान्नैकस्मिन् कर्मकर्तृता ॥ २४ ॥

अत्र अस्मिन् लोके अमुना सुखसाधनभूतेन आत्मना अन्यः कः अनुकूलयितव्यः प्रेमविषयतया कर्तव्यः स्यात् । न कोपीत्यर्थः । आत्मातिरिक्तस्य भोक्तुरभावात् । ननु मास्त्वन्योऽनुकूलयितव्यः; स्वस्य स्वयमेव स्यादित्याशंक्याह, नेति । एकस्मिन्नेव आत्मनि कर्मकर्तृता युगपत् क्रियाकर्तृत्वं तत्फलभोक्तृत्वं चेति

धर्मद्वयं न संभवति ॥ २४ ॥

किं चान्नपानादेरात्मति वैलक्षण्यं प्रदर्शयति सुख इति ।

सुखे वैषयिके प्रीतिमात्रमात्मा त्वतिप्रियः ।
सुखे व्यभिचरत्येषा नात्मनि व्यभिचारिणी ॥ २५ ॥

वैषयिके सुखे प्रीतिमात्रं सामान्यतः अल्पा प्रीतिः । आत्मा तु अतिप्रियः अत्यन्तं प्रियः निरतिशयप्रेमास्पदः । निरतिशयत्वे उपपत्तिमाह; एषा प्रीतिः वैषयिकसुखे व्यभिचरति, भक्तिश्रद्धारागवत् सुखान्तरं गच्छति । आत्मनि विद्यमाना एषा प्रीतिः न व्यभिचारिणी विषयान्तरं न गच्छति, अतोऽस्या निरतिशयत्वम् ॥ २५ ॥

अमुमेवार्थं स्पष्टयति, एकमिति ।

एकं त्यक्त्वाऽन्यदादत्ते सुखं वैषयिकं सदा ।
नाऽऽत्मा त्याज्यो न चाऽऽदेयस्तस्मिन् व्यभिचरेत्कथम् ॥ २६ ॥

वैषयिकं विषयजन्यं सुखं सदा एकं विषयं त्यक्त्वा अन्यद्वस्तु आदत्ते स्वीकरोति । किन्तु आत्मा न त्याज्यः न चाऽऽदेयः न ग्रहणयोग्यः एवं सति तस्मिन्नात्मनि कथं व्यभिचरेत् ॥ २६ ॥

नन्वात्मा परित्याज्यो वा परिग्राह्यो वा माऽस्तु । तृणवदुपेक्षितव्यो भवत्वित्याशंक्याह, हानेति ।

हानादानविहीनेऽस्मिन्नुपेक्षा चेत्तृणादिवत् ।
उपेक्षितुः स्वरूपत्वान्नोपेक्ष्यत्वं निजात्मनः ॥ २७ ॥

हानादानविहीने परित्यागपरिग्रहणविरहिते अस्मिन् आत्मनि तृणादिवदुपेक्षा उदासीनभावश्चेत् अस्य आत्मन उपेक्षितुः स्वरूपत्वात् निजात्मन उपेक्ष्यत्वं न संभवति ॥ २७ ॥

नन्वात्मनो हानविषयत्वमपि दृश्यत इत्याशंकते, रोगेति ।

रोगक्रोधाभिभूतानां मुमूर्षा वीक्ष्यते क्वचित् ।
ततो द्वेषाद्भवेत्त्याज्य आत्मेति यदि तन्न हि ॥ २८ ॥

सुलभा पदयोजना । "अहं मरिष्यामी"त्यादिरागादिप्रयुक्तोक्तौ आत्मत्यागो नोद्दिश्यते ॥ २८ ॥

तत्र कारणमाह, त्यक्तुमिति ।

त्यक्तुं योग्यस्य देहस्य नात्मता त्यक्तुरेव सा ।
न त्यक्तर्यस्ति स द्वेषस्त्याज्ये द्वेषे तु का क्षतिः ॥ २९॥

त्यक्तुं योग्यस्य परिहर्तव्यस्य देहस्य आत्मता आत्मत्वं न । किंतु सा आत्मता त्यक्तुरेव । स रोगक्रोधादिकृतो द्वेषः त्यक्तरि नास्ति । किंतु देहे । तस्यैव रोगपीडितत्वात् । "धिगिदं जन्म मरिष्यामी"ति वदति । रुगाविष्टो जनः त्याज्ये शरीरे द्वेषे सति आत्मनः का क्षतिः, न कापि । आत्मभावस्तु देहादन्यस्य जीवस्य न तु देहस्य । अतस्त्याज्ये शरीरे द्वेषे सति त्यक्तुर्जीवस्य न कापि क्षतिरिति भावः ॥ २९ ॥

आत्मनस्तु कामायेति श्रुत्यर्थो युक्त्यनुभवसिद्धः ।

आत्मनस्तु कामायेति श्रुतिप्रतिपादिता आत्मनि या निरतिशया प्रीतिस्तां युक्तितोऽपि समर्थयति, आत्मेति ।

आत्मार्थत्वेन सर्वस्य प्रीतेश्चात्मा ह्यतिप्रियः ।
सिद्धो यथा पुत्रमित्रात् पुत्रः प्रियतरस्तथा ॥ ३० ॥

सुलभा पदयोजना । पतिपुत्रवित्ताद्यशेषसुखसंपादकसमुदायस्यात्मार्थत्वेन आत्मनः प्रयोजनाय प्रीतेः प्रियत्वात् आत्मा अतिप्रियो हि ॥ ३० ॥

एवं श्रुतियुक्तिप्रतिपादितमर्थं स्वानुभवप्रदर्शनेन द्रढयति, मा इति ।

मा न भूवमहं किं तु भूयासं सर्वथेत्यसौ ।
आशीः सर्वस्य दृष्टेति प्रत्यक्षा प्रीतिरात्मनि ॥ ३१ ॥

पूर्वार्धस्तु १–८ श्लोकेषु व्याख्यातः । आशीरिच्छा । स्पष्टमन्यत् ॥ ३१ ॥

निरुक्तार्थनिगमनपूर्वकं मतान्तरदोषप्रदिदर्शयिषया तदवतारयति, इत्यादिभिरिति ।

इत्यादिभिस्त्रिभिः प्रीतौ सिद्धायामेवमात्मनि ।
पुत्रभार्यादिशेषत्वमात्मनः कैश्चिदीरितम् ॥ ३२ ॥

त्रिभिः श्रुतियुक्त्यनुभवरूपैः प्रमाणैः । कैश्चित् श्रुत्यादीनामर्थानभिज्ञैः पुत्रादिप्रयोजनायात्मेति कथ्यते । स्पष्टमन्यत् ॥ ३२ ॥

कथमेतदवगम्यत इत्यत आह, एतदिति ।

एतद्विवक्षया पुत्रे मुख्यात्मत्वं श्रुतीरितम् ।
आत्मा वै पुत्रनामेति तच्चोपनिषदि स्फुटम् ॥ ३३ ॥

स्पष्टोऽर्थः । "आत्मा वै पुत्रनामे"ति (कौषी. २–११) श्रुतिः ॥ ३३ ॥

तदभिधायकमुपनिषद्वाक्यमर्थतः पठति, स इति ।

सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते ।
अथास्येतर आत्माऽयं कृतकृत्यः प्रमीयते ॥ ३४ ॥

अस्य पितुः सोऽयमात्मा "पुरुषोह वायमादितो गर्भो भवती" (ऐ.२–१) त्यादिना गर्भत्वेनातिशयेन पालनीयत्वेन चोक्तः पुत्ररूपः आत्मा पुण्येभ्यः कर्मभ्यः पुण्यकर्मानुष्ठानाय प्रतिधीयते प्रतिनिधित्वेनावस्थाप्यते, पित्रेति शेषः । अथ प्रतिनिधित्वेन स्थापनानन्तरं अस्य पितुः इतरः पुत्रादन्यः अयं प्रत्यक्षेण परिदृश्यमान आत्मा जराग्रस्तः स्वयं कृतकृत्यस्सन् निर्वर्तितसर्वकार्यजातस्सन् प्रमीयते मृतो भवति । अनेन स्वेनैवाचरितव्यपुण्यकर्माचरणाय प्रतिनिधित्वेन स्थापनोक्त्या तस्य पुत्ररूपस्यात्मनो मुख्यत्वं स्वस्वरूपात्मनश्च जराग्रस्तत्वेन मरणोन्मुखत्वेन च कर्माद्यनुष्ठानानुपयोगितया गौणात्मत्वं चाभिहितमिति ध्येयम् ॥ ३४ ॥

उक्तार्थस्य दृढीकरणाय पुत्ररहितस्योत्तरगतिशून्यत्वबोधकं "नापुत्रस्य लोकोऽस्ती" ति वाक्यमर्थतः पठति, सत्यपीति ।

सत्यप्यात्मनि लोकोऽस्ति नापुत्रस्यात एव हि ।
अनुशिष्टं पुत्रमेव लोक्यमाहुर्मनीषिणः ॥ ३५ ॥

यतः पुत्रस्य मुख्यमात्मत्वं अत एव आत्मनि पितरि स्वस्मिन् सत्यपि अपुत्रस्य पितुः लोको नास्ति । हि पुराणप्रसिद्धम् । एवं पुत्राभावे लोकाभाव इति व्यतिरेकमुखेन पुत्रस्य मुख्यात्मत्वं प्रतिपाद्यान्वयमुखेन तत्प्रतिपादकं वाक्यमर्थतः पठति । अनुशिष्टमिति; मनीषिणः पंडिता अनुशिष्टं वक्ष्यमाणैः "त्वं ब्रह्म" (बृ. १.५.१७.) त्यादिभिर्मंत्रैः शिक्षितमेव पुत्रं लोक्यं लोकाय हितं परलोकसाधनं आहुः । अनेनानुशिष्टपुत्रस्य सत्त्वे परलोक इत्यन्वयो दर्शितः । एवमन्वयव्यतिरेकाभ्यां परलोकोपयोगितया पुत्रस्य मुख्यात्मत्वं सिद्धमिति भावः ॥ ३५ ॥

न केवलमामुष्मिकसुखसाधनं पुत्रः किंत्वैहिकामुष्मिकस्यापीत्याह, मनुष्येति ।

मनुष्यलोको जय्यः स्यात्पुत्रेणैवेतरेण नो ।
मुमूर्षुर्मंत्रयेत्पुत्रं त्वं ब्रह्मेत्यादिमंत्रकैः ॥ ३६ ॥

मनुष्यलोकः पुत्रेणैव जय्यः जेतुं शक्यः स्यात् इतरेण कर्मादिसाधनान्तरेण नो । अयमर्थः "सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा" इति श्रुत्या प्रतिपादितः । पूर्वश्लोकोक्तपुत्रानुशासनावसरमनुशासनरीतिं च दर्शयति मुमूर्षुरिति। मुमूर्षुः मरणोन्मुखः पुत्रं "त्वं ब्रह्म"त्यादि मंत्रकैः आदिशब्देन "त्वं यज्ञः" "त्वं लोकः" (बृ. १. ५. १७.) इति मंत्रौ गृह्येते । त्वं ब्रह्मेत्यादिमन्त्रकैः मंत्रयेत् अनुशिष्यात् । पुत्रस्यानुशासनं कुर्यादित्यर्थः । अनेन मरणावसर एवानुशासनावसरः मंत्रपठनमेवानुशासनरीतिरिति दर्शितम् ॥ ३६ ॥

निरुक्तार्थं निगमयति, इतीति ।

इत्यादिश्रुतयः प्राहुः पुत्रभार्यादिशेषताम् ।
लौकिका अपि पुत्रस्य प्राधान्यमनुमन्वते ॥ ३७ ॥

स्पष्टोऽर्थः ॥ ३७ ॥

लौकिकानुभवं प्रदर्शयति, स्वस्मिन्निति ।

**स्वस्मिन् मृतेऽपि पुत्रादिर्जीवेद्वित्तादिना यथा ।**
**तथैव यत्नं कुरुते मुख्याः पुत्रादयस्ततः ॥ ३८ ॥**

स्पष्टोऽर्थः । ततः पुत्रादयः पुत्रकलत्रादयो मुख्याः ॥ ३८ ॥

उक्तमंगीकृत्य समाधत्ते, बाढमिति ।

**बाढमेतावता नत्मा शेषो भवति कस्यचित् ।**

बाढं भवदुक्तरीत्या पुत्रादीनां प्राधान्यमस्तु । एतावता क्वचित्प्राधान्य-सिद्ध्या आत्मा कस्यचित् पुत्रादेः शेषो न भवति । तदपेक्षया अमुख्यो न भवति । ततस्तेषां मुख्यात्मत्वं न सिद्ध्यतीति भावः ।

गौणमुख्यमिथ्यात्मविचारः ।

तेषाममुख्यात्मत्वं विशदयितुमात्मनस्त्रैविध्यं दर्शयति, गौणेति ।

**गौणमिथ्यामुख्यभेदैरात्माऽयं भवति त्रिधा ॥ ३९ ॥**

स्पष्टोऽर्थः ॥ ३९ ॥

पुत्रादेर्गौणात्मत्वप्रदर्शनाय लोके गौणप्रयोगमुदाहरति, देवदत्त इति ।

**देवदत्तस्तु सिंहोऽयमित्यैक्यं गौणमेतयोः ।**
**भेदस्य भासमानत्वात्पुत्रादेरात्मता तथा ॥ ४० ॥**

अयं देवदत्तः सिंह इति प्रत्यक्षेण भिन्नतया प्रतीयमानयोर्गुणसाम्येन ऐक्यं गौणमेव गुणसाम्यजन्यमेव । कुतः ? एतयोर्भेदस्य भासमानत्वात् । तथा पुत्रादेरात्मता गौणात्मत्वमेव भवतीत्यर्थः ॥ ४० ॥

अथ मिथ्यात्मानं दर्शयति, भेद इति ।

**भेदोऽस्ति पंचकोशेषु साक्षिणो न तु भात्यसौ ।**
**मिथ्यात्मताऽतः कोशानां स्थाणोश्चौरात्मता यथा ॥ ४१ ॥**

पंचकोशेषु अन्नमयादिषु भेदः अस्ति। तथापि साक्षिणस्सकाशाद्विधमानोऽप्यसौ भेदः न भाति। अतः यथा स्थाणोः चोराद्भिन्नस्य चौरात्मता मिथ्या तथैव कोशानां मिथ्यात्मता ॥ ४१ ॥

अथ साक्षिणो मुख्यात्मत्वं विशदयति, नेति।

**न भाति भेदो नाप्यस्ति साक्षिणोऽप्रतियोगिनः।**
**सर्वांतरत्वात्तस्यैव मुख्यमात्मत्वमिष्यते ॥ ४२ ॥**

अप्रतियोगिनः प्रतियोगिरहितस्य साक्षिणः प्रत्यगात्मनः भेदो न भाति न प्रतीयते। अप्रतियोगिनस्तस्य नाप्यभेदोऽस्ति। साक्षिभिन्नस्य तु मिथ्यात्वात् मिथ्याभूतस्य प्रतियोगित्वासंभवेन साक्षिणः प्रतियोगी नास्तीत्यर्थः। ननु माऽस्तु भेदः। तथापि मुख्यत्वं कथमुच्यत इत्यत आह, सर्वेति। सर्वान्तरत्वात् सर्वान्तरत्वेन प्रतीयमानत्वात्तस्यैव साक्षिणो मुख्यमात्मत्वमिष्यते ॥ ४२ ॥

एवं साक्षिणो मुख्यात्मत्वं प्रतिपाद्य त्रिविधात्मनामपि मध्ये यद्यद्व्यवहारेषु यस्य यस्योपयोगस्तत्तद्व्यवहारेषु तस्य तस्य प्राधान्यमित्याह, सतीति।

**सत्येवं व्यवहारेषु येषु यस्यात्मतोचिता।**
**तेषु तस्यैव शेषित्वं सर्वस्यान्यस्य शेषता ॥ ४३ ॥**

एवमात्मनः येषु व्यवहारेषु पूर्वोक्तात्मनां मध्ये यस्य आत्मता प्रकरणोचितात्मता तेषु तेषु व्यवहारेषु तस्यैव शेषित्वं प्राधान्यं तद्व्यतिरिक्तस्यान्यस्य सर्वस्य शेषता अप्राधान्यं। एवं लोकव्यवहारेषु शेषशेषिभाव आपेक्षिक इति भावः ॥ ४३ ॥

गौणात्मनश्शेषित्वप्रयोजकव्यवहारं दर्शयति, मुमूर्षोरिति।

**मुमूर्षोर्गृहरक्षादौ गौणात्मैवोपयुज्यते।**
**न मुख्यात्मा न मिथ्यात्मा पुत्रः शेषी भवत्यतः ॥४४॥**

मुमूर्षोर्गृहरक्षादौ गौणात्मैव पुत्रकलत्रादिरेवोपयुज्यते। तत्र मुख्यात्मा साक्षी मिथ्यात्मा देहादिश्च नोपयुज्यते। अतः तत्रोपयोगानुसारात् पुत्रः शेषी

भवति । प्रधानस्संपद्यते ॥ ४४ ॥

तत्र दृष्टान्तमाह, अध्येतेति ।

अध्येता वह्निरित्यत्र सन्नप्यग्निर्न गृह्यते ।
अयोग्यत्वेन योग्यत्वाद्बटुरेवात्र गृह्यते ॥ ४५ ॥

"अयमध्येता वह्नि"रित्यत्र अग्निः सन्नपि तत्र विद्यमानोऽपि वेदाध्येतृत्वरूपेऽर्थेऽयोग्यत्वेन अध्ययनानुपयोगित्वान्न गृह्यते । बटुरेव योग्यत्वात् अग्निगतशुचित्वपावनत्वादिगुणविशिष्ट एव गृह्यते ॥ ४५ ॥

अथ मिथ्यात्मनो देहादेः प्राधान्यप्रयोजकव्यवहारं दर्शयति, कृश इति ।

कृशोऽहं पुष्टिमाप्स्यामीत्यादौ देहात्मतोचिता ।
न पुत्रं विनियुंक्तेऽत्र पुष्टिहेत्वन्नभक्षणे ॥ ४६ ॥

अहं कृशः पौष्टिकवस्तुसेवनेन पुष्टिमाप्स्यामीत्यादौ देहात्मता कार्श्यपुष्ट्यादियोग्यदेहादेरेव आत्मता उचिता । तत्रोपपत्तिमाह, नेति । अत्र निजकार्श्यप्रतीकारावसरे पुष्टिहेत्वन्नभक्षणे पुष्टेर्हेतुभूतस्यान्नस्य भक्षणे पुत्रं न विनियुंक्ते; तत्र देहादेरेव विनियोगान्मिथ्यात्मभूतस्य तस्यैव प्राधान्यमित्यर्थः ॥ ४६ ॥

एवमेव कर्त्रात्मनः प्राधान्यप्रयोजकव्यहारं दर्शयति तपसेति ।

तपसा स्वर्गमेष्यामीत्यादौ कर्त्रात्मतोचिता ।
अनपेक्ष्य वपुर्भोगं चरेत्कृच्छ्रादिकं ततः ॥ ४७ ॥

तपसा स्वर्गं एष्यामि संपादयामीत्यादौ कर्त्रात्मता अहं करोमीति कर्तृत्वाभिमानाविष्टः विज्ञानमयः कर्ता तस्यैव प्रधानात्मता उचिता । ततः अस्मिन् जन्मनि वपुर्भोगं वपुषोऽनुभवमनपेक्ष्य कृच्छ्रादिकं प्राजापत्यादिकृच्छ्रादिकं शरीरकं चरेत् आचरेत् ॥ ४७ ॥

अथ साक्षिणः प्राधान्यप्रयोजकव्यवहारं दर्शयति, मोक्ष्य इति ।

मोक्ष्येऽहमित्यत्र युक्तं चिदात्मत्वं तदा पुमान् ।

**तद्वेत्ति गुरुशास्त्राभ्यां न तु किंचिच्चिकीर्षति ॥ ४८ ॥**

अहं मोक्ष्ये संसारान्मुक्तो भविष्यामीत्यत्र चिदात्मत्वं चैतन्यस्वरूपस्य साक्षिणः प्रधानात्मत्वं युक्तम्। कुतः? तदा पुमान् मुमुक्षुः गुरुशास्त्राभ्यां परोक्षज्ञानमासाद्य निदिध्यासेन अहं ब्रह्मास्मीति तत् साक्षिणं वेत्ति अपरोक्षतया साक्षात्करोति। न तु किंचिदपि चिकीर्षति। अहंकर्तृत्वधिया व्यवहर्तुं नेच्छति ॥ ४८ ॥

तत्तदात्मनां तत्तद्व्यवहारे व्यवस्थितोऽधिकार इति सदृष्टान्तमाह, विप्रेति।

**विप्रक्षत्रादयो यद्वद्बृहस्पतिसवादिषु ।**
**व्यवस्थितास्तथा गौणमिथ्यामुख्या यथोचितम् ॥ ४९ ॥**

"विप्रक्षत्रादयः बृहस्पतिसवादिषु सोमादिसवनार्हाणां मध्ये विप्रः बृहस्पतिसवेन यजेते"ति, ब्राह्मणस्य बृहस्पतिसवेन, "राजा राजसूयेने"ति क्षत्रियस्य राजसूयेन, "वैश्यो वैश्यस्तोमेन यजेते"ति वैश्यस्य वैश्यस्तोमेन, यद्वत् यथाधिकारे व्यवस्थिताः तथा यस्मिन् प्रकरणे य उद्दिष्टः स एव तत्र प्रधानं आत्मा नान्य इति यथोचितं गौणमिथ्यामुख्याः आत्मानः तत्तद्व्यवहारौचित्यानुसारेण व्यवस्थिताः प्रधानतया ग्राह्या भवन्ति ॥ ४९ ॥

"बाढमेतावता नात्मा शेषो भवति कस्यचि"दिति निरुक्तार्थमेवैवंविचारणाफलत्वेन निगमयति, तत्रेति।

**तत्र तत्रोचिते प्रीतिरात्मन्येवातिशायिनी ।**
**अनात्मनि तु तच्छेषे प्रीतिरन्यत्र नोभयम् ॥ ५० ॥**

यस्मिन् व्यवहारे यो य आत्मा युक्तो भवति तत्र तत्र तस्मिन् तस्मिन् व्यवहारे उचिते उपयुक्ते। अतस्तत्र तत्र प्रधाने प्रीतिरस्ति। तेषु चात्मन्येव मुख्यात्मभूते साक्षिण्येव अतिशायिनी अतिशयवती निरतिशया प्रीतिर्मुख्यात्मभूते साक्षिण्येवेति भावः। तच्छेषे मुख्यात्मनः शेषभूते अनात्मनि मुख्यात्मव्यतिरिक्ते गौणात्मादौ प्रीतिः प्रीतिमात्रमेव। न तु निरतिशयेत्यर्थः। अन्यत्र मुख्यात्म-

तच्छेषाभ्यामन्यस्मिन्नुभयं निरतिशयं सामान्यं वा प्रेम नास्ति। मुख्यात्मन्यतिशयिता प्रीतिः; गौणात्मादौ तच्छेषभूते सामान्या, उभयतो भिन्ने सामान्याऽतिशयिता वा प्रीतिर्नास्तीति यावत् ॥ ५० ॥

ननु किं तदन्यद्वस्त्वित्यत आह, उपेक्ष्यमिति।

**उपेक्ष्यं द्वेष्यमित्यन्यद् द्वेधा मार्गतृणादिकम्।**
**उपेक्ष्यं व्याघ्रसर्पादि द्वेष्यमेव चतुर्विधम् ॥ ५१ ॥**

स्पष्टोऽर्थः ॥ ५१ ॥

चातुर्विध्यं प्रदर्शयति, आत्मेति।

**आत्मा शेष उपेक्ष्यं च द्वेष्यं चेति चतुर्ष्वपि।**
**न व्यक्तिनियमः किंतु तत्तत्कार्यात्तथा तथा ॥ ५२ ॥**

आत्मा मुख्यात्मा, तदन्याऽऽत्मा शेषः, उपेक्ष्यं, द्वेष्यं चेति चतुर्षु विधेषु अयमत्यन्तप्रियः अयं सामान्यतः प्रियः अयमुपेक्ष्यः अयं द्वेष्यः इत्यवधारणया व्यक्तिनियमो नास्ति। किंतु तत्तत्कार्यात् तस्माचस्मात्कार्यविशेषात् तथा तथा चतुर्विधेष्वन्यतमो भवतीत्यर्थः ॥ ५२ ॥

तत्तत्कार्यविशेषात्प्रियतमत्वादिसिद्धिरित्यर्थमेवोदाहरणेन विशदयति, स्यादिति।

**स्याद्व्याघ्रः संमुखो द्वेष्यो ह्युपेक्ष्यस्तु पराङ्मुखः।**
**लालनादनुकूलश्चेद्विनोदायेति शेषताम् ॥ ५३ ॥**

सुलभा पदयोजना। व्यक्तिनियमाभावेनैक एव व्याघ्रः संदर्भानुसारेण द्वेषोपेक्षाविनोदविषयो भवतीत्यर्थः ॥ ५३ ॥

व्यक्तीनां विविधधर्मांगीकारे नियमाभावे व्यवहारव्यवस्थैव माभूदित्याशंक्याह, व्यक्तीनामिति।

**व्यक्तीनां नियमो माभूल्लक्षणात्तु व्यवस्थितिः।**
**आनुकूल्यं प्रातिकूल्यं द्वयाभावश्च लक्षणम् ॥ ५४ ॥**

प्रेमौदासीन्यादिषु व्यक्तीनां नियमो माभूत्। तथापि व्यवहारस्य व्यवस्थितिः व्यवस्थालक्षणात् भवति। किं तल्लक्षणमित्याशंकायामाह, आनुकूल्यं शेषस्य, प्रातिकूल्यं द्वेष्यस्य, द्वयाभावश्च उदासीनस्य, लक्षणं भवति ॥ ५४ ॥

आत्मनो निरतिशयप्रेमास्पदत्वकथनम्।

उक्तिमर्थं संक्षिपति, आत्मेति।

**आत्मा प्रेयान् प्रियः शेषो द्वेषोपेक्षे तदन्ययोः।**
**इति व्यवस्थितो लोको याज्ञवल्क्यमतं च तत् ॥ ५५॥**

आत्मा प्रत्यगात्मा प्रेयान् निरतिशयप्रेमास्पदः शेषः तद्व्यतिरिक्तः गौणात्मादिः प्रियो भवति। तदन्ययोः व्याघ्रमार्गतृणाद्योः द्वेषोपेक्षे इति लोको व्यवस्थितः लोके व्यवस्था। तच्च याज्ञवल्क्यमतं। "आत्मनस्तु कामाय सर्वं प्रियं भवती"ति (बृ. ४–५), यथा प्रतिपादितं तथेति भावः ॥ ५५ ॥

एतदर्थप्रतिपादकं पुरुषविधब्राह्मणवाक्यमर्थतः पठति, अन्यत्रेति।

**अन्यत्रापि श्रुतिः प्राह पुत्राद्वित्तात्तथान्यतः।**
**सर्वस्मादान्तरं तत्त्वं तदेतत्प्रेय इष्यताम् ॥ ५६ ॥**

अन्यत्रापि "तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात् सर्वस्मादन्तरतरं यदयमात्मे"ति (बृ. १.४.८.) पुरुषविधब्राह्मणे पुत्रात् वित्ताच्चदान्यतः सर्वस्मात्तदेतदांतरं तत्त्वं प्रेय इतीष्यतामिति श्रुतिः प्राह। पुत्रवित्तादेः सर्वस्मात् प्रत्यगभिन्नपरमात्मनो निरतिशयप्रेमास्पदत्वं तत्र प्रतिपादितमित्यर्थः ॥ ५६ ॥

कोऽयमात्मा यः सर्वस्मात् प्रेयान् भवतीत्यत आह, श्रौत्येति।

**श्रौत्या विचारदृष्ट्यायं साक्ष्येवात्मा न चेतरः।**
**कोशान् पंच विविच्यान्तर्वस्तुदृष्टिर्विचारणा ॥ ५७ ॥**

श्रौत्या "अहं ब्रह्मासी" (बृ. १.४.१०.) त्यादिश्रुतिभिः प्रतिपाद्यतया विचारदृष्ट्या आलोच्यमाने सति अयं साक्ष्येवात्मा। इतरो नेति फलति। किं स्वरूपेयं विचारणेत्यत आह, कोशानिति। अन्नमयादीन् मिथ्याभूतान् पंच

कोशान् विविच्य अंतर्वस्तुदृष्टिः स्वयंप्रकाशं सर्वसाक्षिभूतं अन्तः हृत्पुंडरीके उपलभ्यमानं निर्गुणत्वात्किंचिदनिर्वाच्यं वस्तु तस्मिन् दृष्टिः विचारणेत्युच्यते ॥५७

निरुक्तान्तर्वस्तुदृष्टिप्रकारमाह, जागरेति ।

जागरस्वप्नसुप्तीनामागमापायभासनम् ।
यतो भवत्यसावात्मा स्वप्रकाशचिदात्मकः ॥ ५८ ॥

जागरस्वप्नसुप्तीनामवस्थानां आगमापायभासनं एकस्यागमेऽन्यस्यापाय इति क्रमेण भासनं यतो भवति असौ स्वप्रकाशचिदात्मक आत्मा । अन्योन्य-व्यावर्तकासु जाग्रत्स्वप्नसुषुप्तिष्वनुवृत्तं सच्चत्तदवस्थाः भासयति तदेव चिदात्मकं वस्तु साक्षीत्यर्थः ॥ ५८ ॥

साक्षीतरेषां तरतमभावेन शेषत्वमित्याह, शेषा इति ।

शेषाः प्राणादिवित्तान्ता आसन्नास्तारतम्यतः ।
प्रीतिस्तथा तारतम्यात्तेषु सर्वेषु वीक्ष्यते ॥ ५९ ॥

आत्मनः शेषाः प्राणादिवित्तान्ताः तारतम्यतः आत्मनः आसन्नाः सन्नि-हिताः सुखसाधनभूताः । तथैव तेषु सर्वेषु तारतम्यात्तथा प्रीतिर्वीक्ष्यते ॥ ५९ ॥

प्रीतितारतम्यात्प्राणादीनामासक्तितारतम्यमनुभवेन विशदयति, वित्तादिति ।

वित्तात्पुत्रः प्रियः पुत्रात्पिण्डः पिण्डात्तथेंद्रियम् ।
इंद्रियाच्च प्रियः प्राणः प्राणादात्मा प्रियः परः ॥ ६० ॥

स्पष्टोऽर्थः । पिण्डो देहः । वित्तपुत्रदेहेंद्रियप्राणात्मनां मध्ये पूर्वपूर्वस्मादुत्त-रोत्तरः सन्निहिततरः अत्यन्तसन्निकृष्टत्वात् प्रियतमश्चात्मा ॥ ६० ॥

एवमात्मनि निरतिशयप्रीतेरनुभवसिद्धावपि विद्वन्मूढयोर्विवादपरिजि-हीर्षया श्रुतिप्रदर्शितं विप्रतिपत्तिपूर्वकनिर्णयमाह, एवमिति ।

एवं स्थिते विवादोऽत्र प्रतिबुद्धविमूढयोः ।
श्रुत्योदाहारि तत्रात्मा प्रेयानित्येव निर्णयः ॥ ६१ ॥

स्पष्टोऽर्थः ॥ ६१ ॥

तं विवादं विशदयति, साक्षीति।

**साक्ष्येव दृश्यादन्यस्मात्प्रेयानित्याह तत्त्ववित्।**
**प्रेयान् पुत्रादिरेवेमं भोक्तुं साक्षीति मूढधीः ॥ ६२ ॥**

अन्यस्माद्दृश्यात् द्वैतात् साक्षी एव प्रत्यगात्मैव प्रेयानिति तत्त्ववित् ज्ञानी आह। पुत्रादिरेव पुत्रवित्तजायादय एव प्रेयांस इमं द्वैतप्रपंचं भोक्तुं साक्षी भवतीति मूढधीराह ॥ ६२ ॥

स मूढधीः जिज्ञासुः जिगीषुर्वा स्यादिति विकल्प्य तदनुरूपं समाधानप्रकारमाह, आत्मन इति।

**आत्मनोऽन्यं प्रियं ब्रूते शिष्यश्च प्रतिवाद्यपि।**
**तस्योत्तरं वचो बोधशापौ कुर्यात्तयोः क्रमात् ॥ ६३ ॥**

मूढधीः शिष्यः शासितुं योग्यः प्रतिवाद्यपि आत्मनः अन्यं व्यतिरिक्तं पुत्रादिरूपं प्रियं प्रेमविषयं ब्रूते। तयोः शिष्यप्रतिवादिनोः बोधशापौ क्रमात् तस्य उत्तरं वचः प्रतिवचनं कुर्यात्। जिज्ञासुं बोधेन समाहितं जिगीषुं शापेन पराभूतं च कुर्यात ॥ ६३ ॥

निरुक्तश्रुतेस्समनन्तरवाक्यार्थपठनेन बोधशापात्मकमुत्तरमेकवाक्येन वक्ति, प्रियमिति।

**प्रियं त्वां रोत्स्यतीत्येवमुत्तरं वक्ति तत्त्ववित्।**
**स्वोक्तप्रियस्य दुष्टत्वं शिष्यो वेत्ति विवेकतः ॥ ६४ ॥**

तत्त्ववित् शिष्यप्रतिवादिनावुभावपि प्रियं तवाभिमतं वित्तपुत्रादिकं त्वां रोत्स्यति रोदनं कारयिष्यति "स योन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात् प्रियं रोत्स्यती"त्येव (बृ. १.४.८.) मुत्तरं प्रतिवचनं वक्ति। शिष्यप्रतिवादिनोः प्रतिवचनरूपमेकं वाक्यं कथं ताभ्यां प्रतिगृहीतमित्याशंक्य यथा शिष्येणावबुद्धं तत्सार्धश्लोकचतुष्टयेन द्योतयति। स्वोक्तेति। स्वोक्तप्रियस्य स्वेनोक्तस्य पुत्रादि-

रूपस्य प्रियस्य प्रीतिविषयस्य दुष्टत्वं दुःखसाधनत्वं विवेकतो दोषविचारेण वेत्ति जानाति ॥ ६४॥

तत्र पुत्रे दोषविचारप्रकारं दर्शयति, अलभ्येति ।

अलभ्यमानस्तनयः पितरौ क्लेशयेच्चिरम् ।
लब्धोऽपि गर्भपातेन प्रसवेन च बाधते ॥ ६५ ॥

जातस्य ग्रहरोगादिः कुमारस्य च मूर्खता ।
उपनीतेऽप्यविद्यत्वमनुद्वाहश्च पंडिते ॥ ६६ ॥

पुनश्च परदारादि दारिद्र्यं च कुटुंबिनः ।
पित्रोर्दुःखस्य नास्त्यंतो धनी चेन्म्रियते तदा ॥ ६७ ॥

तनयः तनोति कुलमिति तनयः स्पष्टमन्यत् । एवं प्रेमास्पदत्वेनाभिहितेन पुत्रेण पित्रोः दुःखस्य अंतो नास्ति । अजातो जातोऽपि पुत्रोऽमितसंतापकारणमित्यर्थः ॥ ६७ ॥

एवं विविच्य जिज्ञासुरनात्मनि प्रीतिं परित्यज्यात्मन्येव तां करोतीत्याह, एवमिति ।

एवं विविच्य पुत्रादौ प्रीतिं त्यक्त्वा निजात्मनि ।
निश्चित्य परमां प्रीतिं वीक्षते तमहर्निशम् ॥ ६८ ॥

स्पष्टोऽर्थः ॥ ६८ ॥

प्रियं त्वां रोत्स्यतीत्युत्तरं प्रतिवादिने कथं शापायंते इत्याशंक्याह, आग्रहेति ।

आग्रहाद्ब्रह्मविद्द्वेषादपि पक्षममुंचतः ।
वादिनो नरकः प्रोक्तो दोषश्च बहुयोनिषु ॥ ६९ ॥

पुत्रादिः प्रेयानिति स्वपक्षसंरक्षणे आग्रहात् अभिनिवेशात् यद्वा ब्रह्मविद्द्वेषादपि ब्रह्म सत्यं जगन्मिथ्येति यो वेत्ति स ब्रह्मवित्तस्मिन् स्वमतविरोधित्वात्

द्वेषः तस्मादपि स्वस्य पक्षं अमुंचतोऽपरित्यजतः प्रतिवादिनः नरकः नरान् कायति आक्रंदयतीति नरकः दुःखपरंपरेत्यर्थः । क्रियाकारकसंकुलस्य द्वैतस्य फलभूतो बहुयोनिषु दोषश्च इष्टवियोगानिष्टप्राप्तिफलकजन्मरूपदोषश्च प्रोक्तः ॥ ६९ ॥

एकस्यैकस्य जिज्ञासुजिगीषोर्विवेकनरककारकत्वे उपपत्तिविवक्षया "ईश्वरो हि तथैव स्यात्" (बृ. १.४.८.) इति समनन्तरवाक्यार्थमाह, ब्रह्मेति ।

ब्रह्मविद्ब्रह्मरूपत्वादीश्वरस्तेन वर्णितम् ।
यद्यत्तत्तथैव स्यात्तच्छिष्यप्रतिवादिनोः ॥ ७० ॥

यस्मात् ब्रह्मवित् ब्रह्मरूपत्वात् "ब्रह्म वेद ब्रह्मैव भवती"ति (मुं. ३.२.९.) श्रुतेः स ईश्वरः शापानुग्रहसमर्थः । अतः तेन वर्णितं यद्यदिष्टमनिष्टं वा तत्तच्छिष्यप्रतिवादिनोः तथैव स्यात् ब्रह्मविदभिप्रायानुसारेण शिष्यस्येष्टं प्रतिवादिनोऽनिष्टं स्यादित्यर्थः ॥ ७० ॥

एतावत्पर्यन्तं व्यतिरेकमुखेनोपदिष्टार्थस्यान्वयमुखेन प्रतिपादकं "आत्मानमेव प्रियमुपासीत स य आत्मानमेव प्रियमुपास्ते सहास्य प्रियं प्रमायुकं भवती"ति (बृ. १.४.८.) समनन्तरश्रुतिवाक्यार्थं संक्षिपति, यस्त्विति ।

यस्तु साक्षिणमात्मानं सेवते प्रियमुत्तमम् ।
तस्य प्रेयानसावात्मा न नश्यति कदाचन ॥ ७१ ॥

यस्त्वनात्मप्रियवादिनो विलक्षणो विहायान्यत्प्रियं सर्वव्यवहारसाक्षिणं अत एव उत्तमं अत एव निरतिशयप्रेमास्पदं आत्मानं सेवते आत्मैव प्रियो नान्योऽस्तीति निश्चित्य चिन्तयति तस्य प्रेयान् आत्मा प्रतिवाद्यभिमतप्रियमिव न कदाचन नश्यति । अपि तु सर्वदाऽऽनन्दरूपोऽवभासत इति भावः ॥ ७१ ॥

आत्मनः परमानन्दरूपत्वकथनम् ।

एवमात्मनः परमप्रेमास्पदत्वमुपपाद्य तेन परमानन्दरूपत्वं साधयति, परेति ।

परप्रेमास्पदत्वेन परमानन्दरूपता

सुखवृद्धिः प्रीतिवृद्धौ सार्वभौमादिषु श्रुता ॥ ७२ ॥

आत्मनः परमानन्दरूपता कुतः ? परप्रेमास्पदत्वेन । अनेनात्मा परमानन्दरूपः निरतिशयप्रेमास्पदत्वादित्यनुप्रयोगो दर्शितः । यः परमानन्दरूपो न भवति स परप्रेमास्पदो न भवति यथा घटः, इति केवलव्यतिरेकदृष्टान्तो निरतिशयप्रेम्णि निरतिशयानन्द इति स्फोरयितुं प्रेमातिरेकसुखातिरेकं दृष्टान्तेन दर्शयति, सुखेनेति । सार्वभौमादिषु सार्वभौमादिहिरण्यगर्भान्तेषु पदविशेषेषु प्रीतिवृद्धौ सुखवृद्धिः "स एको मानुष आनन्द" (तै. ३.३.८.) इत्यादिवाक्यजातेन श्रुता । एतद्दृष्टान्तेन प्रीतेर्निरतिशयत्वे सत्यानंदस्यापि तथात्वमनुमेयमिति भावः ॥ ७२ ॥

ननु प्रत्यगात्मनः परमानन्दता नोपपद्यते । तथात्वे चैतन्यमिव सर्ववृत्तिष्वनुवर्तेतेत्याक्षिपति, चैतन्येति ।

चैतन्यवत्सुखं चास्य स्वभावश्चेच्चिदात्मनः ।
धीवृत्तिष्वनुवर्तेत सर्वास्वपि चितिर्यथा ॥ ७३ ॥

स्पष्टोऽर्थः ॥ ७३ ॥

दृष्टान्तेन पूर्वपक्षं परिहरति, मेति ।

मैवमुष्णप्रकाशात्मा दीपस्तस्य प्रभा गृहे ।
व्याप्नोति नोष्णता तद्वच्चितेरेवानुवर्तनम् ॥ ७४ ॥

एवं यत्र चैतन्यभानं तत्रानन्दस्यापि भानमिति नियमो मास्तु । दीपः उष्णप्रकाशात्मा औष्ण्यं प्रकाशश्चेत्युभयस्वभावकः; तथापि गृहे तस्य प्रभैव व्याप्नोति न तूष्णता । तद्वत् धीवृत्तिषु चितेरेवानुवर्तनमस्ति न त्वानन्दस्य ॥७४॥

ननु चिदानन्दयोरभेदाच्चिदभिव्यंजकधीवृत्तावानन्दस्याप्यभिव्यक्तिः स्यादित्याशंक्य नायं नियमोऽस्तीति दृष्टान्तमुखेनाह, गंधेति ।

गंधरूपरसस्पर्शेष्वपि सत्सु यथा पृथक् ।
एकाक्षेणैक एवार्थो गृह्यते नेतरस्तथा ॥ ७५ ॥

एकस्मिन्नेव वस्तुनि रसालादाविव गंधरूपरसस्पर्शेषु सत्स्वपि यथा

एकाक्षेण चक्षुरादिषु एकेन्द्रियेण एक एवार्थो रूपादिः पृथक् गृह्यते । इतरोऽर्थो न । चक्षू रूपमेव गृह्णाति न तु गंधादिकम् । तथा धीवृत्तौ चैतन्यमेवावभासते नानन्द इति भावः ॥ ७५ ॥

नन्वभिन्नयोश्चिदानन्दयोर्विषये विषमोऽयं दृष्टान्त इत्याशंक्याह, चिदिति।

चिदानन्दौ नैव भिन्नौ गंधाद्यास्तु विलक्षणाः ।
इति चेत्तदभेदोऽपि साक्षिण्यन्यत्र वा वद ॥ ७६ ॥

गंधाद्या विलक्षणाः भिन्नाः । अतस्तेषां पृथग्भिन्नाक्षविषयत्वं । न तथा वक्तव्यं चिदानन्दविषये । चिदानन्दौ न भिन्नाविति हेतोस्तयोर्न पृथग्विषयतासिद्धिरित्यर्थः । इति चेत् रूपरसादीनां समेपि विषयनैयत्ये भेद इति मतमाश्रित्यायं पूर्वपक्षः । उक्तवैषम्यपरिहारार्थं विकल्पयति । तदभेदः साक्षिणि वा अन्यत्र तदुपाधिभूतधीवृत्तिषु वेति वद ॥ ७६ ॥

समनियतानामभेद इति मतमाश्रित्य परिहरति, आद्येति ।

आद्ये गंधादयोऽप्येवमभिन्नाः पुष्पवर्तिनः ।
अक्षभेदेन तद्भेदे वृत्तिभेदात्तयोर्भिदा ॥ ७७ ॥

आद्ये चिदानन्दयोः साक्षिण्यभेदपक्षे पुष्पवर्तिनो गंधादय एवमेवाभिन्नाः। उपायान्तरेण एकं विहायापरस्य परिहर्तुमशक्यत्वात् द्वितीये औपाधिकभेदस्तूभयत्र सम इत्याह, अक्षेति । अक्षभेदेन गंधादेर्व्यंजकानां अक्षाणां भेदेन तद्भेदे तेषां गंधादीनां औपाधिके भेदेऽभ्युपगते तथैव राजससात्विकतामसादीनां वृत्तीनां भेदात्तयोश्चिदानन्दयोर्भिदा औपाधिकभेदोऽभ्युपगंतव्य इत्यर्थः ॥ ७७ ॥

चिदानन्दयोर्भेदः कल्पितः ।

बुद्धेः रजः सत्ववृत्तिभेदाच्चिदानन्दयोर्भेदः कल्प्यत इत्याह, सत्वेति ।

सत्ववृत्तौ चित्सुखैक्यं तद्वृत्तेर्निर्मलत्वतः ।
रजोवृत्तेस्तु मालिन्यात् सुखांशोऽत्र तिरस्कृतः ॥ ७८ ॥

बुद्धेः सत्ववृत्तौ चित्सुखैक्यं चितः सुखस्य चैक्यमुपलभ्यते । तद्वृत्तेः सत्ववृत्तेः निर्मलत्वतो शुद्धत्वात् । रजोवृत्तेस्तु मालिन्यात् अत्र सुखांशः तिरस्कृतः पिहितो भवति ॥ ७८ ॥

सुखांशस्य तिरस्कारे दृष्टान्तमाह, तिंत्रिणीति ।

**तिंत्रिणीफलमत्यम्लं लवणेन युतं यदा ।**
**तदाम्लस्य तिरस्कारादीषदम्लं यथा तथा ॥ ७९ ॥**

यथा अत्यम्लं तिंत्रिणीफलं लवणेन युतं भवति तथाम्लस्य तिरस्कारात्तिरोभूतत्वात् ईषदम्लं तिरस्कृताम्लं दृश्यते । तथाऽत्र तिरस्कृत इति पूर्वेणान्वयः ॥ ७९ ॥

एवं प्रियतमप्रियोपेक्ष्यद्वेष्यविचारेणात्मा परमानन्दरूप इति विवेके संजातेऽपि नायमपरोक्षज्ञानसाधनक्षमः, तस्य योगं विनाऽसंभवादिति गूढाभिसंधिं पूर्वपक्षमुखेनावतारयति, नन्विति ।

**ननु प्रियतमत्वेन परमानन्दतात्मनि ।**
**विवेक्तुं शक्यतामेवं विना योगेन किं भवेत् ॥ ८० ॥**

नन्वेवं प्रियतमप्रियोपेक्ष्यद्वेष्यविचारेण मुख्यगौणमिथ्याभेदविवेचनेन च प्रियतमत्वेनात्मनि परमानंदता विवेक्तुं शक्यताम् । तथापि योगेन विना किं भवेत् मुक्तिर्न सिध्यति । योगस्य मुक्तिसाधनत्वेनाभिहितत्वादित्यर्थः ॥ ८० ॥

ज्ञानयोगयोःफलादिसर्वसाम्यविचारः ।

यथा योगस्यापरोक्षज्ञानहेतुत्वं तथैव विवेकस्यापि तद्धेतुत्वमिति समाधत्ते, यदिति ।

**यद्योगेन तदेवेति वदामो ज्ञानसिद्धये ।**
**योगः प्रोक्तो विवेकेन ज्ञानं किं नोपजायते ॥ ८१ ॥**

यत् ज्ञानं पूर्वाध्याये वर्णितेन ध्यानयोगेन "इत्थं जागरणे तत्त्वविदो ब्रह्मसुखं सदा भाती" (११. १३२.) त्युक्तं तथैव विवेकेनापि भातीति वदामः ।

योगो ब्रह्मापरोक्षज्ञानसिद्धये प्रोक्तश्चेत् मुख्यगौणमिथ्यात्मविवेकद्वारा कोशपञ्चक-विवेचनेनापि ज्ञानं किं नो जायते। योग इव विवेकोऽपि ज्ञानहेतुरित्यर्थः ॥८१॥

तत्र प्रमाणमाह, यदिति।

यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते।
इति स्मृतं फलैकत्वं योगिनां च विवेकिनाम् ॥ ८२॥

ध्यानदीपे १३४श्लोके सम्यग्व्याख्यातोऽयं विषयः ॥ ८२॥

सांख्ययोगयोरेकफलत्वेऽप्यधिकारिभेदेन मार्गभेदोऽपि निर्दिष्ट इत्याह, असाध्येति।

असाध्यः कस्यचिद्योगः कस्यचित् ज्ञाननिश्चयः।
इत्थं विचार्य मार्गौ द्वौ जगाद परमेश्वरः ॥ ८३ ॥

स्पष्टोऽर्थः ॥ ८३ ॥

ननु विशेषायाससाध्यो योगः। तदभावात्सुसाध्यो विवेकः। इत्यायास-बाहुल्येन तत्रातिशयो यः कश्चन वाच्यः। इत्याशंक्य विवेकाद्योगस्यातिशयः किमपरोक्षज्ञानजनकत्वात् यद्वा रागद्वेषादिनिवर्तकत्वादाहोस्वित् द्वैतानुपलब्धि-कारणत्वादिति विकल्प्योत्तरयति, योग इति।

योगे कोऽतिशयस्तेऽत्र ज्ञानमुक्तं समं द्वयोः।
रागद्वेषाद्यभावश्च तुल्यो योगिविवेकिनोः ॥ ८४ ॥

विवेकादत्र योगे ते अतिशयः कः? न कोऽपि। अतिशयहेतुत्वेन विक-ल्पितेष्वाद्यं दूषयति, ज्ञानेति। विवेकयोगयोर्द्वयोः ज्ञानयोगेनेत्यादिनाऽपरोक्षज्ञान-लक्षणं फलं सममुक्तम्। द्वितीयं दूषयति, रागेति। योगिविवेकिनोः रागद्वेषाद्य-भावश्च तुल्यः समान एव ॥ ८४ ॥

ननु योगिन इव ज्ञानिनो रागद्वेषाद्यभावः कथं सिध्यतीत्याशंक्याह, नेति।

न प्रीतिर्विषयेष्वस्ति प्रेयानात्मेति जानतः।

कुतो रागः कुतो द्वेषः प्रातिकूल्यमपश्यतः ॥ ८५ ॥

आत्मा प्रेयान् निरतिशयप्रेमास्पद इति जानतो विवेकिनो विषयेषु प्रीतिरेव नास्ति । विषयेषु रागहेतोरानुकूल्यमपश्यतो रागः कुतः ? प्रातिकूल्यमपश्यतो द्वेषः कुतः ? अनुकूलवस्तुनि रागः प्रतिकूलवस्तुनि द्वेषश्च लोकसिद्धः । विवेकिनो विषयेष्वनुकूलत्वप्रतिकूलत्वयोरभावे तत्र रागद्वेषाभाव एवेति भावः॥८५॥

ननु विवेकिनो देहाद्यपकारिषु द्वेषो दृश्यत एवेत्याशंक्य विवेकियोगिनोः स समान एवेति परिहरति, देहेति ।

देहादेः प्रतिकूलेषु द्वेषस्तुल्यो द्वयोरपि ।
द्वेषं कुर्वन्नयोगी चेदविवेक्यपि तादृशः ॥ ८६ ॥

विवेकियोगिनोर्द्वयोरपि देहादेः प्रतिकूलेषु अनिष्टकारिषु सर्पादिषु द्वेषः तुल्यः समान एव । ननु तादृशेषु द्वेषं कुर्वन् योगी एव न भवतीत्युच्यते चेत् तादृशो द्वेषकर्ता अविवेकी अपि भवति ॥ ८६ ॥

ननु विवेकिनो द्वैतभानमस्ति । न तथा योगिन इतीदमेवातिशयकारणं योगस्येति तृतीये पक्षे किं व्यवहारदशायां विवेकिनो द्वैतभानमुतान्यत्रेति विकल्प्य प्रथमे उभयोस्तत्तुल्यतां दर्शयति, द्वैतस्येति ।

द्वैतस्य प्रतिभानं तु व्यवहारे द्वयोः समम् ।
समाधौ नेति चेत्तद्वन्नाद्वैतत्वविवेकिनः ॥ ८७ ॥

व्यवहारे विवेकियोगिनोर्द्वयोरपि द्वैतस्य प्रतिभानं दर्शनं समम् । द्वितीयं परिहरति समाधाविति । योगिनः समाधौ द्वैतं न भासत इति चेत्तर्हि अद्वैततत्त्वविवेकिनोऽद्वैतमेव तत्त्वं न तु द्वैतमिति श्रुतियुक्तिभ्यां विवेचनवतोऽपि विवेकदशायां तद्वत् द्वैतं न भासत इत्यर्थः ॥ ८७ ॥

अद्वैततत्त्वविवेकिनो द्वैतभावनाभाव एवोत्तराध्याये प्रतिपाद्यत इत्याह, विवक्ष्यत इति ।

विवक्ष्यते तदस्माभिरद्वैतानन्दनामके ।
अध्याये हि तृतीयेऽतः सर्वमप्यतिमंगलम् ॥ ८८ ॥

स्पष्टोऽर्थः ॥ ८८ ॥

ननु द्वैतादर्शनयुक्तस्य विवेकिनो योगित्वमेत्र सिध्यतीत्याशंक्य इष्टापत्तिरेवेत्याह, सदेति ।

सदा पश्यन्निजानन्दमपश्यन्निखिलं जगत् ।
अर्थाद्योगीति चेत्तर्हि संतुष्टो वर्धतां भवान् ॥ ८९ ॥

सदा निजानन्दं निरुपाधिकमात्मानन्दं पश्यन् निखिलं जगत् द्वैतप्रपञ्चमपश्यन् स विवेकी अर्थात् योगी एव भवतीति चेत् तर्हि भवान् अस्मत्पक्षः समीचीन इति संतुष्टः सन् वर्धतां दीर्घायुष्मान् भवतु ॥ ८९ ॥

अध्यायारंभे प्रतिज्ञातं मन्दानुजिघृक्षया प्रारब्धस्य प्रकरणस्यार्थं संक्षेपतः प्रदर्श्य उपसंहरति, ब्रह्मेति ।

ब्रह्मानन्दाभिधे ग्रंथे मन्दानुग्रहसिद्धये ।
द्वितीयाध्याय एतस्मिन्नात्मानन्दो विवेचितः ॥ ९० ॥

स्पष्टोऽर्थः । मन्दानुग्रहसिद्धये ब्रह्मानन्द एव समाधावनुभूयमानत्वाद्योगानन्द इत्युच्यते । जगतः सृष्टिस्थितिलयकारणत्वेन "यतो वा इमानि भूतानि जायन्त" इति श्रुतिप्रतिपादितं ब्रह्म अखण्डानन्दरूपतया सुषुप्तौ ज्ञात्रादित्रिपुटीविरहितावस्थायामनुभूयते । नायं विषयो विचारचतुरेतराणां सुगमः । मन्दबुद्धिस्तु पुत्रमित्रादिभिस्तादात्म्यमापद्य तेषु विकलेषु स्वयं विकल इति मन्यते । इयं भ्रान्तिरवश्यमपनीयेति मत्वा येषु पुत्रमित्रादिषु प्रीतिः क्रियते न ते आत्मनोऽपि प्रियतराः, आत्मार्थमेवान्ये प्रियाः, तत आत्मन्यतिशायिनी प्रीतिरित्यात्मनः शेषित्वं मन्दानुग्रहार्थमस्मिन् प्रकरणे सर्वजनानुभवपूर्वकमुपदिश्यत इति भावः । ननु कर्मोपासनानन्दांस्त्रीन् प्रकरणादावुपक्रम्य कथमेकेनात्मानन्देनोपसंहार इति चेदत्रोच्यते । आत्मानन्द इत्यभिहितमिदं प्रकरणमिति वक्तुरात्मानन्द एव प्रकरणे-

ऽस्मिन् विवक्षाविषयः । उपासनाया नवमप्रकरणे निरूपितत्वेन कर्मणः कर्मकाण्ड एव प्रपञ्चितत्वेन तयोस्तत एवावगन्तव्यत्वादित्याशयः ॥ ९० ॥

इति

श्रीमत्परमहंसपरिव्राजकाचार्यशृंगेरीश्रीविरूपाक्षश्रीविद्याशङ्करपदमावेशप्रकाशित
जगद्गुरु श्रीकल्याणानन्दभारतीमान्ताचार्यात्यन्तप्रियान्तेवासिनावि
गोबसमुद्भूतेन **लिङ्गनसोमयाजिना** विरचितेयं पञ्चदश्यां
ब्रह्मानंदे आत्मानंदाख्यप्रकरणस्य कल्याणपीयूषव्याख्या समाप्ता ॥
इति ब्रह्मानंदे आत्मानंदाख्यप्रकरणम् ।

अथ

# कल्याणपीयूषव्याख्यासमेता पंचदशी

## ब्रह्मानन्दे - अद्वैतानन्दप्रकरणम् ॥१३॥

**योगानन्दः पुरोक्तो यः स आत्मानन्द इष्यताम् ।**
**कथं ब्रह्मत्वमेतस्य सद्वयस्येति चेच्छृणु ॥ १ ॥**

पुरा एकादशप्रकरणे यो योगानन्द उक्तः स एव आत्मानन्द इष्यताम् । ब्रह्मानन्दो योगेन साक्षात्क्रियत इति योगानन्द इत्युच्यते । स एव गौणमिथ्या-मुख्यात्मविवेचनेन विवेचितमुख्यात्मरूपत्वादात्मानन्द इत्युच्यत इति भावः । ननु गौणमिथ्यामुख्यभेदैरात्मा त्रिधा भवति (१२-३९) इत्युक्तत्वात् सद्वयस्यात्मानन्दस्य कथं योगानन्दैकतेत्याशंकते, कथमिति । सद्वयस्य गौणमिथ्यारूपद्वयसहितस्य एतस्य आत्मानन्दस्य अद्वयानन्दरूपब्रह्मत्वं कथं सिध्यतीति चेच्छृणु॥ १ ॥

आत्मानन्दस्य ब्रह्मत्वं दर्शयति, आकाशेति ।

**आकाशादिस्वदेहान्तं तैत्तिरीयश्रुतीरितम् ।**
**जगन्नास्त्यन्यदानन्दाद्वैतब्रह्मता ततः ॥ २ ॥**

यतः "तस्माद्वा एतस्मादात्मान आकाशः संभूत" इत्यारभ्य "स वा एष पुरुषोऽन्नरसमयः" (तै. २-१) इत्यन्तं तैत्तिरीयश्रुतीरितं आकाशादिस्वदेहान्तं आकाशानिलानलाप्पृथिव्यौषध्यन्नपुरुषात्मकमिदं जगत् स्वस्य सृष्टिस्थितिलयानां कारणभूतादानन्दादन्यत् भिन्नं नास्ति । ततः आत्मानंदस्य अद्वैतब्रह्मता । कार्य-भूतस्य जगतः कारणभूतादानन्दादभिन्नत्वान्न तस्य पृथक्त्वमुच्यते । एवं सति गौणमिथ्यात्मनोराकाशादेश्च न पृथक्त्वं, तेषां जगदन्तःपातित्वादिति भावः ॥२॥

आनन्दस्य जगत्कारणत्वकथनम् ।

ननूदाहृततैत्तिरीयश्रुतौ "आत्मन आकाशः संभूत" (तै. २. १.) इत्यात्मनो जगतः कारणत्वमुक्तं नत्वानन्दस्येत्याशंक्य तत्रत्यवाक्यानामर्थतः पठनेन समाधत्ते, आनन्देति ।

**आनन्दादेव तज्जातं तिष्ठत्यानन्द एव तत् ।**
**आनन्द एव लीनं चेत्युक्तानन्दात्कथं पृथक् ॥ ३ ॥**

तज्जगत् आनन्दादेव जातं । तत् आनन्दे एव तिष्ठति । आनन्दे एव लीनं च । इति जगत्कारणत्वेनोक्तानंदात् कथं पृथक् भवेत्? जगतः सृष्टिस्थितिलयानामानन्दस्य कारणत्वादानन्दादन्यज्जगन्नास्तीति भावः ॥ ३ ॥

ननु कारणादभिन्नं कार्यमित्यनैकांतिकोऽयं नियमः । स्वकारणभूतात् कुलालात् भिन्नतया घटस्य दृष्टत्वादित्याशंक्याह, कुलालादिति ।

**कुलालाद्घट उत्पन्नो भिन्नश्चेति न शंक्यताम् ।**
**मृद्वदेष उपादानं निमित्तं न कुलालवत् ॥ ४ ॥**

घटः कुलालादुत्पन्नः । ततो भिन्नश्च । अतः कारणात्कार्यं भिन्नमिति न शंक्यतां । तत्र कारणमाह, मृद्वदिति । घटं प्रति मृद्वत् जगत्प्रति एष आनंद उपादानं कारणम् । कार्योत्पादनार्थमुपादीयमानं कार्यान्वितं कारणं उपादानमित्युच्यते । न तु कुलालवन्निमित्तं कारणम् । एवं च सामान्यतः कारणादभिन्नं कार्यमिति नियमो नाद्रियते । किं तूपादानकारणादभिन्नं कार्यमित्यंगीक्रियते । स च नानैकांतिक इति भावः ॥ ४ ॥

ननु घटं प्रति मृदिव कुलालोऽप्युपादानकारणं किं न स्यादित्याशंक्य यस्योत्पत्तिलययोर्यत्कारणं तस्य तदुपादानमिति लक्षणान्नेत्याह, स्थितिरिति ।

**स्थितिर्लयश्च कुंभस्य कुलाले स्तो न हि क्वचित् ।**
**दृष्टौ तौ मृदि तद्वत्स्यादुपादानं तयोः श्रुतेः ॥ ५ ॥**

कुंभस्य स्थितिर्लयश्च क्वचिदपि कुलाले न स्तः । अतो घटं प्रति कुलालो

नोपादानं कारणमित्यर्थः । तर्हि तौ कुत्र दृष्टावित्यत आह, दृष्टाविति । तौ घटस्य सृष्टिलयौ मृदि दृष्टौ प्रत्यक्षत उपलब्धौ । अतो घटस्योपादानं मृद्भवति । प्रकृते योजयति, तद्वदिति । तद्वत् "आनंदाद्ध्येव खल्विमानि भूतानि जायन्ते" (तै. ३—६) इत्यादिश्रुतेः तयोर्जगतः स्थितिलययोरानन्दे अवगमात् आनन्द उपादानकारणं स्यात् ॥ ५ ॥

उपादानस्य त्रैविध्यविवरणम् ।

आनन्दस्य जगदुपादानकारणत्वेऽपि विप्रतिपत्तिमाशंक्य परिहाराय तत्त्रिधा विभजति, उपादानमिति ।

**उपादानं त्रिधा भिन्नं विवर्ति परिणामि च ।**
**आरंभकं च तत्रान्त्यौ न निरंशेऽवकाशिनौ ॥ ६ ॥**

विवर्ति परिणामि आरंभकं चेत्युपादानं त्रिधा भिन्नं तत्र त्रिषु भेदेषु अन्त्यौ परिणाम्यारंभकपक्षौ निरंशे परे ब्रह्मणि सावकाशिनौ । जगतः परं ब्रह्म परिणाम्यारंभककारणं न भवतीत्यर्थः ॥ ६ ॥

तयोरनवकाशप्रदिदर्शयिषया आदौ नैयायिकानामभिमतमारंभवादमुपपादयति, आरंभेति ।

**आरंभवादिनोऽन्यस्मादन्यस्योत्पत्तिमूचिरे ।**
**तन्तोः पटस्य निष्पत्तेर्भिन्नौ तन्तुपटौ खलु ॥ ७ ॥**

अन्यस्मात् कारणात् कार्यापेक्षया भिन्नात् समवायकारणात् अन्यस्य कारणापेक्षया भिन्नस्य कार्यस्य उत्पत्तिं जन्म आरंभवादिन ऊचिरे । कारणाद्भिन्नं कार्यं आरभ्यत इति नैयायिकादयो मन्यन्ते । तत्र कारणमाह, तन्तोरिति । तन्तोः पटस्य निष्पत्तेः उत्पत्तेः उपलंभादिति शेषः । उत्पत्तेराद्यक्षणसंबन्धरूपतया पूर्वक्षणे कार्यस्य कारणाभिन्नत्वे पूर्वक्षणेऽपि कार्यसंबन्धस्य सत्त्वे नाद्यक्षणसंबन्धरूपोत्पत्तिः स्यादिति भावः । एवं सिद्धं भेदं लोकानुभवसिद्ध्या दर्शयति, भिन्नाविति । तन्तुपटौ कारणीभूतस्तन्तुः कार्यभूतः पटः उभौ भिन्नौ खल्विति प्रसिद्धौ । विरुद्धं परिमाणवत्त्वे विरुद्धार्थक्रियाकारित्वे न च सर्वैरनुभूयत इति भावः ॥ ७ ॥

अथ सांख्यानामभिमतं परिणामवादं प्रतिपादयति, अवस्थेति

**अवस्थान्तरतापत्तिरेकस्य परिणामिता ।**
**स्यात्क्षीरं दधि मृत्कुंभः सुवर्णं कुंडलं यथा ॥ ८ ॥**

एकस्य वस्तुनः अवस्थान्तरतापत्तिः अन्यावस्थायाः प्राप्तिः परिणामितेति सांख्यैरुच्यते । तत्रोदाहरणमाह, स्यादिति । क्षीरं दधि स्यात् । क्षीररूपं विहाय दधिरूपेण परिणमते, तथा मृत् कुंभो भवति । सुवर्णं कुंडलं भवति । मृत्सुवर्णयोः कुंभकुंडलावस्थायां मृत्सुवर्णयोः प्रतीयमानत्वेऽपि मृत्सुवर्णव्यवहारपरित्यागे कुंभ-कुंडलरूपेण व्यवहारात् परिणाम इत्युक्तं । अवस्थान्तरतापत्तित्वं परिणामित्वमिति सामान्योऽयं लक्षणस्वरूपः । ५१ श्लोके निष्कृष्टस्वरूपस्तूदाहृतः ॥ ८ ॥

अथ विवर्तलक्षणं विवृणोति, अवस्थेति ।

**अवस्थान्तरभानं तु विवर्तो रज्जुसर्पवत् ।**
**निरंशेऽप्यस्त्यसौ व्योम्नि तलमालिन्यकल्पनात् ॥ ९ ॥**

कारणस्य स्वयं किमपि विकारमनापद्य पूर्वावस्थामपरिहाय अवस्थान्तर-भानं अन्यावस्थायामवभानं प्रतीतिः विवर्तो भवति । विशेषेण वर्तनं भानं विवर्तः । पूर्वरूपपरित्यागे सति अवस्थान्तरावभानत्वं विवर्तस्य लक्षणम् । तु शब्दः पूर्वपक्ष-वैलक्षण्यद्योतनार्थः । अवस्थान्तरतापत्तिः परिणामः यथा क्षीरं दधिरूपेण । वस्त्वंतरोत्पत्तिजनक आरंभः यथा तंतोः पटः । अवस्थान्तरभानमात्रमेव विवर्त इति बोद्धव्यम् । तत्रोदाहरणमाह, रज्जिति । रज्जुसर्पवत् । यथा रज्जुः स्वयं विकार-मनापन्ना सर्प इव विशेषाकारेणावभासते । रज्ज्वभावे सर्पस्यानवभासनात् सर्पस्य रज्जुः कारणं भवति । नन्वारंभादिवद्विवर्तोऽपि निरंशे न संभवतीत्याशंक्य तस्य निरंशेऽपि संभवं दृष्टान्तमुखेन विशदयति निरंश इति । असौ विवर्तः निरंशेऽपि निरवयवेऽपि व्योम्नि तलमालिन्यकल्पनात् तत्स्वरूपानभिज्ञैः तलत्वं अधोमुखेंद्र-नीलकटाहतुल्यत्वं मालिन्यं नीलवर्णत्वं तयोः कल्पनात् आरोपणात् तस्य लोकै-रनुभूयमानत्वादित्यर्थः । अस्ति विद्यते । अतो नास्त्यसंभव इति भावः ॥ ९ ॥

एवं च जगदुत्पत्तेरानन्दस्य विवर्तत्वं सिद्ध्यतीत्याह, तत इति ।

ततो निरंश आनन्दे विवर्तो जगदिष्यताम् ।
मायाशक्तिः कल्पिका स्यादैन्द्रजालिकशक्तिवत् ॥ १० ॥

ततो निरंशे आनन्दे जगत् विवर्त इष्यताम् । आनन्द एव स्वयमविकारी जगदिवावभासत इत्यर्थः । नन्वन्यस्य कल्पकस्याभावे विवर्तो न स्यादित्याशंक्याह, मायेति । ऐन्द्रजालिकशक्तिवत् मायाशक्तिः जगतः कल्पिका स्यात् । "माया सृजति विश्वं सन्निरुद्धस्तत्र मायया", (६—९७) "स्वतत्त्वमाश्रिता शक्तिः कल्पयेत्सति विक्रिया" (२—५९) इति च पूर्वमुक्तम् ॥ १० ॥

शक्तेः शक्तादपार्थक्योक्तिः ।

आनन्दादन्यस्याः मायाशक्तेरभ्युपगमे सद्वितीयतापत्तिमाशंक्य तस्याः मिथ्यात्वविवक्षया तदनिर्वाच्यत्वं दर्शयति, शक्तिरिति ।

शक्तिः शक्तात् पृथङ्नास्ति तद्वद्दृष्टेर्न चाभिदा ।
प्रतिबंधस्य दृष्टत्वाच्छक्त्यभावे तु कस्य सः ॥ ११ ॥

शक्तिः अग्न्यादेर्दाहकत्वशक्तिः शक्तात् शक्तिमतोऽग्न्यादेः पृथक् भिन्ना नास्ति । कुतः ? तद्वत् शक्तिमदिव दृष्टेः दर्शनात् । शक्तिमतो भेदेनानुपलभ्यमानत्वादित्यर्थः । तर्हि शक्तिः शक्तिमतोऽभिन्ना स्यादित्यत आह, नेति । उभयोरभिदा अभेदोऽपि न । कुतः ? मंत्रौषधीनां प्रतिबंधस्य दृष्टत्वात् । अग्नेः प्रत्यक्षतः प्रतीयमानत्वेन सत्त्वे निश्चये मण्यादिसमवधाने स्फोटादेरजननेन तत्र शक्तिनाशस्यावश्याभ्युपेयत्वात् वह्निस्वरूपातिरिक्ता शक्तिः सिद्ध्यतीति भावः । ननु प्रतिबंधदर्शनात् शक्तिः सिद्ध्यतु । किं तु तस्याः भेदो मास्तु इत्यत्र आह, शक्त्यभावे त्विति । शक्त्यभावे तु भेदेन शक्त्यभावे तु स प्रतिबंधः कस्य स्यात् निर्विषय एव स्यात् । वह्नेः प्रत्यक्षतः सिद्धत्वेन तदभिन्नायाः शक्तेरपि सत्त्वाभ्युपगमप्रसंगादिति भावः ॥ ११ ॥

ननु शक्तेरतीन्द्रियत्वेन तन्नाशस्याप्यतीन्द्रियत्वावश्यंभावात्प्रतिबंधः कथं ज्ञातुं शक्य इत्यत आह, शक्तेरिति ।

शक्तेः कार्यानुमेयत्वादकार्ये प्रतिबंधनम् ।

ज्वलतोऽग्नेरदाहे स्यान्मन्त्रादिप्रतिबंधता ॥ १२ ॥

शक्तेः कार्यानुमेयत्वात् शक्तेरप्रत्यक्षत्वात् यत्र स्फोटादिकार्यं तत्राग्निशक्तिरित्यनुमितिविषयत्वात् अर्काय असति स्फोटादिकार्ये प्रतिबंधनमवगम्यते । कार्यानुमेयायाः शक्तेरभावोऽपि तदितरयावत्कारणसमवधानकालीनकार्याभावेनानुमातुं शक्यत इति भावः । तत्र दृष्टान्तमाह, ज्वलत इति । ज्वलतोऽग्नेरदाहे मंत्रादीनां दाहशक्तिप्रतिबंधता स्यात् सिध्यति । अग्निर्ज्वलति; किं तु प्रतिबंधसन्निधौ स्फोटादि न जनयति । अतः शक्तिः प्रतिबद्धेत्यनुमातुं शक्यत इति भावः ॥ १२ ॥

एवं लौकिकशक्तिं प्रदर्श्य "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढां" (श्वेता. १. ३.) "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे"ति (श्वेता. ६. ३६.) श्वेताश्वतरश्रुत्योरर्थपठनेन मायाशक्तेरस्तित्वं सपादश्लोकेन प्रदर्शयति, देवात्मेति ।

देवात्मशक्तिं स्वगुणैर्निगूढां मुनयोऽविदन् ।
परास्य शक्तिर्विविधा क्रियाज्ञानबलात्मिका ॥ १३ ॥

इति वेदवचः प्राह .... ....

मुनयो मननशीलाः जगज्जीवेश्वरादीनां तत्त्वावेक्षणाय ध्यानयोगमास्थिता देवात्मशक्तिं देवः स्वयंप्रकाशः स चासावात्मा प्रत्यगभिन्नपरमात्मा, तस्य मायाशक्तिं स्वगुणैर्निगूढां स्वकार्यभूतैः स्थूलसूक्ष्मशरीरैर्निगूढां नितरामावृतां, यथोर्णनाभः स्वजन्यैः तन्तुभिराव्रियते तथा आवृतां अविदन् अजानन् । तस्यास्स्वरूपविषये तदुपनिषद्गतं वाक्यान्तरमर्थतोऽनुवदति, परेति । अस्य परब्रह्मणः परा शक्तिः विविधा । वैविध्यं दर्शयति, क्रियेति । क्रियाज्ञानबलात्मिका क्रिया अमेयचित्ररचनावैभवात्मकस्यास्य जगतो रचनारूपा, "बहूनामेकं बीजं बहुधा यः करोती"ति (श्वे. ६-१२) श्रुतत्वात् । ज्ञानं चित्स्वरूपं । "चेतनश्चेतनानामेको बहूनां" इति (कठ. २. ५. १३.) श्रुतेः । बलं क्रियाज्ञानशक्तिसाहचर्यात् बलशब्देन इच्छाशक्तिर्गृह्यते, तस्यात्मा स्वरूपं यस्यास्सा तथाभूता शक्तिरिति वेदवचः प्राह । अत्र श्वेताश्वतरे षष्ठाध्याये सप्तममंत्रमारभ्य त्रयोदशमंत्रान्तमस्मिन् ग्रंथे द्वितीयप्रकरणे

४७, ४८, ४९ श्लोकाश्च समीक्षितव्याः ॥ १३ ॥

अयमेवार्थो वसिष्ठेन रामायोपदिष्ट इति तद्वाक्यार्थं पठति, वसिष्ठेति ।

.... .... वसिष्ठश्च तथाऽब्रवीत् ।
सर्वशक्ति परं ब्रह्म नित्यमापूर्णमद्वयम् ।

ययोल्लसति शक्त्यासौ प्रकाशमधिगच्छति ॥ १४= ॥

यथा वेदवचः प्राह तथा वसिष्ठोऽब्रवीत् । तत्प्रकारमाह, सर्वेति । परं ब्रह्म सर्वशक्ति सोपाधिकत्वेन सर्वशक्तिमत् । परमार्थतो नित्यं निर्विकारं आपूर्णं आसमंतात् व्याप्तं अत एवाद्वयम् । तत् परं ब्रह्म यया मायाशक्त्या उल्लसति विशेषाकारेणावभासते तथाऽसौ शक्तिः प्रकाशं अभिव्यक्तिं अधिगच्छत्याप्नोति ॥ १४= ॥

मायाशक्तेरभिव्यक्तिप्रकारं सार्धद्वाभ्यां विपुलीकरोति, चिदिति ।

चिच्छक्तिर्ब्रह्मणो राम ! शरीरेषूपलभ्यते ॥ १५ ॥

स्पंदशक्तिश्च वातेषु दार्ढ्यशक्तिस्तथोपले ।
द्रवशक्तिस्तथांभस्सु दाहशक्तिस्तथाऽनले ॥ १६ ॥

शून्यशक्तिस्तथाऽऽकाशे नाशशक्तिर्विनाशिनि ।
यथाऽण्डेऽन्तर्महासर्पो जगदस्ति तथाऽऽत्मनि ॥ १७ ॥

हे राम ! विश्वानामधीश्वर; "राशब्दो विश्ववचनो मश्चापीश्वरवाचकः । विश्वानामीश्वरो यो हि तेन रामः प्रकीर्तितः" स्पष्टमन्यत् । एवं सर्ववस्तुषु काचन नियता शक्तिर्दृश्यते; एवं विधाः शक्तयः तत्कार्यभूतं जगच्च अंडे अंतः महासर्पो यथा तथा आत्मनि संति निगूढमिति भावः; असत्कार्यवादनिरासार्थमयं दृष्टान्तः ॥ १७ ॥

विचित्रस्यापि जगतः सत्त्वबोधनार्थं दृष्टान्तमाह, फलेति ।

फलपत्रलतापुष्पशाखाविटपमूलवान् ।
ननु ! बीजे यथा वृक्षस्तथेदं ब्रह्मणि स्थितम् ॥ १८ ॥

नन्वित्यामन्त्रणे। स्पष्टमन्यत्। पृथुलघुभेदेन शाखाविटपभेदः। विटं विस्तारं वाति पिबति वेति विटपः ॥ १८ ॥

देशकालानुसारतः शक्तयोऽभिव्यज्यन्ते न तु युगपदिति सोदाहरणमाह, क्वचिदिति ।

क्वचित्काश्चित्कदाचिच्च तस्मादुद्यन्ति शक्तयः ।
देशकालविचित्रत्वात् क्ष्मातलादिव शालयः ॥ १९ ॥

स्पष्टोऽर्थः ॥ १९ ॥

जगतः काल्पनिकत्वविवक्षया तत्कल्पकस्य मनसः स्वरूपं प्रदर्शयति, स इति ।

स आत्मा सर्वगो राम! नित्योदितमहावपुः ।
यन्मनाङ्मननीं शक्तिं धत्ते तन्मन उच्यते ॥ २० ॥

हे राम ! नित्योदितमहावपुः नित्यमुदितं प्रकाशमानं महत् अपरिच्छिन्नं वपुः स्वरूपं यस्य सः सर्वगः सर्वव्यापी आत्मा यत्समये मनाक् ईषत् मननीं स्वपरावबोधनरूपां मायाशक्तिं धत्ते तत्समये मन इत्युच्यते ॥ २० ॥

जगत्कल्पनारीतिमुदाहरति, आदाविति ।

आदौ मनस्तदनु बंधविमोक्षदृष्टी
पश्चात्प्रपंचरचना भुवनाभिधाना ।
इत्यादिका स्थितिरियं हि गता प्रतिष्ठा-
माख्यायिका सुभग ! बालजनोदितेव ॥ २१ ॥

हे सुभग ! आदौ मनः मनःशक्तिर्भवति । तदनु तदनन्तरं बंधविमोक्षदृष्टी बंधस्य विमोक्षस्य च दृष्टी कल्पने भवतः । पश्चात् भुवनाभिधाना भुवनं लोकमित्य-

भिधानं नाम यस्यास्सा प्रपंचरचना प्रपंचस्य नदीनगरार्णवादेः रचना कल्पना भवति। इत्यादिका आख्यायिकारूपेण चिरकालप्रवर्तिता इयं जगतः स्थितिः बालजनोदिता अज्ञानिजनविनोदाय कथिता आख्यायिकेव कथेव प्रतिष्ठां गता हि ॥ २१ ॥

बालजनार्थोदितामाख्यायिकामाचष्टे, बालस्येति।

बालस्य विनोदाय धात्री वक्ति शुभां कथाम्।
क्वचित्सन्ति महाबाहो राजपुत्रास्त्रयः शुभाः ॥ २२ ॥

द्वौ न जातौ तथैकस्तु गर्भे एव न च स्थितः।
वसंति ते धर्मयुक्ता अत्यन्तासति पत्तने ॥ २३ ॥

स्वकीयाच्छून्यनगरान्निर्गत्य विमलाशयाः।
गच्छन्तो गगने वृक्षान् ददृशुः फलशालिनः ॥ २४ ॥

भविष्यन्नगरे तत्र! राजपुत्रास्त्रयोऽपि ते।
सुखमद्य स्थिताः पुत्र मृगयाव्यवहारिणः ॥ २५ ॥

धात्र्येति कथिता राम! बालकाख्यायिका शुभा।
निश्चयं स ययौ बालो निर्विचारणया धिया ॥ २६ ॥

धात्री उपमाता। महाबाहो! इति लालनपूर्वकं संबोधनं। विमलाशया निर्मलमनसः। फलशालिनः फलैर्विराजमानान्। मृगया मृगं यात्यनयेति मृगया आखेटकं। निर्विचारणधिया आख्यायिकायाः सत्यत्वविषये अविशंकरसन्। सुगममन्यत्सर्वं ॥

आख्यायिकार्थं प्रकृते योजयति, इयमिति।

इयं संसाररचना विचारोज्झितचेतसाम्।
बालकाख्यायिकेवेत्थमवस्थितिमुपागता ॥ २७ ॥

इयं संसाररचना विचारोज्झितचेतसां विचारेण उज्झितं विहीनं चेतः येषां तेषां विचारविरहितमनस्कानां बालकाख्यायिकेव यथा बालकाख्यायिका निर्विचारणधियो बालस्य निश्चितत्वं गता तथा वास्तवरूपामवस्थितिं गता ॥२७॥

शक्तेः स्वरूपनिरूपणम् ।

वासिष्ठवचनमुपसंहरन् दशमे श्लोके उपक्रान्तं मायाशक्तिस्वरूपं निरूपयति, इतीति ।

**इत्यादिभिरुपाख्यानैर्मायाशक्तेश्च विस्तरम् ।**
**वसिष्ठः कथयामास सैव शक्तिर्निरूप्यते ॥ २८ ॥**

या मायाशक्तिर्वसिष्ठेन प्रपंचिता सैव अथो निरूप्यते ॥ २८ ॥

मायाशक्तिः स्वकार्याश्रयाभ्यां विलक्षणेत्याह, कार्येति ।

**कार्याश्रयतश्चैषा भवेच्छक्तिर्विलक्षणा ।**
**स्फोटांगारौ दृश्यमानौ शक्तिस्तत्रानुमीयते ॥ २९ ॥**

एषा मायाशक्तिः स्वस्य कार्यात् जगतः स्वस्य आश्रयतो ब्रह्मणो विलक्षणा भवति । तत्र दृष्टान्तमाह, स्फोटेति । स्फोटांगारौ दाहकशक्तेः कार्यभूतः स्फोटः तस्या आश्रयो अंगारः, एतौ स्फोटांगारौ प्रत्यक्षतो दृश्यमानौ; शक्तिस्तु अंगारे विद्यमाना स्फोटजनिका शक्तिस्तु प्रत्यक्षतो अंगारे स्फोटे वा न दृश्यते । किं तु कार्यलिंगेनानुमीयते। अतो दाहकत्वशक्तिः स्वकार्याश्रयाभ्यां विलक्षणेति भावः॥२९

तथैव मृदादीनां शक्तिरपि तत्कार्याश्रयाभ्यां विलक्षणेत्याह, पृथ्विति ।

**पृथुबुध्नोदराकारो घटः कार्योऽत्र मृत्तिका ।**
**शब्दादिभिः पंचगुणैर्युक्ता शक्तिस्त्वतद्विधा ॥ ३० ॥**

पृथुबुध्नोदराकारः स्थूलवर्तुलोदराकारो घटः कार्यः । तत्कारणभूता मृत्तिका शब्दादिभिः पंचगुणैर्युक्ता । तेषामाश्रय इत्यर्थः । "अस्ति भूस्तत्वशून्ये-त्य"त्र (२–९४) पृथिव्याः पंचगुणात्मकत्वमुक्तं । शक्तिस्तु घटोत्पादनसमर्था मृदाश्रया शक्तिस्तु अतद्विधा उभयसदृशी न । न घटसदृशी पूर्वोक्ताकारशून्य-

त्वात्। नापि मृत्सदृशी शब्दादिशून्यत्वात्। अत उभयविलक्षणेति भावः ॥ ३० ॥

उक्तं वैलक्षण्यं विवृणोति, नेति।

न पृथ्वादिर्न शब्दादिः शक्तावस्तु यथा तथा।
अत एव ह्यचिंत्यैषा न निर्वचनमर्हति ॥ ३१ ॥

घटोत्पादिकायां शक्तौ स्वकार्यभूतस्य घटस्य धर्मः पृथ्वादिर्न दृश्यते। स्वाश्रयभूतायाः मृदो धर्मः शब्दादिर्न दृश्यते। तर्हि कीदृशीयं शक्तिरित्यत आह, अस्त्विति। सा शक्तिर्यथा दृश्यते तथैवास्तु। उक्तमर्थं विशदयति, अत इति। अत एव स्वकार्याश्रयाभ्यां विलक्षणत्वात् एषा शक्तिरचिन्त्या। तर्हि किंरूपेयं शक्तिरित्यत आह, नेति। येन केनापि स्वरूपेण निर्वचनं नार्हति। "न शून्यं नापि सद्यादृक्तादृक्तत्त्वमिहेष्यता"मिति (२–४९) पूर्वमुक्तम् ॥ ३१ ॥

ननु स्वकार्यविलक्षणा मृदादेः काचिच्छक्तिर्विद्यते चेत् कुतो नावभासत इत्याशंक्याह, कार्येति।

कार्योत्पत्तेः पुरा शक्तिर्निगूढा मृद्यवस्थिता।
कुलालादिसहायेन विकाराकारतां व्रजेत् ॥ ३२ ॥

स्पष्टोऽर्थः। स्वस्वरूपेण शक्तेर्भानं तु न कदापि लभ्यते। सत्यां कारण-सामग्र्यां कार्यरूपेणाभिव्यज्यते। मृद्यवस्थिता शक्तिः कुलालादिसहायेन घटरूपेणेवेति भावः ॥ ३२ ॥

शक्तिकार्यस्वरूपानिरूपणम्।

एवं कारणातिरिक्तस्य शक्तिकार्यस्याभ्युपगमे सिद्धः कार्यकारणयोर्भेदः कुतो न भासत इत्याशंक्याह, पृथ्विति।

पृथुत्वादिविकारान्तं स्पर्शादिं चापि मृत्तिकाम्।
एकीकृत्य घटं प्राहुर्विचारविकला जनाः ॥ ३३ ॥

स्पष्टोऽर्थः। विचाराभावरूपप्रतिबन्धवशात्तत्र विद्यमानोऽपि भेदो न प्रतीयत इत्यर्थः ॥ ३३ ॥

तत्राविचारः कारणमिति कथं निश्चितमित्याह, कुलालेति ।

**कुलालव्यापृतेः पूर्वो यावानंशः स नो घटः ।**
**पश्चात्तु पृथुबुध्नादिमत्त्वे युक्ता हि कुंभता ॥ ३४ ॥**

कुलालव्यापृतेः पूर्वः कुलालस्य घटाभिव्यंजकव्यापारात्प्राक् विद्यमानो मृदो यावानंशः स घटो न भवति । एवं च घटस्य घटत्वेन व्यवहारात्तस्य व्यवहारस्याविचारमूलकत्वं स्पष्टमेवेति भावः । ननु तर्हि मुख्यं घटव्यवहारविषयत्वं कस्येत्यत आह, पश्चादिति । पश्चात्तु कुलालव्यापारादनन्तरंभाविनि पृथुबुध्नादि-मत्त्वे तद्विकारे एव कुंभता घटपदव्यवहार्यता युक्ता हि । तथा कार्योत्पत्त्यनन्तरमेव घटशब्दव्यवहारस्य लोके दर्शनात् तत्रैव घटव्यवहारः प्रसिद्ध इति स एव मुख्य-व्यवहार इति प्रसिद्धद्योतकेन हि न प्रतीयते । अत्रेदं बोद्धव्यम् । घटे मृदंशः कुलालादिव्यापाराभिव्यक्तपृथुबुध्नोदरादिविकारांशश्चेति द्वावंशौ । तत्र कुलालादि-व्यापारात् पूर्वं एव विद्यमानो मृदंशो न घटो भवति । अतः पृथुबुध्नोदराद्याकार एव घटः स्यात् । तदाप्युभावंशावेकीकृत्याविचारात् घट इति व्यवहार इति ॥३४॥

नन्वेतावता प्रबंधेन मृदतिरिक्तस्य घटस्य साधनेन तस्य पारमार्थिकत्व-मायाति । एवं पारमार्थिकस्य घटस्य कथमपारमार्थिकानिर्वचनीयशक्तिकार्य-त्वमुपपन्नमित्याशंक्य तस्यापि पारमार्थिकत्वं नास्तीत्याह, नेति ।

**स घटो न मृदो भिन्नो वियोगे सत्यनीक्षणात् ।**
**नाप्यभिन्नः पुरा पिंडदशायामनवेक्षणात् ॥ ३५ ॥**

स घटो मृदो न भिन्नः । कुतः ? मृदो वियोगे सति मृदंशस्य नाशे सति तस्य घटस्य अनीक्षणात् अदर्शनात् । मृद्भिन्नतया घटस्यादर्शनान्न घटो मृदो भिन्न इत्यर्थः । तर्ह्यभिन्नोऽस्त्वित्याशंक्याह, नेति । घटो मृदोऽभिन्नोऽपि न । कुतः ? पुरा घटोत्पत्तेः प्राक् पिंडदशायां घटस्य अनवेक्षणात् अदर्शनात् । यदि मृदभिन्नो घटस्तदा मृद्दशायामपि घटो दृश्येत । न तदा दृश्यते । एवं च मृद्भिन्नत्वेन मृदभिन्नत्वेन वा निर्वक्तुमशक्यतयाऽनिर्वचनीयोऽपारमार्थिकोऽयं घटः । तस्यानिर्वचनीयापारमार्थिकशक्तिकार्यत्वमुपपद्यते ॥ ३५ ॥

तदेतदाह, अत इति ।

**अतोऽनिर्वचनीयोऽयं शक्तिवत्तेन शक्तिजः ।**
**अव्यक्तत्वे शक्तिरुक्ता व्यक्तित्वे घटनामभृत् ॥ ३६ ॥**

अतोऽयं घटः शक्तिवदनिर्वचनीयः । स्वकारणान्मृदो भिन्नोऽभिन्नो वेति वक्तुमशक्यः । तेन उभयोस्साम्येन शक्तिजो मृन्निष्ठशक्तेरुत्पादितः । एवं चावास्तविकशक्तिकार्यत्वमस्य नानुपपन्नमिति भावः । ननु शक्तितत्कार्ययोरुभयोरप्यनिर्वचनीयत्वे तयोर्व्यवहारभेदनियामकं किमित्यत आह अव्यक्तत्व इति । अव्यक्तत्वे निगूढदशायां शक्तिरित्युक्ता शक्तिरिति व्यवहारः । कार्यरूपेण व्यक्तित्वे घटनामभृत् घट इति नाम्ना व्यवहारास्पदो भवति । द्वितीयप्रकरणे विषयोऽयं प्रसक्तानुप्रसक्त्या विचारितः । अत्र तु प्रकरणविषयानुसारतो विपुलतरं विचारित इति बोद्ध्यम् ॥ ३६ ॥

एवं मायायाः व्यक्ताव्यक्तत्वे लौकिकमायादृष्टान्तेन द्रढयति, ऐन्द्रेति ।

**ऐन्द्रजालिकनिष्ठाऽपि माया न व्यज्यते पुरा ।**
**पश्चाद्गंधर्वसेनादिरूपेण व्यक्तिमाप्नुयात् ॥ ३७ ॥**

स्पष्टोऽर्थः ॥ ३७ ॥

वाचारंभणश्रुतेरर्थविचारः ।

एवं शक्तितत्कार्ययोरवास्तवत्वं शक्त्याश्रयस्य मृदादेर्वास्तवत्वं च श्रौतवाक्येन द्रढयति, एवमिति ।

**एवं मायामयत्वेन विकारस्यानृतात्मताम् ।**
**विकाराधारमृद्वस्तुसत्यत्वं चाब्रवीच्छ्रुतिः ॥ ३८ ॥**

स्पष्टोऽर्थः ॥ ३८ ॥

तां श्रुतिमर्थतः पठति, वागिति ।

**वाङ्निष्पाद्यं नाममात्रं विकारो नास्य सत्यता ।**

स्पर्शादिगुणयुक्ता तु सत्या केवलमृत्तिका ॥ ३९ ॥

वाङ्निष्पाद्यं वाचा निष्पाद्यं संपादितव्यं उच्चार्यं नाममात्रं विकारः। अस्य विकारस्य सत्यता न। परमार्थता नास्ति। किं तु स्पर्शादिगुणयुक्ता केवलमृत्तिका नामादिविकारविधुरा मृत्तिका सत्या वास्तवी। सर्वं कार्यजातमवास्तवं; विकारस्वरूपत्वात्। कारणं तु वास्तवं; निर्विकारस्वरूपत्वादिति भावः। श्रुतिस्तु "वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति (छां. ६. १. ५.)॥ ३९ ॥

शक्तितत्कार्ययोरवास्तवत्वे तदाश्रयस्य वास्तवत्वे च कारणमाह, व्यक्तेति

व्यक्ताव्यक्ते तदाधार इति त्रिष्वाद्ययोर्द्वयोः।
पर्यायः कालभेदेन तृतीयस्त्वनुगच्छति ॥ ४० ॥

व्यक्ताव्यक्ते व्यक्तं स्पष्टतया भासमानं घटादिकार्यजातं अव्यक्तं अनभिव्यक्तस्वरूपा शक्तिः कारणं तदाधारः आश्रयो मृदादिः; इति त्रिषु त्रयाणां मध्ये आद्ययोर्द्वयोः शक्तितत्कार्ययोरभिव्यक्तेः प्राक् पश्चादिति कालभेदेन पर्यायः क्रमेण स्थितिः। तृतीयः मृत्तिका तु शक्तितत्कार्ये अनुगच्छति, अनभिव्यक्तावस्थायां शक्तिरित्युच्यते; अभिव्यक्तावस्थायां कार्यमित्युच्यते। उभयोरेकस्मिन् समये अनवस्थानात् शक्तितत्कार्ये अन्योन्यं व्यावर्तेते। अतस्तयोर्मिथ्यात्वं। मृत्तिका तु समयद्वयेऽप्यनुवर्तते। अतस्तस्याः सत्यत्वमिति भावः ॥ ४० ॥

श्रुतिप्रतिपादितं वाचारंभणत्वं विवृणोति, निस्तत्त्वेति।

निस्तत्त्वं भासमानं च व्यक्तमुत्पत्तिनाशभाक्।
तदुत्पत्तौ तस्य नाम वाचा निष्पाद्यते नृभिः ॥ ४१ ॥

व्यक्तमभिव्यक्तं घटादिकार्यजातं निस्तत्त्वं याथार्थ्यरहितं। तथापि भासमानं च आपातदृष्टेः प्रतीयमानं च। उत्पत्तिनाशभाक् उत्पत्तिं विनाशं च भजति। तदुत्पत्तौ नृभिः वाचा तस्य नाम निष्पाद्यते कल्प्यते। केनचिन्नाम्ना व्यवहार एवोत्पत्तिरित्यर्थः ॥ ४१ ॥

उत्पत्तिविनाशयोरनन्तरमपि तन्नाम्ना व्यवह्रियमाणत्वात् तच्छब्दात्मको भवतीत्याह, व्यक्त इति ।

**व्यक्ते नष्टेऽपि नामैतन्नृवक्त्रेष्वनुवर्तते ।**
**तेन नाम्ना निरूप्यत्वाद्व्यक्तं तद्रूपमुच्यते ॥ ४२ ॥**

व्यक्ते घटादिकार्यरूपे नष्टेऽपि कार्यतादात्म्यापन्नमेतन्नाम नृवक्त्रेषु व्यवहारे भाषारूपेणानुवर्तते । व्यक्तिं घटादिकार्यं तेन नाम्ना निरूप्यत्वात् व्यवह्रियमाणत्वात् तद्रूपं तस्य नाम्नः रूपमेव रूपं यस्य तत् तथोच्यते । अयथार्थस्य घटादिकार्यस्य नाशानन्तरमपि तन्नामैव व्यवह्रियमाणत्वात् घटादिकार्यं घटादिशब्दस्वरूपमात्रं भवितुमर्हतीति भावः ॥ ४२ ॥

एवं घटादिकार्यस्यासत्यत्वनिश्चायिकामनुमानरचनां प्रदर्शयति, निस्तत्वमिति ।

**निस्तत्वत्वाद्विनाशित्वाद्वाचारंभणनामतः ।**
**व्यक्तस्य न तु तद्रूपं सत्यं किंचिन्मृदादिवत् ॥ ४३ ॥**

व्यक्तस्य घटादिरूपकार्यस्य तद्रूपं प्रतीयमानं पृथुबुध्नोदरादिरूपं किंचिदपि न सत्यम् । तत्र पूर्वोक्तं कारणत्रयं संक्षेपेणाह । निस्तत्वत्वादिति । निस्तत्वत्वात् अवास्तवस्वरूपत्वात्, विनाशित्वात् नश्वरस्वभावत्वात्, वाचारंभणनामतः वचोभिर्निष्पाद्यमाननामरूपत्वात् । त्रिष्वपि व्यतिरेकेण दृष्टान्तमाह, मृद्वदिति । घटादिकार्यमसत्यं निस्तत्वत्वात्, यदसत्यं न भवति न तन्निस्तत्त्वं भवति यथा मृत् । तथैवान्यत्रापि बोध्यम् ॥ ४३ ॥

कारणस्य सत्यत्वविचारः ।

व्यतिरेकदृष्टान्तभूतस्य मृद्रूपोपादानस्य सत्यत्वमुपपादयति, व्यक्तेति ।

**व्यक्तकाले ततः पूर्वमूर्ध्वमप्येकरूपभाक् ।**
**सतत्त्वमविनाशं च सत्यं मृद्वस्तु कथ्यते ॥ ४४ ॥**

मृद्वस्तु व्यक्तकाले घटादिकार्यदशायां ततः पूर्व कार्योत्पत्तेः पूर्वं ऊर्ध्वं

कार्यविनाशानन्तरं च एकरूपभाक् भवति। सतत्त्वं तत्त्वेन वास्तवेन सहितं अविनाशं च कार्ये नष्टेऽपि स्वयं विनाशरहितं यन्मृद्वस्तु तत्सत्यमिति कथ्यते। मृद्वस्तु सत्यं एकाकारत्वात् सतत्त्वत्वात् अविनाशित्वात् आत्मवदित्यनुमानाकारोऽवगम्यते ॥ ४४ ॥

नन्वेवं सत्यभूताधिष्ठानज्ञाने सत्यधिष्ठानशुक्त्यादिज्ञाने आरोपितरजतादेरिव आरोपितघटादेरपि निवृत्तिः स्यात्। सा च न दृश्यते। अतः कथं तस्यानृतत्वमिति शंकते, व्यक्तमिति।

**व्यक्तं घटो विकारश्चेत्येतैर्नामभिरीरितः।**
**अर्थश्चेदनृतः कस्मान्न मृद्बोधे निवर्तते ॥ ४५ ॥**

व्यक्तं घटः विकारः इत्येतैर्नामभिरीरितोऽर्थः अनृतश्चेत् मृद्बोधे सति कारणभूतायाः सत्यायाः मृदो बोधे जाते सति कस्मात् घटो न निवर्तते ? कारणभिन्नतया कार्यस्याविद्यमानत्वस्यांगीकारे कारणज्ञानेन कार्यनिवृत्तिरवश्यं स्यात्। यथा शुक्तिज्ञानेन रजतनिवृत्तिः। तथैव मृत्तिकायाः ज्ञाने आरोपितघटनिवृत्तिः स्यात्। किं तु मृत्तिकायाः ज्ञानानन्तरमपि घटोऽनिवृत्त एव, प्रतीयमानत्वात्; इत्याक्षेपः ॥ ४५ ॥

कारणज्ञानेन कार्यनिवृत्तौ सम्मतिमाह, निवृत्त इति।

**निवृत्त एव यस्मात्ते तत्सत्यत्वमतिर्गता।**
**ईदृङ्निवृत्तिरेवात्र बोधजा न त्वभासनम् ॥ ४६ ॥**

घटोऽपि निवृत्त एव। तत्र कारणं दर्शयति, यस्मादिति। यस्मात् ते तत्सत्यत्वमतिः तस्य घटस्य वास्तवत्वबुद्धिः गता निवृत्ता तस्मात्। ननु शुक्तिरजतस्थले आरोपितस्य रजतस्यैव निवृत्तिर्दृश्यते। न तु तस्य सत्यत्वबुद्धेः। एवं प्रकृतेऽपि घटादेरपि निवृत्तिर्वक्तव्या। सा च नो घटते। इत्याशंक्य दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमभिप्रेत्याह, ईदृगिति। अत्र घटादिसोपाधिकभ्रमस्थलेषु ईदृगेव सत्यत्वज्ञाननिवृत्तिरूपा बोधजा अधिष्ठानस्य याथार्थ्यज्ञानजन्या घटादेर्निवृत्तिरभ्युपेया। अभासनं तु कार्यस्वरूपाभानं तु निवृत्तिरिति नाभ्युपेया।

शुक्तिरजतभ्रमस्य निरुपाधिकत्वात्तत्र तदभानमपि निवृत्तिरित्यभ्युपेयते । सोपाधिकत्वनिरुपाधिकत्वभेदेनोभयोर्भ्रमयोर्वैषम्यात् । तद्दृष्टान्तेन घटादेर्निवृत्तिं प्रत्याशा न कार्या ॥ ४६ ॥

सोपाधिकभ्रमस्थलेऽभानं न निवृत्तिः । किंत्वारोपितसत्यत्वज्ञाननिवृत्तिरेव तन्निवृत्तिरित्यत्र दृष्टान्तमाह, पुमानिति ।

पुमानधोमुखो नीरे भातोऽप्यस्ति न वस्तुतः ।
तटस्थमर्त्यवत्तस्मिन्नैवास्था कस्यचित् क्वचित् ॥ ४७ ॥

नीरे अधोमुखः भातोऽपि प्रतीयमानोऽपि पुमान् वस्तुतः परमार्थतो नास्ति । तस्मिन्नधोमुखजने कस्यचित् क्वचिदपि तटस्थमर्त्यवत् तीरवर्तिजनवत् आस्था अभिमानो न विद्यते एव । तटस्थजनेऽस्तित्वबुद्धिवत्प्रतीयमानेऽप्यधोमुखजनेऽस्तित्वबुद्धिर्न कस्याप्यस्ति । अतः स निवृत्त इत्येवांगीकार्य इति भावः ॥ ४७ ॥

नन्वारोपितं घटादिकार्यं मिथ्या स्यात् । तन्मिथ्यात्वज्ञानस्य न पुरुषार्थत्वमित्याशंक्याह, ईदृगिति ।

ईदृग्बोधे पुमर्थत्वं मतमद्वैतवादिनाम् ।
मृद्रूपस्यापरित्यागाद्विवर्तत्वं घटे स्थितम् ॥ ४८ ॥

ईदृग्बोधे सर्वं जगत् विकारस्वरूपं परे ब्रह्मण्यधिष्ठाने आरोपितं ब्रह्मणोऽन्यत् सर्वं मिथ्येत्याकारके ज्ञाने सति पुमर्थत्वं अद्वितीयानन्दस्वरूपस्य पुरुषार्थस्य सिद्धिरिति अद्वैतवादिनां मतम् अभिमतम् । ननु घटो मृद्विवर्त इति यदि सिध्यति तदा मृद्ज्ञानाद्घटसत्यत्वज्ञानं निवर्तेत । न च मृद्विवर्तत्वमेव घटस्य सिद्धमित्याशंक्याह, मृद्रूपस्येति । घटरूपविकारावस्थायामपि मृद्रूपस्य परित्यागान्मृद्रूपपरित्यागाभावात् घटे विवर्तत्वं स्थितम् ॥ ४८ ॥

आरंभादिविवरणम् ।

ननु मृद्रूपपरित्यागाभावेऽपि मृत्परिणामो घट इति किं न वक्तव्यमित्याशंक्याह, परिणाम इति ।

परिणामे पूर्वरूपं त्यजेत्तत्क्षीररूपवत् ।
मृत्सुवर्णे निवर्तेते घटकुंडलयोर्न हि ॥ ४९ ॥

मृदेव घटाकारेण परिणमत इति न वक्तव्यं । कुतः? परिणामे मृदाद्युपादानं पूर्वरूपं परिणामात्पूर्वरूपं यत्स्वीयं रूपं तत्परिणामानन्तरं क्षीररूपवत् त्यजेत् । एवं च यत्र पूर्वरूपपरित्यागस्तत्र परिणाम इति व्यवहारः । अत्र पूर्वरूपापरित्यागाद्विवर्तत्वमेवाभ्युपेयमिति भावः । घटे पूर्वरूपापरित्यागं सदृष्टान्तं विशदयति, मृदिति । घटकुंडलयोर्मृत्सुवर्णे घटे मृत् कुंडले सुवर्णं च न निवर्तेते। अत्र सुवर्णकुंडलोपादानं दृष्टान्तप्रदर्शनार्थं । यथा कुंडले सत्यपि सुवर्णं न निवर्तते। कुंडलसद्भावदशायामपि सुवर्णबुद्धेः सत्त्वात् । तथा घटसद्भावदशायामपि मृन्न निवर्तते । अतः सुवर्णस्येव मृदोऽपि विवर्तितैवेति भावः ॥४९॥

ननु कुंडलनाशे सुवर्णः सर्वैरुपलभ्यते, न तथा घटनाशे मृदुपलभ्यते, तदानीं कपालयोरेवोपलंभात्, इति शंकते, घट इति ।

घटे भग्ने न मृद्भावः कपालानामवेक्षणात् ।
मैवं चूर्णेऽस्ति मृद्रूपं स्वर्णरूपं त्वतिस्फुटम् ॥ ५० ॥

घटे भग्ने सति कपालानां कं जलं शिरो वा पालयतीति कपालः तेषामवेक्षणात् उपलंभात् घटे मृद्भावः मृद्रूपं नोपलभ्यते । अतः कथमुच्यते तस्य विवर्तित्वमिति भावः । समाधत्ते, मेति । एवं मा वद । कुतः? कपालानां चूर्णे मृद्रूपमस्त्येव । कपालावस्थायां मृद्रूपस्यास्फुटत्वेऽपि तस्य चूर्णतावस्थायां मृद्रूपं स्पष्टतया प्रतीयते । दृष्टान्तभूते सुवर्णे तु नैतच्छंकाया अवकाश इत्याह, स्वर्णेति । स्वर्णरूपं तु अतिस्फुटम् । साक्षादिव स्फुटतया भासते । घटस्थले मृद्रूपस्य परंपरया स्फुटतया भानमित्येतावानेव विशेष इति भावः ॥ ५०॥

ननु "अवस्थान्तरतापत्तिरेकस्य परिणामिते" (१३.८.) त्यत्र क्षीरमृत्सुवर्णानां परिणामिदृष्टान्तत्वमुक्तम्, अत्र तु तेषां मध्ये मृत्सुवर्णयोर्विवर्तदृष्टान्तत्वमुक्तम्, एवं सति क्षीरस्यापि तथात्वं किं न स्यादित्याशंक्याह, क्षीरेति ।

क्षीरादौ परिणामोऽस्तु पुनस्तद्भाववर्जनात् ।

**एतावता मृदादीनां दृष्टान्तत्वं न हीयते ॥ ५१ ॥**

क्षीरादौ पुनः विकारनाशे तद्भावववर्जनात् तस्य क्षीरादेर्भावस्य वर्जनात् परिणामोऽस्तु । एवं सति कुंभकुंडलावस्थामवाप्तयोर्मृत्सुवर्णयोर्विवर्तत्वं नोपपद्यत इत्याशंक्याह, एतावतेति । एतावता मृदादीनां विवर्तस्य दृष्टान्तत्वं न हीयते । अत्रायं भावः । क्षीरस्यावस्थान्तरप्राप्तौ तद्रूपविगलने पुनः पूर्वं रूपं न दृश्यते । अतः केवलपरिणामत्वमेव तत्र वक्तव्यम् । मृत्सुवर्णयोरवस्थान्तरप्राप्तौ तदपाये पूर्वरूपस्य दर्शनात् विवर्तत्वमपि वक्तव्यम् । एवं चावस्थान्तरतापत्तिमात्रं परिणाम-लक्षणम् तत्त्रिष्वपि वर्तते । अतो मृत्सुवर्णयोरपि परिणामिदृष्टान्तत्वोक्तिर्नासंगता । विवर्तं त्ववस्थान्तरविगलनोत्तरकालिकपूर्वरूपवत्त्वमिति वक्तव्यम् । सा च मृत्सुवर्णयो-रेव न तु क्षीरस्य । एवं च परिणामित्वं व्यापकम् विवर्तत्वं तु तद्व्याप्यमिति॥५१॥

ननु मृत्सुवर्णयोर्यदि परिणामित्वमप्यंगीक्रियते तद्वदारंभकत्वमपि किं नांगीक्रियत इत्याशंक्याह, आरंभेति ।

**आरंभवादिनः कार्ये मृदो द्वैगुण्यमापतेत् ।**
**रूपस्पर्शादयः प्रोक्ताः कार्यकारणयोः पृथक् ॥ ५२ ॥**

कारणात् परमाणुभ्यः कार्यमारभ्यत इति वदत आरंभवादिनो मते आरब्धे कार्ये घटे मृदो द्वैगुण्यमापतेत् । तत्र कारणमाह, रूपेति । कार्यकारण-योरन्योन्यं भिन्नरूपत्वात्तयोः रूपस्पर्शादयो गुणाः पृथक्प्रोक्ताः । एवं च कारण-गुणानां कार्यगुणानां च पार्थक्येन मृद्युभयगुणसम्मेलनाद्द्वैगुण्यमापतेदित्यर्थः । परमाणुकारणवादः श्रीभगवत्पादैः २. २. १२ सूत्रभाष्ये व्याख्यातः । कुतूहलि-भिस्तत्रावलोक्यताम् ॥ ५२ ॥

मृत्सुवर्णयोरिवान्यस्यापि विवर्तदृष्टान्तत्वं श्रुतिप्रसिद्धमित्याह, मृदिति ।

**मृत्सुवर्णमयश्चेति दृष्टान्तत्रयमारुणिः ।**
**प्राहातो वासयेत्कार्यानृतत्वं सर्ववस्तुषु ॥ ५३ ॥**

आरुणिः स्वीयं पुत्रं सर्वकार्यस्यानृतत्वमुपदिशन् "यथा सोम्यैकेन

मृत्पिंडेन" (छां. ६.१.४.) त्यारभ्य "कृष्णायसमित्येव सत्य" (छां. ६.१.६.) मित्यंतेन मृत्सुवर्ण अयो लोहमिति दृष्टान्तत्रयं प्राह। फलितमाह, अत इति। सर्ववस्तुषु कार्यानृतत्वं वासयेत् संयोजयेत्। दृष्टान्तत्रयोक्त्या त्रित्वे बहुत्वमिति न्यायेन बहुषु कार्यानृतत्वोपलंभेन सर्वेष्वपि वस्तुषु कार्यानृतत्वं कारणस्य सत्यत्वं चानुसंदध्यादित्यर्थः ॥ ५३ ॥

कारणांशस्यैव बोद्धव्यताकथनम्

कारणज्ञानात्कार्यज्ञानसिद्धये कार्यानृतत्वानुसंधानमप्युक्तमित्याह, कारणेति

**कारणज्ञानतः कार्यविज्ञानं चापि सोऽवदत् ॥ ५३= ॥**

स उद्दालकः "यथा सोम्यैकेन मृत्पिंडेन सर्वं मृण्मयं विज्ञातं स्यात्"। (छां. ६. १.४.) इति कारणज्ञानतः कार्यविज्ञानं चावदत्।

ननु मृत्सुवर्णादिकारणविज्ञानेन घटकटकादिकार्यज्ञानं कथं सिध्यतीति शंकां "कथं नु भगवः स आदेशो भवती"ति (छां. ६. १. ३.) श्रुतिप्रतिपादितामनुवदति, सत्यज्ञानेति।

**सत्यज्ञानेऽनृतज्ञानं कथमत्रोपपद्यते ॥ ५४ ॥**

ननु सत्यज्ञाने सत्यस्य मृदादिकारणस्य ज्ञाने याथार्थ्यज्ञाने सति तद्विलक्षणस्य घटादिकार्यजातस्य अनृतज्ञानं कथमुपपद्यत इति शंका ॥ ५४ ॥

कार्यस्यांशद्वयविशिष्टत्वात्तत्र कारणादेकांशेन कार्यज्ञानमुपपद्यत इति समाधत्ते, समृत्कस्येति।

**समृत्कस्य विकारस्य कार्यता लोकदृष्टितः ।**
**वास्तवोऽत्र मृदंशोऽस्य बोधः कारणबोधतः ॥ ५५ ॥**

समृत्कस्य कारणभूतमृत्सहितस्य विकारस्य घटादेः लोकदृष्टितः कार्यता भवति। अधिष्ठानसहितमारोपितं घटादि कार्यशब्देनाभिधीयते। एवं सति घटादिकार्ये मृदादिकारणांशः पृथुबुध्नोदराकारविकारांशश्चेति द्वावंशौ विद्येते। अत्र मृदंशो वास्तवः। अस्य वास्तवांशस्य बोधः कारणबोधतो भवति।

कारणज्ञाने सति कार्यगतवास्तवांशज्ञानसिद्धिरिति भावः ॥ ५५ ॥

ननु कार्यगतवास्तवांश इव अनृतांशोऽपि बोद्धव्य एवेत्याशंक्याह, अनृतेति ।

**अनृतांशो न बोद्धव्यस्तद्बोधानुपयोगतः ।**
**तत्त्वज्ञानं पुमर्थं स्यान्नानृतांशावबोधनम् ॥ ५६ ॥**

घटे विद्यमानयोः मृदंशपृथ्वादिविकारांशयोर्मध्येऽनृतांशः पृथ्वादिविकारांशो न बोद्धव्यः । कुतः? तद्बोधानुपयोगतः । अनृतांशज्ञाने प्रयोजनाभावात् । तदेव विशदयति, तत्त्वेति । तत्त्वज्ञानं आबाधितार्थज्ञानं पुमर्थं पुरुषार्थप्रयोजकं स्यात् । अनृतांशावबोधनं न पुमर्थं ॥ ५६ ॥

ननु कारणज्ञानात्कार्यज्ञानं भवतीत्युक्तौ श्रोतॄणां विस्मयो लोकेऽनुभवसिद्धः । भवदुक्तदिशा कारणज्ञानात्कार्यज्ञानमित्यस्य मृद्ज्ञानान्मृद्ज्ञानमित्यर्थे पर्यवसानाद्विस्मयस्यावकाश एव नास्तीति शंकते, तर्हीति ।

**तर्हि कारणविज्ञानात्कार्यज्ञानमितीरिते ।**
**मृद्बोधान्मृत्तिका बुद्धेत्युक्तं स्यात्कोऽत्र विस्मयः ॥५७॥**

तर्हि कारणविज्ञानात् मृदादेः ज्ञानात् कार्यविज्ञानं भवतीति ईरिते उक्ते सति मृद्बोधात् कारणभूताया मृदो ज्ञानात् मृत्तिका कार्यगतमृत्तिकांशो बुद्धा इत्युक्तं स्यात् । एवं सत्यत्र को विस्मयः ? केवलशब्दचमत्कार एव न त्वर्थविशेष इत्यर्थः ॥ ५७ ॥

यद्यपि कार्यगतसत्यासत्यांशविवेकवतां नायं विस्मयहेतुः, तथापि तद्विवेकविधुराणां विस्मयो भवत्येवेति परिहरति, सत्यमिति ।

**सत्यं कार्येषु वस्त्वंशः कारणात्मेति जानतः ।**
**विस्मयो माऽस्त्विहाज्ञस्य विस्मयः केन वार्यते ॥ ५८ ॥**

सत्यमित्यर्थांगीकारे । कार्येषु यो वस्त्वंशः पारमार्थिकांशः सः कारणात्मा कारणस्वरूप इति जानतः विदुषो विस्मयो माऽस्तु । तत्र विस्मयो नास्तीत्यसा-

भिरप्यंगीक्रियत एवेति भावः। किंत्वज्ञस्य तदनभिज्ञस्य विस्मयः केन वार्यताम्। विवेचनाविकलोऽवश्यं विस्मितो भवत्येव; तस्य सत्यांशज्ञानाभावादिति भावः॥५८॥

अज्ञकीर्तनपुरस्सरं विस्मयं दर्शयति, आरंभीति।

**आरंभी परिणामी च लौकिकश्चैककारणे।**
**ज्ञाते सर्वमतिं श्रुत्वा प्राप्नुवंत्येव विस्मयम्॥५९॥**

आरंभी आरंभवादी परिणामी परिणामवादी लौकिकश्च उक्तप्रक्रियाद्वयानभिज्ञः केवलपामरः एककारणे ज्ञाते सर्वमतिं सर्वस्य कार्यजातस्य मतिं अवबोधं श्रुत्वा सर्वस्य कार्यजातस्य ज्ञानं भवतीति ज्ञात्वा एकविज्ञानेन सर्वविज्ञानं भवतीति विज्ञायेत्यर्थः, विस्मयं प्राप्नुवन्त्येव। औद्दालके विस्मयं श्रुतिर्दर्शयति "कथं नु भगवः स आदेशो भवती"ति (छां ६. १. ३.)॥५९॥

सर्वविज्ञानश्रुतितात्पर्यकथनम्।

ननु सामान्यतः प्रवृत्तायाः सर्वविज्ञानश्रुतेः संकोचेन सत्यांशमात्रपरतया योजनं किं कारणकमित्याशंक्य श्रुतेस्सामान्यतो योजने तात्पर्याभावात्संकोचेन योजनमित्याह, अद्वैत इति।

**अद्वैतेऽभिमुखीकर्तुमेवात्रैकस्य बोधतः।**
**सर्वबोधः श्रुतौ नैव नानात्वस्य विवक्षया॥६०॥**

एकस्य सर्वजगत्कारणभूतस्य परमात्मनो बोधतः ज्ञानेन अद्वैते अभिमुखीकर्तुं सुमुखीकर्तुं छांदोग्यश्रुतौ सर्वबोधः सर्वेषां कार्याणां बोधः श्रुतः। न तु नानात्वविवक्षया नानात्वस्य द्वैतस्य बुबोधयिषया। श्रोतृणामद्वैते सुमुखीचिकीर्षया श्रुत्या कार्यकारणप्रसंगः क्रियते न तु नानात्वबुबोधयिषया। अतः श्रुतेर्वस्तुसामान्यबोधने न तात्पर्यमिति संकोचेन योजनं कृतमिति भावः॥६०॥

"यथा सोम्येकेन मृत्पिंडेने" (छां. ६. १. ४.) ति श्रुतिप्रतिपादितं दृष्टान्तं दार्ष्टांतिके योजयति, एकेति।

**एकमृत्पिंडविज्ञानात् सर्वमृण्मयधीर्यथा।**

तथैकब्रह्मबोधेन जगद्बुद्धिर्विभाव्यताम् ॥ ६१ ॥

एकमृत्पिंडविज्ञानात् घटशरावादिकार्यबहुलस्य कारणभूतस्य एकस्य मृत्पिंडस्य बोधात् सर्वमृण्मयधीः सर्वमृद्विकारजातस्य सत्यांशो मृदिति बोधो यथा भवति तथा एकब्रह्मबोधेन जगत्कारणभूतस्यैकस्य ब्रह्मणो ज्ञानेन जगद्बुद्धिः सर्वं जगत् कारणभूतेन सत्यांशेन बुद्धं भवतीति विभाव्यताम्। अनेन "यथा सोम्येकेन मृत्पिंडेन सर्वं मृण्मयं विज्ञातं स्यात्" (छां. ६.१.४.) "येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं" (छां. ६.१.२.) इति श्रुत्यर्थ उपवर्णित इति बोध्यन्। मृदो ज्ञानेन तद्विकारभूतानां घटशरावादीनां मृदंशः सत्यांश इति ज्ञायते। तथैव ब्रह्मज्ञानेन तस्मिन्नारोपितस्य जगतः सत्यांशो ब्रह्म इति ज्ञायते॥६१॥

कार्यकारणस्वरूपानिरूपणम्

कार्यकारणस्वरूपनिरूपणेन कार्यस्वरूपस्यासत्यत्वबोधनद्वारा तस्यानपेक्षतां बुबोधयिषुः कार्यकारणस्वरूपे विवेचयति, सदिति।

सच्चित्सुखात्मकं ब्रह्म नामरूपात्मकं जगत्।
तापनीये श्रुतं ब्रह्म सच्चिदानंदलक्षणम् ॥ ६२ ॥

ब्रह्म सच्चित्सुखात्मकं सच्चिदानन्दस्वरूपम्, जगत् नामरूपात्मकं विकारस्वरूपम्, "ब्रह्मैवेदं सर्वं सच्चिदानन्दमात्र" (उ. ता. ७.) मित्युत्तरतापनीये नृसिंहतापनीये ब्रह्म सच्चिदानन्दलक्षणमिति श्रुतम् ॥ ६२ ॥

विवक्षितार्थे श्रुत्यन्तराण्युदाहरति, सदिति।

सद्रूपमारुणिः प्राह प्रज्ञानं ब्रह्म बह्वृचः।
सनत्कुमार आनन्दमेवमन्यत्र गम्यताम् ॥ ६३ ॥

"सदेव सोम्य इदमग्र आसीदिति" (छां. ६.२.१.) ब्रह्मणः सद्रूपं सत्तामात्रस्वरूपं आरुणिः प्राह। बह्वृचः ऋक्शाखाध्यायिनः "प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्मे"ति (ऐत. ३.४.) चिद्रूपत्वमाहुः। "भूमत्वेन विजिज्ञासितव्यः" (छां. ७.१३.१.) इत्यारभ्य "यो भूमा तदमृतं"

इत्यन्तेन भूमशब्दाभिधेय ब्रह्म आनन्द एवेति सनत्कुमारः प्राह। एवमेव "आनन्दं ब्रह्मणो विद्वान्" इति (तै. २-४) तैत्तिरीयादिष्वन्यत्र गम्यताम्। एवं ब्रह्मणः सच्चिदानन्दरूपत्वं श्रुत्यभिहितम् ॥ ६३॥

जगतो नामरूपस्वरूपत्वे श्रौतं प्रमाणं दर्शयति, विचित्येति।

विचित्य सर्वरूपाणि कृत्वा नामानि तिष्ठति।
अहं व्याकरवाणीमे नामरूपे इति श्रुते ॥ ६४ ॥

धाता सर्वरूपाणि यथा पूर्वमकल्पयत् तथा पुनः सर्जनाय विचित्य तेषां नामानि कृत्वा तिष्ठति। "सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाऽभिवदन् यदास्ते" इति पुरुषसूक्ते। इमे नामरूपे अहं व्याकरणवाणीति "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी"ति (छां. ६. ३. २.) श्रुते श्रुत्या प्रदर्शिते ॥६४

"तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियताऽसौ नामाऽयमिदं रूप"मिति (बृ. १. ४. ७.) श्रुत्या सृष्टस्य जगतो नामरूपात्मकत्वं दर्शितमिति तां श्रुतिमर्थतः पठति, अव्याकृतमिति।

अव्याकृतं पुरा सृष्टेरूर्ध्वं व्याक्रियते द्विधा।
अचिन्त्यशक्तिर्मायैषा ब्रह्मण्यव्याकृताभिधा ॥ ६५ ॥

सृष्टेः पुरा इदं जगदव्याकृतं अनभिव्यक्तनामरूपात्मकं किंचिदासीत् किंचिद्रूपेणासीत्। सृष्टेरूर्ध्वं सृष्टिसमये द्विधा नामरूपभावेन व्याक्रियते व्यक्तीक्रियते। "विस्पष्टं नामरूपाविशेषावधारणमर्यादं व्यक्तभावमापद्यत" इत्यर्थः। प्रागुत्पत्तेर्जगत् बीजावस्थमासीत्। तदा अप्रत्यक्षत्वात् परोक्षतया तच्छब्देनाभिधीयते। सृष्टिसमये व्याकृतनामरूपात्मकमासीत्। प्रत्यक्षत्वादिदं शब्देन चाभिधीयते। सृष्टेः पूर्वं यदव्याकृतावस्थमासीत्तदेव सृष्टिसमये व्याकृतावस्थमित्यवगम्यते। परोक्षप्रत्यक्षावस्थस्य जगतः एकत्वमेवोच्यते। तदेवेदं इदमेव तदव्याकृतमासीदिति। "तद्धेदं तर्ह्यव्याकृतमासीत्" इत्यत्र अव्याकृतशब्दार्थमाह, अचिन्त्येति। अचिन्त्यशक्तिः यस्याः शक्तिरिदमित्थमिति मनसाप्यवगन्तुमशक्या ब्रह्मणि स्थिता सैषा माया अव्याकृताभिधा अव्याकृतेति नाम्ना अभिधीयते ॥ ६५ ॥

"नामरूपाभ्यामेव व्याक्रियत"इत्यस्यार्थमाह, अविक्रियेति ।

**अविक्रियब्रह्मनिष्ठा विकारं यात्यनेकधा ।**
**मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥ ६६ ॥**

अविक्रियब्रह्मनिष्ठा विकाररहिते परे ब्रह्मणि या नितरां स्थिता सा अव्याकृताभिधा माया अनेकधा विकारं याति, अचिन्त्यशक्तित्वात् । माया ब्रह्मणि वर्तत इत्यत्र प्रमाणमाह, मायामिति । अस्यार्थः ४–२, ६–१२३ श्लोकयोः व्याख्यातः ॥ ६६ ॥

आकाशस्वरूपविचारः ।

जगतो व्याकरणविधौ मायोपहतस्य ब्रह्मणः प्रथमकार्यमाह, आद्य इति ।

**आद्यो विकार आकाशः सोऽस्ति भात्यपि च प्रियः ।**
**अवकाशस्तत्स्वरूपं तन्मिथ्या न तु तत्त्रयम् ॥ ६७ ॥**

मायाया आद्यो विकारः आकाशः । स आकाशः अस्ति भाति प्रियश्च इति व्यवहारो लोके दृश्यते । अस्तीति ब्रह्मलक्षणं । भातीति चैतन्यधर्मः । प्रिय इत्यानंदधर्मः । एवमाकाशः सच्चिदानन्दरूपः तत्स्वरूपं त्ववकाशो विकारात्मकः तत्स्वरूपं मिथ्या तत्त्रयं अस्ति भाति प्रिय इति कारणधर्मत्रयं तु न मिथ्या । अत्र २–६१–६९ श्लोका अवलोकितव्याः ॥६७॥

अवकाशस्य मिथ्यात्वे उपपत्तिं दर्शयति, नेति ।

**न व्यक्तेः पूर्वमस्त्येव न पश्चाच्चापि नाशतः ।**
**आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ॥ ६८ ॥**

व्यक्तेः व्याकरणात् पूर्वं नास्त्येव; अनुपलंभात् । पूर्वमपि सत्त्वे आद्यक्षण-संबंधरूपाया उत्पत्तेस्तदानीमसंभवाच्चेति भावः "सदेव सोम्य........अग्र आसीदि" (छां. ६.२.१.) त्यवधारणाबलाच्च । नाशतः पश्चाच्चापि नास्ति, नष्टत्वात् । ननु उत्पत्तिविनाशयोर्मध्ये प्रतीयमानस्याकाशस्यावस्तुत्वं वक्तुं कथं शक्यत इत्यत

आह, आदाविति। आदौ उत्पत्तेः पूर्वं अन्ते च नाशनानन्तरं यन्नास्ति यस्य प्रागभावप्रध्वंसाभावयोर्मध्येऽवभासनं तद्वर्तमानेऽपि तथा अविद्यमानमेवेत्यर्थः ॥६८॥

अत्र गीतावाक्यमुदाहरति, अव्यक्तेतति।

**अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत!।**
**अव्यक्तनिधनान्येवेत्याह कृष्णोऽर्जुनं प्रति ॥ ६९ ॥**

हे भारत! भूतानि प्राणिकोटयः अव्यक्तादीनि अज्ञातः आदिर्येषां तानि तथा भूतानि। व्यक्तमध्यानि व्यक्तः आविष्कृतः उत्पत्तिविनाशयोर्मध्यघटितभागो येषां तानि। अव्यक्तनिधनान्येव अव्यक्तं अनाविष्कृतं निधनं नाशनं येषां तानि एवेति श्रीकृष्णः अर्जुनं प्रत्याह ॥ ६९ ॥

सच्चिदानन्दरूपस्य सत्त्वेऽनुभूतिरेव प्रमाणमित्याह, मृद्वदिति।

**मृद्वत्ते सच्चिदानन्दा अनुगच्छन्ति सर्वदा।**
**निराकाशे सदादीनामनुभूतिर्निजात्मनि ॥ ७० ॥**

मृद्वत् मृत्कार्ये घटादिस्थले कालत्रयेऽपि यथा मृदनुवर्तते तथा सत्कार्यभूतेष्वाकाशादिषु सर्वदा कालत्रयेऽपि ते सच्चिदानंदा अनुगच्छन्ति। कथमिदं ज्ञायत इत्यत आह, निराकाश इति। निराकाशे सति बुद्ध्या आकाशांशस्य अवकाशे मिथ्यात्वेन विवेचिते सति निजात्मनि सदादीनामनुभूतिर्दृश्यते ॥ ७०॥

अमुमेवार्थं प्रपंचयति, अवकाश इति।

**अवकाशे विस्मृतेऽथ तत्र किं भाति ते वद।**
**शून्यमेवेति चेदस्तु नाम तादृग्विभाति हि ॥ ७१ ॥**

आकाशस्य स्वीयस्वरूपे अवकाशे विस्मृते सति अथ अनन्तरं ते किं भाति वद। आकाशे कारणादागताः सच्चिदानन्दा धर्माः; स्वीयो धर्मोऽवकाशः। अन्त्ये मिथ्यात्वेन विस्मृते सति सच्चिदानन्दा एवावशिष्यन्त इति गूढाभिसंधिः। प्रतिवादिनश्चोद्यमनुवदति, शून्यमिति। अवकाशे विस्मृते सति शून्यमेव भातीति चेत्, अंगीकृत्य परिहरति, अस्त्विति। शून्यमेवास्तु। तत्र विद्यमानस्य वस्तुनः

शून्यमिति नामास्तु नाम। तथापि तादृक् शून्यशब्दाभिधेयतया विशेष्यभूतं किंचिद्वस्तु विभाति प्रकाशते हि। अवकाशाभावरूपविशेषणस्य विशेष्याभावेऽविद्यमानत्वात् तस्यास्तित्वमवश्यमभ्युपेयम्। यथा घटाभाववद्भूतलमित्यत्र घटाभाववदिति विशेषणस्य भूतलमिति विशेष्याभावे निरर्थकता स्यात्। अतो विशेषभूतस्यावकाशाभावस्यार्थतोऽस्तित्वमवश्यमभ्युपगन्तव्यम्। एवं सति भवदुक्तशून्यशब्दवाच्येऽपि सत्तारूपधर्मोऽङ्गीक्रियते। एवमाकाशादिभूतपञ्चकस्य निस्तत्त्वरूपतापि द्वितीयाध्याये ६०–९५ श्लोकेषु समग्रं विवृतेत्यत्र सामान्यतः प्रसक्तानुप्रसक्त्या सूचितेति ज्ञेयम् ॥ ७१ ॥

स्वरूपसुखलक्षणविचारः।

तस्य सत्ता किमित्यंगीक्रियत इत्यत आह, तादृगिति।

**तादृक्त्वादेव तत्सत्त्वमौदासीन्येन तत्सुखम्।**
**आनुकूल्यप्रातिकूल्यहीनं यत्तन्निजं सुखम् ॥ ७२ ॥**

तादृक्त्वादेव तत्सत्वं। तादृक्त्वात् अवकाशाभावविशेष्यतया प्रतीयमानत्वात् भवदुक्तशून्यशब्दाभिधेयत्वाच्च तत्सत्वं निश्चीयते। नन्वस्तु तस्य सत्त्वम्; तस्य सुखरूपत्वं कथमित्याशंक्याह, औदासीन्येति। तत्सुखम् औदासीन्येन विषयानवगाहित्वात् तत्सुखं भवति। ननु उदासीनरूपं सुखं न स्यात्, तस्यानुकूलतया वेद्यत्वाभावादित्यत्र आह, "आनुकूल्ये"ति। आनुकूल्यप्रातिकूल्यहीनं यत्सुखं विद्यते तन्निजं सुखं स्वरूपसुखं भवति। अनुकूलतया वेदनीयं सुखमिति पुरोक्तं लक्षणं तु वैषयिकसुखस्य। न तु स्वरूपसुखस्य। स्वरूपसुखस्य त्वानुकूल्यप्रातिकूल्यराहित्यमेव लक्षणम्। तत्प्रकृतेऽस्तीति भावः ॥ ७२ ॥

स्वरूपसुखे उभयराहित्यं व्यतिरेकेण दर्शयति, आनुकूल्य इति।

**आनुकूल्ये हर्षधीः स्यात्प्रातिकूल्ये तु दुःखधीः।**
**द्वयाभावे निजानन्दो निजदुःखं न तु क्वचित् ॥ ७३ ॥**

आनुकूल्ये सति हर्षधीः संतोषः स्यात्। प्रातिकूल्ये तु दुःखधीः दुःखं वानुभूयते। संतोषाभावादानुकूल्याभावः, दुःखाभावात् प्रातिकूल्याभाव इति भावः।

द्वयाभावे संतोषदुःखयोरभावे निजानन्दोऽनुभूयते। सुखदुःखान्तरालेषु विद्यमाने औदासीन्ये निजानन्दभानस्याखिलजनानुभूतिसिद्धत्वात्। उपाधिविरहितो निजानन्दस्वरूप इत्यर्थः। अत्रैकादशप्रकरणोक्तानन्दभेदविवक्षामकृत्वानन्दस्वरूपसुखलक्षणस्य प्रतिपिपादयिषयैव वैषयिकसुखाद्यस्पृष्टं स्वरूपं सुखं निजानन्दशब्देनाभिहितम्। तस्य निजदुःखत्वमेव किं न स्यादित्याशंक्य निजदुःखं शशशृंगायमाणमिति परिहरति, निजेति। क्वचिदपि निजदुःखं न। दुःखे निजत्वस्य कुत्राप्यभावात्। आनन्दे स्वभावसिद्धत्वं तु ब्रह्मानन्दे प्रसिद्धमिति भावः ॥ ७३॥

ननु निजानन्दस्य नित्यत्वादानन्दरूपत्वाच्च सदा हर्ष एव स्यात्, न तु शोकः। किंच तत्र हर्षस्यापि सत्वात्तदनुरोधेनानुकूल्यस्य निश्चेतुं शक्यत्वात्पूर्वोक्तनिजानन्दलक्षणमसंभवग्रस्तमित्याशंक्य परिहरति, निजानन्देति।

निजानन्दे स्थिरे हर्षशोकयोर्व्यत्ययः क्षणात्।
मनसः क्षणिकत्वेन तयोर्मानसतेष्यताम् ॥ ७४ ॥

निजानन्दे स्थिरेऽपि मनसः क्षणिकत्वेन चंचलत्वात् हर्षशोकयोः क्षणात् व्यत्ययः विनिमयः संभवति। अतस्तयोः सुखदुःखयोः मानसता मनसः संबंधता मनोधर्मत्वं इष्यतां। अयं भावः। यदि निजानन्दे हर्षः स्यात्तदा तस्य नित्यत्वात्सदा हर्ष एव स्यात्। हर्षस्तु न निजानन्दधर्मः। अपि तु मनोधर्मः। तस्य क्षणिकत्वात्तद्धर्मस्य हर्षस्यापि क्षणिकत्वान्न नित्यत्वप्रसंगः। एवं च तदभावदशायां शोकस्याप्यवकाशोऽस्त्येव। हर्षस्य मनोधर्मत्वाभ्युपगमेन हर्षप्रयोजकानुकूल्यमपि निजानन्देऽस्तीति लक्षणमपि नासंभवग्रस्तमिति ॥ ७४ ॥

एवमाकाशे कारणगतसत्ताभानयोरनुगमं प्रतिवादिनाऽङ्गीकारयित्वा तद्दृष्टान्तेन कारणीभूतब्रह्मानन्दस्यापि कार्यभूते आकाशेऽङ्गीकार इत्याह, आकाश इति।

आकाशेऽप्येवमानन्दः सत्ताभाने तु सम्मते ॥ ७४॥ ॥

एवं पूर्वोक्तदृष्टान्तवशादाकाशेऽप्यानन्दोऽनुगतो विद्यत एवेत्यर्थः। ननु तयोर्दृष्टान्तत्वं न घटते, तत्राप्यनुगमस्यासिद्धत्वादित्यत आह, सत्तेति।

सत्ताभाने तु सम्मते । दृष्टान्तभूते ते सम्मते । शून्यं भातीति वदता त्वयांगीकृते एव अतस्तयोर्दृष्टान्तत्वे विप्रतिपत्तिर्नास्तीति भावः ॥ ७४॥

आकाशे इव वाय्वादिष्वेवमेव सत्ताद्यनुगमोऽवगम्यतामित्याह, वाय्विति ।

वाय्वादिदेहपर्यन्तं वस्तुष्वेवं विभाव्यताम् ॥ ७५ ॥

स्पष्टोऽर्थः ॥ ७५ ॥

तत्र वाय्वादीनां स्वीयान् धर्मानुदाहरति, गतीति ।

गतिस्पर्शौ वायुरूपं वह्नेर्दाहप्रकाशने ।
जलस्य द्रवता भूमेः काठिन्यं चेति निर्णयः ॥ ७६ ॥

असाधारणं आकार औषध्यन्न वपुष्यपि ।
एवं विभाव्यं मनसा तत्तद्रूपं यथोचितम् ॥ ७७ ॥

रूपं असाधारणं रूपं । स्पष्टमन्यत् ॥ ७६, ७७ ॥

फलितमाह, अनेकधेति ।

अनेकधा विभिन्नेषु नामरूपेषु चैकधा ।
तिष्ठन्ति सच्चिदानन्दा विसंवादो न कस्यचित् ॥७८॥

सुलभा पदयोजना, सच्चिदानन्दाः कारणधर्मा एकधा नियतं तिष्ठन्ति । चेतनाचेतनेषु सर्वेषु सच्चिदानन्दा अनुवर्तन्ते । तेषां नामरूपे तु व्यावर्तेते । यत्सर्ववस्तुष्वनुवर्तते तत्सत्यं । यद्व्यावर्तते तदसत्यं । अतः सच्चिदानन्दाः सत्यस्वरूपाः । नामरूपे असत्यस्वरूपे इति भावः ॥ ७८ ॥

नामरूपयोः काल्पनिकत्वकथनम् ।

असत्यभूतयोर्नामरूपयोः प्रतीयामानयोः किं रूपमित्यत आह, निस्तत्वे इति ।

निस्तत्वे नामरूपे द्वे जन्मनाशयुते च ते ।
बुद्ध्या ब्रह्मणि वीक्षस्व समुद्रे बुद्बुदादिवत् ॥ ७९ ॥

नामरूपे द्वे निस्तत्त्वे निरस्ततत्त्वे कल्पिते । कुतः? ते जन्मनाशयुते । जायेते विनश्येते । अतो वर्तमानेऽप्यविद्यमाने । तर्हि ते कुत्र कल्पिते इत्याकांक्षायामाह, बुद्ध्येति । समुद्रे बुद्बुदादिवत् यथा समुद्रजले फेनतरंगतुषारादिकं कल्पितं बुद्ध्या वीक्ष्यते तथैव ते नामरूपे ब्रह्मणि कल्पित इति बुद्ध्या वीक्षस्व जनीहि ॥ ७९ ॥

किं तेन ब्रह्मवीक्षणेनेत्यत आह, सच्चिदिति ।

सच्चिदानन्दरूपेऽस्मिन् पूर्णे ब्रह्मणि वीक्षिते ।
स्वयमेवावजानाति नामरूपे शनैः शनैः ॥ ८० ॥

स्पष्टोऽर्थः । अत्र २-७७ श्लोकः समवलोकनीयः ॥ ८० ॥

नामरूपयोरवज्ञाफलकथनम् ।

अवज्ञाफलमाह, यावदिति ।

यावद्यावदवज्ञा स्यात्तावत्तावत्तदीक्षणम् ।
यावद्यावद्वीक्ष्यते तत्तावत्तावदुभे त्यजेत् ॥ ८१ ॥

स्पष्टोऽर्थः ॥ ८१ ॥

एवमभ्यासस्य फलमाह, तदिति ।

तदभ्यासेन विद्यायां सुस्थितायामयं पुमान् ।
जीवन्नेव भवेन्मुक्तो वपुरस्तु यथा तथा ॥ ८२ ॥

स्पष्टोऽर्थः ॥ ८२ ॥

ब्रह्माभ्यासस्वरूपविचारः ।

इदानीं ब्रह्माभ्यासस्वरूपमाह, तदिति ।

तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् ।
एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ॥ ८३ ॥

अयं श्लोकः ७-१०६ श्लोके व्याख्यातः ॥ ८३ ॥

ननु कादाचित्कब्रह्मज्ञानाभ्यासेऽनादिद्वैतवासना कथं निवर्तेत इत्यत आह, वासनेति ।

वासनाऽनेककालीना दीर्घकालं निरन्तरम् ।
सादरं चाभ्यस्यमाने सर्वथैव निवर्तते ॥ ८४ ॥

अनेककालीना प्रपञ्चस्यानादित्वात् । स्पष्टमन्यत् ॥ ८४ ॥

मायाशक्तेरनेकविकारोत्पादकत्वकथनम् ।

नन्वेकस्य परब्रह्मणोऽनेकविधजगत्कारणत्वं नो घटत इत्याशंक्याह, मृदिति ।

मृच्छक्तिवद्ब्रह्मशक्तिरनेकाननृतान् सृजेत् ।
यद्वा जीवगता निद्रा स्वप्नश्चात्र निदर्शनं ॥ ८५ ॥

सुलभा पदयोजना । मृच्छक्तिमायाशक्त्योः सत्यासत्यत्वभेदेन वैलक्षण्याद्दृष्टान्तस्य वैलक्षण्यमाशंक्य दृष्टान्तान्तरमाह, यद्वेति ॥ ८५ ॥

निद्रादृष्टान्तं विवृणोति, निद्राशक्तिरिति ।

निद्राशक्तिर्यथा जीवे दुर्घटस्वप्नकारिणी ।
ब्रह्मण्येषा स्थिता माया सृष्टिस्थित्यन्तकारिणी ॥ ८६ ॥

सुगमा पदयोजना ॥ ८६ ॥

दुर्घटस्वप्नकारित्वं स्पष्टयति, स्वप्न इति ।

स्वप्ने वियद्गतिं पश्येत्स्वमूर्धच्छेदनं तथा ।
मुहूर्ते वत्सरौघं च मृतपुत्रादिकं पुनः ॥ ८७ ॥

मंचोपरि निद्रायमाणः पुरुषः पश्येदित्यन्वयः । स्पष्टमन्यत् ॥ ८७ ॥

स्वप्नस्य दुर्घटत्वे हेतुमाह, इदमिति ।

इदं युक्तमिदं नेति व्यवस्था तत्र दुर्लभा ।
यथा यथेक्ष्यते यद्यत्तत्तद्युक्तं तथा तथा ॥ ८८ ॥

स्पष्टोऽर्थः ॥ ८८ ॥

उत्पादविनाशशालित्वेनानित्यायाः निद्राशक्तेरेवं दुर्घटकार्यकारित्वे सति किमुत मायाशक्तेरित्याह, ईदृश इति ।

**ईदृशो महिमा दृष्टो निद्राशक्तेर्यथा तथा ।**
**मायाशक्तेरचिन्त्योऽयं महिमेति किमद्भुतम् ॥ ८९ ॥**

निद्राशक्तेरीदृशो महिमा यथा दृष्टः तथा मायाशक्तेरयं महिमा अघटितघटनापटीयस्त्वरूपः अचिन्त्यः मनसोऽतीत इत्युक्ते किमद्भुतं न किमपीत्यर्थः ॥ ८९ ॥

माया ब्रह्मणि विकाराननेकान् कल्पयतीत्याह, शयान इति ।

**शयाने पुरुषे निद्रा स्वप्नं बहुविधं सृजेत् ।**
**ब्रह्मण्येवं निर्विकारे विकारान् कल्पयत्यसौ ॥ ९० ॥**

स्पष्टोऽर्थः ॥ ९० ॥

मायाकृतनानासृष्टिप्रकारं प्रदर्शयति, खेति ।

**खानिलाग्निजलोर्व्यण्डलोकप्राणिशिलादिकाः ।**
**विकाराः प्राणिधीष्वन्तश्चिच्छाया प्रतिबिंबिता ॥ ९१ ॥**

अंडः ब्रह्मांडः, लोकाः सत्यादयः प्राणिनो जीवराशयः । इत्यादयो विकारा अधिष्ठाने ब्रह्मणि मायया कल्पिताः । तेषु चेतनाचेतनविभागप्रयोजकं दर्शयति । प्राणिधीषु प्राणिनां धीषु बुद्धिषु अन्तः चिच्छाया चितः चैतन्यस्य छाया प्रतिबिंबिता भवति । प्राणिषु चिद्व्याप्तेः चिदाभासव्याप्तेश्च सत्त्वाच्चितः स्फुटतया भानाच्चेतनत्वव्यवहारः । वृक्षादिष्वन्तःकरणस्याभानाच्चिदाभासव्याप्तेरनभिव्यक्तत्वाच्चिन्मात्रस्यैव व्याप्त्या तत्र चितोऽस्फुटत्वेन तेष्वचेतनत्वेन व्यवहारः । तत्रापि चैतन्यान्तःकरणयोरस्तित्वं बोसमहाशयेनापि *(J. C. Bose)* निश्शंकं सिद्धान्तीकृतम् । अचेतना इत्यस्यास्फुटचैतन्यवन्त इत्येवार्थः न तु चैतन्याभाववन्त इति । चितः सर्वव्यापकत्वेन तदभावस्य दुरुपपादत्वात् । एवं चेतनाचेतनविभागः

सुकर इति भावः ॥ ९१ ॥

ननु लोके चेतनाचेतनत्वविभागश्चैतन्यतदभावकृत इत्याशंक्य परिहरति चेतनेति ।

**चेतनाचेतनेष्वेषु सच्चिदानन्दलक्षणम् ।**
**समानं ब्रह्म भिद्येते नामरूपे पृथक् पृथक् ॥ ९२ ॥**

एषु चेतनाचेतनेषु सच्चिदानन्दलक्षणं ब्रह्माधिष्ठानं समानमेव, सर्वोपादानत्वात् । उपादानस्य तत्कार्येष्वननुगमो न क्वापि दृष्टः । तेन चैतन्याभावस्तत्रास्तीति दुर्निरूपः । अतः पूर्वोक्त एव विभाग उचित इति भावः । किं तु नामरूपे पृथक् पृथक् भिद्येते ॥ ९२ ॥

नामरूपयोरुपेक्षायां ब्रह्मज्ञानसिद्धिः ।

ब्रह्मणि नामरूपयोः कल्पितत्वात् तयोरुपेक्षायां सच्चिदानन्दधीर्भवतीत्याह, ब्रह्मणीति ।

**ब्रह्मण्येते नामरूपे पटे चित्रमिव स्थिते ।**
**उपेक्ष्य नामरूपे द्वे सच्चिदानन्दधीर्भवेत् ॥ ९३ ॥**

पटे चित्रमिव एते नामरूपे ब्रह्मणि स्थिते आरोपिते इत्यर्थः । कथमेवमवगम्यत इत्यत आह, उपेक्ष्येति । द्वे नामरूपे उपेक्ष्य मिथ्यात्वबुद्ध्याऽनादृत्य नामरूपयोरुपेक्षायां सर्वत्र सच्चिदानन्दधीः सर्वं जगत् सच्चिदानन्दस्वरूपमिति बुद्धिर्भवेत् ॥ ९३ ॥

उक्तार्थे दृष्टान्तं दर्शयति, जलस्थ इति ।

**जलस्थेऽधोमुखे स्वस्य देहे दृष्टेऽप्युपेक्ष्य तम् ।**
**तीरस्थ एव देहे स्वे तात्पर्यं स्याद्यथा तथा ॥ ९४ ॥**

जलस्थेऽधोमुखे तीरगतमनुष्यदेहे तटाकजलेऽधोमुखेन प्रतिफलिते । तीरस्थे एवेति च्छेदः । स्पष्टमन्यत् ॥ ९४ ॥

दृष्टान्तान्तरमपि दर्शयति, सहस्रश इति ।

सहस्रशो मनोराज्ये वर्तमाने सदैव तत् ।
सर्वैरुपेक्ष्यते यद्वदुपेक्षा नामरूपयोः ॥ ९५ ॥

मनःकल्पितं वस्तुजातमिव नामरूपे निरसनीये इति भावः ॥ ९५ ॥

तमेवार्थंप्रप्रंचयति, क्षण इति ।

क्षणे क्षणे मनोराज्यं भवत्येवान्यथाऽन्यथा ।
गतं गतं पुनर्नास्ति व्यवहारो बहिस्तथा ॥ ९६ ॥

मनोराज्यं अन्तःसंभावितं मनोरथकल्पितवस्तुजातं क्षणे क्षणे प्रतिक्षणं अन्यथाऽन्यथा भवत्येव । उत्पद्यते विलीयते च । गतं गतमेव पुनर्नास्ति । बहिर्व्यवहारोऽपि तथैव भवति । जाग्रत्यात्मव्यतिरिक्तानि वस्तून्युत्पद्यन्ते विनश्यन्ति चेति भावः ॥ ९६ ॥

गतं गतं पुनर्नास्तीति पूर्वोक्तं विवृणोति, नेति ।

न बाल्यं यौवने लब्धं यौवनं स्थाविरे तथा ।
मृतः पिता पुनर्नास्ति नाऽऽयात्येव गतं दिनम् ॥ ९७ ॥

स्पष्टोऽर्थः । स्थाविरं वार्धक्यं ॥ ९७ ॥

लौकिकस्य मनोराज्यादविशेषमाह, मन इति ।

मनोराज्याद्विशेषः कः? क्षणध्वंसिनि लौकिके ॥ ९७ ॥

क्षणध्वंसिनि अतिस्वल्पकाले नाशनशीले स्पष्टमन्यत् ॥ ९७ ॥

एवं लौकिकव्यवहारस्य क्षणभंगुरत्वसाधने प्रयोजनमाह, अत इति ।

अतोऽस्मिन् भासमानेऽपि तत्सत्यत्वधियं त्यजेत् ॥ ९८ ॥

अतः अस्मिन् द्वैते जगति सत्यमिव भासमाने प्रतीयमानेऽपि तत्सत्यत्वधियं तस्य द्वैतस्य सत्यत्वबुद्धिं त्यजेत् ॥ ९८ ॥

द्वैतसत्यत्वधीपरित्यागे प्रयोजनमाह, उपेक्षित इति ।

उपेक्षिते लौकिके धीर्निर्विघ्ना ब्रह्मचिन्तने ।
नटवत् कृतिमास्थाय निर्वहत्येव लौकिकम् ॥ ९९ ॥

लौकिके द्वैते उपेक्षिते सति ब्रह्मचिन्तने धीर्निर्विघ्ना निरातंका भवति । अपेतचित्तविक्षेपत्वात् ब्रह्मणि चित्तैकाग्र्यं भवतीति भावः । ननु तथा सति ब्रह्मनिष्ठस्य लौकिकव्यवहारो न स्यादित्याशंक्याह, नटवदिति । नटवत् रामादिवेषधारी नट इव कृतिं तत्तत्पात्रोचितकार्यानुकरणं आस्थाय निर्वहति । तथा ज्ञानी लौकिकं व्यवहारं निर्वहत्येव । पात्रोचितशोकमोहादिकमभिनयन्नपि नटः स्वयं न तेन लिप्यते । तथैव ब्रह्मानुसंधानसन्निविष्टचित्तो ज्ञानी कृत्रिमत्वेन निश्चितमपि लोकव्यवहारं करोति । नटवत् कृतिमास्थायेत्यत्र "कृत्रिमास्थाया"मिति पाठः प्रचुरः । कृत्रिमा च सा आस्था व्यवसायः तस्यां लौकिकं निर्वहत्येवेत्यत्र पदयोजना । मिथ्याव्यवसायी भूत्वेत्यर्थः । प्रथमः पाठ एव साधीयानित्यत्र गृह्यते । यथा वेषधारी पात्रोचितशोकमोहादिकार्यमनुकरोति तथा ब्रह्मज्ञान्यप्यज्ञान्यनुकरणमवलंब्य व्यवहारं निर्वहतीत्यर्थः ॥ ९९ ॥

एवं ज्ञानिनो व्यवहारांगीकारे प्रसक्तं विकारित्वं परिहरति, प्रवहत्यपीति ।

प्रवहत्यपि नीरेऽधः स्थिरा प्रौढशिला यथा ।
नामरूपान्यथात्वेऽपि कूटस्थं ब्रह्म नान्यथा ॥ १०० ॥

उपरि नीरे प्रवहत्यपि अधः प्रौढशिला अकंपनीया यथा स्थिरा तथा नामरूपान्यथात्वेऽपि उपर्यारोपितानां नामरूपाणामन्यथात्वेऽपि विकारस्वरूपत्वेऽपि कूटस्थं अधिष्ठानभूतं कूटमिव स्थैर्यमापन्नं ब्रह्म अन्यथा विकारवन्न भवति । बहिर्दृश्यमानचांचल्यादिकं यथा जलस्यैव न तु तदन्तर्गतशिलायास्तथा विकारस्सर्वोऽपि बुद्धेरेव न तु तत्स्थस्य ब्रह्मण इति भावः ॥ १०० ॥

नामरूपावगमनाय ब्रह्मावगतिरवश्या ।

मिथ्याभूतमिदं जगदखंडे ब्रह्मणि कथं प्रतीयत इत्याशंक्याह, निश्छिद्र इति ।

निश्छिद्रे दर्पणे भाति वस्तुगर्भं बृहद्वियत् ।

सच्चिद्घने तथा नानाजगद्गर्भमिदं वियत् ॥ १०१ ॥

यथा निश्छिद्रे अवकाशरहिते दर्पणे वस्तुगर्भं बहूनि वस्तूनि गर्भे यस्य सन्ति तत् बृहत् वियत् भाति प्रतिबिंबतया प्रतीयते तथा नानाजगद्गर्भं अनेकानि जगन्ति यस्य गर्भे सन्ति तदिदं वियत् सच्चिद्घने सच्चित्स्वरूपे परे ब्रह्मणि भाति आरोपितत्वेनावभासते। परे ब्रह्मणि निश्छिद्रत्वसूचको घनशब्दः। निबिडीकृतरसघने सांद्रानन्दस्वरूपे परे ब्रह्मणि वस्त्वन्तरस्यान्तःप्रवेशो वस्तुतो नास्तीति भावः ॥१०१॥

यथा प्रतिबिंबस्य दर्शनाय दर्पणं दृश्यते तथैव नामरूपयोरवगमनाय सच्चिदानन्दस्वरूपमवश्यमवेक्षणीयमित्याह, अदृष्टेति।

अदृष्ट्वा दर्पणं नैव तदन्तस्थेक्षणं तथा।
अमत्वा सच्चिदानन्दं नामरूपमतिः कुतः ॥ १०२ ॥

दर्पणमदृष्ट्वा तदंतस्थेक्षणं तस्यान्तःस्थितस्य प्रतिबिंबस्येक्षणं नैव संभवति। तथा सच्चिदानन्दं परं ब्रह्म अमत्वा नामरूपमतिः तयोर्ज्ञानं कुतः सिध्यति? ॥१०२

ननु नामरूपयोः प्रतीतयोः सत्योः कथं निर्विषयब्रह्मावगतिरित्याशंक्याह, प्रथममिति।

प्रथमं सच्चिदानन्दे भासमानेऽथ तावता।
बुद्धिं नियम्य नैवोर्ध्वं धारयेन्नामरूपयोः ॥ १०३ ॥

प्रथमं सच्चिदानन्दे ब्रह्मणि भासमाने सति अथ पश्चात् तावता तावन्मात्रेण बुद्धिं नियम्य तत ऊर्ध्वं तस्मिन् कल्पितयोर्नामरूपयोर्नैव बुद्धिं धारयेत्। कल्पितनामरूपात्मके प्रपंचे सच्चिदानन्दमात्रं बुद्ध्वा गृहीत्वा नामरूपयोर्बुद्धिं न धारयेदित्यर्थः ॥ १०३ ॥

प्रकरणस्य फलकथनम्।

एवं कृते सर्वद्वैतनाश इत्याह, एवमिति।

एवं च निर्जगद्ब्रह्म सच्चिदानन्दलक्षणम्।
अद्वैतानन्द एतस्मिन् विश्राम्यन्तु जनाश्चिरम् ॥ १०४॥

एवं च सच्चिदानन्दलक्षणं परं ब्रह्म निर्जगत् जगतो निर्गतं अपास्तद्वैत-मित्यर्थः । एतस्मिन् अद्वैतानन्दे जनाः मुमुक्षुवः चिरं विश्राम्यंतु संसारविश्रान्ति-लक्षणमोक्षसुखमनुभवन्तु ॥ १०४ ॥

प्रकरणमुपसंहरति, ब्रह्मेति ।

**ब्रह्मानन्दाभिधे ग्रन्थे तृतीयोऽध्याय ईरितः ।**
**अद्वैतानन्द एव स्याज्जगन्मिथ्यात्वचिन्तया ॥ १०५ ॥**

ब्रह्मानन्दाभिधे ग्रन्थे तृतीयोध्यायः ईरितः । जगन्मिथ्यात्वचिन्तया समस्तद्वैते ध्वस्ते सति अद्वैतानन्द एव निष्प्रपंचपरिपूर्णानन्द एव स्यात् चित्त-वृत्तौ भाति ॥ १०५ ॥

इति
श्रीमत्परमहंसपरिव्राजकाचार्यशृंगेरीश्रीविरूपाक्षश्रीविद्याशङ्करपदमावेशप्रकाशित
जगद्गुरु श्रीकल्याणानन्दभारतीमान्ताचार्यात्यन्तप्रियान्तेवासिनालि
गोत्रसमुद्भूतेन **लिङ्गनसोमयाजिना** विरचितेयं पञ्चदश्यां
ब्रह्मानंदे अद्वैतानंदाख्यप्रकरणस्य कल्याणपीयूषव्याख्या समाप्ता ॥
इति ब्रह्मानंदे अद्वैतानंदाख्यप्रकरणम् ।

*

अथ

# कल्याणपीयूषव्याख्यासमेता पंचदशी

---

## ब्रह्मानन्दे - विद्यानन्दप्रकरणम् ॥ १४ ॥

विद्यानन्दस्वरूपविचारः ।

योगेनात्मविवेकेन द्वैतमिथ्यात्वचिन्तया ।
ब्रह्मानन्दं पश्यतोऽथ विद्यानन्दो निरूप्यते ॥ १ ॥

योगेन दुःखसंयोगवियोगो योगः (१०–१०७), "शनैःशनैरुपरमेदि"त्यादि-श्लोकषट्केनोक्तः तेन । आत्मविवेकेन द्वैतमिथ्यात्वचिन्तया च ब्रह्मानन्दं पश्यतोऽनुभवतो विद्यानन्दोऽथास्मिन् प्रकरणे निरूप्यते। विद्यानन्दस्य ब्रह्मानन्दादीनामेकतमत्वमेकादशप्रकरणे एकादशश्लोकेनोक्तम् ॥ १ ॥

तत्स्वरूपं विशदयति, विषयेति ।

विषयानन्दवद्विद्यानन्दो धीवृत्तिरूपकः ।
दुःखाभावादिरूपेण प्रोक्त एष चतुर्विधः ॥ २ ॥

स्पष्टोऽर्थः ॥ २ ॥

विद्यानन्दस्य चातुर्विध्यविचारः ।

उक्तं चातुर्विध्यं प्रदर्शयति, दुःखेति ।

दुःखाभावश्च कामाप्तिः कृतकृत्योऽहमित्यसौ ।
प्राप्तप्राप्योऽहमित्येवं चातुर्विध्यमुदाहृतम् ॥ ३ ॥

तृप्तिदीपे ३२–३३ श्लोकयोर्व्याख्यातोऽयंश्लोकः ॥ ३ ॥

तत्रोक्तानां सप्तावस्थानां कूटस्थविषयकत्वं चिदाभासस्यानुभूयमानत्वं च ४३ श्लोकपर्यन्तं प्रदर्श्य, ४६ श्लोके दिङ्मात्रेण प्रदर्शितं दुःखाभावस्वरूपमत्र

४–१७ श्लोकेषु प्रपञ्चयन्नादौ दुःखस्य द्वैविध्यं प्रदर्शयति, ऐहिकमिति ।

ऐहिकं चामुष्मिकं चेत्येवं दुःखं द्विधेरितम् ।
निवृत्तिमैहिकस्याऽऽह बृहदारण्यकं वचः ॥ ४ ॥

स्पष्टोऽर्थः ॥ ४ ॥

बृहदारण्यकं वचनमाह, आत्मानमिति ।

आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् ॥ ५ ॥

तृप्तिदीपे प्रथमश्लोके व्याख्यातमिदं वचनम् ॥ ५ ॥

आत्मनि शोकसंबंधविवक्षया तद्भेदमाह, जीवेति ।

जीवात्मा परमात्मा चेत्यात्मा द्विविध ईरितः ।
चित्तादात्म्यात्त्रिभिर्देहैर्जीवः सन् भोक्तृतां व्रजेत् ॥ ६ ॥

स्पष्टः पूर्वार्धः । आत्मनो जीवत्वे कारणमाह, चिदिति त्रिभिः स्थूलादिदेहैः चितः ऐक्यभ्रमाज्जीवस्सन् भोक्ता भवति । जाग्रदादिविमोक्षान्तस्य संसारस्यानुभूतिमापद्यत इति ७–४ श्लोक उक्तः ॥ ६ ॥

परात्मनः स्वरूपमाह, परात्मेति ।

परात्मा सच्चिदानन्दस्तादात्म्यं नामरूपयोः ।
गत्वा भोग्यत्वमापन्नस्तद्विवेके तु नोभयम् ॥ ७ ॥

परात्मा सच्चिदानन्दः । तर्हि कथं तस्य त्रिभिर्देहैस्तादात्म्यमित्यत आह, तादात्म्यमिति । नामरूपयोरधिष्ठानभूतत्वात्तत्तादात्म्यं गत्वा प्राप्य भोग्यत्वमापन्नः कदा भोग्यत्वाद्यभावः संपद्यत इत्यत आह, तदिति । तद्विवेके तस्य शरीरत्रयस्य जगतश्च विवेके पार्थक्यज्ञाने सति तु उभयं भोक्तृभोग्यरूपं नास्तीति भावः ॥ ७ ॥

उक्तार्थं विवृणोति, भोग्येति ।

भोग्यमिच्छन् भोक्तुरर्थे शरीरमनुसंज्वरेत् ।

ज्वरास्त्रिषु शरीरेषु स्थिता नत्वात्मनो ज्वराः ॥ ८ ॥

स्पष्टोऽर्थः । अत्र सप्तमप्रकरणे २२२–२२७ श्लोकाः समीक्षितव्याः ॥ ८ ॥

शरीरत्रयानुरूपान् ज्वरानाह, व्याधय इति ।

व्याधयो धातुवैषम्ये स्थूलदेहे स्थिता ज्वराः ।
कामक्रोधादयः सूक्ष्मे द्वयोर्बीजं तु कारणम् ॥ ९ ॥

स्पष्टोऽर्थः । द्वयोर्व्याधिक्रोधाद्योर्बीजं तु कारणं शरीरम् ॥ ९ ॥

"आत्मानं चेद्विजानीयादि"ति श्रुतेस्तात्पर्यविवरणद्वारा उक्तमर्थं स्पष्टयति, अद्वैतेति ।

अद्वैतानन्दमार्गेण परात्मनि विवेचिते ।
अपश्यन् वास्तवं भोग्यं किं नामेच्छेत्परात्मवित् ॥ १० ॥

जीवेश्वरौ मायाकल्पितौ आत्माभिन्नः परमात्मेत्याकारकाद्वैतानन्दमार्गेण । स्पष्टमन्यत् ॥ १० ॥

आत्मानन्दप्रकरणोक्तरीत्या जीवात्मनोर्यथार्थस्वरूपे निश्चिते सति भोक्तृभावाच्छरीरसन्तापाभाव इत्याह, आत्मेति ।

आत्मानन्दोक्तरीत्याऽस्मिन् जीवात्मन्यवधारिते ।
भोक्ता नैवास्ति कोऽप्यत्र शरीरे तु ज्वरः कुतः ॥ ११ ॥

आत्मानन्दोक्तरीत्या १२ प्रकरणे १२–५७ श्लोकेषु स्पष्टमन्यत् ॥ ११ ॥

ज्ञानिनः आमुष्मिकदुःखाभावकथनम् ।

अथामुष्मिकज्वरस्य मिथ्यात्वमभिधत्ते, पुण्येति ।

पुण्यपापद्वये चिन्ता दुःखमामुष्मिकं भवेत् ।
प्रथमाध्याय एवोक्तं चिन्ता नैनं तपेदिति ॥ १२ ॥

"किमहं साधु नाकरवम् । किमहं पापमकरवमि" (तै. २–९) त्याकारिका चिन्ता प्रथमाध्याये एकादशप्रकरणे पञ्चमे श्लोके । स्पष्टमन्यत् ॥ १२ ॥

ननु ज्ञानिनः प्रारब्धकर्मचिन्तारूपसन्तापाभावेऽप्यागामिविषयचिन्ता भवत्यवेत्याशङ्क्य "तद्यथा पुष्करपलाशे" (छां. ४. १४. ३.) इति श्रुत्यर्थपठनेन समाधत्ते यथेति ।

यथा पुष्करपर्णेऽस्मिन्नपामश्लेषणं तथा ।
वेदनादूर्ध्वमागामिकर्मणोऽश्लेषणं बुधे ॥ १३ ॥

यथा अस्मिन् पुष्करपर्णे पद्मपत्रे अपां जलानां अश्लेषणं असंस्पृष्टता तथा वेदनादूर्ध्वं ज्ञानोत्पत्तेरनन्तरं बुधे आगामिकर्मणोऽपि अश्लेषणं भवति ॥१३॥

एतदर्थे "तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" (छां. ५. २४. ३.) इति श्रुतिबलेन ज्ञानिनस्संचितकर्मविषयचिन्ताऽपि न विद्यत इत्याह, इषीकेति ।

इषीकातृणतूलस्य वह्निदाहः क्षणाद्यथा ।
तथा संचितकर्मास्य दग्धं भवति वेदनात् ॥ १४ ॥

इषीकातृणतूलस्य इषीकातृण इति तृणविशेषः, तस्य तूलं सूक्ष्मावयवः कार्पाससदृशः, तस्य यथा वह्निदाहः क्षणाद्भवति तथा अस्य संचितकर्म वेदनात् ज्ञानात् दग्धं भवति ॥ १४ ॥

एतस्मिन्नर्थे गीतावाक्य (गी. ४. ३७-) मप्युदाहरति, यथेति ।

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ १५ ॥

सुलभा पदयोजना । एधांसि शुष्केंधनानि । भस्मसात्कुरुते फलकारणत्वस्य विनाशे हेतुरित्यर्थः । अर्थादारब्धं यच्छरीरं तदुपभोगेनैव शाम्यति । यदन्यदनारब्धं संचितमनेकजन्मसमुपार्जितमुत्तरजन्मनिमित्तं तत्सर्वं ज्ञानाग्निना निर्बीजवत्क्रियत इति संपन्नम् ॥ १५ ॥

निरस्ताहंकर्तृत्वभावस्य कर्मसंबंधो नास्तीत्याह, यस्येति ।

यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वाऽपि स इमांल्लोकान्न हन्ति न निबध्यते ॥ १६ ॥

अहं कृतो भावः अहं कर्तेत्यभिमानः । न लिप्यते कर्मफलैरिति यावत् । स्पष्टमन्यत् ॥ १६ ॥

न मातृवधेन, न पितृवधेन, न स्तेयेन, न भ्रूणहत्यया, नास्य पापं च न न चुकुषो मुखान्नील" (कौषी. ३. १.) मिति श्रुतिवाक्यस्यार्थतःपठनेन तस्यासंबंधं दर्शयति, मातेति ।

मातापित्रोर्वधस्तेयं भ्रूणहत्यान्यदीदृशम् ।
न मुक्तिं नाशयेत्पापं मुखकान्तिर्न नश्यति ॥ १७ ॥

स्तेयं चौर्यं । भ्रूणहत्या भ्रूणस्य गर्भस्य शिशोर्वा हत्या स्पष्टमन्यत् । निरहंकारनिस्संगोत्कर्षमात्रपरैवेयं वर्णना ॥ १७ ॥

ज्ञानिनःकामावाप्तिविचारः ।

उक्तचातुर्विध्यमध्येऽथ द्वितीयं प्रकारं कामावाप्तिरूपमाह, दुःखेति ।

दुःखाभाववदेवास्य सर्वकामाप्तिरीरिता ।
सर्वान् कामानसावाप्त्वा ह्यमृतोऽभवदित्यतः ॥ १८ ॥

अस्य ज्ञानिनो दुःखाभाववदिव सर्वकामाप्तिः "सर्वान् कामानाप्त्वा-ऽमृतोऽभवदित्यतः (ऐत. ५-४) इत्यर्थिकया श्रुत्या ईरिता कथिता ॥ १८ ॥

"जक्षन् क्रीडन् रममाणः स्त्रीभिर्यानैर्वै" (छां. ८. १२. ३.) त्यादि-श्रुत्यर्थपठनेन कामावाप्तिं विवृणोति, जक्षन्निति ।

जक्षन् क्रीडन् रतिं प्राप्तः स्त्रीभिर्यानैस्तथेतरैः ।
शरीरं न स्मरेत् प्राणः कर्मणा जीवयेदमुम् ॥ १९ ॥

जक्षन् भुंजानः स्पष्टमन्यत् । उपभोगेन प्रारब्धकर्मनाशपर्यन्तं ज्ञानी प्राणैर्न वियुज्यत इत्यर्थः ॥ १९ ॥

ज्ञानिनस्सर्वकामावाप्तिप्रतिपादिकां "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते"ति (तै. २-१) श्रुतिमर्थतः पठति, सर्वानिति ।

सर्वान् कामान् सहाप्नोति नान्यवज्जन्मकर्मभिः ॥ १९= ॥

ज्ञानिनः कर्मफलप्राप्तिरूपभोगांगीकारे तदनुकूलं जन्मापि स्यादित्यत आह, नेति । अन्यवत् अज्ञानिवत् कर्मभिर्जन्म न तेषां ज्ञानेन दग्धत्वात् ॥१९॥

ननु कर्मणां ज्ञानिनो जन्माजनकत्वे बहुजन्मस्वनुभवयोग्या भोगाः कथमेकस्मिन्नेव जन्मन्युपपद्यन्त इत्यत आह, वर्तन्त इति ।

वर्तन्ते श्रोत्रिये भोगा युगपत्क्रमवर्जिताः ॥ २० ॥

स्पष्टोऽर्थः । अन्यैर्जीवैर्यानि यानि सुखान्यनुभूयन्ते तानि सर्वाणि सर्वात्मभूतत्वात् ज्ञान्यनुभवतीति भावः ॥ २० ॥

तैत्तिरीयोदाहृतां श्रोत्रियानन्दोत्कृष्टतां द्वाभ्यामाह, युवेति ।

युवा रूपे च विद्यावान् नीरोगी दृढचित्तवान् ।
सैन्योपेतः सर्वपृथ्वीं वित्तपूर्णां प्रपालयन् ॥ २१ ॥

सर्वैर्मानुष्यकैर्भोगैस्संपन्नस्तृप्तभूमिपः ।
यमानन्दमाप्नोति ब्रह्मविच्च तमश्नुते ॥ २२ ॥

सुलभा पदयोजना । "युवा स्यात् साधु युवाध्यायिकः" (तै. २-८, बृ. ४.३.३३.) इत्याद्यनुवाकस्समवलोक्यतान् । अनेन ज्ञानिनः कामो वा तत्प्राप्तिर्वा आरोपितव्या"। "ये तूच्छिन्नदोषैर्मृदितकषायैर्मानसाः सत्याः कामा अनृतापिधाना अनुभूयन्ते विद्याभिव्यङ्ग्यत्वात्त एव मुक्तेन सर्वात्मभूतेन संबध्यन्त इत्यात्मज्ञानस्तुतये निर्दिश्यन्ते"। आत्मज्ञानतृप्तेरितरकाममानामल्पीयस्त्वकथने एव श्रुतेस्तात्पर्यमिति भावः ॥ २१, २२ ॥

सम्राजः सर्वभोगसंभवेन तत्तत्कामनानिवृत्तौ तृप्तिस्सिध्यतु ज्ञानिनस्तैद्लाभेन कथं तादृशी तृप्तिरित्याशंक्याह, मर्त्येति ।

मर्त्यभोगे द्वयोर्नास्ति कामस्तृप्तिरतः समा ।
भोगान्निष्कामैतकस्य परस्यापि विवेकतः ॥ २३ ॥

द्वयोः सम्राड्ज्ञानिनोः । राज्ञोऽनुभवान्निष्कामता । ज्ञानिनो भोगानां

मिथ्यात्वज्ञानान्निष्कामता । एवं च कामस्यैव तृप्तिविघटकत्वात्तदभावस्योभयत्रापि सत्वात्तृप्तिसाम्यमिति भावः ॥ २३ ॥

विवेकत इत्युक्तमर्थं विवृणोति, श्रोत्रियत्वादिति ।

श्रोत्रियत्वाद्वेदशास्त्रैः भोगदोषानवेक्षते ।
राजा बृहद्रथो दोषांस्तान् गाथाभिरुदाहरत् ॥ २४ ॥

स्पष्टोऽर्थः । बृहद्रथवृत्तान्तो मैत्रायण्युपनिषदि लभ्यते ॥ २४ ॥

तान् दोषान् प्रदर्शयति, देहेति ।

देहदोषांश्चित्तदोषान् भोग्यदोषाननेकशः ।
शुना वान्ते पायसे नो कामस्तद्वद्विवेकिनः ॥ २५ ॥

अनेकश उदाहरदिति पूर्वेणान्वयः । शुना वान्ते उद्गीर्णे स्पष्टमन्यत् । कामेषु जुगुप्सोत्पादनार्थमिदमुदाहरणम् ॥ २५ ॥

सार्वभौमाच्छ्रोत्रियस्याधिक्यप्रदर्शनाय तद्दोषानाह, निष्कामत्व इति ।

निष्कामत्वे समेऽप्यत्र राज्ञः साधनसञ्चये ।
दुःखमासीद्भाविनाशादतिभीरनुवर्तते ॥ २६ ॥

सुगमा पदयोजना । राज्ञो भोग्यजातस्य संपादने दुःखम्, उत्तरकाले सार्वभौमत्वस्य नाशभीतिश्चेत्यर्थः ॥ २६ ॥

न तथा श्रोत्रियस्येत्याह, नोभयमिति ।

नोभयं श्रोत्रियस्यातस्तदानन्दोऽधिकोऽन्यतः ।
गन्धर्वानन्द आशास्ति राज्ञो नास्ति विवेकिनः ॥२७॥

उभयं साधनसञ्चयभाविनाशरूपं । सम्राजः आशान्तरमप्यस्तीत्याह गन्धर्वानन्द इति न तथा विवेकिनः ॥ २७ ॥

तत्रोपपत्तिविवक्षया तस्य वैविध्यं द्वाभ्यां प्रदर्शयति, अस्मिन्निति

अस्मिन् कल्पे मनुष्यः सन् पुण्यपाकविशेषतः ।
गन्धर्वत्वं समापन्नो मर्त्यगन्धर्व उच्यते ॥ २८ ॥

अस्मिन् कल्पे वर्तमाने कल्पे यो मनुष्यस्सन् प्रथमं मनुष्यो भूत्वा पुण्यपाकविशेषतः सुकृतपरिपाकविशेषात् मनुष्यदेहानन्तरं गंधर्वत्वं समाप्नोति । सः मर्त्यगंधर्व इत्युच्यते ॥ २८ ॥

संत्यन्ये ये पूर्वकल्पकृतपुण्यपरिपाकविशेषात्तत्कल्पादावेव गंधर्वत्वमापन्नास्ते देवगंधर्वा इत्याह, पूर्वेति ।

पूर्वकल्पे कृतात्पुण्यात्कल्पादावेव चेद्भवेत् ।
गंधर्वत्वं तादृशोऽत्र देवगंधर्व उच्यते ॥ २९ ॥

पूर्वकल्पे कृतात् पुण्यात् कल्पादावेव गंधर्वत्वं भवेच्चेत् गंधर्वयोनौ जन्म यदि भवेत् । अत्र अस्मिन् लोके तादृशो देवगंधर्वः इत्युच्यते ॥२९॥

देवगंधर्वानन्दाधिक्यप्रदर्शनाय पितृदेवान् संकीर्तयति, अग्नीति ।

अग्निष्वात्तादयो लोके पितरश्चिरवासिनः ।
कल्पादावेव देवत्वं गता आजानदेवताः ॥ ३० ॥

अग्निष्वात्तादयो ये पितरः पितृदेवताः पितॄणां लोके चंद्रमंडलोपरि स्थिते चिरवासिनः ते कल्पादावेव देवत्वं देवभावं गताः । ते आजानदेवताः आजानः देवलोकः । तस्मिन् या देवताः ताः । द्विविधा देवाः । कर्मदेवा आजानदेवा इति । एतत्कल्पीयकर्मफलेनास्मिन्नेव कल्पे जन्मान्तरे देवत्वं प्राप्ताः कर्मदेवाः । पूर्वकल्पकृतकर्मफलेन सृष्ट्यादावेव देवयोनावुत्पन्ना आजानदेवाः । एते कर्मदेवेभ्यः श्रेष्ठाः ॥ ३० ॥

कर्मदेवतात्वं विवृणोति, अस्मिन्निति ।

अस्मिन् कल्पेऽश्वमेधादि कर्म कृत्वा महत्पदम् ।
अवाप्याजानदेवैर्याः पूज्यास्ताः कर्मदेवताः ॥ ३१ ॥

अस्मिन् कल्पे अश्वमेधादि अश्वः प्रधानतया मेध्यते हिंस्यतेऽत्रेत्यश्वमेधः। एकविंशतियूपसप्तदशपशुविशिष्टो यज्ञविशेषः। तदादि शास्त्रचोदितं कर्म कृत्वा महत्पदं स्वर्गादिलोकमवाप्य आजानदेवैः सृष्ट्यादौ देवयोनौ जातैः याः विद्या-कर्मौत्कृष्ट्येन पूज्या भवन्ति ताः कर्मदेवताः। कर्मणा प्रशस्ता देवता भवन्ति॥३१॥

आजानदेवानां मध्ये मुख्यानाह, यमेति।

**यमाग्निमुख्या देवाः स्युर्ज्ञाताविंद्रबृहस्पती।**
**प्रजापतिर्विराट् प्रोक्तो ब्रह्मा सूत्रात्मनामकः॥ ३२॥**

आजानदेवेषु यमाग्निमुख्या देवाः स्युः। तत्र इंद्रबृहस्पती "स एतमेव पुरुषं ब्रह्म ततमपश्यदिदमदर्शमिति। तस्मादिंद्रो नामेदंद्रो ह वै नाम तमिदंद्रं-संतमिंद्र इत्याक्षते" (ऐत. ३.१४.) इति व्युत्पत्तेरिंद्रश्च बृहत्या वाचः पतिः देवपुरो-हितः च ज्ञातौ प्रसिद्धौ। प्रजापतिः विराडिति प्रोक्तः ब्रह्मदेवः सूत्रात्मनामकः समष्टिशरीरोपाधिको हिरण्यगर्भो भवति॥३२॥

सार्वभौमादिसूत्रान्तानां श्रोत्रियानन्दान्न्यूनतामाह, सार्वेति।

**सार्वभौमादिसूत्रान्ता उत्तरोत्तरकामिनः।**
**अवाङ्मनसगम्योऽयमात्मानन्दस्ततः परः॥ ३३॥**

सार्वभौमादिसूत्रान्ताः उत्तरोत्तरकामिनः उत्तरात्पदादुत्तरस्य पदस्य कामिनो भवन्ति। यतः अयमात्मानन्दोऽवाङ्मनसगम्यः मनसा चिंतितुं वाचा वर्णितुं वा अशक्यः, ततः परः सर्वोत्कृष्ट इत्यर्थः॥ ३३॥

सार्वभौमादिसूत्रान्तानामानन्दाः श्रोत्रिये श्रूयन्ते तस्य निस्स्पृहत्वादि-त्याह, तैरिति।

**तैस्तैः काम्येषु सर्वेषु सुखेषु श्रोत्रियो यतः।**
**निःस्पृहस्तेन सर्वेषामानन्दास्सन्ति तस्य ते॥ ३४॥**

तैस्तैः सम्राडादिभिः काम्येषु अभिलषणीयेषु सर्वेषु सुखेषु यतः श्रोत्रियः निःस्पृहः ततः सर्वेषां ते आनन्दास्तस्य सन्ति। अनेन श्रोत्रियस्याकामहतस्येत्यत्र

अकामहतत्वं व्याख्यातं भवति । तेन निष्कामनया ब्रह्मार्पणपूर्वकमाचरितो यो ब्रह्मकर्मसमाधिः स एव गन्तव्यं ब्रह्म गमयतीति भावः ॥ ३४ ॥

उक्तमर्थं सर्वकामाप्तिरूपमुपसंहरति, सर्वेति ।

**सर्वकामाप्तिरेषोक्ता यद्वा साक्षिचिदात्मना ।**
**स्वदेहवत्सर्वदेहेष्वपि भोगानवेक्षते ॥ ३५ ॥**

एषा सर्वकामाप्तिः विवृतैकप्रकारिका उक्ता । प्रकारांतरमप्याह, यद्वेति । यद्वा साक्षिचिदात्मना सर्वव्यवहारस्य साक्षिभूतेन चित्स्वरूपेण स्वदेहवत् सर्वदेहेष्वपि भोगानवेक्षते यथा देहेऽस्मिन्नुपाधिपरिहारेणानन्दरूपत्वमिव देहान्तरेष्वप्युपाध्यपरामर्शादानन्दरूपतेति भावः ॥ ३५ ॥

ननूक्तरूपा सर्वकामाप्तिरज्ञस्याप्यस्ति ततश्च तृप्तिरपि स्यादित्याशंक्याह, अज्ञस्येति ।

**अज्ञस्याप्येतदस्त्येव न तु तृप्तिरबोधतः ।**
**यो वेद सोऽश्नुते सर्वान् कामानित्यब्रवीच्छ्रुतिः ॥ ३६ ॥**

एतत् उक्तरूपा सर्वकामाप्तिः अज्ञस्यापि यद्यप्यस्त्येव । तथापि अबोधतः सर्वबुद्धिसाक्षी अहमिति ज्ञानाभावात् तृप्तिस्तु नास्ति । अत्र "यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेती"ति (तै. २—१) श्रुत्यर्थपठनेन कारणं वक्ति । य इति । यः पुरुषो "निहितं गुहायां परमे व्योमन्" इति वर्णितं प्रत्यगात्माभिन्नपरमात्मानं वेद साक्षात्करोति सः ब्रह्मवित् सर्वान् कामान् अश्नुते युगपदाप्नोतीति तैत्तिरीयकी श्रुतिरब्रवीत् ॥ ३६ ॥

सर्वकामाप्तित्वे प्रकारान्तरमाह, यद्वेति ।

**यद्वा सर्वात्मतां स्वस्य साम्ना गायति सर्वदा ।**
**अहमन्नं तथान्नादश्चेति साम ह्यधीयते ॥ ३७ ॥**

यद्वा "स यश्चायं पुरुषे यश्चासावादित्ये स एक" इत्येवं विदित्वा अन्नमयादिविज्ञानमयां तान् कोशान् मिथ्यात्वधिया विविच्य ब्रह्मपुच्छं प्रतिष्ठेत्यखंडै-

कानन्दरसं स्वात्मत्वेन यः साक्षात्कृतवान् ब्रह्मवित् सः जीवन्मुक्तः सर्वदा स्वस्य सर्वात्मतां साम्ना गीतिस्वरूपेण मंत्रेण यद्वा "सर्वेण समस्तेन साम" इति सर्व-समत्वप्रतिपादकमंत्रेण गायति, तद्गानप्रकारमाह। अहमन्नं यद्यदद्यते व्रीहियवादिकं तदन्नं तदस्मि मिथ्यांशस्य नामरूपादिकस्य विवेचनेन परमार्थभूतं वस्त्वहमेव। इति सर्वात्मकत्वानुभवः सूच्यते। तथा अन्नादः योऽन्नमत्ति सोऽप्यहमेव चेति सामश्रुतिरधीयते। हि निश्चयार्थे। "इमांल्लोकान् कामान्नी कामरूप्यनुसंचरन् एतत्सामगायन्नास्ते हावु हावु हावु। अहमन्नमहमन्नमहमन्नं। अहमन्नादोऽहमन्ना-दोऽहमन्नादः" इति (तै. ३. ३. १०.) श्रुतिः ॥ ३७॥

कृतकृत्यताविचारः।

अथ परिशिष्टं प्रकारद्वयमवतारयति, दुःखेति।

दुःखाभावश्च कामाप्तिरुभे ह्येवं निरूपिते।
कृतकृत्यत्वमन्यच्च प्राप्तप्राप्यत्वमीक्षताम् ॥ ३८॥

स्पष्टोऽर्थः ॥ ३८॥

उभे तृप्तिदीपे निरूपिते। तन्निरूपणमत्रानुसंधीयतामित्याह, उभय-मिति।

उभयं तृप्तिदीपे हि सम्यगस्माभिरीरितम्।
त एवात्रानुसंधेयाः श्लोका बुद्धिविशुद्धये ॥ ३९॥

स्पष्टोऽर्थः। बुद्धिविशुद्धये बुद्धेर्नैर्मल्याय ॥ ३९॥

ऐहिकामुष्मिकव्रातसिद्ध्यै मुक्तेश्च सिद्धये।
बहुकृत्यं पुराऽस्याभूत्तत्सर्वमधुना कृतम् ॥ ४०॥

तदेतत्कृतकृत्यत्वं प्रतियोगिपुरःसरम्।
अनुसंदधदेवायमेवं तुष्यति नित्यशः ॥ ४१॥

दुःखिनोऽज्ञाः संसरंतु कामं पुत्राद्यपेक्षया।

परमानन्दपूर्णोऽहं संसरामि किमिच्छया ॥ ४२ ॥

अनुतिष्ठन्तु कर्माणि परलोकयियासवः ।
सर्वलोकात्मकः कस्मादनुतिष्ठामि किं कथम् ॥ ४३ ॥

व्याचक्षतां ते शास्त्राणि वेदानध्यापयन्तु वा ।
येऽत्राधिकारिणो मे तु नाधिकारोऽक्रियत्वतः ॥ ४४ ॥

निद्राभिक्षे स्नानशौचे नेच्छामि न करोमि च ।
द्रष्टारश्चेत्कल्पयन्ति किं मे स्यादन्यकल्पनात् ॥ ४५ ॥

गुंजापुंजादि दह्येत नान्यारोपितवह्निना ।
नान्यारोपितसंसारधर्मानेवमहं भजे ॥ ४६ ॥

शृण्वन्त्वज्ञाततत्त्वास्ते जानन् कस्माच्छृणोम्यहम् ।
मन्यन्तां संशयापन्ना न मन्येऽहमसंशयः ॥ ४७ ॥

विपर्यस्तो निदिध्यासेत्किं ध्यानमविपर्यये ।
देहात्मत्वविपर्यासं न कदाचिद्भजाम्यहम् ॥ ४८ ॥

अहं मनुष्य इत्यादिव्यवहारो विनाऽप्यमुम् ।
विपर्यासं चिराभ्यस्तवासनातोऽवकल्पते ॥ ४९ ॥

आरब्धकर्मणि क्षीणे व्यवहारो निवर्तते ।
कर्माक्षये त्वसौ नैव शाम्येद्ध्यानसहस्रतः ॥ ५० ॥

विरलत्वं व्यवहृतेरिष्टं चेद्ध्यानमस्तु ते ।
आबाधिकां व्यवहृतिं पश्यन् ध्यायाम्यहं कुतः ॥ ५१ ॥

विक्षेपो नास्ति यस्मान्मे न समाधिस्ततो मम ।

विक्षेपो वा समाधिर्वा मनसः स्याद्विकारिणः ॥ ५२ ॥

नित्यानुभवरूपस्य को मेऽत्रानुभवः पृथक् ।
कृतं कृत्यं प्रापणीयं प्राप्तमित्येव निश्चयः ॥ ५३ ॥

व्यवहारो लौकिको वा शास्त्रीयो वान्यथापि वा ।
ममाकर्तुरलेपस्य यथारब्धं प्रवर्तताम् ॥ ५४ ॥

अथवा कृतकृत्योऽपि लोकानुग्रहकाम्यया ।
शास्त्रीयेणैव मार्गेण वर्तेऽहं मम का क्षतिः ॥ ५५ ॥

देवार्चनस्नानशौचभिक्षादौ वर्ततां वपुः ।
तारं जपतु वाक् तद्वत्पठत्वाम्नायमस्तकम् ॥ ५६ ॥

विष्णुं ध्यायतु धीर्यद्वा ब्रह्मानन्दे विलीयताम् ।
साक्ष्यहं किंचिदप्यत्र न कुर्वे नापि कारये ॥ ५७ ॥

एते श्लोकाः तृप्तिदीपे त्रिपंचाशदुत्तरद्विशततमश्लोकादारभ्य सप्तत्युत्तरद्विशततमश्लोकपर्यंतं (२५३–२७०) श्लोकेषु व्याख्याताः ।

प्राप्तप्राप्यताविचारः ।

कृतकृत्यतया तृप्तः प्राप्तप्राप्यतया पुनः ।
तृप्यन्नेवं स्वमनसा मन्यतेऽसौ निरन्तरम् ॥ ५८ ॥

धन्योऽहं धन्योऽहं नित्यं स्वात्मानमंजसा वेद्मि ।
धन्योऽहं धन्योऽहं ब्रह्मानंदो मे विभाति स्पष्टम् ॥ ५९ ॥

धन्योऽहं धन्योऽहं दुःखं सांसारिकं न वीक्षेऽद्य ।
धन्योऽहं धन्योऽहं स्वस्याज्ञानं पलायितं क्वापि ॥ ६० ॥

धन्योऽहं धन्योऽहं कर्तव्यं मे न विद्यते किंचित् ।
धन्योऽहं धन्योऽहं प्राप्तव्यं सर्वमद्य संपन्नम् ॥ ६१ ॥

धन्योऽहं धन्योऽहं तृप्तेर्मे कोपमा भवेल्लोके ।
धन्योऽहं धन्योऽहं धन्यो धन्यः पुनः पुनर्धन्यः॥ ६२॥

अहो पुण्यमहो पुण्यं फलितं फलितं दृढम् ।
अस्य पुण्यस्य संपत्तेरहो वयमहो वयम् ॥ ६३ ॥

अहो शास्त्रमहो शास्त्रमहो गुरुरहो गुरुः ।
अहो ज्ञानमहो ज्ञानमहो सुखमहो सुखम् ॥ ६४ ॥

एते श्लोकास्तृप्तिदीपे ७ एकाधिकनवत्युत्तरद्विशततमश्लोकादारभ्य सप्ताधिकनवत्युत्तरद्विशततमश्लोकपर्यंतं व्याख्याताः ।

अध्यायार्थं फलकथनपूर्वकमुपसंहरति, ब्रह्मेति ।

ब्रह्मानन्दाभिधे ग्रन्थे चतुर्थोऽध्याय ईरितः ।
विद्यानन्दस्तदुत्पत्तिपर्यन्तोऽभ्यास इष्यताम् ॥ ६५ ॥

स्पष्टोऽर्थः ॥ ६५ ॥

इति
श्रीमत्परमहंसपरिव्राजकाचार्यशृंगेरीश्रीविरूपाक्षश्रीविद्याशङ्करपदमावेशप्रकाशित
जगद्गुरु श्रीकल्याणानन्दभारतीमान्ताचार्यात्यन्तप्रियान्तेवासिनाखि
गोत्रसमुद्भूतेन **लिङ्गनसोमयाजिना** विरचितेयं पञ्चदश्यां
ब्रह्मानंदे विद्यानंदाख्यप्रकरणस्य कल्याणपीयूषव्याख्या समाप्ता ॥
इति ब्रह्मानंदे विद्यानंदाख्यप्रकरणम् ।

*

अथ

# कल्याणपीयूषव्याख्यासमेता पंचदशी

## ब्रह्मानन्दे विषयानन्दप्रकरणम् ॥१५॥

विषयानन्दस्य ब्रह्मानन्दस्य द्वारभूतत्वकथनम् ।

अथात्र विषयानन्दो ब्रह्मानन्दांशरूपभाक् ।
निरूप्यते द्वारभूतस्तदंशत्वं श्रुतिर्जगौ ॥ १ ॥

अथ इत्यानंतर्यार्थे । अत्र अस्मिन् प्रकरणे ब्रह्मानन्दांशरूपभाक् ब्रह्मानन्दस्य यो अंशः तस्य रूपं भजतीति तथाभूतः अत एव द्वारभूतः ब्रह्मानन्दप्राप्तावुपायभूतः । अंशिप्राप्तावंशप्राप्तेरुपायत्वं लोके प्रसिद्धम् । अतो ब्रह्मानन्दोपयोगित्वं विषयानन्दस्याक्षतमिति भावः । एतेन मोक्षशास्त्रे लौकिकस्य विषयानन्दस्य निरूपणमसंबद्धमित्यपास्तम् । एवं भूतो विषयानन्दरूपरसादयो विषयाः तेषामानन्दो निरूप्यते । तदंशत्वं कुतोऽवगम्यते इत्यत आह, तदिति । विषयानन्दस्य तदंशत्वं तस्य ब्रह्मानन्दस्यैकदेशत्वं श्रुतिर्जगौ ॥ १ ॥

"एषोऽस्य परमानन्दः । एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीविन्ती" (बृ. ४. ३. ३२.) त्याकारिकां तां श्रुतिमर्थतः पठति, एष इति ।

एषोऽस्य परमानन्दो योऽखंडैकरसात्मकः ।
अन्यानि भूतान्येतस्य मात्रामेवोपभुंजते ॥ २ ॥

अस्य परब्रह्मणो य एषः परमानन्दः सोऽखंडैकरसात्मकः भेदत्रयशून्यमानन्दरसघनस्वरूपं भवति । अन्यानि भूतानि प्राणिन एतस्य ब्रह्मानन्दस्य मात्रामेव-अंशमेव उपभुंजते अनुभवन्ति ॥ २ ॥

मनोवृत्तीनां त्रैविध्योक्तिः ।

निरंशस्योपाधिमन्तरा सांशत्वासंभवाद्विषयानन्दस्य तदंशत्वप्रदर्शनाय

तदुपाधिभूतान्तःकरणवृत्तीनां विभागप्रदर्शनपूर्वकं स्वरूपमाह, शान्तेति ।

शान्ता घोरास्तथा मूढा मनसो वृत्तयस्त्रिधा ।
वैराग्यं क्षान्तिरौदार्यमित्याद्याः शान्तवृत्तयः ॥ ३ ॥

तृष्णा स्नेहो रागलोभावित्याद्या घोरवृत्तयः ।
संमोहो भयमित्याद्याः कथिता मूढवृत्तयः ॥ ४ ॥

मनसो वृत्तयः शान्ताः सात्विकाः, घोरा राजसाः, तथा मूढाः तामसा इति त्रिधा भवन्ति । तत्रैकैकस्योदाहरणान्याह, वैराग्यमिति । वैराग्यं, क्षान्तिः विवेकेन दुःखसहिष्णुता, औदार्य इत्याद्याः शान्तवृत्तयः । तृष्णा विषयाभिलाषः, स्नेहः चेतनविषयं प्रेम, रागलोभौ रागः उत्कटेच्छा, लोभः वित्तलालस्यं, इत्याद्याः घोरवृत्तयः । सम्मोहः विस्मृतिः, भयमित्याद्या मूढवृत्तयः इति कथिताः ॥ ४ ॥

सर्ववृत्तिषु चिद्रूपप्रतिबिम्बनोक्तिः ।

एवं भिन्नासु वृत्तिषु ब्रह्मणश्चैतन्यरूपत्वं भासत इत्याह, वृत्तिष्विति ।

वृत्तिष्वेतासु सर्वासु ब्रह्मणश्चित्स्वभावता ।
प्रतिबिंबति शान्तासु सुखं च प्रतिबिम्बति ॥ ५ ॥

पूर्वार्धः स्पष्टः । तत्र शान्तासु वृत्तिषु विशेषमाह शान्तास्विति शान्तासु सुखं च ब्रह्मण आनन्दरूपं च प्रतिबिम्बति चकारात्सद्रूपत्वचिद्रूपत्वे समुच्चीयेते ॥५॥

उक्तार्थे प्रमाणमाह, रूपमिति ।

रूपं रूपं बभूवासौ प्रतिरूप इति श्रुतिः ।
उपमा सूर्यकेत्यादि सूत्रयामास सूत्रकृत् ॥ ६ ॥

असौ परमात्मा "रूपं रूपं प्रतिरूपो बभूवेति" (कठ. २. ५. १०.) श्रुतिरवोचत् । "अत एव चोपमा सूर्यकादिवत्" (३. २. १८.) इति सूत्रे सूर्यकेत्याद्युपमा इति सूत्रकृत् सूत्रकारो व्यासमहर्षिः सूत्रयामास सूत्रं निबबंध । अस्य सूत्रस्यायमर्थः । यतोऽयमात्मा निर्विशेषः अत एवास्योपाधिकृतं बहुरूपत्वमस-

त्यमिति । जलसूर्यकादिवदित्युपमोपादीयत इति ॥ ६ ॥

एकस्यैव परमात्मन उपाधिकृतनानात्वे ब्रह्मबिंदु (१२) श्रुतिं पठति, एक इति ।

एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचंद्रवत् ॥ ७ ॥

व्यवस्थितः स्थितिमवाप्तः सन् जलचंद्रवत् जले प्रतिफलितश्चंद्रवत् एकधा बहुधा चैव दृश्यते । अन्यत् स्पष्टं ॥ ७ ॥

श्रुत्युक्तदृष्टान्ताशयं विवृणोति जल इति ।

जले प्रविष्टश्चंद्रोऽयमस्पष्टः कलुषे जले ।
विस्पष्टो निर्मले तद्वद्द्वेधा ब्रह्मापि वृत्तिषु ॥ ८ ॥

तद्वदिति । तद्वद्द्वेधा द्विविधं ब्रह्मापि वृत्तिषु सात्त्विकादिषु भवति स्पष्टमन्यत् ॥ ८ ॥

द्वैविध्यं विवृणोति, घोरेति ।

घोरमूढासु मालिन्यात्सुखांशश्च तिरोहितः ।
ईषन्नैर्मल्यतस्तत्र चिदंशप्रतिबिंबनम् ॥ ९ ॥

स्पष्टोऽर्थः ॥ ९ ॥

दृष्टान्तान्तरमाह, यद्वेति ।

यद्वापि निर्मले नीरे वह्नेरौष्ण्यस्य संक्रमः ।
न प्रकाशस्य तद्वत् स्याच्चिन्मात्रोद्भूतिरेव च ॥ १० ॥

स्पष्टः पूर्वार्धः । तद्वत् राजसतामसवृत्तिषु चिन्मात्रोद्भूतिरेव चित्स्फुरणमेव स्यान्न तु सुखांशस्य ॥ १० ॥

शान्तवृत्तिषु चिदानन्दयोर्भाने दृष्टान्तांतरमाह, काष्ठ इति ।

काष्ठे त्वौष्ण्यप्रकाशौ द्वावुद्भवं गच्छतो यथा ।

शान्तासु सुखचैतन्ये तथैवोद्भूतिमाप्नुतः ॥ ११ ॥

स्पष्टोऽर्थः ॥ ११ ॥

एवं व्यवस्थायां कारणमाह, वस्त्विति ।

वस्तुस्वभावमाश्रित्य व्यवस्था तूभयोः समा ।
अनुभूत्यनुसारेण कल्प्यते हि नियामकम् ॥ १२ ॥

सुलभा पदयोजना ॥ १२ ॥

घोरमूढवृत्तिषु सुखाभावनिरूपणम् ।

नियामकत्वकल्पकमनुभवं दर्शयति, नेति ।

न घोरासु न मूढासु सुखानुभव ईक्ष्यते ।
शान्तास्वपि क्वचित्कश्चित्सुखातिशय ईक्ष्यताम् ॥ १३ ॥

घोरासु सुखानुभवः आनन्दानुभवः नेक्ष्यते । तथा मूढास्वपि नेक्ष्यते । शान्तास्वपि सर्वत्र समं नेक्ष्यते । किं तु क्वचित् समयेषु वा पुरुषेषु वा कश्चित् सुखातिशय ईक्ष्यताम् ॥ १३ ॥

कामादीनां घोरत्वात् सुखाभाव इत्याह, गृहेति ।

गृहक्षेत्रादिविषये यदा कामो भवेत्तदा ।
राजसस्यास्य कामस्य घोरत्वात्तत्र नो सुखम् ॥ १४ ॥

सुलभा पदयोजना ॥ १४ ॥

गृहक्षेत्रादिषु क्रोधद्वेषयोः कारणं दर्शयति, सिद्धेति ।

सिद्ध्येन्न वेत्यस्ति दुःखमसिद्धौ तद्विवर्धते ।
प्रतिबन्धे भवेत्क्रोधो द्वेषो वा प्रतिकूलतः ॥ १५ ॥

गृहक्षेत्रादिः सिद्ध्येत् न वेति संदेहे दुःखमस्ति । असिद्धौ तद्दुःखं विवर्धते । गृहक्षेत्रादेः सिद्धौ सत्यामपि तत्सुखस्य प्रतिबन्धे अन्यैरातंके कृते सति क्रोधः आतंककारिणां हिंसाकरणाभिलाषनिमित्ता चित्तवृत्तिर्भवति । काम

एव केनचित् प्रतिहतः क्रोधात्मना परिणमते । अथवा प्रतिकूलतः सिद्धगृहक्षेत्रादेः प्रतिकूलवर्तनेन सुखप्रतिकूलस्य दुःखस्य सत्त्वात्तत्र कदाचिद्धिंसादिजनकचित्तवृत्तेरजननेऽपि द्वेषः असंभाषणगाल्यदानाद्यनुकूला चित्तवृत्तिर्भवेत् ॥ १५ ॥

द्वेषस्य तामसत्वादतिदुःखकारणत्वमित्याह, अशक्य इति ।

अशक्यश्चेत्प्रतीकारो विषादः स्यात्स तामसः ।
क्रोधादिषु महद्दुःखं सुखशंकापि दूरतः ॥ १६ ॥

स्पष्टोऽर्थः विषादस्य तामसत्वान्न तत्र सुखमिति भावः ॥ १६ ॥

शान्तासु सुखानुभवनिरूपणम् ।

कामलाभस्य सुखतरकारणत्वमाह, काम्येति ।

काम्यलाभे हर्षवृत्तिः शान्ता तत्र महत्सुखम् ।
भोगे महत्तरं लाभप्रसक्तावीषदेव हि ॥ १७ ॥

पूर्वार्धः स्पष्टः । भोगे अनुभवसमये महत्सुखं महत्तरं भवति । लाभप्रसक्तौ सत्यां लाभाऽऽभिमुख्ये सति ईषदेव हि स्वल्पमेव हि भवति ॥ १७ ॥

वैराग्यस्य महत्तमसुखकारणत्वमाह, महत्तममिति ।

महत्तमं विरक्तौ तु विद्यानन्दे तदीरितम् ।
एवं क्षान्तौ तथौदार्ये क्रोधलोभनिवारणात् ॥ १८ ॥

पूर्वार्धः स्पष्टः । क्षान्तौ तथा औदार्ये क्रोधलोभनिवारणात् एवं महत्तमं सुखं स्यात् ॥ १८ ॥

यद्यत्सुखं तत्सर्वं ब्रह्मानन्दप्रतिबिंबनात् ब्रह्मैवेत्याह, यदिति।

यद्यत्सुखं भवेत्तत्तद्ब्रह्मैव प्रतिबिंबनात् ।
वृत्तिष्वंतर्मुखास्वस्य निर्विघ्नं प्रतिबिंबनम् ॥ १९ ॥

यद्यत्काम्यप्रसक्तिलाभभोगादिनिमित्तं वा वैराग्यसमुत्पन्नं वा सुखं भवेत्

तत्तत्सर्वं ब्रह्मानन्दस्य प्रतिबिंबनात् प्रतिफलनात् द्वारभूतत्वादित्यर्थः ब्रह्मैव भवति। अन्तःकरणस्य वृत्तिषु अन्तर्मुखासु सतीषु विषयेष्वपि लब्धेषु तदिच्छोपरमे सति। अन्तर्मुखमनोवृत्तावानन्दः प्रतिबिंबती (११–८६) त्युक्तरीत्या अस्य ब्रह्मणः प्रतिबिंबनं निर्विघ्नं भवति। बाह्यवस्तुपरित्यागे हर्षादिवृत्तयो यदान्तर्मुखा भवन्ति तदा ब्रह्मानन्दस्य द्वारीभवन्तीति भावः ॥ १९ ॥

सच्चिदानन्दस्फुरणस्थलनिरूपणम्।

सर्वत्र वृत्तिषु यद्यद्वृत्तौ यद्यद्रूपेण ब्रह्मस्वरूपानुभवस्तत्प्रदर्शनाय तत्स्वरूपं स्मारयति, सत्तेति।

**सत्ता चितिः सुखं चेति स्वभावा ब्रह्मणस्त्रयः ॥१९॥**

स्पष्टोऽर्थः। सच्चिदानन्दस्वरूपं ब्रह्मैवेत्यर्थः ॥ १९ ॥

सत्तादित्रयाणां स्फुरणस्थानान्याह, मृदिति।

**मृच्छिलादिषु सत्तैव व्यज्यते नेतरद्वयम् ॥ २० ॥**

**सत्ता चितिर्द्वयं व्यक्तं धीवृत्त्योर्घोरमूढयोः।**

**शान्तवृत्तौ त्रयं व्यक्तं मिश्रं ब्रह्मेत्थमीरितम् ॥ २१ ॥**

तत्र सत्तैव अस्तितामात्रधर्म एव मृच्छिलादिष्वचेतनेषु व्यज्यते। घटोऽस्तीति व्यवहारात्। इतरद्वयं चिदानन्दरूपं न व्यज्यते। अत्यन्तमालिन्यस्वभावात्। घोरमूढयोः धीवृत्त्योः सत्ता चितिश्च द्वयं व्यक्तं भवति। शान्तवृत्तौ तु सच्चिदानन्दरूपं त्रयं व्यक्तं भवति। इत्थं मायामिश्रं ब्रह्म, ईरितम् ॥ २१ ॥

अमिश्रब्रह्मानुभवस्थानमाह, अमिश्रमिति।

**अमिश्रं ज्ञानयोगाभ्यां तौ च पूर्वमुदीरितौ।**

**आद्येऽध्याये योगचिन्ता ज्ञानमध्याययोर्द्वयोः ॥ २२ ॥**

स्पष्टः पूर्वार्धः। पूर्वोक्तप्रकारं विशदयति, आद्य इति। आद्येऽध्याये योगानन्दाध्याये अध्याययोर्द्वयोः आत्मानन्दाद्वैतानन्दाध्याययोः ॥ २२ ॥

अथ मायायाः रूपमाह, असत्तेति।

असत्ता जाड्यदुःखे द्वे मायारूपत्रयं त्विदम् ॥ २२॥

स्पष्टोऽर्थः ॥२२॥

मायात्रितयस्य स्फुरणस्थलनिर्णयः ।

तेषां स्फुरणस्थानमाह, असत्तेति ।

असत्ता नरशृंगादौ जाड्यं काष्ठशिलादिषु ॥ २३ ॥

घोरमूढधियोर्दुःखमेवं माया विजृंभिता ॥ २३॥

स्पष्टः पूर्वार्धः । फलितमाह, घोरेति । एवं घोरमूढधियोः राजसतामसबुद्ध्योः दुःखं स्फुरति । एवं मायाशक्तिः जगति विजृंभिता समन्ततो व्याप्ता ॥

ब्रह्मणो मिश्रत्वमुपपादयति, शान्तेति ।

शान्तादिबुद्धिवृत्त्यैक्यान्मिश्रं ब्रह्मेति कीर्तितम् ॥ २४ ॥

शान्तादिबुद्धिवृत्त्यैक्यात् सात्त्विकराजसतामसवृत्तिभिरैक्यात् विवेचनाभावात् ब्रह्ममिश्रितमितीरितमिति २१ श्लोके उक्तम् ॥ २४ ॥

मिश्रब्रह्मध्यानप्रकारविचारः ।

एवमभिधानस्य प्रयोजनमाह, एवमिति ।

एवं स्थितेऽत्र यो ब्रह्म ध्यातुमिच्छेत्पुमानसौ ।
नृशृंगादिमुपेक्षेत शिष्टं ध्यायेद्यथायथम् ॥ २५ ॥

मायायाः ब्रह्मणश्चैवं रूपत्रये स्थिते सति यः पुमान् ब्रह्म ध्यातुमिच्छेत् असौ नृशृंगादि नृशृंगादिरूपमायोपाधिं उपेक्षेत शिष्टं ब्रह्म यथायथं यथायोग्यं ध्यायेत् नृशृंगादि विहायाऽन्यत्र ब्रह्म ध्यायेदिति भावः ॥ २५ ॥

यथायथमित्यस्याशयं विवृणोति, शिलेति ।

शिलादौ नामरूपे द्वे त्यक्त्वा सन्मात्रचिन्तनम् ।
त्यक्त्वा दुःखं घोरमूढधियोः सच्चिद्विचिन्तनम् ॥ २६ ॥

शान्तासु सच्चिदानन्दांस्त्रीनप्येवं विचिन्तयेत् ॥ २६ ॥

शिलादौ जडपदार्थे नामरूपे द्वे असत्ये त्यक्त्वा सन्मात्रचिन्तनं सत्तामात्रस्य सत्यांशस्य चिन्तनं कुर्यात्। घोरमूढधियोः दुःखं मायांशं त्यक्त्वा सच्चिद्विचिन्तनं सच्चितोर्विचिन्तनं कुर्यात्। शान्तासु सच्चिदानन्दान् त्रीनप्येवं वृत्त्यंशं त्यक्त्वा विचिन्तयेत्। सर्वत्र मायाकार्यं परित्यजेदित्यर्थः ॥ २६ ॥

उक्तध्याने तारतम्यमाह, कनिष्ठेति।

कनिष्ठमध्यमोत्कृष्टास्तिस्रश्चिन्ताः क्रमादिमाः ॥ २७ ॥

इमाः तिस्रः सच्चिदानन्दविषयिकाः चिन्ताः क्रमात् कनिष्ठमध्यमोत्कृष्टाः नीचमध्यमाधिकाः इत्युच्यन्ते। सन्मात्रविषयिणी कनिष्ठा सच्चिद्विषयिणी मध्यमा त्रितयविषयिणी उत्तमेति विवेकः ॥ २७ ॥

निर्गुणब्रह्मध्यानानधिकारिणोऽनुग्रहाय मिश्रब्रह्मज्ञानेऽधिकारं दर्शयति, मंदस्येति।

मन्दस्य व्यवहारेऽपि मिश्रब्रह्मणि चिन्तनम्।
उत्कृष्टं वक्तुमेवात्र विषयानन्द ईरितः ॥ २८ ॥

मन्दस्य मन्दबुद्धेः लौकिकव्यवहारे प्रवृत्तस्यापि मिश्रब्रह्मणि सप्रपंचब्रह्मणि चिन्तनं उत्कृष्टमिति वक्तुमेव अत्र अस्मिन् प्रकरणे विषयानन्द ईरितः। व्यवहारप्रवृत्तस्य सगुणब्रह्मोपासने अधिकारः न तु निर्गुणोपासन इति भावः। बहुव्याकुलितचित्तानां विचारात्तत्त्वधीर्न हि (९-१३२) त्यन्यत्रोक्तम् ॥ २८ ॥

अथ बुद्धिवृत्तिविरहितध्यानमभिदधाति, औदासीन्येति।

औदासीन्ये तु धीवृत्तेश्शैथिल्यादुत्तमोत्तमम्।
चिन्तनं वासनानन्दे ध्यानमुक्तं चतुर्विधम् ॥ २९ ॥

औदासीन्ये तु सुखदुःखान्तरालेषु वृत्तिरहिता तूष्णीमवस्थितिरौदासीन्यं (११-९४) तस्यां धीवृत्तेः शैथिल्यादुत्तमोत्तमं उत्तमात् पूर्वोक्तध्यानत्रितयादुत्तमं उत्कृष्टं। वासनानन्दे चिन्तनं ध्यानमन्यदुक्तम्। एवं च चतुर्विधं ध्यानम्।

वासनानन्दस्तु ११–९६ श्लोके निरूपितः वृत्तिसहितं ध्यानं त्रिविधं, तद्रहितमेकं मिलित्वा चतुर्विधं ध्यानम् ॥२९॥

ननु वृत्तिविनिर्मुक्तब्रह्मचिन्तनस्य ध्यानत्वोक्तौ ततोऽविशिष्टत्वेन ज्ञान-योगाभ्यामुत्पन्नं ज्ञानं ध्यानावान्तरभेद एव भवेदित्याशंक्याह, नेति ।

**न ध्यानं ज्ञानयोगाभ्यां ब्रह्मविद्यैव सा खलु ।**
**ध्यानेनैकाग्र्यमापन्ने चित्ते विद्या स्थिरीभवेत् ॥ ३० ॥**

योगानन्दात्मानन्दाद्वैतानन्दप्रकरणेषु विवृताभ्यां ज्ञानयोगाभ्यां लब्धं ब्रह्मज्ञानं न ध्यानम् । अतो ब्रह्मज्ञानं न ज्ञानावान्तरभेदः । तर्हि तत् ज्ञानं किं भवे-दित्यत आह, ब्रह्मेति । सा ब्रह्मविद्यैव खलु । तस्य ज्ञानस्य ब्रह्मविद्यास्वरूपत्वेन ब्रह्मविद्यासाधनभूते ध्यानेऽन्तर्भावो भवतीति शंकाऽपि नेति भावः । ध्यानब्रह्म-विद्ययोः साध्यसाधनभावं विशदयति, ध्यानेनेति । ध्यानेनैकाग्र्यमापन्ने चित्तवृत्ति-निरोधकरूपेण सच्चिदानन्दस्वरूपचिन्तनेनैकाग्र्यमापन्ने चित्ते विद्या ब्रह्मज्ञानं स्थिरीभवेत् । एवं च स्थिरीभूतं ब्रह्मज्ञानं ध्यानेऽन्तर्भवितुं नार्हतीति भावः ॥ ३०॥

विद्यास्वरूपनिरूपणम् ।

अखंडैकानन्दरससाक्षात्कारोपकारकत्वात् ब्रह्मविद्यायाः विद्यात्वमित्याह, विद्यायामिति ।

**विद्यायां सच्चिदानन्दा अखंडैकरसात्मताम् ।**
**प्राप्य भान्ति न भेदेन भेदकोपाधिवर्जनात् ॥ ३१ ॥**

विद्यायां ज्ञानदशायां सच्चिदानन्दा अखंडैकरसात्मतां प्राप्य भान्ति । भेदकोपाधिवर्जनात् भेदपरिकल्पनसमर्थस्योपाधेरभावात् भेदेन न भान्ति । यद्वा ब्रह्मविद्यायां सच्चिदानन्दा अखंडैकरसात्मतां एकस्वरूपतां प्राप्य भान्ति । भेदेन प्रातिस्विकरूपेण ते न भान्ति । ध्याने तावत् सच्चिदानन्दानां त्रयाणां भानेऽपि तत्तद्रूपेणैव भान्ति । विद्यायामिवैकरूप्यं प्राप्य न भान्ति । एवं ब्रह्मविद्यायाः विषयतोऽपि वैलक्षण्यं प्रदर्शितम् ॥ ३१ ॥

तानेव भेदकोपाधीनाह, शान्ता इति ।

शान्ता घोराः शिलाद्याश्च भेदकोपाधयो मताः ।
योगाद्विवेकतो वैषामुपाधीनामपाकृतिः ॥ ३२ ॥

शान्ता घोरा धीवृत्तयः शिलाद्याश्च मताः अंगीकृताः भेदकोपाधयः । केनोपायेन ते परिह्रियन्ते इत्यत आह योगादिति, योगात् योगानन्दप्रकरणे यथा विवृतं तथा वा आत्मानमनात्मभिः विवेकतो वा विवेचनाद्वा एषामुपाधीनां अपाकृतिः भवति । केचित्त्वस्मिन् श्लोके च शब्दोऽनुक्तसमुच्चायकः । तेन त्रिपुटीसंग्रहः । तस्याः नाशे ऐकरूप्येण भानं ब्रह्मविद्यायामिति ध्यानतो वैलक्षण्यं, अयमाशयः उत्तरश्लोकस्वारस्यादवगम्यत इत्याहुः ॥ ३२ ॥

उपाधीनामपाकरणे भूमानन्दावाप्तिरित्याह, निरुपाधीति ।

निरुपाधिब्रह्मतत्त्वे भासमाने स्वयंप्रभे ।
अद्वैते त्रिपुटी नास्ति भूमानन्दोऽत उच्यते ॥ ३३ ॥

स्वयंप्रभे भासमाने निरुपाधिब्रह्मतत्त्वे अद्वैते परे ब्रह्मणि त्रिपुटी ज्ञातृज्ञानज्ञेयरूपा नास्ति । अतो भूमानन्द इति उच्यते ॥ ३३ ॥

प्रकरणमुपसंहरति, ब्रह्मानंदेति ।

ब्रह्मानन्दाभिधे ग्रन्थे पञ्चमोऽध्याय ईरितः ।
विषयानन्द एतेन द्वारेणान्तःप्रविश्यताम् ॥ ३४ ॥

स्पष्टः पूर्वार्धः । प्रकरणादौ यत्प्रतिज्ञातं द्वारभूतत्वं विषयानन्दस्य तदेवोपसंहरति । एतेनेति पंचकोशप्रकारप्रविवेचनेन गुहान्तःपरिवेष्टितस्य प्रत्यगभिन्नपरब्रह्मसार्वभौमस्य साक्षात्कारार्थमेतेन विषयानन्दनामकेन सर्वजनसामान्येन अद्वैतरहस्यदुर्गबाह्यद्वारेण अन्तःप्रविश्यतामिति भावः ॥ ३४ ॥

मुमुक्षूणामनुजिघृक्षया पारीप्सितस्यास्य महतो ग्रन्थस्योपक्रम इवोपसंहारे मंगलाचरणमारचयन् प्रत्यगभिन्नपरमात्माभिधेयस्य स्वेक्षणापरिकल्पितजगदुत्पत्तिस्थितिलयाधिकृतहरिहराद्यनेकाकारमाविष्टस्य परमेश्वरस्य पादपंकजयोर्निजां कृतिमर्पयति, प्रीयादिति ।

प्रीयाद्धरिहरोऽनेन ब्रह्मानन्देन सर्वदा ।
पायाच्च प्राणिनः सर्वान् स्वाश्रितान् शुद्धमानसान् ॥ ३५॥

हरिः हरः हरिहरादिस्वरूपेण प्रतीयमानः परमेश्वरः अनेन ब्रह्मानन्देन प्रीयात् प्रीतः स्वाश्रितान् शुद्धमानसान् सर्वान् प्राणिनः पायाच्च । अत्र हरिहर इति केचित्पाठं कल्पयन्ति । बुक्कभूपालपुत्रो हरिहरो विद्यारण्यचरणैर्विजयनगर-साम्राज्ये क्री. श. १३६६ संवत्सरे पट्टाभिषिक्त इति ।

··· ··· ··· विद्यतीर्थमहेश्वरम् ।
तत्कक्षेण तद्रूपं दधतो बुक्कभूपतेः ।
अभूद्धरिहरो राजा क्षीराब्धेरिव चन्द्रमाः ।

इत्यनेन ज्ञायते तस्य ज्ञानावाप्तिनिमित्ताशीःपूर्वकोऽयं श्लोकः । यद्वा हरिहरादिविविधदेवतासु तेषामभेदबुद्धिसूचकोऽयमिति ज्ञेयम् ॥

इति
श्रीमत्परमहंसपरिव्राजकाचार्यशृंगेरीश्रीविरूपाक्षश्रीविद्याशङ्करपदमावेशप्रकाशित
जगद्गुरु श्रीकल्याणानन्दभारतीमान्ताचार्योत्यन्तप्रियान्तेवासिनावि
गोलसमुद्भूतेन **लिङ्गनसोमयाजिना** विरचितेयं पञ्चदश्यां
ब्रह्मानंदे विषयानंदाख्यप्रकरणस्य कल्याणपीयूषव्याख्या समाप्ता ॥
इति ब्रह्मानंदे विषयानंदाख्यप्रकरणम् ।

**ॐ तत्सत् ।**

**ब्रह्मार्पणं ब्रह्महवि-**
**र्ब्रह्माग्नौ ब्रह्मणा हुतम् ।**
**ब्रह्मैव तेन गन्तव्यं**
**ब्रह्मकर्मसमाधिना ॥**

॥ इति पंचदशी समाप्ता ॥

*

## ॥ शुद्धिपत्रम् ॥

| पत्र | पङ्क्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १ | २० | त्क | त्कु |
| २ | ७ | त्व | त्त्व |
| ३ | १८ | ज्जे | ञ्जे |
| ४ | ९ | दा | था। |
| ५ | ५ | म्ब | म्बि |
| | २१ | ग | ग्र |
| ६ | १३ | रुग | क्य |
| | | त्वे | त्त्वे |
| | १७ | भ | भा |
| ७ | ४ | वै | थै |
| | १५ | ११-११ | D/ |
| ८ | ६ | .... | त्मा |
| १२ | ११ | ञ | ज्ञ |
| १६ | ४ | ःम | त्म |
| १७ | १६ | भां | छां |
| | १८ | भां | छां |
| २१ | १४ | बुद्धि-मनः | मनः-बुद्धिः |
| २४ | १५ | | त्त |
| | | षे | षी |
| २७ | ६ | श्री | श्र |
| २८ | १६ | ग्या | या |
| ३० | ६ | च | चे |
| | ७ | हे | ही |
| | १६ | घा | ध्या |
| ३१ | ५ | ना | मा |
| | २३ | स्या | त्या |

| पत्र | पङ्क्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ३२ | २१ | | ६२ |
| | २३ | तो | ते। |
| ३३ | ६ | आ | अ |
| ३४ | ९ | दे | वे। |
| ३५ | ११ | मू | मा |
| ३७ | ५ | बू | ब्द |
| ३८ | २४ | क | य |
| ४१ | १८ | ति | त्यत्र |
| ४४ | ५ | प | प्र |
| ४७ | ७ | गो | यो |
| | १० | भा | र्भा। |
| ४८ | ४ | स्वा | स्या। |
| ५० | ८ | ग्या | या |
| | २४ | ग्या | या |
| ५१ | २० | ति | ती |
| ५२ | १२ | ला: | ल: |
| | २२ | घा | था। |
| | २३ | घा | था। |
| ५३ | ७ | घा | था। |
| ५५ | २२ | ह्रा | ह्म |
| ५७ | १८ | यि | ति |
| | २२ | | त्त |
| ५८ | ५ | त्वं | त्त्वं |
| | १४ | पि | भि |
| ६२ | २४ | स्लि | सि |

| पत्र | पङ्क्ति | अशुद्ध | शुद्ध | पत्र | पङ्क्ति | अशुद्ध | शुद्ध |
|---|---|---|---|---|---|---|---|
| ६३ | ६ | क्ति | क्त | ११४ | १ | र्वा | र्वो |
| | १५ | वत् | कम्। | | ९ | आ | औ |
| | १७ | स्या | स्यो | ११५ | १० | धि | धिं |
| ६६ | २० | थ्ये | थ्यै | | १६ | न | स। |
| ६७ | ८ | छे | मे | ११६ | ८ | ष | षा |
| ७२ | ११ | क्रु | कु | ११७ | ५ | राम | राग |
| | १२ | ध | द | ११८ | १० | वश्यकं | वश्यं |
| ७२ | १७ | यैं | यें | ११९ | ११ | भ | म |
| ७३ | ८ | अन्त | अन्तकाल | १२० | १४ | त्पत | त्पतत |
| ७४ | १३ | प्य | प्यय | १२१ | ४ | धे | थै |
| ५ | १४ | मा | माना | १२२ | २ | विदि | विडि, |
| ७६ | ११ | भ | म | | १७ | शञ्चा | शत्रा |
| ७९ | १ | स्व | स्वा | | २४ | यिकाः | यकाः |
| | ५ | धा | था | १३० | ११ | ज्ञा | ज्ञौ |
| ८१ | २० | स्ये | स्त्ये | | १९ | न्स | स |
| ८२ | २ | न्यनु | न्यननु | १३१ | ८ | नारा | नरा |
| ८९ | १२ | त्स्यै | त्सै | १३६ | १५ | द्रुह्म | द्रुह्मा |
| ९० | १७ | क्षा | क्षी | १४६ | २४ | स्ताज्य | स्त्याज्य |
| ९३ | २२ | रू | लं | १५१ | ७ | न्यार्ध | न्यार्थ |
| | २४ | नाश्ति | नास्ति | | ११ | वरू | वंरू |
| ९५ | ९ | द्धे | र्भे | १५२ | १० | स्त्वेति | त्वेति। |
| ९७ | ११ | वृ | वु | | १३ | त्वत्वं | स्वत्वं |
| ९८ | १६ | वोप | वोपप | १५५ | १४ | लोक | लोके |
| १०१ | ३ | १४ | १३ | २५७ | २ | त्मकं | त्मकं |
| | २२ | ताति | तीति | | | क्षत | क्षते। |
| १०२ | २१ | क (ाक) | किं | १५८ | १६ | वादं | वादः |
| १०८ | १९ | द | दा | १६१ | १७ | श्रुते | श्रुतेः |
| १०९ | ९ | स्ये | स्यै | १६४ | ९ | वाक्यं | वाक्ये |
| ११० | ६ | दाना | दना | | १७ | शून | शून्य |
| | ११ | पाम | पम | १६५ | ३ | तती | तीत |

| पत्र | पङ्क्ति | अशुद्ध | शुद्ध | पत्र | पङ्क्ति | अशुद्ध | शुद्ध |
|---|---|---|---|---|---|---|---|
| १६६ | ३ | तयन् | तय | २१९ | २१ | रस्सं | रस्यं |
| | ३ | णीया | णीयान् | २२१ | १६ | तव | तद्यत्र |
| | ११ | परा ति | पराश्रुति | २२२ | १२ | त्वद्वत | त्वद्वैत |
| | १६ | तय | तन्य | २२४ | २ | ान | नि |
| | १७ | दश | दर्श | | १९ | इयो | द्वयो |
| १६७ | ९ | वेशा | वेशो | २२५ | ४ | द्वतं | द्वैतं |
| | ९ | ाान | विनि | | १६ | सीदे | सदे |
| १७० | ५ | कय | कर्य | २२७ | १३ | ध्याप | ध्यास |
| १७१ | ९ | मप | मनुप | २२८ | २ | युत्तय | युत्तयै |
| १७२ | ८ | द्भुतः | द्युतः | | ३ | नुति | नुभूति |
| १७३ | १८ | त्तयोन्नि | त्तयोर्नि | | २४ | विद्व | वित्व |
| १७६ | २४ | यत्न | यत्ने | २२९ | ५ | पर | परि |
| १८१ | १२ | भूति | भूति | २३० | ४ | हत्या | हस्या |
| | २२ | द्वद्धिः | द्बुद्धिः | | १० | स्वार्थः | स्वार्थैः |
| १८५ | २१ | स्वेष्टुं | न्वेष्टुं | | १८ | यथा | यदा |
| १८८ | ३ | वृत्तं | वृतं | | २५ | लं कय | लं वाक्य |
| १९१ | ९ | षाकार | षार | २३३ | १४ | मन्त्य | मस्त्य |
| २०३ | १२ | कृतत्व | कृत्त्व | २३४ | ३ | सीनः | सोनवादासीनः |
| | १५ | णोणि | णोति | २३५ | १४ | त्यतु | त्यनु |
| | २३ | शेष | शेषे | २३७ | १३ | हीत्वा | हेत्वा |
| २०४ | १२ | रात्न | रात्री | २३८ | ५ | श्चैन्म | श्चेन्म |
| | १५ | हनीत | हनी | | ९ | द्वयोः | द्वैयोः |
| २०५ | २ | याया | या | | १६ | पाप | प्राप्य |
| | १६ | दामा | श्चिदामा | २४१ | ५ | माप्न | माप्नु |
| २०७ | ७ | ष्यत | ष्यते | २५० | ५ | हेत | हेतुदे |
| २०८ | ८ | त्सय | त्सर्य | | ११ | यामात | यमिति |
| | ८ | त्युक्ते | त्युक्तै | | १४ | नान | ना |
| २१० | ४ | मरी | मर | २५७ | २१ | येति | येनेति |
| २१८ | ११ | नयो | न प्रयो | २५९ | ३ | कर्वृ | कर्तृ |
| | २२ | न्वय | न्वे | | १२ | यम | यम्नि |

| पत्र | पङ्क्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| २६० | २४ | त्वंत्वं | त्वं |
| २६१ | ६ | वास्व | वास्त्व |
| २६३ | ४ | क्यार्धे | क्यार्थे |
| २६४ | ७ | क्यार्ध | क्यार्थ |
| | ८ | क्यार्ध | कार्थ |
| २६५ | ९ | लाप | लोप |
| २६६ | ४ | त्यम्र | त्यभ्रू |
| २६६ | ९ | कतु | कर्तु |
| २७७ | १७ | ब्रह्म | ब्रह्मा |
| २८२ | २ | विघत्त | विधत्ते । |
| २८३ | १० | अत | उत |
| २८४ | १७ | वेति | पीति |
| २८५ | ३ | त्यतं | त्यन्तं |
| २८६ | २ | पय | पर्थ |
| ३१० | ५ | वुषि | वुद्धोषि |
| ३१३ | १३ | मनु | नु |
| ३१७ | ८ | ऐद्धो | यद्धो |
| ३२६ | ५ | ज्ञाय | जाय । |
| | २२ | वृत्त्य् | वृत्त्य |
| ३३५ | २५ | पक्ष | पेक्ष |
| ३३७ | १५ | न्तार्धं | न्तार्थं |
| ३३८ | २ | म्वका | स्वका |
| ३४१ | १० | प्राप्त | प्राप्ति |
| ३५३ | ३ | नाच्य | नोच्य |
| ३५७ | ६ | नीर | नीधीर |
| ३५९ | ६ | इत | इति |
| ३६० | १२ | याऽयं | योऽयं |
| ३६१ | ७ | र्शनेने | र्नेनेन |
| ३६८ | २३ | मश्रि | मांश्र |
| ३७७ | १० | वतग | वग |

| पत्र | पङ्क्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ३९५ | ३ | काय | कार्य |
| | १४ | मित्स्यु | मित्यु |
| | १८ | बंद्या | वंध्या |
| ३९७ | २५ | तच्च | तच्चे |
| ३९८ | १३ | करणा | करणा |
| ४०२ | १० | र्निष्ट | विष्टि |
| ४०३ | ११ | रस | वस |
| ४०७ | ८ | बंद्या | वंध्या |
| ४०८ | २३ | रूप | रूपा |
| ४५५ | ७ | वाद्व | वाद्वै |
| ४५६ | २ | सुश्रे | सुतिश्रे |
| ४५७ | २० | शिल | शिला |
| ४५८ | १४ | तस्त | ततस्त |
| ४६० | १४ | शान्त | श्रान्त |
| ४६३ | ३ | नुष्य | नुष्या |
| ४८३ | १३ | मम्रे | मम्रौ |
| ५०५ | ६ | ठक्ति | उक्त |
| | १७ | तदा | तथा |
| ५०६ | ७ | सुधीन | सुधीना |
| ५०९ | ६ | क्याथ | क्यार्थ |
| ५११ | १३ | अचे | आचेति |
| ५१८ | २१ | स्यादत्याश | स्यादित्याशं |
| ५१९ | १३ | साव | नाव |
| ५२१ | १५ | नस्ति | नास्ति |
| ५३१ | १९ | घदि | घटादि |
| | २५ | पूव | पूर्वं |
| ५३२ | २५ | भास | आभास |
| ५५३ | २ | साच्च | सांच्च |
| ५५४ | ८ | १० | ११ |